Tanjore Sarasvati Mahal Series No. 178.

# SIVATATVA RATNA KALIKA

with Commentary AMODA RANJANI

By

KRISHNANANDA SARASVATI.





THE TANJORE MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY, THANJAVUR.



1981]                [PRICE: Rs. 25-00.

Tanjore Sarasvati Mahal Series No. 178.

# SIVA TATVA RATNA KALIKA

## with Commentary AMODA RANJANI

*By*

KRISHNANANDA SARASVATI.



Edited with Introduction in Sanskrit and Tamil

*By*

P. M. PADMANABHA SARMA, Siromani,
Vedanta Visarada & Hindi Praveen Pracharak,
Sanskrit Pandit,
Sarasvati Mahal Library, Thanjavur.





ADMINISTRATIVE COMMITTEE,
THE TANJORE MAHARAJA SERFOJI'S SARASVATI MAHAL LIBRARY,
THANJAVUR.



A. D. 1981.] [Price : Rs





First Edition: — 1981.





*Published by*

THE ADMINISTRATIVE COMMITTEE,
T. M. S. S. M. LIBRARY, THANJAVUR.





Published with the financial assistance from the Ministry of Education and Social Welfare, Govt. of India.



*Printed at*

The Sarasvati Mahal Library Press, Thanjavur.

तंजापुरी सरस्वतीमहालय ग्रन्थमालायाः पुष्पम् – १७८.

# ॥ शिवतत्त्वरत्नकलिका ॥

श्री कृष्णानन्दसरस्वत्या निर्मिता

तेनैव कृतया

आमोदरञ्जन्याख्यया व्याख्यया समलंकृता



सरस्वतीमहालयसंस्कृतपण्डितेन

वेदान्तविशारद - वेदान्तशिरोमणि - हिंन्दीप्रवीण - प्रचारक विरुदभाजा

पु. म. पद्मनाभशर्मणा

संशोध्य, संस्कृतद्राविडीप्रस्तावनासहितं परिष्कृत्य

सम्पादितः ।



तंजापुरी सरस्वतीमहाल् ग्रन्थालय निर्वाहकसमित्या

भारत सर्वकार धनसाहाय्येन प्रकाशिता च

विजयतेतमाम् ।



क्रैस्तवाब्दाः १९८१ ]  [मूल्यम् रू. २५–००.

## AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation, and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also of the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The manuscripts so presented will be accepted and acknowleged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world-famous 'Sarasvati Mahal Library'. It is open to you to share the honour of Serfoji, in your own measure, by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it, will you hasten to take it up?. The Library waits for your answer.

Administrative Officer,
T.M.S.S.M. Library.

CONTENTS.

॥ विषयसूचि ॥

*





## வேண்டுகோள்

கருணையுள்ளங்கொண்ட நம் முன்னோர்கள், அரிய பெரிய இலக்கியங்களையும், பிறவற்றையும், பனையோலைகளில் எழுதிச் சுவடிகளாக நமக்குத் தந்தனர். அவைகள், பல்வேறு இடங்களில் உள்ளன. அவைகள் பழுதடைவதற்குமுன் எம்மிடம் அன்பளிப்பாகக் கொடுத்துதவினால், அவைகள் மக்களுக்குப் பயன்படும்.

எம்மிடம் கொடுப்பதன் மூலம், சுவடி தந்தவர்களும் சுவடி எழுதியோரும் அழியாப் புகழை, எமது சரசுவதி மகால் உள்ளளவும் பெறுவர். அவை பதிப்பாக வருமாயின், சுவடி தந்தார் பெயரும் இடம் பெறுவதோடு, அப்பதிப்பில் 5 பிரதிகளும் பெறுவர்.

எனவே, "நாம் பெற்ற பேறு பெறுக இவ்வையகம்" என்ற எண்ணமுடைய நற்பண்பாளர்கள் தம்மிடமுள்ள சுவடிகளை எமது மகாலுக்குத் தந்துதவ வேண்டுகிறோம்.

இங்ஙனம்,

*தஞ்சாவூர்,*
*16—8—81.*

**துரை. சுந்தரேசன்,** I. A. S.,
*மாவட்ட ஆட்சியர் & தலைவர்,*
*நிர்வாகக் குழு, சரசுவதி மகால் நூலகம்.*

# PREFACE.

I am glad to introduce this book to the scholars by publishing in the series of publication of rare and valuable manuscripts of this Library, which bares many rare and unique manuscripts on various subjects in Sanskrit, Tamil, Telugu and Marathi.

The author of this book "Krishnananda Sarasvati" first wrote stotras on "Siva" in 100 verses in Vasantatilaka Vrttam called "Sivatattva Ratna Kalika" and then added to it a commentary as "Sivatattva Ratna Kalika Vyakhya", otherwise known as "Amodaranjini" explaining the stotras according to "Sivadvaita" principles, so as to enable the readers who want to study the Saivadvaita in a easy way and to realise the supreme power (i. e., Siva) by meditation.

The author was a great Advaita Scholar. He has also written a book "Siddhanta Siddhanjana" a treatise on the Advaita Vedanta. He was a preceptor of Bhaskara Dikshita who lived in Tiruvisanallur Village, Thanjavur District granted by Raja Sahaji - I, who ruled Thanjavur from 1684—1711 A. D. So, it is quite possible to confirm that this author flourished in the early decade of the 17th Century.

The Publication of Sivatattva Ratna Kalika is in the 178th series of manuscripts of Sanskrit Literature edited and published by this Library with the aid of the Government of India grant.

Sri P. M. Padmanabha Sarma, Retd., Sanskrit Pandit of this Library has edited this book with a sense of duty.

He has given a detailed forward to this book both in Sanskrit and Tamil. Our thanks are due to him for his valuable service.

Our thanks are due to the Government of India for their timely grants, that have enabled the publication of this book and other valuable works available in this Library.

Our thanks are also due to the Sarasvati Mahal Library Printing Section, who have brought out this book with neat printing and good get up and to the staff of this Library who have done their work in this connection with full confidence and co-operation.

Thanjavur,
16—8—1981.

**D. SUNDARESAN, I. A. S.,**
*DISTRICT COLLECTOR & CHAIRMAN,*
of the T. M. S. S. M. Library,
Administrative Committee, Thanjavur.



॥ श्रीः ॥

# ॥ प्रस्तावना ॥

श्रीरामभद्रपदपङ्कजचर्यया ऽऽप्त-
श्रीब्रह्मविद्यमुदिताधिकस्वप्रकाशम् ।
श्रीवासुदेवकरुणाकृतमस्करीन्द्रं
श्रीकृष्णसंयमिवरं प्रणतोऽस्मि नित्यम् ॥

अयि भो वेदान्तविज्ञानसुनिश्चितार्थाः !
विद्वच्छिरोमणयः !!

तत्रभवतां भवतां करकमलयोः श्रीकृष्णानन्दसरस्वतीनां कृतिः शिवतत्त्वरत्नकलिका नाम अद्वैतप्रकरणग्रन्थः श्रीकृष्णानन्दसरस्वतीभिरेव विरचितया आमोदरञ्जन्याख्यया व्याख्यया परिष्कृतः इदम्प्रथमतया प्रकाशितः उपहारीक्रियते ।

## ॥ आमुखं ग्रन्थरत्नस्य ॥

विदितचरमेवेदं अद्वैतविद्याटवीसञ्चरमाणपञ्चास्यानां विद्वच्चूडामणीनां, यदिह मरुमरीचिकानीर-समानोदरे अनर्थपरम्परामेदुरे अपारे असारे संसारसागरे मज्जं मज्जमुन्मज्जतां, जननमरणरूपक्षार-पानमपि अमृतपानमिव मन्यमानानां, निवृत्तिसाधने उपेक्षावतामपि, निर्वृतावपेक्षावतां, प्रेक्षावतां, मोक्ष एक एव परमपुरुषार्थतयाऽभीष्ट इति ।

स च मोक्षः संसारनिवृत्तिरूपः अद्वैतब्रह्मतत्त्वसाक्षात्कारात् परब्रह्मात्मनाऽवस्थानमेवेति वेदान्तिनां राद्धान्तः । निवृत्तिश्च संसारस्याऽद्वैतब्रह्मतत्त्वसाक्षात्काररूपेण ज्ञानेनैव सम्भवति । तथाच कथ्यन्ते – मोक्षस्य त्रीणि साधनानि कर्म, उपासना, ज्ञानं चेति । ज्ञानं तावत्साक्षाद्धेतुः, तदितरे परम्परयेति सिद्धान्तः । "तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाये" ति श्रुतिः, "बुद्धौ शरणमन्वन्विच्छ कृपणाः फलहेतव" इति स्मृतिश्च प्रमाणे ।

कर्मोपासनयोस्तु ज्ञानहेतुत्वात्परम्परया मोक्षसाधनत्वमङ्गीक्रियते । तदेव प्रतिपादयन्ति ता एव श्रुतयः – "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति ।

तच्च ज्ञानं यथास्वरूपमेव वस्तुस्वरूपं निरूपयति । वस्तुनि निरूपिते सद्य एवाऽज्ञाननिवृत्या तन्मूलकसंसारनिवृत्तिः ब्रह्मीभावश्च सिद्ध्यत इति ज्ञानस्य साक्षात्फलदातृत्वमपि समञ्जसमेव ।

"अमृतत्वस्य तु नाऽऽशास्ति वित्तेने" ति मोक्षं प्रति कर्मणः साधनत्वं नास्तीति निराकृत्य, "येनाऽहं नाऽमृता स्यां किमहं तेन कुर्यां, यदेव भगवान् वेत्थ तदेव मे ब्रूही" ति मैत्रेय्या कृते प्रश्ने "आत्मा वा अरे द्रष्टव्य" इति आत्मसाक्षात्कारं मोक्षसाधनमभिधाय, तादृशाऽऽत्मसाक्षात्कारसाधनविधानाय प्रवृत्ता श्रुतिः – श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति त्रिभिर्वाक्यैः क्रमात् श्रवणं, मननं, निदिध्यासनमिति त्रीणि साधनानि विदधाति ।

एवं चाऽऽत्मसाक्षात्कार एव मोक्ष इत्यत्र न कोऽपि सन्देहः । स आत्मसाक्षात्कारोऽपि विद्ययैव सम्पत्स्यत इत्यहो विद्यायाः महत्वमप्रतिहतमेव । "सा विद्याऽमृता सतामि" ति हि वदन्ति । तादृशीं ब्रह्मविद्यां प्रतिपादयन्ति उपनिषदः । उपनिषच्छब्दार्थं प्रतिपादनं भाष्यादिषु स्पष्टमिति नोच्यतेऽत्र । ता उपनिषद उपोद्बलयन्ति भगवद्गीता, ब्रह्मसूत्राणि च । अत एव महानुभावाः श्रीभगवत्पादाः तेषां भाष्यादिकं कृत्वा परमोपकारमकुर्वन् । परन्तु तानि ग्रन्थरत्नानि तर्कारूढानि प्ररूढप्रकृष्टमतिविभवैकसाध्यानीति भगवान् श्रीकृष्णानन्दसरस्वतीति प्रसिद्धः मस्करीन्द्रः तत्तद्भाष्यादिषु प्रविविक्षूणामपक्वमतीनामत्यन्तसौकर्याय शिवतत्त्वरत्नकलिकां नाम शिवस्तुतिरूपिणीं कृतिं स्वकृतपरिष्कृतव्याख्यया विस्तार्य प्रस्तापयति प्रकरणग्रन्थरूपेण । "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः" ॥ इति हि लक्षणं प्रतिपादितं विष्णुधर्मोत्तरपुराणे । अतो मन्यामहे कृतिमिमां प्रकरणग्रन्थमिति ।

## ग्रन्थरत्नस्य महतः कर्ता चासीदयं कदा ?

विदितपूर्वमिदं भारतेतिहाससमीक्षावतां समेषां प्रेक्षावतां यद्द्राविडदेशे विद्यमानतिरूच्चि-तञ्जावूरमण्डलान्तर्गतज्यापरिमितः, कावेरीवण्णारुप्रभृतिभिः प्रशस्ताभिः नदीभिः परिवृतः, नदीमातृकः, सस्यश्यामलः, भूप्रदेश एव पुरा "चोलदेश" इति प्रसिद्धिमवाप्य प्रास्ताप्यत । तस्य च राजधानी नगरीललामभूता "तंजपुरी" नाम नगरी । तामधिष्ठाय चोलभुवमिमां पूर्वं चोलभूपाः, पश्चात् *1585—1673* पर्यन्ते काले नायकवंशीया भूनायकाः, तदनन्तरं *1676—1855* पर्यन्ते काले भोसलकुलजन्या अजन्या महाराष्ट्रीयराजन्याश्च अशासुः । नगर्यामस्यां साम्प्रतमपि चोलराजप्रतिष्ठापिताः शिवालयाः, नायकनिर्मितं राजभवनं, महाराष्ट्रीयसंस्थापितं सरस्वतीमहालयाख्यं मातृकागारं, एवं बहुविधानि चिह्नानि च विराजन्तेतराम् ।

## ॥ कोऽयं शाहेन्द्रभूपालः, कीदृशं कीर्तिमण्डलम् ॥

तादृशभोसलकुलजन्यराजन्येषु *1684—1710* पर्यन्ते काले तञ्जपुरीसिंहासनमधिरुह्च शाहजीमहाराजः "दाक्षिणात्य भोज" इव व्यराजत। एकोजिमहाराजस्य दीपाम्बायां सम्भूतोऽयं, स्वयमेव कविः, पण्डितः, सङ्गीतसाहित्यकलाधुरीणः, बहुभाषाभषी, नित्यप्रबन्धकर्ता, चासीत्। "शाहजीपुरं," "एकोजिपुरं," "दीपाम्बापुरमि" ति ग्रामान्निर्माय षड्दर्शनपारङ्गतान्पण्डितानावासयामास। कनकाभिषेकादिभिः तान् मानयामास। धनादिसाहाय्येन तान्निश्चिन्तान्कारयामास। एवं चोलदेशे यत्र यत्र कवेरजा प्रवहति, तत्र तत्र ग्रामेषु नगरेषु सर्वत्रापि च काव्यनाटकेतिहासपुराणादिनां चर्चा, वेदवेदाङ्गानां अध्ययनं, न्यायवैशेषिकमीमांसावेदान्तादीनां प्रचारः, तत्तच्छास्त्रेषु ललितललितानां ग्रन्थानां निर्माणमित्येवं तत्रत्यानां पण्डितानां समयः व्यतिचक्राम।

तस्मिन्राज्ञि सुशासति कावेरीप्रभावप्रभावितेषु सस्यश्यामलेषु भूप्रदेशेषु न केवलं धान्यबीजमुप्तम्; परन्तु विद्यार्थिक्षेत्रेषु साहित्यबीजमुप्तम्। तत्र तत्र न केवलं सस्याङ्कुराः प्ररोपिताः; अपि तु शास्त्राङ्कुरा अपि। जनैर्न केवलं धान्यजातमासादितं किन्तु वेदवेदान्तजातमपि। सुकृतपरिपाकलब्धजन्मभिः न केवलं रसालकदल्यादिफलमेवाधिगतम्; परन्तु वेदविचाराधिगतमोक्षफलमपि। किं बहुना, तस्मिन्समये चोलभूरियं स्वर्णभूरभूत्।

### तत्काले कवयः के वा पण्डिता व्यलसन्भुवि ?

तस्य च राज्ञः समये श्रीरामभद्रदीक्षितः, रामनाथमखीश्वरः नरहरिदीक्षितः, श्रीधर वेङ्कटेश्वर दीक्षितः, पेरियप्पादीक्षितः यज्ञेश्वरदीक्षितः बोधेन्द्रस्वामिनः इत्येवमादयः परश्शताः कवयः पण्डिताश्च भुवमिमां विद्यामातृकामकुर्वन्। किंच, परमशिवेन्द्रः, सदाशिवब्रह्मेन्द्रः, श्रीकृष्णानन्दसरस्वती, श्रीरामानन्दसरस्वती, चिदम्बरब्रह्मेन्द्रः इत्येवमादयः परस्सहस्राः परमहंसपरिव्राजकाचार्याः तत्र तत्र वेदवेदान्तप्रचारेण भुवमिमां मोक्षपुरीमेव चक्रुः।

### "ग्रन्थस्याप्यस्य कर्ता हि कृष्णानन्दसरस्वती"

*17—18* शताब्द्यां वर्तमानेषु परमहंसपरिव्राजकाचार्येषु महत्सु सत्सु, श्रीरामभद्रसंयमी नाम महान्मस्करीन्द्रः भुवमिमामलंचकार। मन्यामहे सोऽपि सर्वप्रसिद्धस्य दक्षिणामूर्त्यष्टकादिविविधप्रकरणग्रन्थविवरण कर्तुः "स्वयंप्रकाशमुनेः" पदारविन्दपरिचर्यालब्धात्मविद्यः भवितुमर्हतीति। यतः, अस्माकं ग्रन्थकर्ता श्रीकृष्णानन्दसरस्वती स्वकीये ग्रन्थे स्वयंप्रकाशमुनिं परमगुरुमात्मनः प्रस्तापयति। तादृशस्य महामहिमवतः श्रीरामभद्रसंयमिनः त्रयः शिष्यमणयोऽवर्तन्त कृष्णानन्दसरस्वती,

रामानन्दसरस्वती, शाश्वतानन्दसरस्वतीति। शाश्वतानन्दः "ब्रह्मानन्दविलासाख्यं" प्रकरणग्रन्थं विरचयामास। रामानन्दः "सिद्धान्तचन्द्रिका" नाम प्रकरणं निर्ममे। अस्य च व्याख्या रामचन्द्रसरस्वतीपूज्यपादशिष्येण श्रीगङ्गाधरसरस्वत्या विरचिता मुद्रिताऽस्माभिरेव, विजयतेतमाम्।

श्रीकृष्णानन्दसरस्वती तु सर्वतन्त्रस्वतन्त्रत्वात् बहून् ग्रन्थान्प्रणिनाय। तेषु वेदान्तदर्शन-प्रविविक्षूणामत्यन्तोपकाराय लोचनद्वयमिव ग्रन्थद्वयं विरचयामास, "सिद्धान्त सिद्धाञ्जनं", "शिवतत्त्वकलिका" चेति। ग्रन्थद्वयमपि तर्कारूढं विविधवेदान्तविषयप्रतिपादकं पण्डितसमवाय-हृष्टिपुष्टिदायकं प्रकरणलक्षणघटितमिति अभिप्रैमः।

सिद्धान्तसिद्धाञ्जनं नामप्रकरणं श्रीकृष्णानन्दसरस्वतीश्रीपादानां पादपरिचर्यालब्धविद्यैः तिरुविशलूर् ग्रामवास्तव्यैः भास्कराचार्यैः विरचितया व्याख्यया समलंकृतं तिरुवनन्तपुरस्थप्राच्यमातृका-गाराध्यक्षेण भासनाटकचक्राविष्कर्त्रा [Curator, Trivandram oriental Manuscripts Library] "श्रीयुतगणपतिशास्त्रिणा" सम्पादितं मुद्रितं च विलासतितराम्।" लोचनमेकं लब्धं, कुतोऽन्यन्न लब्धमिति मदीया भावनैव शिवतत्त्वरत्नकलिकाप्रकाशने प्रेरणहेतुरासीदिति स्पष्टमभ्यु पगच्छामः।

परन्तु श्रीगणपतिशास्त्रिणः. सिद्धान्तसिद्धाञ्जनस्य संक्षिप्तायां प्रस्तावनायां श्रीकृष्णानन्द-सरस्वत्याः कालादीनां निर्णयमकुर्वन्, न तमधिकृत्य विषयविवेचनम्। प्रस्तावनया च शास्त्रिणः, सन्देहश्च महानुदभूद्विषयं प्रति। तथाहि — "कृष्णानन्दः 1670 तमेऽब्दे तिरुविशलूर्ग्रामभूमिं पवित्रयामास। तस्य च शिष्यः रामानन्दः। स एव सिद्धान्तसिद्धाञ्जनस्य लेखकः।" इति शास्त्रिणामुक्तिः प्रमाणं च शास्त्रिभिः प्रतिपादितम् —

"सौम्येब्दे मृगभास्करे दिनमणाविन्दोः कलां पञ्चमीं
पुष्णात्यञ्चितपौष्णभे रविदिने लग्ने शुभंयावपि।
कृष्णानन्दगुरुप्रसादमहितः तद्ध्यानधन्याशयः
रामानन्दयतिः स्वयं लिखितवान् सिद्धान्तसिद्धाञ्जनम् ॥" इति।

श्लोकस्याऽस्य पठनेन किंवा ज्ञायते? श्रीकृष्णानन्दशिष्योऽहं 1670 क्रैस्त्वब्दे सिद्धान्त-सिद्धाञ्जनं नाम गुरोः कृष्णानन्दस्य ग्रन्थं पत्रे व्यलिखमिति रामानन्दः स्पष्टतया वक्ति। पूर्वमस्माभिः रामभद्राश्रमिणः शिष्येषु अन्यतमत्वेन प्रतिपादितः रामानन्दसरस्वतीति प्रसिद्धः मस्करीएवाऽयं शास्त्रिप्रतिपादितः रामानन्दः उतान्य इति विप्रतिपत्तिः भवत्येव। शास्त्रिभिः प्रतिपादितं श्लोकमिमप्रमाणमिति न वयं वक्तुं शक्नुमः इति सन्देहः दृढो भवति।

वयं ब्रूमः — श्लोकेऽस्मिन्, प्रतिपादितः रामानन्दः अन्यएव। न मया प्रतिपादितः चन्द्रिकाकारः रामानन्दसरस्वती। अथवा, रामभद्राश्रमिणः शिष्येषु कृष्णानन्दसरस्वती प्रचीनः स्यात्। रामानन्दः कालतः अवरः। अवराः प्राचीनेभ्यः सतीर्थेभ्योऽपि पाठादिकं पठितुमर्हन्ति। अतः रामानन्दोऽयं रामभद्राश्रमिणः शिष्योऽपि स्वसतीर्थं कृष्णानन्दमपि गुरुं मन्यते। उपचारार्थमियमुक्तिः न वस्तुतः इति वक्तव्यम्। अन्यथा, कृष्णानन्द रामानन्द शाश्वतानन्दाः स्वस्वकृतिषु श्रीरामभद्रयतीन्द्रमेव स्वगुरुं प्रस्तुवन्ति, तत्कथं सङ्गच्छेत। पश्यत —

जडीकृतजगत्यन्तस्तमस्संभेदमर्मणे।
रामभद्रयतीन्द्राय महते महसे नमः॥ — श्रीकृष्णानन्दः।

श्रीरामभद्रसंयमिचरणौ शरणं विधाय बोधाय।
सिद्धान्तचन्द्रिकामृतसेकैः संशोधयामि चेतस्स्वम्॥ — श्रीरामानन्दः।

करकलिततत्त्वमुद्रैः कृतकनकन्यङ्कुदीर्घतमनिद्रैः।
करुणासुधासमुद्रैः कर्म ध्वस्तं तु रामभद्रैर्नः॥ — श्रीशाश्वतानन्दः।

एभिःश्लोकैः स्पष्टमिदं ज्ञायते — श्रीकृष्णानन्दः, श्रीरामानन्दः, श्रीशाश्वतानन्दश्च त्रय इमे श्रीरामभद्रसंयमीन्द्रस्यान्तेवासिनः सतीर्थाश्चेति। "आनन्द" बिरुदमपि द्रढयति अमुमेवार्थमित्यलं प्रसक्तानुप्रसक्तप्रपञ्चेन। प्रकृतमनुसरामः।

### कृष्णानन्दसरस्वत्याः लभ्यन्ते कृतयः कति ?

श्रीकृष्णानन्दसरस्वती न केवलं सिद्धान्तसिद्धाञ्जनं, शिवतत्त्वरत्नकलिका चेति प्रकरणद्वयमेव व्यरचयत्; किन्तु उपदेशदशश्लोकी, श्रीमीनाक्ष्यष्टकं, सपर्यापर्यायः, मृत्युञ्जयाष्टकं, भक्तिविवर्धनस्तोत्रं, मनस्सम्बोधनं, प्रशमामृतं, अनुभवत्रिंशच्छ्लोकी, मन्त्रार्णमुक्तावलिः, इत्येवं बहुविधाः कृतीरपि।

### "श्लोकरूपेण दीयन्ते कृतयः स्मरणाय वै"

कृष्णानन्दसरस्वतीमुनिवरैः ग्रन्थाः कियन्तः कृताः ?
को वा वक्तुमुपक्रमेत ? तदपि, ग्रन्थाश्च लब्धाः कति ?।
वक्ष्ये, श्रीशिवतत्त्व[1]रत्नकलिका सिद्धान्त[2]सिद्धाञ्जनं
वेदान्तार्थविवेचनैकचतुरं ग्रन्थद्वयं दीप्यते॥

उपदेशद[2]शश्लोकी श्रीमीना[4]क्ष्यष्टकं कृतम् ।
कृतस्सपर्या[5]पर्यायः कृतं मृत्युञ्ज[6]याष्टकम् ॥

कृष्णानन्देन रचितः स्तवो भक्ति[7]विवर्धनः ।
मनस्संबो[8]धनं नाम प्रणीतं प्रशमा[9]मृतम् ॥

निर्मिताऽनुभवत्रिंश[10]च्छ्लोकी कृष्णयतीश्वरैः ।
कृष्णानन्देन मन्त्रार्णमुक्ता[11]वलिरियं कृता ॥

आकृत्या न महान्तोऽपिग्रन्थाश्चैते परास्स्मृताः ।
पठतां विदुषां चित्तं तुष्टिं पुष्टिं भजत्यहो ॥ इति ।

## कृष्णानन्दस्य शिष्याः के ? तेषां किं चरितं महत् ?

पूर्वं प्रतिपादितस्य शाहजीमहाराजस्य सभास्ताराः इमे पण्डिताः पदवाक्यप्रमाणपारावारपारीणाः श्री कृष्णानन्दसरस्वतीपादानां पादारविन्दपरिचर्यालब्धविद्याविभवाः अन्तेवासिन एव । विशेषतः श्रीरामभद्रदीक्षितः, रामनाथमखी, पेरियप्पामखी, भास्कराचार्यः एवमादयः । अमीषां परिचयः वाक्यद्वयेन दीयते । यज्ञरामदीक्षितस्य सुपुत्रः कौण्डिन्यगोत्रोद्भवः श्रीरामभद्रदीक्षितः कण्डमाणिक्क-ग्राममलमकरोत् । चोक्कनाथमखीन्द्रात् पातञ्जलीं विद्यां तद्दुहितरं, च स्वीचकार । श्रीनीलकण्ठ-दीक्षितस्य शिष्यत्वात् श्रीरामानन्यभक्तः अयं कृष्णानन्दश्रीपादानां श्रीपादाब्जपरिचर्यालब्धब्रह्मविद्यः "आचार्यस्तवराजभूषणेन" स्वकृत्या स्वगुरुं पूजयामास ।

बालचन्द्रतनूद्भवः रामनाथमखी रामभद्रदीक्षितसमकालिकः एव शाहजीसभां अलंचकार । श्रीनल्लादीक्षितस्य गुरुरयं कृष्णानन्दसरस्वतीनां अनुग्रहपात्रमेव ।

पतञ्जलिशास्त्रिणां लक्ष्म्याश्च गर्भसम्भूतः सुगृहीतनामधेयः पेरियप्पाध्वरी शाहराजीयं विरच्य शाहराजं तोषयामास । श्रीकृष्णानन्दप्रियशिष्यत्वात् तस्मादेव "कवितार्किकसार्वभौम" इति बिरुदमलभत ।

वेङ्कटपतियज्वनां सुपुत्रः पुण्यश्लोकी भास्करदीक्षितः शाहजीमहाराजस्य सभास्तारोऽपि तद्दत्तशाहजीपुरवास्तव्यः व्यराजत । सोऽयं भास्करदीक्षितः श्रीकृष्णानन्दपदसरोजवरिवस्यालब्धवरविद्यः सिद्धान्तसिद्धाञ्जनस्य व्याख्यां "रत्नतूलिकां" नाम विरच्य स्वगुरुभक्तिं प्रकटयामास ।

स्वग्रन्थारम्भेऽनेनैव प्रपञ्चितम्— "सिद्धाञ्जनकृतिं गुरोः। सर्वतोमुखयागस्य कर्ता भास्करदीक्षितः, विवृणोत्येष" इति एवं बहवशिश्ष्याः कृष्णानन्द श्रीपादानां कीर्तिपताकामुड्डयामासुः सर्वत्र।

"शिवतत्त्वरत्नकलिका भूरिगा नामकथ्यते"।
कृष्णानन्दसरस्वत्याः वाचैव विवृणोम्यहम्"॥

सर्वे वेदा यत्पदमामनन्ति, तपांसि सर्वाणि यद्वदन्ति, यदिच्छन्तो ब्रह्मचर्यं चरन्ति, तदेव पदं सङ्ग्रहेण ब्रवीति शीवतत्त्वरत्नकलिका नाम प्रकरणग्रन्थः। एवं किल प्रारभ्यते ग्रन्थकर्त्रा —

यस्यावबोधनफलः सकलोऽपि वेदः
यस्मिन्मनोवचनवृत्तिरदूरवत्या।
यो विश्वकारणगुणोपधिपारभूमिः
तं त्वामनन्यमहमीश्वर! संश्रयामि॥ इति।

एवं शिवस्तुतिरूपिणं ग्रन्थमिमं पादाधिकेन पद्यैः शतेन निबध्नाति। तस्य च नाम दत्तं शिवतत्त्वरत्नकलिकेति। व्याख्यावसरे ग्रन्थाकर्ता प्रस्तापयत्येवम्।

शास्त्रेषु दुर्गमतमेषु महामतीनां
अन्तः कथं मृदुधियामवगाहतां धीः।
तेषामिहाऽभिलषतां परतत्त्वविद्यां
श्रीतत्त्वरत्नकलिका सुगमोऽभ्युपायः॥

पद्यैः शतेन परमेश्वरसंस्तुतिर्या
पादाधिकेन कलिता परतत्त्वसारा।
श्रीतत्त्वरत्नकलिकेति मुदे बुधानाम्
आमोदरञ्जनमिदं जनयामि तस्याः॥ इति

श्लोकद्वयेऽस्मिन् श्रीतत्त्वरत्नकलिकेति नामोक्त्वा ग्रन्थान्ते वदति —

इत्थं श्रीशिवतत्त्वरत्नकलिकामामोदसंरञ्जन-
प्राप्तस्वादिमसौरभामुपहरन्पञ्चप्रसूनाञ्चिताम् ।
श्रीशम्भोरधिवासयामि परमं यत्तत्पदं शाश्वतम्
शश्वत्तेन सहोमया, स भगवानाद्यः प्रसद्यान्मम ॥

श्रीरामभद्रयोगीन्द्रचरणाम्बुजरेणुना ।
शिवतत्त्वरत्नकलिका कृष्णानन्देन निर्मिता ॥ इति ।

इत्यतः नामद्वयमपि समीचीनमेव मन्यते ग्रन्थकर्ता । द्वितीयश्लोके शिवतत्त्वरत्नकलिकेति पदं नवाक्षराङ्कितत्वात् भूरिगनुष्टुभा प्रतिपाद्यत इनि मन्तव्यम् । यतः, "ऊनाधिकेनैकेन निवृद्भूरिगौ" इति हि छन्दोविचितिः । सर्वं छन्दोविषयमिति च भरताचार्यः । तथा च उपनिषद्भूयस्सारं निष्कृष्य कृता शिवतत्त्वरत्नकलिकास्तुतिः ।

उपनिषत्सु मुमुक्षु अनपेक्षणीयनानाफलोपासनप्रतिपादनबहुलासु मन्दयोगिनः चित्तविभ्रमोऽपि सम्भाव्येत । अत्र तु निःश्रेयसैकफलवेदनीयोपनिषत्सारभूतपरमात्मतत्त्वमात्रप्रतिपादनात् आत्मतत्त्व-विद्यैव सुप्रतिष्ठिता भवतीति महान्विशेषः । प्रकरणमिदं शिवतत्त्मरत्नकलिकेति संज्ञया कलिकात्मना रूपितम् । कलिका च स्तवकः "कलिका स्तबकेति च" इति हि दृश्यते । सः बहुप्रसवसमवायः । तदौचित्यात् स्तबकरूपितप्रकरणावयवस्य, प्रमाणवासनोल्लासः, प्रमेयवासनोल्लसः, विशुद्धवासनोल्लसः, तत्त्ववासनोल्लासः, फलवासनोल्लासः इति रूपणमपि समीचीनमेव ।

एतदुक्तं भवति – शिवस्य परमात्मः तत्त्वान्येव रत्नानि, सर्ववस्तुभ्यः अभ्यर्हितत्वात् । यद्यपि प्रकाशानन्दकेवलसत्तात्मकं शिवतत्त्वमेकमेव । तथापि तत्प्रतिपादकोपनिषद्बाहुल्येन तदुपाधिकः बहुत्वव्यपदेशः । दृश्यते हि परोपाधिकः एव बहुषु वृक्षेषु एकत्वव्यपदेशः, वनमिति । दिशः, कालाः, इत्येकस्मिन्नपि बहुत्वव्यपदेशः । तेषां रत्नानां, कलिकेव कलिका । 'कलिका स्तबकेति च' इति हि दृश्यते । "फुल्लमल्लिकुसुमकलिका दामसौभाग्य चोर" मिति प्रयोगदर्शनात् । विकस्वरनानवाक्यदलशालिप्रकरणपञ्चकबहुप्रसवसमुदायरूपत्वात् इयं स्तुतिः कलिकेत्युपचर्यते । स्तुतिमिमां दैवसम्पदुपसम्पन्नाः सूरयः कर्णाभ्यामाकर्णयितुं, शिरसा श्लाघितुं, कण्ठतः पठितुं,

हृदयेन विचारयितुं चार्हन्तीति प्रार्थयामः। संस्तुमः स्तुतिरूपिणः ग्रन्थस्यास्य दातारं कृष्णानन्दयतीन्द्रं दीक्षितगिरा —

श्लाघाकम्पितमौलि जम्भरिपुणा क्रीडोल्लसं वेधसा
साशङ्कं कमलेक्षणेन सरसं चन्द्रार्धचूडेन च ।
दृष्टो, मूर्ध्नि मया धृतोऽञ्जलिरयं त्रय्यन्तचूडामणेः
कृष्णानन्दमुनीश्वरस्य चरणद्वन्द्वं समालम्बते ॥ इति ।

"मातृकां प्रति विज्ञप्तिः क्रियते विनयात्मना"

भुवनप्रसिद्धेऽस्मिन् सरस्वतीमहालयाख्यग्रन्थालये यदाऽहं विमर्शात्मकं कार्यमकरवं, तदानीं शिवतत्त्वरत्नकलिकानामनिर्दिष्टं B. 9840, B. 9839 संख्याङ्कितं तालपत्रात्मकं ग्रन्थलिपिलिखितं च मातृकाद्वयमपश्यम्। तद्दर्शनकुतूहलेन मनस्येवमुदभूत् – महानयं कृष्णानन्दमुनीश्वरः सिद्धान्तसिद्धाञ्जनं विना तस्य कृतयः सर्वा अपि प्रकाशिता अस्माभिरेव। परन्तु शिवतत्त्वरत्नकलिका नाद्यापि मुद्रापिता प्रकाशिता च। ग्रन्थस्याऽस्य प्रकाशे नैव जन्म सफलं भवितुमर्हतीति। अतः तत्प्रकाशने कृतादरोऽहं तन्मातृकाद्वयस्य शोधनविधौ प्रवृत्तोऽभवम्। तन्मातृकाद्वयं समानोदरमेवासीत् इत्यतः पाठभेदस्य नावकाशोऽस्ति। परन्तु कस्यांचिन्मातृकायां कुत्रचिद्यदि सन्देहो भवेत् तदा मातृकान्तरेणैव तत्सन्देहपरिहारपूर्वं शोधनकार्यमकरवम्। इत्थं द्वयोर्मातृकयोस्साहाय्येनैव सम्यक्तया कापीकृतोऽयं ग्रन्थः मुद्रणाय।

तर्कारूढत्वाद्ग्रन्थस्य पाठकानां पठनसौकर्याय शीघ्रप्रबोधाय च प्रतीकादिवाक्यानि, पूर्वपक्ष-सिद्धान्तौ, उद्धरणानि, विषयप्रतिपादने प्रकोष्ठकादिनिर्माणं इत्येवमादिविषये बृहल्लिप्या सूचना दत्ता। तत्र तत्र अक्षरप्रयुक्ताः दोषा भवन्त्येव, तथापि "गच्छतस्स्खलन"मिति रीत्या दोषांस्तान् क्षन्तुमर्हन्ति सन्त इति प्रार्थयामि च।

"निवेद्यते च कार्तज्ञ्यम्"

ग्रन्थस्याऽस्य सम्पादने प्रस्तावनालेखने च मामधिकारिणं मत्वा प्रोत्साहं दत्तवत्यै सरस्वतीमहालयस्य निर्वाहकसमित्यै, तथैव मुद्रणे साहाय्यं कृतवद्भ्यः मुद्राक्षरशालाकर्मचारिभ्यः, अन्येभ्यो महामहिमवद्भ्यः सर्वेभ्योऽपि निवेदयामः कार्तज्ञ्यम्। विशेषतश्च, ग्रन्थान्तराणामिव

अस्यापि ग्रन्थस्य मुद्रणाय प्रकाशनाय च धनसाहाय्यं कृतवते केन्द्रीयसर्वकाराय साञ्जलिबन्धं प्रणामततीः समर्पयामः ।

प्रार्थना क्रियते परम् ।
प्रस्तावनां पूरयामि स्मृत्वा तं यतिपुङ्गवम् ॥

प्रार्थयामो वयं प्रियपाठकान् – "प्रमादो दुरतिक्रमः, स्वाभाविको मनुष्यस्य" इति रीत्याऽस्मत्यान् दोषान् क्षन्तुमर्हन्तु सन्तः, प्रेमदृशा ननु दृशा परिशील्य ग्रन्थमिमं, पाठं पाठं परमानन्दसुखमनुभवन्तु, प्रोत्साहयन्तु अस्मानुत्तरोत्तर कर्मणीति संप्रार्थ्य, ग्रन्थकर्तारं कृष्णानन्दयतीश्वरं ध्यात्वा तत्पादसरोजयोरेव समर्पयामः ।

श्रीरामभद्रयोगीन्द्रचरणाम्बुजरेणवः ।
कृष्णानन्दसरस्वत्यः प्रीयन्तां ब्रह्मवादिनः ॥

कृष्णार्पणमस्तु

तंजपुरी
*15—7—81*

इत्थं विद्वद्विधेयः
पु. म. पद्मनाभशर्मा



# முகவுரை.



ரசிகப்பெருமக்களே ! ஆன்மீகத்துறையில் ஆர்வமுள்ள அறிஞர்களே !!

வணக்கம். வழக்கம்போல், தற்சமயம் சரசுவதி மகால் நூல்நிலையம், கிருஷ்ணனந்த சரஸ்வதியின் 'சிவதத்வ கலிகா' என்ற வேதாந்த நூலை அப்பெரியவராலேயே எழுதப்பட்ட உரையுடன் வெளியிட்டு மக்களின் கைகளில் சமர்ப்பிக்கின்றது.

## நூலாசிரியர் வரலாறு.

தற்சமயமுள்ள, தஞ்சை, திருச்சி மாவட்டங்களின் நிலப்பரப்பை ஒன்ருக்கிய பாகம் "சோழதேசம்" என்ற சிறப்புப் பெயரால் பண்டைய காலத்தில் பாராட்டப்பட்டதுண்டு. காவிரி, வெண்ணுறு முதலிய ஜீவநதிகள் இப்பிரதேசத்தை வளமாக்கி "சோழநாடு சோறுடைத்து" என்ற பெயரையும் சூட்டின. இதை ஆண்ட சோழமன்னர்களும், 1585—1673 வரை ஆண்ட நாயக்க மன்னர்களும், 1676—1855 வரை ஆண்ட மராட்டிய மன்னர்களும் இன்னுட்டை சோறுடைத்ததோடு அல்லாமல் பேறுபடைத்ததாகவும் செய்தனர். அக்காலத்தில் இது பொன்னுடு என்று போற்றப்பட்டதுண்டு. இந்நாட்டில் பொன்னி செல்வதால் நீர்வளம் ஏற்பட்டது, இதை ஆண்ட மன்னர்கள் கல்வி வளத்தையும் உண்டாக்கினர். செல்வம் குவிந்தது, மக்கள் அமைதியாகவும், பண்புடனும் வாழ்ந்து வந்தனர். ஆகவே சோழதேசம் தாயைப்போல அன்னத்தையும், கல்வியையும் அளித்துவந்தது. இதன் புகழ் அக்காலத்திய மன்னர்களையே சாரும்.

இந்த சோழ தேசத்திற்குத் தஞ்சையே தலைநகரமாக விளங்கியது. இங்கு சோழ மன்னர்களின் கலைக்கோவில்களும், நாயக மன்னர்களின் அரண்மனைகளும், மராட்டியமன்னர்களின் நூலகங்களும் இன்றும் அவர்களின் புகழைப்பாடுகின்றன. இத்தகைய சிறப்பு வாய்ந்த தஞ்சையை 1684—1710 வரை "ஷாஜீ" என்ற மராட்டிய மன்னன் ஆண்டுவந்தான். அவன் பிறவியிலேயே கவிஞன், பன்மொழிப்புலவன், சங்கீத சாகித்யங்களில் கரைகண்டவன். அக்காலத்திய புலவர்கள் "அபிநவ போஜன்" என்று அவனை சிறப்புப்பெயரால் போற்றுவதுண்டு. திருவாரூரில் விற்றிருக்கும் தியாகேசன் பெயரில் பல

ராகங்களில் தாளக்கட்டுடன் அவன் எழுதிய பாடல்கள் நூற்றுக்கணக் கானவைப் பிரசுரிக்கப்படாமையால் அவன் பெருமை, குடவிளக்குபோல் சிறப்புடன் வெளிவரவில்லை. தற்சமயம் சரசுவதி மஹால் நூலகம் அவைகளை வெளிக்கொண்டுவர முயற்சிப்பதன்மூலம் நாளை அவன்புகழ் குன்றின் விளக்காக வெளிவரலாம். அவை வெளிவருமானால் "சங்கீத மும்மூர்த்திகள்" என்று போற்றப்படும் நம் முன்னோர்களும் ஷாஜீ மன்னன் காட்டிய வழியில் சென்றுள்ளார்கள் என்று சொல்லப்படும் காலம் வரும்.

அத்தகைய சிறப்பு வாய்ந்த ஷாஜீ மன்னன், "கற்றாரைக் கற்றாரே காமுறுவர்" என்றபடி ஷாஜீபுரம், ஏகோஜிபுரம், தீபாம்பாபுரம் என்ற கிராமங்களை நிர்மாணித்து அவைகளில் அறிவிற்சிறந்தப் புலவர்களை அமர்த்தி னான். அவர்களுக்கு 'கனகாபிஷேகம்' செய்து மகிழ்வித்தான், வடமொழி யிலும், தென்மொழியிலும் பல நூல்களை இயற்றும்படி அவர்களை வேண்டிக் கொண்டான். அவர்களுக்குப் பொருள் உதவியும் செய்தான். தானும் பல நூல்களை இயற்றி அவர்களுக்கு வழிகாட்டினான், "அரசன் எவ்வழி மக்கள் அவ்வழி" என்பதை நிலைநாட்டினான். அக்காலத்தில் இயற்றப்பட்ட நூல்கள் கணக்கிலடங்கா.

அந்தப் பேரரசன் காலத்தில் பொன்னியின் ஜலம் புரண்டோடியது போல் அதன் கரைகளிலும் கல்வி பெருகியோடியது. ராமபத்ர தீக்ஷிதர், ராமனுதமகி, பெரியப்பா தீக்ஷிதர், நரஹரி தீக்ஷிதர், ஸ்ரீதர அய்யாவாள் என்ற வெங்கடேச தீக்ஷிதர், பாஸ்கர தீக்ஷிதர் இம்மாதிரியான கணக்கற்ற புலவர்கள் இந்நாட்டைக் கல்வி வளம் பொருந்தியதாக ஆக்கினர். மற்றொரு பக்கம் பரமசிவேந்திரர், சதாசிவபிரும்மேந்திரர் ராமபத்ரயதி, கிருஷ்ணானந்த சரஸ்வதி. ராமானந்த சரஸ்வதி, சாச்வதானந்த சரஸ்வதி, சிதம்பரபிரும்மேந் திரர் போன்ற மகானுபாவர்கள் ஆன்மீகத்துறையில் நாட்டம் கொண்டவர் களாய் துறவிகளாகி ஆங்காங்கு மக்களுக்கு ஆன்மீகவழி காட்டினர்.

ஆகவே சோழ தேசத்தில் வயல்களில் மாத்திரம் நெல் விதைகள் விதைகப்படவில்லை. மாணவர்களின் உள்ளங்களிலும் கல்வி என்னும் விதை விதைக்கப்பட்டது. பயிர்கள் வயல்களில் மாத்திரம் செழிப்புடன் வளரவில்லை, மக்களிடமும் கல்விப்பயிர்கள் வளர்ந்தன. மக்கள் வயல்களிலிருந்து மாத்திரம் தானியக்குவியல்களைப் பெறவில்லை. மகான்களிடமிருந்தும் நூற்குவியல்களைப் பெற்றனர். வாழை, மா முதலிய மரங்களிலிருந்து மாத்திரம் கனிகளைப் பெறவில்லை. துறவிகளிடமிருந்தும் மோக்ஷக் கனியை உண்டு பேரின்ப மடைந்தனர். இவ்வாறு சோழநாடு சுவர்க்க நாடாகியது.

மேற்கூறிய மகிமைவாய்ந்த துறவிகளுள் ராமபத்திரயதி என்பவர் மக்கள் வணங்கும் மாபெரும் சன்னியாசியாவார். அவருக்குக் கிருஷ்ணனந்தர், ராமானந்தர், சாச்வதானந்தர் என்ற மும்மணிகள்போல் சீடர்களிருந்தனர். இவர்கள் கவிகள் மாத்திரமல்ல. வேதம், வேதாந்தம் இவைகளை கரைகண்ட காவலர்கள். உலகப்பற்றைத் துறந்து துறவியானவர்களேதவிற மக்கள் பற்றை விட்டவர்களல்ல. சாச்வதானந்தர் "பிரும்ம வித்யா விலாசம்" என்ற நூலை மக்களுக்களித்தார். ராமானந்தர் "சித்தாந்த சந்திரிகா" என்ற மணியை உலகிற்களித்தார். இது ஓர் உரையுடன் சரசுவதி மகால் நூலகத்தால் வெளியிடப்பட்டுள்ளது. கிருஷ்ணனந்தரோ, "சித்தாந்த சித்தாஞ்சனம்", "சிவதத்வரத்ன கலிகா" என்ற இருநூல்களை இருகண்களைப் போல் ஆன்மீகத்தைக் காண்பதற்கு பயனுள்ளதாக அளித்தார். அத்துடன் பலதரப்பட்ட மானிடர்களுக்குப் பயன்பெறும்படி ஒன்பது நூல்களையும் அளித்துள்ளார். ஷெ நூல்களில் முதல் நூலைத்தவிர மற்றவை எல்லாம் சரஸ்மதி மகால் நூல் நிலையமே வெளியிட்டுள்ளது என்பது பெருமைப்படக் கூடிய விஷயமல்லவா? "சிவதத்வரத்னகலிகா" வெளியிடப்படாமல் இருந்ததால் அதையும் வெளியிடத் துணிந்தோம்.

வேதாந்த நூல்களில் மிகச்சிறத்தவை எனக் கருதப்படக்கூடியவை உபநிஷதங்கள், பகவத்கீதை, பிரும்மசூத்திரங்கள். இவைகளுக்கு விரிவுரைகள் சங்கரர், அப்பய்ய தீக்ஷிதர், வாசஸ்பதிமிச்ரர், கௌடப்பிரும்மானந்தர் போன்ற மாபெரும் மேதைகளால் எழுததப்பட்டுள்ளன. இவை சாதாரண மக்களுக்கு எளியதாக இருப்பதில்லை எனக்கருதி, இவைகளில் உள்ள விஷயங்களை மாத்திரம் எளிய நடையில் எழுதிவிட்டால், சாதாரண மக்களும் முன்னேர் எழுதிய நூல்களைச் சுலபமாக அறிந்துகொள்ளமுடியும் என்று, கருணையுள்ளம் படைத்த கிருஷ்ணனந்தர் முக்கியமாக இந்த இரண்டு நூல்களையும் எழுதியுள்ளார். "சித்தாந்த சித்தாஞ்சனம்" என்ற நூலை திருவனந்தபுரம் நூலகத்தார் வெளியிட்டமையால், மற்றென்றான "சிவதத்வ ரத்னகலிகா"வை சரசுவதி மகால் நூலகத்தார் வெளியிட்டனர். இதில் சொல்லப்பட்ட விஷயங்கள் மிகப்பெரியதாகையால் சிறு உரையான முகவுரையில் சொல்லமுடியாமைக்கு வருந்துகிறோம்.

உலகில் பல நூல்களை அளித்த கிருஷ்ணனந்தர் என்ற நூலாசிரியருக்குப் பல சீடர்கள் உண்டு. முக்கியமாக இந்த முகவுரையில் கூறப்பட்ட எல்லாப் புலவர்களுமே அன்னாரின் சீடர்களாவார். வானில் உள்ள கருமேகம் பொழிந்த ஜலம், அசுத்தமான இடத்தில் அசுத்தமாகவும், தாமரை இலைகளில் முத்துப்போலவும், சிப்பிகளில் முத்தாகவும் ஆவதுண்டு. ஆனல் நம்

கிருஷ்ணனந்தரிடமிருந்து பெருகிய கருணை எல்லா இடங்களிலுமே முத்துக்களையே படைத்தது என்று துணிந்து கூறலாம். இச்சந்தர்ப்பத்தில் சில வரிகளில் சிலரைப்பற்றிக் கூறலாமென நினைக்கிறோம்.

கண்டரமாணிக்கம் என்ற கிராமத்தில் யக்ஞராம தீக்ஷிதருக்குப் புதல்வராகப் பிறந்தவர் **ராமபத்ர தீக்ஷிதர்**. சொக்கனாத மகியிடம் இலக்கணம் பயின்று அவருக்கு மருமகனானார், நீலகண்ட தீக்ஷிதரிடம் இலக்கியம் பயின்று சிறந்த ராமபக்தரானார். இவர் பல நூல்களுடன் ராமனைப்பற்றி எழுதிய நூல்களும் பல. இவர் நம் கிருஷ்ணனந்தரிடம் வேதாந்தம் பயின்று "ஆசார்ய ஸ்தவ ராஜ பூஷணம்" என்ற நூலில் தன் ஆசிரிய பக்தியைக் காண்பிக்கிறார். இவர் மாபெரும் புலவரானபடியால் சொல்லில் காம்பீர்யம் உண்டு. உதாரணமாக ஓர் சுலோகத்தில் இவர் கூறுகிறார் — நான் இரு கைகளையும் அஞ்ஜலிபந்தத்தில் தலைக்குமேல் தூக்கினேன், இவைகளைக் கண்ட இந்திரன், தன் தலையை ஆட்டிப் பாராட்டினான். பிரமன் புரியாமையால் வேடிக்கைப் பார்த்தார், சிவன் சமரஸ சன்மார்க்கவழியில் ரசித்தார். திருமால் தனக்கோ என்று சந்தேகத்துடன் கவனித்தார். இவ்வாறு பலரால் பலவிதமாகப் பார்க்கப்பட்ட என் கைகள். உபநிடதங்களை ஆராய்ந்து, பகவத்கீதையைப் பக்குவப்படுத்தி, பிரும்ம சூத்திரங்களை மாலையாகவே அணிந்த அந்த மகான் கிருஷ்ணனந்தரின் பாதங்களை அல்லவோ தொடுகின்றன, என் ஆசிரியரை வணங்குகிறேன். அவர் எல்லோருக்கும் மேலானவர் என்பதை எவ்வளவு கம்பீரமான நயத்துடன் சொல்கிறார். இப்பேர்பட்ட மகான்களைப் படைத்த அந்த ஆசான் வாழ்க.

**ராமனுஜமகி** என்பவர் ஷாஜிமன்னனின் அவைத் தலைவர். பல நூல்களை இயற்றியவர். நல்லா தீக்ஷிதரின் குரு. இவரும் கிருஷ்ணனந்தரின் சீடரே.

**பெரியப்பா தீக்ஷிதர்** ஷாஜியின் அவைத் தலைவர், திருவையாற்றில் வசித்தவர். "சாஹஜீயம்" என்ற நாடகத்தில் மன்னன் ஷாஜியைப் பாராட்டுகிறார், இவரும் கிருஷ்ணனந்தரிடம் வேதாந்தம் பயின்று "கவி, தார்க்கிக சக்ரவர்த்தி" என்ற பட்டத்தையும் அவரிடமிருந்தே பெற்றார்.

**பாஸ்கர தீக்ஷிதர்** திருவிசலூர் என்ற ஷாஜீபுரத்தில் வசித்தவர். மன்னனின் அவைத் தலைவருங்கூட. பல யாகக்களைச் செய்தவர். கிருஷ்ணனந்தரின் சீடராகி, அவர் எழுதிய நூலான சித்தாந்த சித்தாஞ்சனத்திற்கு விரிவுரை எழுதியுள்ளார். இவ்வாறு பல புலவர்களையும் அவர்களின் வரலாறுகளையும் விரிவாக எழுதமுடியுமென்றாலும் முகவுரை முடிவற்றுப் போகுமென்று இத்துடன் நிறுத்திக்கொள்கிறோம்.

## நூலின் விளக்கம்.

இவ்விதம் 17 — 18-வது நூற்ருண்டில் எட்டு திசைகளிலும் வெற்றிமுரசு கொட்டிய மகான் கிருஷ்ணுந்தரின் சிவதத்வரத்ன கலிகா என்ற நூலை வெளியிடுவதன்மூலம் பெருமைப்படுகிறேம். இந்த நூல் சிவனைத் துதிக்கும் பாடல் வடிவம் கொண்டது. 125 செய்யுள்கள் உள்ளன. சிவனின் தோத்திரமாக இருப்பினும் இந்நூல் முக்குணங்களுக்கும் அப்பாற்பட்ட மாயையைவிலகி, தனித்து நிற்கும் சிவன், அதாவது பரப்பிரும் மத்தைப் பற்றிக் கூறுவதால் வேதாந்த நூலாகும். இதை இயற்றிய கிருஷ்ணனந்தரே இதை விரிவுபடுத்தும் நோக்கத்துடன் உரையும் எழுதி யுள்ளார். அதனுல் ஐந்து பக்கத்தில் எழுதிய நூல் 500 பக்கங்களைக் கடந்து விட்டது என்பதால் விரிவுரைக்கு விளக்கம் தேவையில்லை. இதில் சொல்லப் பட்ட விஷயங்களை வடமொழி முகவுரையில் காண்க.

### சுவடிகளின் நிலை.

சரசுவதி மஹால் நூலகத்தில் இந்த நூலைச் சொல்லக்கூடிய சுவடிகள் இரண்டு உள்ளன. கிரந்த லிபியில் எழுதப்பட்டவை இரண்டும் பழமை யானவையே, ஆனுல் அண்ணன் தம்பிபோல் இரண்டும் அமைந்திருப்பதால் பாடபேதத்திற்கு இடமில்லை. ஓர் சுவடியில் ஓரிடத்தில் சந்தேகம் வந்தால் மற்றெரு சுவடியின் உதவியால் அதைத் தீர்த்துக்கொள்ளலாம், இவ்வாறு இரு சுவடிகளின் உதவியால் பிழை நீக்கம் செய்து நல்ல முறையில் வெளியிட்டுள்ளோம். சுலபமாகப் புரிந்துகொள்வதற்காக மூலத்தின் தலைப்புகள், பூர்வபக்ஷம், சித்தாந்தம், எடுத்துக்காட்டுகள், நீண்ட உரைகளைச் செப்பனிடுதல், பாரா பாராவாக அமைத்தல், முற்றுப்புள்ளி முதலிய குறிகள் முதலியவைகளை பெரிய எழுத்தில் தந்துள்ளோம். ஆயினும் பல காரணங் களால் ஆங்காங்குப் பல பிழைகள் நேர்ந்துவிட்டன. அவைகளை மன்னித்து மேன்மேலும் இம்மாதிரியான நற்காரியங்களில் ஈடுபடுமாறு எங்களை ஆசீர்வதிக்கக் கோருகிறேம்,

### நன்றி நவிலல்.

இந்த நூலை வெளிக்கொண்டுவர மிக அதிக அளவில் ஆர்வம் காட்டிய நூலகத்தார்களுக்கும், நூலகத்தின் செயற்குழுவிற்கும், அச்சிட்ட பணியாளர்களுக்கும் நன்றியைத் தெரிவித்துக் கொள்கிறேம். ஏனைய நூல்களைப்போல இதற்கும் பணவுதவி செய்த பாரத சர்க்காருக்கும் என்றென்றும் கடமைப்பட்டுள்ளோம்.

## வேண்டுகோள்.

இந்த நூலைப் படித்து, பரமானந்தமடையும் ரசிகப்பெருமக்களுக்கு நன்றிகலந்த வணக்கத்தைத் தெரிவித்துக்கொள்கிறோம். இந்த நூலைச் சிறப்புடன் எழுதி மக்களுக்கு நல்வழி காட்டிய கிருஷ்ணானந்த சரஸ்வதி என்ற மகானின் காலடிகளிலேயே இந்நூலைச் சமர்ப்பிக்கிறோம்.

எல்லாம் கண்ணனே.

தஞ்சை,
*15—7—81.*

தங்கள் அன்பன்,

**பு. ம. பத்மனாப சர்மா.**



|| श्रीः ||

# *श्रीशिवतत्त्वरत्नकलिका

सव्याख्या

श्री कृष्णानन्दसरस्वतीविरचिता

|| श्री शिवाय नमः ||

यस्यावबोधनफलः सकलोऽपि वेदो
यस्मिन्मनोवचनवृत्तिरदूरवृत्त्या ।
यो विश्वकारणगुणोपधिपारभूमिः
तं त्वामनन्यमहमीश्वर संश्रयामि || १ ||

वागीशाद्यास्सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युः तं नमामि गजाननम् ||

अखिलभुवनजन्मस्थेमभङ्गं यतो यो-
विधिमपित महर्षि विश्रुतो वेदमौलौ ।
स भवतु परमात्मा संविदानन्दसत्ता
मम मतिगतिसाक्षी मङ्गलाय ध्रुवाय ||

अभूतान्याख्वादं प्रियमभिलषन्त्यै युवतये
समालभ्यात्मानं सततमिव गोपीरतिगुरुः ।
न दृष्टं क्वापीदं तव ललितवैयात्यमिति तां
अभिष्टुत्या रुष्टामयमनुनयन्पालयतु वः ||

जगद्बिम्बं यस्यां जयति सदसम्बाधनिरुतं
मणावन्तर्लीनं चकचकदिवैतं बहिरिव ।
गिरां देवीमादिक्षनिगमनवर्णोदितशिरो-
मुखाद्यङ्गीमङ्गीकुरुत सुरसङ्गीतमहिमाम् ||

---

*B. 9840 & 9839 T. M. S. S. M. Library, Thanjavur

सौजन्यजन्ययशसामुदयालवालं
शीलोर्मिलामलदयामृतसिन्धुबन्धुम् ।
विज्ञानकल्पतरुदोहददिव्ययोगं
श्रीवासुदेवयमिपुङ्गवमानतोऽस्मि ॥

तुङ्गीकुर्वन्नतजनयशोवैदुषीरुत्तरङ्गै-
रङ्गीसाक्षादुपशमसुधास्यन्दनिर्यासासारः ।
श्रीमानेकस्सकलजगतीदेशिकस्सद्गुणानां
सीमा भूमेर्जयति भवुकं रामभद्रो यमीन्द्रः ॥

सहस्रांशोरिन्दोरपि सहकृशानोरसुलभः
प्रकाशो यस्यैव स्वयमनितराधेयमधुरः ।
त्रिलोकीनिर्मोक्षव्रतविहितदीक्षापरिकरं
प्रपद्ये युक्ताख्यासुरभिलममुं श्रीपरगुरुम् ॥

पद्यैश्शतेन परमेश्वरसंस्तुतिर्या
पादाधिकेन कलिता परतत्वसारा ।
श्रीतत्त्वरत्नकलिकेति मुदे बुधानां
आमोदरञ्जनमिदं जनयामि तस्याः ॥

शास्त्रेषु दुर्गमतमेषु महामतीना-
मन्तः कथं मृदुधियामवगाहतां धीः ।
तेषामिहाभिलषतां परतत्त्वविद्यां
श्रीतत्त्वरत्नकलिका सुगमोऽभ्युपायः ॥

इह खलु हिरण्यगर्भादिपुत्तिकान्ततनूपादानपरित्यागलक्षणजननमरणमहावर्तपरम्परापरिवर्तसुदुस्तर-संसारसारांगारसागरनिस्तारणीं, ब्रह्मात्मविद्यादृढतरणिं अतिसुलभोपायेनाभिलषतां ; अखिलवेदैदम्पर्यविद-नामोदमेदुरां, अनतिशयानन्दस्वरूपावबोधनमकरन्दनिर्भरां श्रीशिवतत्त्वरत्नकलिकाख्यां परशिवस्तुतिमुप-चिकीर्षुः प्रकरणप्रतिपाद्यमर्थजातं संक्षेपतो दर्शयन् परतत्त्वानुसंधानलक्षणं मङ्गलमाचरत्याद्यपद्येन— **यस्यावबोधनफल इति ।**

अत्र वेदानुरोधेन किमिति परतत्त्वप्रतिपादनप्रवृत्तिः सांख्याद्यनुरोधेन कस्मान्न स्यादित्याशङ्कानिरासाय आद्यं विशेषणम् । अत्र यस्यैवानन्यस्येति **विषयनियमः** । अवबोधनमेव नान्यत्फलं यस्य स तथेति **फलनियमः** । वेद एव नान्य इति **प्रमाणनियमश्च** विवक्षितः । तेन अग्निहोत्रादिकं कर्म, ईश्वरोपासनं, सांख्यादिविद्या वा न मोक्षसाधनमित्युक्तं भवति । कर्मोपासनयोः अनित्यफलत्वनियमात् ।

पुरुषबुद्धिमात्रमूलतया सांख्याद्यप्रामाण्यस्य तत्प्रमेयदौस्थ्यस्य च ब्रह्ममीमांसायां प्रतिपादितत्त्वाच्च । अनेनास्य प्रकरणस्य वेदतात्पर्यनिरूपणया परतत्त्वप्रतिपादनपरत्वात् वेदस्य यो विषयः सकलाशिवोपशमात्मकं परमशिवतत्त्वं, यच्च फलं नान्तरीयकाविद्याद्यनर्थनिबर्हणा तस्यैवावगतिपर्यन्ता विद्या स एव विषयः तदेव च फलमिति सिद्धं भवति ।

तत्र चोदनाभागापरिशेषार्थं सकल इति विशेषणम् । कृत्स्नस्य च वेदस्य ब्रह्मणि प्रामाण्यम् । शास्त्रयोनित्वाधिकरणे मानान्तरपर्युदासेन प्रतिज्ञातं, उपपादितं च "तत्तु समन्वया"दित्यादिना । वेदान्तप्रामाण्यं चोदनांशप्रामाण्यं च "सर्वापेक्षादिसूत्रैरु"पक्षिप्तम् । **एतदुक्तं भवति**—विहितकर्मणां ब्रह्मात्मावबोधसाधनमनोवैमल्यादिहेतुत्वेन, साधनांशप्रवृत्या चोदनाभागस्य, विषयांशप्रवृत्या वेदान्तभागस्य च ब्रह्मात्मावबोधफलकत्वमिति । एवं चोदनाभागस्य विधिफलकतया, ब्रह्मावबोधफलकत्वानुपपत्तिरिति शङ्कानिवृत्तिः **अपिना** समुच्चीयते । यद्वा, वेदोपबृंहणस्मृतीतिहासपुराणादि समुच्चीयते । तस्यापि वेदवदेव ब्रह्मणि प्रामाण्यादिति ।

**ननु** चोदनाभागस्य ब्रह्मणि स्वविधेयकर्मनिर्मलीकृतमनोविषयीकरणलक्षणतत्प्रवृत्तिप्रणालिकया वेदान्तभागस्य साक्षादभिधानलक्षणप्रवृत्या च तदवबोधनफलत्वमेषितव्यम्; मनोवचनप्रवृत्तिश्च न क्वापि निर्विशेषे सम्भवतीति ब्रह्मणोऽपि सविशेषत्वापत्या, यथाश्रुतस्य सर्वज्ञत्वाद्यपहतपाप्मत्वादिकल्याणगुणार्णवस्य, सकलहेयगुणाकरजीवतादात्म्यायोगात्, तदविद्यामूलत्वाभावेन संसारानर्थस्य, नान्तरीयकाविद्याद्यनर्थनिवृत्तिकतदवबोधफलत्वानुपपत्तिः । अथैतद्दोषपरिहाराय ब्रह्मणि मनोवचनयोरप्रवृत्तिरुच्येत, सुतरां तदवबोधफलत्वानुपपत्तिः । सर्वस्यैव साधनस्य स्वविषयालम्बनप्रवृत्यैव फलसाधनत्वात् । अन्यथातिप्रसङ्गात् इति शङ्कानिरासाय द्वितीयं विशेषणं **यस्मिन्नित्यादि** ।

न नास्ति ब्रह्मणि मनोवचनप्रवृत्तिः । किन्तु, यथा मधुमाधुर्यमित्यादावाश्रयद्रव्यावच्छिन्नरससामान्यप्रवृत्या रसजातिविशेषज्ञानपर्यवसानमदूरविप्रकर्षेण, तथा अदूरे तदुपलक्षणकारणतादिरूपे, वृत्या वर्तनेन विषयीकरणेन ब्रह्मात्मावबोधपर्यवसायितैव सा नाहत्य विषयीकरणमिति नोक्तदोष इत्यर्थः ।

**एवं च** यस्येति षष्ठी शेषे, न कर्मणि । अस्य गौरादिवत् । यस्मिन्निति सप्तमी सामीप्ये, नद्यामास्त इत्यादिवत् । निमित्ते वा । चर्मणि द्वीपिनं हन्तीत्यादिवत् । न त्वासन आस्त इत्यादिवदुपश्लेष इत्युक्तं भवति । अनेन "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहे"ति आनन्दमीमांसावाक्यशेषावगतवाङ्मनसाविषयत्वाभिधानेन ब्रह्मणो निरतिशयानन्दकैवल्यमुपक्षिप्तम् । तेन या ब्रह्मात्मावबोधफलत्ववचनार्थसिद्धाविद्याद्यनर्थनिवृत्तिरुक्ता न सैव पुरुषार्थः, तस्याः सुखशेषत्वात् । अन्यथा बह्वायासे विहितकर्मणि निन्दितव्यवायादौ वा न प्रवृत्तिः स्यात् इति शङ्का निरस्ता । आनन्दस्वरूपाप्तिपर्यवसानोपपत्तेः ।

**ननु** जगत्कारणमीश्वरो महामायः सर्वज्ञत्वादिकल्याणगुणसागर उपासनाविधिशेषतया शास्त्रप्रतिपाद्योऽवगम्यते । तत्कथमविषयतयैव तदवबोधनमात्रफलता, वाङ्मनसाविषयत्ववचनं च तदानन्दगुणम्ये-

यत्तानवच्छेदाभिप्रायम् । इति शङ्कानिरासाय तृतीयं विशेषणम्—**यो विश्वेत्यादि** । गुणशब्देन सत्त्वरजस्तमोगुणमयी मायाशक्तिर्लक्ष्यते । देवात्मशक्तिं स्वगुणैर्निगूढां इति हि श्रूयते । गुणाः सर्वज्ञत्वादयो वा । सा च ते च उपधयो यस्य कारणात्मनस्स तथा । विश्वकारणमिति गुणोपधिः विश्वकारणगुणोपधिरिति मयूरव्यंसकादिवत्समासः । तस्य विश्वकारणलक्षणस्य गुणोपधेः निरुक्तगुण-समष्टिमयस्य पारभूमिः, यथा पारावारस्य पारभूमिरतत्स्वभावा तद्विधारिका च तथा अकारणस्वभाव आत्मा कारणाधिष्ठानं चेत्यर्थः । तत्प्रतिपत्त्युपयोगितयैव शास्त्रे कारणरूपमुपादीयते न प्रतिपाद्यतया इति भावः ।

**नन्वयं** जीवात्मा न कारणान्तर्गुणः न कार्यान्तर्गुणः, वैलक्षण्यादनादित्वाच्च । एवं जीवस्य पृथग्भावावश्यंभावे, ततः परमात्मवैलक्षण्यस्यार्थसिद्धेः, अस्तु सर्वज्ञत्वादिविशिष्ट एव जगत्कारणमात्मा शास्त्र-प्रतिपाद्य इति शङ्कानिरासाय चतुर्थं विशेषणं—**अनन्यमिति** । नास्त्यन्यदस्मादित्यनन्यम् । एक-रसस्यैवात्मतत्त्वस्य अहमित्यभिमानमय्या केवलमविद्यया जीवभाव इत्यतत्त्वान्तरत्वान्न जीवपरवैलक्षण्यप्रसङ्ग-इति भावः । अथवा, न अन्यमनन्यं, प्रत्यासन्नत्वात्संश्रयितुरात्मनः इति लभ्यते । साक्षादपरोक्ष-सर्वान्तरप्रत्यगात्मैकरसस्वभावमित्यर्थः । द्वितीयान्ततच्छब्दसमभिव्याहृतमपि अनन्यपदं संश्रयणक्रियायां विधेयविशेषणमेव यथा स्यादित्यपकृष्य व्याख्यातम् । तं प्रकृतमविषयप्रकाशस्वभावं अनतिशयानन्दमात्रं अपास्तसमस्तभेदं अशेषाशिवोपशमं प्रत्यगेकरसम् । **त्वमिति,** साक्षात्तदभिधायकशब्दाभावात् सम्बोध्य ईश्वराभिधायिना युष्मद्वृत्तेन लक्षयति । **हे ईश्वरेति** । सम्बोधनेन आत्मतादात्म्यावगतिः साक्षात्कार-पर्यन्तोपासनावर्जितपरमेश्वरानुग्रहलभ्येति सूचयति । "यस्य देवे परा भक्तिः", "यमेवैष वृणुते, ईश्वरो मामयं प्राप्नोत्वित्यनुगृह्णाति तेन लभ्य" इति श्रुतेः । यमेव परमात्मानं एष साधको वृणुते तात्पर्येण, तेन स लभ्य इति **भगवत्पादाः** । अहमित्यपि, तमेवात्मानमपरोक्षमुपलक्षयति । **संश्रयामि** । सम्यक् अभेदेन प्रतिपद्ये । निष्कृष्टस्याप्यात्मनः कथञ्चिदसदर्थानुषङ्गमात्रेण उत्तमपुरुषनिर्देशः । स च त्वं चाहं च वयं स इत्यादिदर्शनात् ॥ १ ॥

निष्पूरुषाशयकलङ्ककथाविशङ्कः
सम्यक्प्रमाणमनपेक्षतया प्रसिद्धः ।
वेदाहमेतमिति नः स्वयमाह वेदो–
वेद्यं सदाशिव भवन्तमिहात्मनैव ॥ २ ॥

एवमाद्यर्धेन ब्रह्मणः सकलवेदैकवेद्यत्वं वाङ्मनसागोचरत्वं कारणोत्तीर्णत्वं आत्मानन्यत्वं तथैवानु-भाव्यत्वं चेति प्रकरणप्रतिपाद्या पञ्चपदार्थी संगृहीता । शेषोऽस्या एव प्रपञ्चः । "इष्टं हि विदुषा-मेतत्समासव्यासधारणम् ।" अत्रादौ वेदस्य प्रमाणत्वोपपादनपूर्वकं ब्रह्मणः तदेकवेद्यत्वं प्रतिपादयितुं प्रस्तौति—**निष्पूरुषेत्यादिना** । तत्र तावत्प्रत्यक्षादिमानान्तराविषयावेदकशब्दराश्यात्मको वेदः,

प्रमाणं, बोधकत्वबाधाभावाभ्यां प्रत्यक्षवत् । तत्र व्युत्पत्त्याद्यपेक्षया बोधकत्वं लोकवदेव सिद्धमिति । बाधकाभावमुपपादयन्नाह— **निष्पूरुषाशयकलङ्ककथाविशङ्क** इति । पुरुषाशयस्य वक्तृपुरुषाभिप्रायस्य, अनेन शब्देन अयमर्थो बुध्यतां इत्येवंरूपस्य, पदेषु सङ्केतात्मकस्य, वाक्येषु तात्पर्यात्मकस्य कलङ्कः भ्रमप्रमादाद्यनुषङ्गः तस्य कथा कथनं भ्रमादिहेतुकमपीदं स्यादिति वितर्कमूलं प्रसञ्जनं, तथा विशङ्का अप्रमाणमेतत्स्यादिति तस्य निर्गतः, तथोक्तः । पौरुषेयशब्दे हि भ्रमादिमूलतया अप्रामाण्यं दृष्टम् । वेदे तु नित्यतया पुरुषाभिप्रायमूलत्वाभावात् भ्रमादिमूलत्ववार्ताप्रसङ्गोऽपि नास्तीति दर्शयितुं कथाग्रहणम् ।

ननु शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । "ऋचस्सामानि जज्ञिरे । छन्दाँसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ।" "तस्मात् ऋचः साम यजूँषि" इत्यादौ । तत्कथमपौरुषेयत्वं वेदस्य ? वेदः पौरुषेयः, वाक्यत्वात्, कालिदासादिवाक्यवत् इति अनुमानाच्च । नैवम् । "तद्यथा त्रेताग्नेरभ्याहितात्पृथक् धूमा विनिश्चरन्त्येवमेवास्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदः सामवेद" इत्यादौ, अग्निधूमनिदर्शनेन अर्थज्ञानपूर्वकविरचनाव्यावृत्तिफलनिश्वसितत्वरूपकेण च पुरुषाभिप्रायमनपेक्ष्य तदभिव्यक्तिवचनात् । सम्प्रदायाविच्छेदे सति कालिदासकृतावित्यादिवदीश्वरकृताविति कर्तुरस्मरणाच्च । पुरुषबुद्धिमूलत्वानुमानस्य बाधात् ।

ननु गौतमादयः स्मरन्ति वेदस्य कर्तारमीश्वरम् । न, ते स्मर्तुमीशते स्वोत्प्रेक्षितानुमानातिरिक्तसाधकमानाभावात् । तत्र चानुमाने निरूपित एव बाधः ।

तथा च, सुप्तोत्थितादिव तदधीतस्य सत एव वेदस्य सर्गादावीश्वरात्प्रादुर्भाव एव जनिगिरा अभिधीयते । तावता शास्त्रयोनित्वेन उपादेयगतसर्वविषयताशक्तिः उपादानगतसर्वविषयताशक्तिमूलेति न्यायोपक्षेपेण ब्रह्मणः सर्वज्ञत्वसिद्धिरुपपादिता विवरणादौ । एवं सति "वाचा विरूप नित्यया" "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः ॥" इत्यादिश्रुतिस्मृत्याञ्जस्यमुपपद्यते । अत एव **देवताधिकरणे** इन्द्रादिविग्रहाभ्युपगमे, डवित्थादिवत् पदपदार्थसम्बन्धागन्तुकत्वे पदानित्यताविशिष्टानुपूर्विकवाक्यानित्यता च "शब्द इतिचेन्नातः प्रभवात्, अत एव च नित्यत्वं, समाननामरूपत्वाच्च आवृत्तावप्यविरोधः" इति परिहृता ।

ननु नाहत्य वेदस्य नित्यतावस्थातुं शक्यते । उच्चारणाभिव्यक्तिक्रमलक्षणानुपूर्वीविशेषविशिष्टस्य नित्यत्वायोगात् । न चानुपूर्वीरहितवर्णमात्रस्य वेदत्वं, येन वर्णनित्यत्ववादेनापि वेदनित्यता शङ्क्येत । तत्कथमस्य नित्यतेति चेत्? उच्यते । नास्ति तावदुपाध्यायादेरन्वहमुच्चारणाभिव्यक्तिक्रमान्यत्वेऽपि वेदस्य तज्जन्यत्वमन्यत्वं वा, विदुषामपि तदसंप्रत्ययात् । तत्कस्य हेतोः? भूतपूर्वक्रमानुकारितया तस्य, तत्रास्वातन्त्र्यात् । एवमीश्वरस्याप्यनादिभूतपूर्वक्रममेवानुकुर्वतः स्वातन्त्र्याभावेन तस्य स्वरूपेण नित्यताव्यपदेशः । अत एव कथञ्चिदपि पुरुषाशयानुप्रवेशाभावेन प्रामाण्यनैयत्यं चापरा नित्यता । पौरुषेयत्वे तन्न स्यात् । विप्रलम्भदर्शनात् बुद्धाद्यागमवत् । न च परानुग्रहैकप्रयोजननिर्दोषसर्वज्ञप्रणीततया, वेदस्य प्रामाण्यनैयत्यमुपपद्यत इति वाच्यम् । तादृशपुरुषप्रणीतत्वस्यैव दुरधिगमत्वात् ।

न च वेदादेव तदधिगमः, तद्वचनादेव तस्य सर्वज्ञत्वाद्यधिगमेऽपि विप्रलम्भको विजयेत। बुद्धादेरपि तदागमादेव तथात्वावगमात्। तत्प्रणीतागमस्यापि अप्रामाण्यानुपपत्तेः। तस्मादपौरुषेयो वेद इति सिद्धम्। अनेन साङ्ख्याद्यागमानामाम्नायविरोधे सति, पौरुषेयेणां प्रमादिमूलतया अप्रामाण्यमुक्तं भवति।

ननु पुरुषाशयाननुप्रवेशोऽपि प्रसुप्तप्रलापादेरिव वेदस्य, कथञ्चिदप्रामाण्यशङ्का स्यादित्यत आह सम्यगिति। अबाधितविषयमित्यर्थः। प्रमाणमित्यनेनान्वयात्क्लीवता। सुप्तप्रलापादेर्विषयबाधादप्रामाण्यं, वेदस्य तु विषयबाधानुपलम्भान्नाप्रामाण्यशङ्कावकाश इत्यभिप्रायः।

हन्त एवमबाधितविषयत्वेनैव प्रामाण्यसम्भवे, किमपौरुषेयत्वव्यसनेनेत्यत आह—अनपेक्षतयेति। पौरुषेयागमस्यातीन्द्रिये धर्मादौ, मूलप्रमाणापेक्षया प्रत्यक्षयोग्ये भेषजादौ, संवादापेक्षया प्रामाण्यं स्यात्। तदभावे बुद्धाद्यागमस्याप्रामाण्यात्। अपौरुषेयतया तु वेदस्य, स्वतःप्रामाण्यमिष्यते। यद्यपि सर्वस्यैव प्रमाणस्य स्वतःप्रामाण्यमवशिष्टं, तथापि वेदस्य तन्नियतं, अन्यस्य त्वौत्सर्गिकमिति परापेक्षया व्यवतिष्ठत-इति विशेष उपपद्यते। अथापि न वेदस्य प्रामाण्यं युक्तम्—"वायुर्वै क्षेपिष्ठा देवता", "धूम-एवाग्नेर्दिवा ददृशे" "को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वे"तीत्यादिमानान्तरसिद्धतद्विरुद्ध-स्वव्याघातवचनात् इत्यत आह—प्रमाणं प्रसिद्ध इति। प्रमाणत्वेन सकलशिष्टसम्प्रतिपन्न इत्यर्थः।

यथाह जैमिनिः—"औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थे अनुपलब्धेः तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति। "शास्त्रयोनित्वादि"ति भगवान्बादरायणः। "मन्त्रायुर्वेदवत्तत्प्रामाण्यं आप्तप्रामाण्यात्" इति नैयायिकाः। "प्रत्यक्षानुमानागमाः प्रमाणानि" इति साङ्ख्याः। स्मर्तारोऽपि—"वेदो धर्ममूलं तद्विदां च स्मृतिशीले", "धर्मज्ञसमयः प्रमाणं वेदाश्च" इत्याद्याहुः। अतो वेदप्रामाण्यं सर्वतन्त्रसिद्धान्त इति, तत्सिद्धौ नास्माभिः प्रयतितव्यमित्यभिप्रायः।

अयमत्राशयः—अज्ञाते फलवत्यर्थे तात्पर्यं वेदस्य, तात्पर्यविषये च प्रामाण्यम्। स च विधिर्निषेधोऽन्यो वा। अनुवादगुणवादभूतवादैः स्तुतिनिन्दाभ्यामुत्तभ्यते। तथा च "वायव्यं श्वेत-मालभेत" इति विधेः क्षिप्रदेवताकं कर्म क्षिप्रमेव फलदं स्यादिति स्तुत्यर्थो "वायुर्वै क्षेपिष्ठा देवता" इति सिद्धानुवादः। तथा "सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोति" इत्युभयदैवत्यमन्त्रविधेः, सङ्गतयोर्देवतयोरुभाभ्यां होमो युक्त इत्यौचित्येन स्तुत्यर्थोऽयं गुणवादः, "उद्यन्तं वावादित्यमग्निरनुसमा-रोहति" कथमेतदवगम्यते? "तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः" इति स्फुटास्फुटत्वगुणालम्बनः। तथा "दिक्ष्वतीकाशान्करोति" इति विधेः, "इत्थं महीयांसोऽतीकाशाः, यदामुष्मिकस्यापि सन्दिग्धस्य प्रत्यक्षावेक्षणद्वाराणि", इति स्तुत्यर्थोऽयं प्रत्यक्षत्वगुणालम्बनः असन्दिग्धेऽपि सन्दिग्धवद्वादः "यद्यमुष्मिल्लोक" इत्यादिः। तथा "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिविधेरित्थं विशिष्टफलं कर्मेति स्तुत्यर्थो "यन्न दुःखेन संभिन्न" मित्यादिसद्भूतार्थवादः। एवं "बर्हिषि रजतं न देय"मिति निषेध्यस्य परत्र द्रव्यव्ययनिमित्तमेव परिजनरोदनं, रजतदक्षिणादानविषयमुपनिबद्धय, कष्टमिदं परिजनरोदनहेतुरजत-दक्षिणादानमिति निन्दार्थोऽयमनुवादः। "यो बर्हिषि ददाति पुरास्य संवत्सरात् गृहे रुदन्ति" इति।

तथा तस्यैव निषेध्यस्य, यदि रुदिताश्रु घनीभवेत् तत्तुल्यममङ्गलं रजतमिति निन्दार्थो गुणवादः। "सोऽरोदीद्यदश्रशीयत तद्रजतं हिरण्यमभवत्" इति। तथा "ब्राह्मणाय नापगुरेत" इत्यादिनिषेधस्य, अतिकष्टमिदं महादुःखफलं ब्राह्मणापगोरणमिति निन्दार्थो भूतवादः "योपगुरातै शतेन यातयात्" इत्यादि। एवं वस्तुतत्वप्रतिपादनेऽपि पितृपुत्राख्यायिकारूपा अर्थवादा उन्नेयाः। तदेवं यथायथमर्थवादादिसङ्गत्युपपत्तेर्न **वेदाप्रामाण्यशङ्केति**।

अथ किं तत्प्रमाणत्वम्? प्रमाकरणत्वमेव। का पुनः प्रमा? ज्ञेयावभासप्रयोजनकं ज्ञानं प्रमा। ज्ञानाकारं ज्ञेयं, यदनुषङ्गेण ज्ञानं निरूप्यते। तस्यावभासः, अज्ञानानुषङ्गलक्षणानवभासविरोधिस्वभावं प्रमातृसंविदुपरागलक्षणं स्फुरणम्। तत्प्रयोजनकं ज्ञानं, चिदचिद्ग्रन्थिरूपासदर्थाहङ्कारोपादानः चैतन्यव्याप्तो वृत्तिविशेषः। तत्र भ्रमादौ धर्मिज्ञानस्य आरोप्यावभासप्रयोजनकस्य तदंशेऽपि प्रमात्वप्रसङ्गवारणाय ज्ञेयेति। तथाहि—इन्द्रियसन्निकर्षादिना यथाविषयाकारा वृत्तिरुपजायमाना, दोषेण प्रतिबन्धादिदमाकारमात्रावसितोपजायते। तदैव, तदवभासनीयेदमंशतादात्म्येन शुक्तिकाद्यज्ञानविवर्तो रजतादिः इदमंशैकावभासो भवति। अनयैव दिशा, संशयोऽपि विरुद्धकोटिद्वयारोपावभासः व्याख्येयः। तदेवं सति, इदमाकारवृत्तेः स्वाकारैकावभासत्वात्, आरोप्यस्य "इदं रजतं जानामि" इति तदनुषङ्गनिरूप्यत्वविभ्रम एवेति तदाकारत्वाभावात्, न तदंशेन प्रमात्वापत्तिः। यदि पुनरिन्द्रियसन्निकर्षादिना तद्विषयवृत्त्युपजनप्रसङ्गे, दोषेण प्रतिबन्धात् तदज्ञानमेवावभासमानं रजतादिरूपविवृत्तमवभासत इति मतम्। तदर्थावभासप्रयोजनकं ज्ञानं प्रमेत्येव लक्षणम्। ज्ञानाभावादेव भ्रमादावनतिप्रसङ्गात्। स्मृत्यादावतिप्रसङ्गवारणाय अर्थावभासप्रयोजनकमिति। न च स्मृतेरनुवादज्ञानस्य वा विषयावभासः प्रयोजनम्। तस्य पूर्वज्ञानेन कृतत्वात्। प्रत्यभिज्ञानं तु यद्विषयतया भेदभ्रमविरोधि स कियानप्यभिज्ञाद्वयविषयादधिकः इति, तदवभासप्रयोजनत्वात्प्रमैव। इन्द्रियसन्निकर्षादावतिप्रसङ्गवारणाय ज्ञानमिति।

**तत्करणं प्रमाणं** द्विविधम्। प्रत्यक्षपरोक्षभेदात्। तत्र स्वजन्यज्ञानव्याप्त्या विषयावभासप्रयोजनकं प्रत्यक्षम्। तत् द्विविधम्। अलौकिकं लौकिकं चेति। प्रमातृसंविदसंभिन्नसद्विषयावभासफलज्ञानव्याप्तिप्रयोजकमलौकिकम्। स चात्मतत्वविषय आगमः। यद्यप्यागमजन्यज्ञानाविषयतयैव आत्मतत्वावभास इष्यते, तथापि ज्ञानस्योदयदशायां तदाकारतामपेक्ष्य विषयावभासफलत्वव्यपदेश इति नासम्भवः। तदिदं तात्त्विकं प्रमाणमुच्यते। विषयविरोधिपरप्रमाणात्यन्तविरहात्। सर्वशून्यवादस्य च भ्रमादिमूलतया बोधकत्वस्यैव बाधेनाप्रमाणत्वात्। शेषं तु सर्वमतात्विकं प्रमाणम्। अनेनैव परेण विषयबाधात्। "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति न्यायात्। तदुपपादनविस्तरस्तु **सिद्धान्तसिद्धाञ्जने** द्रष्टव्यः। उक्तलक्षणयोगात् व्यवहाराविसंवादाच्च, व्यावहारिकं प्रमाणमिति च व्यपदिश्यते। प्रमातृसंविदसंभिन्नसतो विषयस्य ज्ञानव्याप्तिप्रयोजकं लौकिकं प्रत्यक्षम्। तच्च श्रोत्रादिभेदेन पञ्चविधम्। मनस्तु सर्वप्रमाणसहकारिमात्रम्। असाधारणविषयशून्यत्वात्। तदिदं लौकिकं प्रत्यक्षमाश्रित्याह जैमिनिः—"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" इति। **सांख्या अपि**—"इन्द्रियप्रणालिकया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना बुद्धिः प्रत्यक्षम्" इति।

स्वजन्यज्ञानानुषङ्गमात्रेण विषयावभासप्रयोजकं परोक्षम् । तच्च द्विविधं, अलौकिकं लौकिकं च । लौकिकमानानवगम्यविषयमलौकिकम् । तच्च चतुर्विधम् , श्रुतिस्मृत्याचारार्षभेदात् । तत्रापौरुषेयशब्दः श्रुतिः । श्रुतिगम्यार्थनिबन्धनं स्मृतिः । तदनुष्ठानमाचारः । न च स्मृत्याचारयोः श्रुत्यनुमानापेक्षया तदनुमितश्रुतेरेव तदर्थावबोधान्न पृथक्प्रमाणत्वमिति वाच्यम् । व्यवस्थितपदानुपूर्विकतया तदनुमानासंभवेन अनुमितश्रुतेरबोधकत्वात् । स्मृतेः शब्दस्य हेतुदर्शनमन्तरा शिष्टप्रवृत्तिलक्षणाचारस्य च कर्तव्यविशेषप्रमा-जनकत्वे तद्विस्रम्भाय परं मूलप्रमाणानुमानमाद्रियते । आर्षं तु सर्वज्ञताबीजधर्मविशेषमूलसत्त्वोत्कर्षशालिचित्तमेव । ततः प्रतिभामात्रमपि ज्ञानं जायमानं, धर्मविशेषादेवाबाधितविषयमपरोक्षकल्पं भवति । यथाहुर्योगाः—"ऋतम्भरा तत्र प्रज्ञे"ति । ऋतं बिभर्तीति ऋतम्भरा । यथार्थविषयेत्यर्थः । शब्दतदुपजीविप्रमाणानपेक्षविषयं लौकिकम् । तच्च बहुप्रकारम् । अनुमानादिभेदादित्यलं सुदूर-परिधावनेन । प्रमाणस्वरूपपरिकरप्रपञ्चस्तु तन्त्रान्तरादेवावगन्तव्यः । वयं तु आम्नायतात्पर्यनिरूपणप्रवृत्ता-विस्तरभीरवः प्रकृतमनुसरामः ।

एवं प्रमाणभूतो वेदः "वेदाहमेतं पुरुषं महान्तम्", "नान्यः पन्था" इत्यनेन सावधारण-वचनेन । हे सदाशिव, नित्यमेवाविद्यादिनिखिलामङ्गलोपशमस्वभाव, शाम्यतेर्घङि वर्णव्यत्ययेन शिवः । 'पृषोदरादीनि यथोपदिष्टं' इति । "प्रपञ्चोपशमः शिवोऽद्वैत आत्मा" इति च श्रुतिः । नित्यमङ्गल-स्वभावेति वा । वशिरण्योरुपसंख्यानं इति वष्टेरप्प्रत्यये शिव इति रूपम् । वर्णव्यत्ययः पूर्ववत् । "वशकान्तौ शिवस्स्मृतः" इति ह्याहुः । कर्मणि चेदं रूपम् । अकर्तरि च कारके संज्ञायां इत्यत्र चकारेण संज्ञाव्यभिचारोपगमात् । को भवता दायो दत्तः, को भवता लाभो लब्धः इति चोदाहृतम् । संज्ञायामपि, सति सम्भवेऽवयवानुगतरूपमेव प्रवृत्तिनिमित्तमास्थेयम् । परमप्रेमास्पदतया परमानन्द-स्वरूपेत्यर्थः । "तदेतत्प्रेयः पुत्रात्" इत्यादिश्च श्रुतिः । विज्ञानमानन्दं ब्रह्मे"त्यादिश्च । अनेन सम्बोधनेन पुरुषं महान्तं इत्यादीनां, प्रथमतो वेदनक्रियान्वयेऽपि पार्ष्ठिकस्यापि सामानाधिकरण्यस्य विशिष्टा-भेदासंभवात् , तमसः परस्तात्सतः तदुपाधिकविशेषणायोगाच्च, निष्कृष्टप्रकाशानन्दसत्तामात्रपर्यवसानमुपक्षिप्तं भवति । भवन्तं निरुक्तनिर्विशेषस्वभावमेव त्वां, आत्मना स्वेन वेदेनैव मानान्तरव्यावृत्त्यर्थः एवकारः । इह बुद्धिगुहायां वेद्यं वेदनीयं नः असभ्यं स्वयमाह, न त्वन्यदीयवेदनवचनमन्वाहेत्येवमर्थं स्वयमिति विशेष्यते । अन्यस्य कस्यचिदप्रकृतत्वात् इत्याहेत्यादि । तज्ज्ञापकाभावाच्च । अत्र वेदस्य स्वयं वेदितृत्वाभावात् वेदेत्यन्तर्भावितण्यर्थतया वेदयामीत्यर्थः । यद्वा, चेतनवदुपचारादहं वेदेत्युक्ते, वेदितुः वेदयितृत्वोपपत्तेः । वेदयितृत्वमेव फलतीति । वेदैकवेद्यत्वं सूचितं भवति इति ॥ २ ॥

मानान्तराणि परिमृष्टपराक्पदानि
प्रत्यक्चितिप्रकृतिमात्मगतिप्रकाशम् ।
अञ्चन्ति नौपनिषदं भगवन् भवन्तं
नावेदविन्मनुत इत्यपि शुश्रुम त्वाम् ॥ ३ ॥

अथ कथं मानान्तराणि नात्मतत्वं वेदयन्ति ? न खल्वेकमानप्रवृत्तिविषये मानान्तरप्रवृत्तिर्विरुध्यते । त्वक्चक्षुषोरेकत्र प्रवृत्तिदर्शनात् । न च निष्प्रयोजना आपद्यते, मानानां स्वविषयप्रवृत्तिपौर्वापर्यनियमाभावात् । सति हि तन्नियमे, पूर्वेणैव जिज्ञासाशान्तौ अपरमप्रयोजनं स्यात् । यथाहुः—"यावदज्ञातसम्बन्धं ज्ञेयं तावत्प्रमित्सति । प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यत" इति । अर्थसिद्धिदार्ढ्याय प्रमाणसंप्लवोपन्यासश्च सर्वतीर्थकरसंप्रतिपन्नः । तस्मात्, आत्मतत्वस्यापि वेदैकवेद्यत्वमास्थातुमशक्यमित्याशङ्क्य, तदेव मानान्तरावेद्यत्वमुपपादयन्नाह—**मानान्तराणीति** । आगमादन्यानि मानानि मानान्तराणि । **भवन्त** नाञ्चन्ति न प्राप्नुवन्ति न विषयीकुर्वन्ति इति सम्बन्धः । कुतो नाञ्चन्ति ? तत्र हेतुगर्भविशेषणं **परिमृष्टेति** । परा अञ्चन्तीति पराञ्चः । इदमर्थः **परागुच्यते** । पद्यते गम्यत इति पदं दृश्यम् । पराक् च तत्पदं च वस्तु पराक्पदम् । परिमृष्टं परामृष्टं आलम्बितं विषयीकृतं पराक्पदं यैस्तानि, तथा । आत्मा पुनः तद्विषयविपरीतस्वभाव इत्याह **प्रत्यगिति** । प्रातिलोम्येन, पराक्पदवैपरीत्येनानिदंतया अञ्चति प्रकाशत इति प्रत्यगित्युच्यते । **चितिरिति,** चितिसंज्ञान इति धातोरयमिगन्तो निर्देशः, धात्वर्थं ज्ञानमात्रं लक्षयति प्रत्यक्चासौ चितिश्चेति, तथा । अथवा, चेततेरेव "इगुपधात्किदि"ति किदिन्प्रत्ययः । यद्वा, चिनोतेरयं क्तिन्नन्तो निर्देशः । चीयते संगृह्यते विषयोऽनयेति चितिर्ज्ञप्तिरेव । "अकर्तरि च कारके संज्ञायां" इति हि स्मर्यते । प्रतीची चासौ चितिश्च प्रत्यक्चितिः "पुंवत्कर्मधारयजातीयदेशीयेषु" इति पुंवद्भावः । सैव प्रकृतिः स्वभावः यस्य तं, अनिदंज्ञानैकस्वभावमित्यर्थः । तथा च पराग्विषयैकप्रवृत्तिस्वभावानि मानान्तराणि तद्विपरीतं आत्मानं न प्राप्तुं शक्नुवन्ति, प्राचीमिव प्रस्थितः प्रतीचीं, स्वभावविरोधात् । अन्यत्र तु तथा विरोधाभावादनेकप्रमाणप्रवृत्तिरुपपद्यत इत्यर्थः ।

**अयं भावः**—इन्द्रियाणि तावच्छ्रोत्रादीनि प्रतिविषयोपलब्धिव्यवस्थाप्यतया सिद्ध्यन्त्येव । व्यवस्थितशब्दादिविषयाण्येव सिद्ध्यन्ति । आत्मा च अशब्दस्पर्शादिरिति, कथं तद्विषयस्स्यात् ? अथ त्वक्चक्षुषोरिव द्रव्यं, आत्मा सर्वेन्द्रियाणामपि साधारणः विषयः स्यात्, न स्यात् । अन्यत्रापि स्वस्वासाधारणविषयद्वारैव इन्द्रियप्रवृत्तिव्यवस्थानात् । आत्मनि तु शब्दादिशून्यत्वादप्रवृत्तिः । तथा च श्रुतिः— "पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्" इति । मनस्तु न स्वतन्त्रविषयसिद्धिहेतुकः । सर्वप्रमाणसहकारित्वात् । तद्व्यासङ्गे सति, प्रमाणप्रवृत्तावप्यात्मनो विषयानुपलम्भात् । **तथा च श्रुतिः**—"अन्यत्रमना अभूवं नादर्शं अन्यत्रमना अभूवं नाश्रौषं" इत्याद्या । तथा प्रमाणानि विषयसद्भावमात्रशूराणि, मनस्तु तद्विशेषं विकल्पयति । यथा—पृष्ठत उपस्पृष्टे, त्वगिन्द्रियं स्पर्शमात्रं, उपलम्भयति । हस्तस्पर्शोऽयं अङ्गुलिस्पर्शोऽयमिति मनो विकल्पयति । तथा घ्राणं दूराद्गन्धमात्रमुपलम्भयति मल्लीगन्धोऽयं मालतीगन्धोऽयमिति मनो विकल्पयति । **तथा च श्रुतिः**—"तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति" इति । एवं प्रमाणोपहृतविषयविकल्पमात्रकारित्वात् मनसः न मानसत्वमात्मनो युक्तम् । अग्रे च मानसत्वमात्मनो निराकरिष्यते । अनुमानादीनि च, प्रत्यक्षोपजीवित्वात् तदुपदर्शितसामान्यमात्रालम्बनानि, नात्मनि प्रमाणतामर्हन्ति ।

प्रत्यगात्मनश्चोपलब्धुः उपलब्धिकरणानि तानि, कथमुपलब्धयैव व्याप्रियेरन्? नहि च्छेत्तुः च्छिदाकरणं परशुच्छेत्तयैव व्याप्रियत इति ।

इतोऽपि न मानान्तराणां आत्मतत्वविषयत्वमित्याह—**आत्मगतीति** । आत्मनां स्वेषां मानान्तरणामेव, गतिर्व्यापारः, औदासीन्यप्रच्युतिविषयसङ्गमनादिः । तस्याः प्रकाशं शृणुयां, पश्येयमिति । ज्ञानपूर्विका खलु प्रमाणप्रवृत्तिः प्रायेण दृश्यते । यत्रापि विषयवशतया प्रवृत्तिरिन्द्रियस्य दुर्गन्धादौ, तत्रापि नाज्ञाता तत्प्रवृत्तिः । तन्निरोधयत्नदर्शनात् । इन्द्रियाणामज्ञातकरणत्वव्यवहारस्तु शास्त्रेषु लिङ्गादेरिव, तज्ज्ञानस्य प्रमाजननानुपयोगित्वात् । तथा च स्वप्रवृत्तेरप्यवभासो यतः, तदवभासप्रयोजकत्वं प्रमाणानां, आदित्यप्रकाशप्रयोजकत्वमिव तदवभासस्य पतगादेः, अयुक्तमिति भावः । नन्वेवमागम-प्रवृत्तेरप्यवभासकतया, आत्मनि तत्प्रवृत्तिरपि न स्यादिति चेत्, सत्यं, नाहत्यैव सत्तामात्रावभासपरिशेषे, आत्मनि तत्प्रवृत्तिरिष्यते, किं तर्हि? स्वेन सह यावदाविद्यकमलनिषेधात्मतोपरञ्जनेन । अविद्यादि-मलस्य चासत एव भ्रमोपहृतसत्ताकतया, तत्प्रतियोगिकनिषेधात्मतापि भ्रम एव । किन्तु, निश्शेष-भ्रमनिषेधप्रस्तौत्पत्तिकाकालिकागमिकप्रमालम्बनतया, तदैव सत्तामात्रावभासपरिशेषात् आत्मतत्वमागमिक-मुपगम्यते । तथा च **भाष्यम्**—"न हि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति, किं तर्हि? प्रत्यागात्मत्वेनाविषयतया प्रतिपादयत्, अविद्यापरिकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति" इति । **इदं चाग्रे प्रपञ्चयिष्यते** । परत्र तु शब्दस्पर्शादिविभ्रमैकपदप्रमालम्बनतया, तथैव तद्विषयावभासान्न मानान्तरगम्यमात्मतत्वमिति विशेषः । **यद्वा**, आत्मनां मानान्तराणां गतिर्येषु विषयेषु, तेषामात्मगतीनां प्रकाशं, न खल्वात्मातिरिक्तो विषयप्रकाशोऽस्ति, आत्मनो विषयानवभास-प्रसङ्गात् । विषयप्रकाश आत्मसम्बन्धीति चेत्, स खलु विषयस्यापि सम्बन्धी । सम्बन्धतुल्यत्वे च, आत्मनः प्रकाशते विषयः, न विषयस्यात्मा, न वा स एव विषय इति व्यवस्थानुपपत्तिः । समवायित्वमात्मनो विशेष इति चेन्न, अन्यात्मन्यमेवास्ति विशेषः किमन्यगवेषणया । तस्मात्प्रकाशान्यत्वे सति जाड्याविशेषादुभयोरप्युभयं न प्रकाशेतेति युक्तम् । यदि पुनरात्मैव सर्वस्य प्रकाशः निसर्गतो वा, प्रमाणवृत्त्युपसर्गतो वा, सर्वमात्मनः प्रकाशत इति श्लिष्टम् । तथा च सर्वप्रमाणप्रवृत्तिफलभूत आत्मनि प्रमाणप्रवृत्तिरयुक्ता । च्छिदायामिव परशुप्रवृत्तिरिति भावः । एवमुपपत्तितो मानान्तराविषयत्वमात्मनः । श्रुतिश्चैवमित्याह—**औपनिषदमिति** । उपनिषत्स्वेवावगन्तव्यमित्यर्थः । शेषेऽण् प्रत्ययः । "तं त्वौपनिषदं पुरुषं पृच्छामि" इति हि श्रुतिः । न खलु सर्वमानसाधारणविषयस्यौपनिषदत्वव्यपदेश अञ्जसोऽवकल्पते । असाधारण्येन हि व्यपदेशा भवन्तीति । **भगवन्निति**, सर्वभूतात्मतामात्मनः सूचयति । "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" । इति स्मृतौ अशेषत इति ब्रह्मादिपुत्तिकान्तेषु यत्किञ्चिदपि बह्विव अल्पमिव च ज्ञानशक्त्यादि, तत्सर्वमेव भगच्छब्दवाच्यमित्यभिधानात् । **तथा च श्रुतिः**—तत्सृष्ट्वा तदनुप्रविश्य सच्च त्यच्चाभवत् ।" "एको देवस्सर्वभूतेषु गूढ" इत्याद्या । तेन ईदृशेऽपि वस्तुरूपे न मानान्तरप्रवृत्तिराञ्जसी, किमुत परमात्मतत्व-इत्यभिप्रायः ।

भवन्तमिति च । स्वरूपमेवोपलक्षयति । न केवलमौपनिषदत्वविशेषणादार्थिको मानान्तरविषयत्वनिषेधः, किन्तु वेदात्मवेदनयोः केवलव्यतिरेकवचनादपीत्याह — **नावेदविदित्यादिना** । "नावेदविन्मनुते तं बृहन्तं" इत्यादिश्रुतौ, त्वामवेदविन्न मनुत इति शुश्रुमेत्यन्वयः । श्रवणदशायां अपि श्रुतेः श्रोतर्यात्मन्येव व्यासङ्गितया श्रवणस्य परोक्षवद्भावाल्लिट् । तेन वेदविदेव मनुत इति पर्यवसानात् वेदातिरिक्तमानागम्यत्वमात्मनः फलतीति भावः ॥ ३ ॥

# दृष्टिश्रुतिप्रभृतिसम्भवदर्शिनं त्वां
# अक्षाणि साक्षिणमवेक्षितुमक्षमाणि ।
# निर्धर्मधर्मिपदकेवलचित्स्वभावे
# मानान्तरं त्वयि सदाशिव किं क्रमेत ॥ ४ ॥

स्यादेतत्, सत्यं प्रमाणानि सर्वाण्येव परागर्थविषयाणि न प्रत्यगात्मविषयाणि । अन्यथा तत्प्रमाणजनितायां तस्यामेव संविदि कर्ता गुणभूतः, कर्म प्रधानभूतश्चात्मा, प्रसज्येत । न च स एव तस्यामेव क्रियायां कर्ता कर्म चेति क्वचिद्दृष्टम् । अथापि, तैरेव प्रमाणैरविषयस्यैवात्मनः विषयसंविदाश्रयतयैव सिद्ध्युपपत्तेः, आगममात्राभिनिवेशो न युक्तः । बुद्ध्यादयः क्वचिदाश्रिताः गुणत्वात् रूपादिवत् इत्यादिनैयायिकानुमानस्य, अव्यक्तादयः परार्थाः संहतत्वात् शयनासनादिवत् इत्यादिसाङ्ख्यानुमानस्य वा, परिशेषसहकृतस्याप्यन्यविषयस्यैवाविषयतया नान्तरीयकात्मसिद्धिफलत्वात् । न चात्मा प्रमाणप्रवृत्त्यवभासकतया प्रागेव सिद्धो न तज्जनितविषयसंविदाश्रयतया सेद्धुमर्हतीति युक्तम् ।

मानप्रवृत्त्यवभासप्रयोजकतया तद्विषयमानप्रवृत्त्यन्तरोपगमे अनवस्थाप्रसङ्गात् । न च प्रकाशस्वभाव एवात्मा स्वसम्बन्धलब्धात्मिकां प्रमाणप्रवृत्तिमन्यानपेक्षयैवावभासयतीति साम्प्रतम् । प्रमाणस्यैवानपेक्षाप्रसंगात् । प्रकाशस्वभावस्य विभोरात्मनः स्वत एव सर्वसम्बन्धितया, सर्वदा सर्वावभासप्राप्तेः । अत एवात्मनः प्रमाणफलत्वं प्रत्याख्यातम् । तस्मादप्रकाशस्वभाव एवात्मा प्रमाणफलविषयप्रकाशाश्रयत्वेन सिद्ध्यतीति, औपनिषदत्वादिवादोऽर्थवादमात्रतया नेतव्य इत्याशङ्क्य "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः" इत्यादिश्रुतार्थोपपत्या समाधत्ते— **दृष्टिश्रुतीति** ।

**अक्षाणि** इन्द्रियाणि, **साक्षिणं** साक्षाद्द्रष्टारं, स्वप्रवृत्तेः स्वजन्यज्ञानस्य च । "साक्षाद्द्रष्टरि हि संज्ञायां" इति हि स्मर्यते । साक्षादिति च तदवभासे प्रमाणप्रवृत्त्यन्तरानपेक्षया अनवस्थाप्रसङ्गं वारयति । तं त्वां **अवेक्षितुं** दर्शयितुं **अक्षमाणि** न समर्थानि भवन्ति । यद्येनावभास्यते तस्य तद्भासकत्वानुपपत्तेः इत्यर्थः । तदेव साक्षित्वमुपपादयितुं **दृष्टिश्रुतीत्यादि** हेतुगर्भं विशेषणम् । चाक्षुषं ज्ञानं दृष्टिः, श्रुतिः श्रौत्रं ज्ञानम् । प्रभृतिशब्देन मतिविज्ञात्यादीनां ग्रहणम् । तासां दृष्टिश्रुतिप्रभृतीनाम् । 'सम्भव' मित्युपलक्षणं, विनाशमपि द्रष्टुं शीलं यस्य तं तथाभूतम् । दृष्ट्यादयः स्वप्रकाशतयैव सिद्ध्यन्ति किं ?

तद्दर्शिनान्येन साक्षिणेति शङ्कानिरासाय 'सम्भव'ग्रहणम् । अयं भावः— यदि स्वप्रकाशतयैव दृष्ट्यादिसिद्धिः स्यात्, केन पुनस्तदुत्पत्त्यादिसिद्धिः स्यात्? न तावत् तयैव संविदा । तदानीमलब्धात्मतया तस्याः, स्वोत्पत्त्यवभासित्वानुपपत्तेः । अथ सत्या एव संविदः, सत्ताव्यभिचरितप्रकाशतया अन्यदावभासेन स्वासत्त्वावगमे, प्रागसत्त्वादुत्पत्तेरनन्तरासत्त्वात् । अविनाशस्य चानुमानं स्यादिति चेन्न, विनैव व्याप्तिस्मरणादिकं संविदुत्पत्त्याद्यनुभवविरोधात् । अपि च अनवभासो हि अवभासाभावः । स च स्वप्रकाशसंविदसत्त्वमेवेति, तेनैव तदवगतौ आत्माश्रयः । न ह्यन्यदा तदवभासमनवगम्य, तयैव संविदा तदभावः सिद्ध्यति । अन्यथा घटादेरपि तदानीमवभासादेव अन्यदाभावसिद्धिप्रसङ्गात् । न च संविदन्तरेणापि संविदन्तरानवभासमनवगम्य, तदभावावगमः शक्यते कर्तुं, अज्ञातकरणत्वे तस्याध्यक्षत्वप्रसङ्गात् । न च ज्ञातकरणत्वेऽपि, अनुमानादित्वापत्तिः । व्याप्तिस्मरणाद्यनपेक्षतया विशेषोपपत्तेः, तदनवभासावगमात् । तदवगमे च, प्रागुक्त एवात्माश्रयः । अपि च, न संविदमनवगम्य तत्प्रतियोगिकानवभासोऽवगन्तुं शक्यते । न चागामिसंविद्विशेषाधिगमोपायोऽस्ति । अपि च, अन्यदानवभासस्य साधारणत्वात्, असत्त्वामात्रसिद्धावपि प्रागसत्त्वादिविशेषसिद्धिरशक्या अस्थातुम् । अथ संविदन्तरेण संविदन्तरोत्पत्त्यादिरेवावगम्येत, न संविद्द्वययौगपद्यायोगात् । एकदा एकावच्छेदेन सजातीयविशेषगुणद्वयासमावेशस्य रूपादौ सम्प्रतिपन्नत्वात् । एकोत्पत्त्यनन्तरमन्योत्पत्तौ च, तदुत्पत्त्यवभासित्वानुपपत्तिः । पूर्वोत्पत्तेराद्यक्षणसंबन्धस्यातीतत्वात् । एवं पूर्वसंविद्विनाशदशायां संविदन्तरोत्पत्तिसंभवेऽपि, उत्पत्त्यालब्धात्मिकाया एव संविदो विषयावभासित्वात्तद्विनाशक्षणावभासानुपपत्तिः । तस्मात्प्रमाणसंविदुदयादिदर्शिना नित्यप्रकाशेन आत्मना भवितव्यम् । तेन च स्वसम्बन्धलब्धात्मिकाः सर्वाः प्रमाणवृत्तयो, विनैव हेतुं साक्षादवगम्यन्ते । एवं प्रागेव सिद्धस्य न तज्जन्यसंविदाश्रतया सिद्धिरुपपद्यते । न चैवमनपेक्ष्यैव प्रमाणमशेषवस्तुसिद्धिप्रसङ्ग इत्युक्तमिति वाच्यम् । विषयव्यवहारिणः प्रमातुरात्मनोऽन्तःकरणबुद्धिविज्ञानादिशब्दिताहङ्कारावग्रहेण विषयव्यधानात् । प्रमातृसंविदुपरागायैव प्रमाणवृत्त्यपेक्षोपपत्तेः । तदेवं प्रमाणवृत्त्यादिसाक्षिणः सिद्धावक्षाणि न क्षमाणीत्युपपादितम् ।

अनुमानादीनि तु धर्मधर्मिभावव्यपेक्षाणि । तद्विलक्षणकेवलात्मसिद्धौ सुतरामक्षमाणीत्याह— **निर्धर्मधर्मिपदेति** । धर्मधर्मिणोः पदात् स्थानात् निर्गता निर्धर्मधर्मिपदा । नेयं कस्यचित्, नचास्याः कश्चिदिति, धर्मस्थाने धर्मिस्थाने वा न निविष्टेत्यर्थः । अत एव **केवला** । आश्रयविषयसम्बन्धशून्या । **चित्** चितिरेव **स्वभावो** यस्य । अनेन न संविदाश्रयतैवात्मनः, कुतः संविदाश्रयत्वेन सिद्धिरिति, सूचितं भवति । तस्मिंस्त्वयि **किं मानान्तरं**, अनुमानादिषु **क्रमेत?** न किञ्चिदपीत्यर्थः । अथवा मानान्तरं अनुमानादि किं क्रमेत? न क्रमेतैवेत्यर्थः । हे **सदाशिवेति**, पूर्ववदनुमानाद्यपेक्षितधर्मधर्मिभावापवादाभिप्रायम् ।

**इदमत्राकूतम्**—अनुमानं तावद्देशे काले वा धर्मिणि द्वयोर्धर्मयोः सम्बन्धनियमग्रहणापेक्षया, पक्षे धर्मिणि, साध्यधर्मावलम्बनं प्रवर्तते । तथा अर्थापत्तिरपि "नियम्यस्य नायुक्ति र्नानियंतोपपादकः" इत्याहुः । शब्दोऽपि प्रवृत्तिनिमित्तापेक्षया धर्म्यालम्बन एव । लाक्षणिकादेरपि शक्यसंबन्धाद्याश्रया-

लम्बनत्वात् । अन्यथातिप्रसङ्गात् । आत्मा तु न कस्यचिद्धर्मः इति सर्वसम्प्रतिपन्नम् । न च बुद्ध्यादिधर्मी । आत्मनो बुद्ध्यादिविकारयोगे सति, अनित्यत्वापत्तेः । ननु "उत्पत्त्यादयो विकारा-बुद्ध्यादेरेव" । तत्समवायी केवलमात्मेति नानित्यतापत्तिरिति चेन्न । तथापि प्राक्तदसम्बन्धि-नस्तत्सम्बन्धविकारावश्यम्भावात् । न च सम्बन्धिन्यसति, तदधीनसद्भावः सम्बन्धः नित्य इति शक्यमुप-गन्तुम् । संयोगेऽदर्शनात् । तदिदमाभिसन्धायाहुः—"उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्" इति । अपि च, न तावदात्मनो बुद्ध्याश्रयत्वं, तयैव बुद्ध्या बोद्धव्यम् स्वात्मनि वृत्तिविरोधात् । न हि सम्बन्धिनावनालम्ब्य सम्बन्धबुद्धिरुपपद्यते । स्वप्रकाशत्वेऽपि बुद्धेरात्मस्वात्मवेद्यांशत्रयव्यतिरिक्तायां स्वाश्रयतायामसामर्थ्यम् । नाप्यात्मना । स्वात्मनि वृत्तिविरोधादेव । अप्रकाशत्वोपगमाच्च । न च बुद्ध्यन्तरेण, तदानीं ग्रहीतव्यात्मसम्बन्धाया बुद्धेर्विनाशेन तत्सम्बन्धाध्यक्षायोगात् । तस्य सम्बन्धिद्वयाध्य-क्षाधीनत्वात् । संयोगाध्यक्षे तथा दर्शनात् । न च बुध्यादिसाश्रयत्वानुमानेन परिशेषादात्मनो बुद्ध्यादि-धर्मित्वसिद्धिरिति वाच्यम् । यतो बुद्धेरवभासः, तत एव तदाश्रयावभासे, अनुमानानर्थक्यात् । "अहमिदं जानामि" इति साश्रयविषया हि सावभासते । हन्तैवं प्रत्यक्षत एव बुद्धेरात्माश्रयः सिद्ध-इति चेत्, तदनुपपत्तेरुक्तत्वात् । तस्मादतद्धर्मा साश्रयविषयबुद्धिवृत्त्यवभासकचितिः केवलस्वभाव-आत्मेति सिद्धम् । तथा च श्रुतिः—"अथ यो वेदेदं जिघ्राणीति स आत्मा" इत्यादिका ।

**न च ज्ञानं** साश्रयविषयमिति नियमः । "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म", "अत्रायं पुरुषः स्वयंज्योतिः" इत्यादिश्रुत्या यथोक्तोपपत्त्युपबृंहितया, आत्मनो निराश्रयविषय-ज्ञानस्वभावत्वे, पुरुषबुद्धिमूलनियमभङ्गात् । न चैवं धर्मधर्मिभाववैधुर्ये सति आत्मधर्मकमात्मधर्मिकं वा किञ्चिदपि मानमात्मनि क्रमते । नन्वस्त्यन्यधर्मधर्मिकमात्मनि प्रमाणम् । यथा जीवच्छरीरं सात्मकं, प्राणादिमत्त्वादिति न्यायिनाम्, यथा वा सङ्घातपरार्थानुमानं साङ्ख्यानामिति । न, आद्यानुमानस्य तावत् आत्मसिद्धौ सिद्धसाधनता । तदसिद्धावप्रसिद्धसाध्यकत्वादप्रवृत्तिरेव । द्वितीयस्यापि प्रमाणसिद्ध-परस्परार्थत्वेन अर्थान्तरता, अत एव नानवस्था । यदाम्नायो अनुमन्यते परस्परार्थत्वम् । "इयं पृथिवी सर्वेषां भूतानां मधु, अस्यै पृथिव्यै सर्वाणि भूतानि मधु" इत्यादिः । एवमत्यन्तापूर्वासंहत-स्वभावात्मकल्पनागौरवं न भविष्यति । शयनासनादि च । यथा सिद्धदेहादिसङ्घातार्थमाश्रियते । अन्यस्य तदानीमसिद्धत्वात् । तत्र सङ्घातस्य सङ्घातार्थत्वसम्प्रतिपत्तौ, अन्यत्रासंहतपरसिद्धौ को हेतुः ? येनापूर्वकल्पनागौरवं सह्येत । एवं बुद्ध्यादयः परेणाधिष्ठेयाः, त्रिगुणत्वात् रथादिरिव यन्त्रेत्यनुमानं प्रत्याख्येयम् । त्रिगुणस्यैव व्याप्रियमाणस्याधिष्ठातृत्वं सम्प्रतिपन्नम् । तदानीमतिरिक्तात्मासिद्धेः । तथैवाव्यक्तादयः परस्परमधिष्ठास्यन्तीत्यर्थान्तरता । अन्यथा अत्रिगुणादिस्वभावस्योदासीनस्याधिष्ठातृत्वानु-पपत्त्या बाधात् । पुरुषार्थनिमित्तं प्रधानस्य स्वतन्त्रस्यैव पयोम्बुवत्प्रवृत्त्युपगमेन, व्यभिचाराच्च । यथाहुः—"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" ॥ इति । "पुरुषार्थ एव हेतुर्न केनाचित्कार्यते करणम्" इति च । अथ तादर्थ्यमेव तदधिष्ठेयत्वमिह साध्यमिति चेत् तत्तु पारार्थ्यानुमानेन गतार्थम् । एतेन सुखदुःखयोरनुकूलनीय-

प्रतिकूलनीयार्थत्वं व्याख्यातम्। सुखादिरूपस्य स्रगादेस्तादृश एव हि लौकिकः पुरुषोऽनुकूलनीयः प्रतिकूलनीयश्च सम्प्रतिपन्नः। तथा बुद्ध्यादिरेव परस्परस्यानुकूलनीयादिः भविष्यति, किमसुखादिस्वभावे-नान्येन कल्पितेन। एवमेव बुद्ध्यादिदृश्यतया तद्द्रष्टृनुमानेऽपि, यादृशो घटादिदृष्टान्ते सम्प्रतिपन्नो द्रष्टा अनात्मवर्ग्य एव लोकदृष्ट्या, तादृश एव बुद्ध्यादिरन्योन्यद्रष्टा स्यात्। अथ दृश्यो न द्रष्टा, घटादिवदिति चेत् लौकिकपुरुषो न द्रष्टा स्यादिति दृष्टान्तासिद्धिः। एवमन्यदपि अनुमानमात्रशरणा-नामनुमानमाभासयितव्यम्। अस्माकं पुनरागमार्थसम्भावनाय, अनुमानादर इति न तुल्यदोषता। तस्मान्न मानान्तरगम्यः आत्मेति सिद्धम्॥ ४॥

अङ्गारवह्निरिव भूत्करणानिलेन
त्वं विश्वरूपविवृदीश्वर मानवृत्या।
आकालिकद्युतिरिव स्वयमेव भासि
तत्तन्मयो यदुत तत्तव मेयभूयम्॥ ५॥

अथापि स्यादनधिगतार्थगमकं तावत्प्रमाणम्। यथाहुः—"अर्थेऽनुपलब्धे तत्प्रमाणम्" इति। "अज्ञाततत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते" इति चाचार्याः। अज्ञाततत्वं च विषयस्य न ज्ञानाभावेन। इदमहं न जानामि इति तज्ज्ञानानुभावात्। यदि ज्ञानाभावस्यैवेदं ज्ञानं, न विषयस्य, किं पुनरेतदिदं जानामीति? न खलु ज्ञानाभावः सविषयः। येन तदनुषङ्गावभासी विषयस्स्यात्। न च सविषय-ज्ञानाभावो विषयः, विषयज्ञानसिद्धौ तदसिद्धौ च, तदज्ञानानुभवविरोधात्। तस्मात् भावरूपं किमप्य-ज्ञानं नाम, सविषयस्वभावमाश्रयणीयम्। निर्विषयत्वे स्वभावहानात्। ननु यथा ज्ञानं निर्विषयस्वभावं, परोपाधिना सविषयमिष्यते। एवमज्ञानमपि स्यादिति चेन्न, ज्ञानस्य हि ज्ञानता स्वप्रकाशतयापि स्यात्। न विषयानुषङ्गेणैवात्मलाभः। अज्ञानस्य तु अज्ञानता न स्वावरणतया स्यात्। स्वसिद्धिविरोधितया तदसिद्धिप्रसङ्गात्। किन्तु विषयावरणतयैव तस्यात्मलाभ इति। तच्चानादि। लाघवात्। उत्पत्ति-हेत्वनिरूपणाच्च। तदेवमनादिसविषयस्वभावस्य नागन्तुको विषय उपपद्यते। तथा चाहुः— "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" इति। तस्मात् आत्मनस्तद्विषयत्व-मेषितव्यम्। अन्यथा, स्वत एव प्रकाशस्वभावस्यात्मनः स्वरूपतत्वावभासे, संसारानुभवविरोधात्। संसारस्यात्मतत्वावगतिसहभावे च, तदवगतये शास्त्रानारम्भप्रसङ्गात्। "ब्रह्मविदाप्नोति परम्"। "तरति शोकमात्मवित्" इति श्रुतेरपि विप्रलम्भनत्वापत्तेः। ततश्च, तदवभासप्रयोजनकज्ञानजनकतया सर्वमेव प्रमाणं आत्मविषयमेवेति युक्तम्। तथा चाहुः—"सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते। प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥" इति। तत्कथं वेदैकवेद्यत्वमात्मन इति शङ्कायां, सत्यमेवम्। किन्तु शब्दस्पर्शादिविषयरूपविभ्रमैकपदावभासफलत्वादात्मस्वरूपतत्वावभासफलत्वाभावाद-नागमस्य, न तत्र तात्त्विकं प्रामाण्यम्। आगमस्य तु तत्स्वरूपतत्वावभासफलत्वेन तत्र तात्त्विकं

प्रामाण्यमिति, तदेकवेद्यत्वमात्मनो न विहन्यत इत्यभिप्रेत्याह — **अङ्गारवह्निरिवेति**। अङ्गारस्थः वह्निरङ्गारवह्निः। स यथा भूत्करणानिलेन, भूदित्याध्मानप्रकारानुकारः। भूदिति करणं क्रिया, तत्प्रयुक्तानिलेन। तदङ्गारैकात्मा स्वयमेव भाति, दीप्यते; न तु तेनानिलेन वह्नेरङ्गारस्य वा भानमधीयते। तथा **हे ईश्वर,** नियन्तः, अनेन "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर"— इत्यादिना नियन्तुरन्तर्बहिर्भावेन, नियाम्यव्याप्त्यभिधानात् जलतरङ्गमरीचिनीरादिवत्तादात्म्यमन्तरेण तद्व्याप्त्ययोगात् सर्वात्मता सूच्यते।

**विश्वरूपेण विवर्तत** इति विश्वरूपविवृत्। वर्ततेः क्विप्। **त्वमिति** तद्रूपमेवोपलक्षयति। **मानवृत्या** प्रमाणज्ञानेन हेतुना, **आकालिकद्युतिरिव,** आकालिकी क्षणिका द्युतिर्यस्याः सा तथा। "आकालिकडाद्यन्तवचने" इति हि स्मर्यते। क्षणप्रभा विद्युदिवेत्यर्थः। **तत्तन्मयः,** शब्दस्पर्शादिविषयैकात्मा। **स्वयमेव भासीति** यत् एवेति **मानवृत्या** तद्भानाधानं व्यावर्त्यते तदुत, तदेव। **तव मेयभूयं** मेयत्वं सर्वप्रमाणवेद्यत्वम्। न स्वरूपावभासपरिशेषतयेति।

**अयमत्राभिप्रायः**—"बहु स्यां प्रजायेयेति, इदं सर्वं सृष्ट्वा तदनुप्रविश्य, सच्च त्यच्चाभवत्।" "तन्नामरूपाभ्यामेव व्याक्रियत।" "इदं सर्वं यदयमात्मा।" सर्वं खल्विदं ब्रह्म।" "ऐतदात्म्यमिदं सर्वम्।" इत्यादिश्रुतेः। आत्मा विश्वात्मना विवर्तत इत्यवगम्यते। न तु परिणमते। अन्यथा, कृत्स्नपरिणामे "एतावानस्य महिमा। अतो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि।" इत्यादिश्रुतिविरोधात्। **तथा च सूत्रम्** — "विकारावर्ति च तथाहि स्थितिमाह" इति। स्मृतिश्च—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्यादिका। एकदेशपरिणामे तु, सावयवत्वे "निष्कलं निष्क्रियं" इत्यादिश्रुतिविरोधः। **तथा च सूत्रम्** — "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इति। अनित्यत्वं च प्रसज्येत। अथ शब्दसमधिगमनीयत्वादात्मनो, विकारावर्तित्वं, निरवयवत्वं, अपरिणामित्वं च श्रुतेरेवावगन्तव्यम्। **तथा च सूत्रम्**—"श्रुतेस्तु शब्दमूलत्वात्" इति। श्रूयते हि "तदात्मानं स्वयमकुरुत" इति। नैवं, श्रुतेरपि ह्युपपत्तिरनुसर्तव्या। अन्यथा, मीमांसानारम्भप्रसङ्गात्। सूत्रं तु नोपपत्तिविरुद्धमपि यथाश्रुति प्रतिपत्तव्यमेवंपरम्। किन्तु, श्रुतार्थो यथोपपद्यते तथोपपादनीयः, न तु दुरुपपत्त्या अपवदनीय इत्येवम्परमेव। स्वप्नवत् विश्वात्मनो विवर्ति इत्युपगमे च, विकारावर्तित्वादि सूपपादम्। आरोपितविकारासंस्पर्शात्, कृत्स्नैकदेशविमर्शाविषयत्वाच्च। इयं चोपपत्तिरुक्ता **सूत्रकृता**—"आत्मनि चैवं विचित्राश्च हि" इति। यथात्मनि स्वप्नदृशि, विचित्रा रथरथयोगादयो विवर्ताः; एवमात्मनि विश्वं विवर्तत इत्यर्थः। "परिणामादि"ति प्रकृत्यधिकरणसूत्रं तु, प्रधानस्य विश्वोपादानत्वं व्यावर्त्य, आत्मनस्तदुपादानत्वमात्रपरत्वात्। "सच्च त्यच्चाभव"दिति। अन्यथा भावापत्तिमात्राभिप्रायम्। परिणामैकाभिप्रायफलाभावात्। अत्र परिणामो नाम स्वरूपान्यथाभावः। जलादेरिव तरङ्गादिभावः। अज्ञाततयान्यथाभावो विवर्तः। मरीचिकादेरिव जलादिभावः। "तत्त्वतोऽन्यथाभावः परिणामोऽतत्त्वतोऽन्यथाभावः

विवर्त" इति—अन्ये। तदेवमात्मनः शब्दादिविषयरूपविवृत्तस्य प्रमातृरूपोपाध्यन्तःकरणावच्छेदेन प्रमातृसंविदसंभिन्नसतः प्रमाणजनितान्तःकरणवृत्त्यनुषङ्गेण, तदनवच्छेदकतासम्भेदापायात्; स एव प्रमातृसंविदेकात्मना विषयाकारावभासः सम्पद्यते। सोऽयमेव मानवृत्त्या प्रमातृसंविदुपरागो विषयस्याभिलप्यते। स चायं विषयावभास आत्मभूतोऽपि वृत्तेः साश्रयतया, साश्रय इव तत्संवलनादवभासते। यथा साश्रयतरङ्गादिसंवलितप्रकाशः जलाश्रय इव भासते तद्वत्।

**नन्वस्तु** तावदेवं विषयावभासः। तेन तदज्ञानं निवर्तते न वा? निवृत्तौ कृतकृत्यता। आत्मविषयाज्ञानमूलतया संसारस्य, तन्निवृत्त्यैव निवृत्तेः। अनिवृत्तौ वा, कथं विषयावभासः? कथं वा तत्प्रमाणस्य प्रमाणत्वम्? "अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते" इति ह्याहुः। न चावयवशो निवृत्तिरज्ञानस्य सावयवत्वानभ्युपगमात्। **यथाहुराचार्याः**—"न निरवयवं न सावयवं" इत्यादि। तथात्वेपि वा कालेनानन्तविषयज्ञानपौनःपुन्येनैव, निश्शेषाज्ञानावयवनाशोपपत्तौ, शास्त्रानर्थक्यप्रसङ्गात्।

**अत्र केचिदाचार्याः**—प्रतिविषयमनन्तानि तूलाज्ञानानि नाम, परिकल्प्य, तेन तेन ज्ञानेन तस्य तस्य निवृत्तिमिच्छन्ति। तत्र मते तद्विषयज्ञानेनैकमेवाज्ञानं निवर्तते। न सर्वमिति। को हेतुः? कथं वा सत्स्वन्येषु अज्ञानेषु विषयावभासः? यद्यदावृणोति तत्तदा तेन ज्ञानेन निवर्तत-इत्यपि नियन्तुमशक्यम्। तदा किमावृणोतीति नियमहेत्वभावात्। अपि च तद्विषयत्वमेव हि तदावारकत्वम्। न च कदाचिदनावृण्वन्निर्विषयमज्ञानं नाम भवतीत्युक्तम्। अथ बहूनामेकस्मिन्नशनिपातन्यायेन, ज्ञानेनैकमज्ञानं नाश्यते, पराणि प्रतिरुध्यन्ते, अपसार्यन्ते वेति चेत्तर्हि, तदेवैकमात्मज्ञानं तदात्वे प्रतिरुध्यतां, एवमनन्ताज्ञानकल्पना गौरवं भविष्यति। अमूर्तस्याज्ञानस्यापसारणं चाप्रामाणिकं न कल्पयिष्यते। एतेन, एकस्यैवाज्ञानस्यानन्तानाद्यावरणशक्तिकल्पनापि निरस्ता। अथोत्पादविनाशशीलान्यावरणानि कल्प्येरन्, तदुत्पत्तेः प्राक् स्वत एव विषयावभासप्रसङ्गे तदुत्पत्त्यनुपपत्तेरिति।

**अत्राभिधीयते**—आत्मा तावदज्ञाततयैव विश्वरूपेण विवर्तते। अन्यथा, मोक्षाय तत्त्वज्ञानान्वेषणानर्थक्यप्रसङ्गात्। ततश्च प्रमाणज्ञानेनाज्ञातवस्तुविवर्तरूपभेदालम्बन एव प्रमातुः शब्दादिविषयाभास इति। तत्राज्ञाननिवृत्तिरतन्त्रम्। तन्मूलविषयावभासविरोधात्। कथं पुनरेवमिदं न जानामि, इदं जानामीति ज्ञानाज्ञानसमानविषयत्वावभासः? आत्मविषयस्यैवाज्ञानस्य शब्दादिरूपान्यथाभावेन ज्ञानविषयत्वोपगमात्, अज्ञानस्य च तद्विषयत्वायोगादिति। उच्यते। तत्तद्विषयकिञ्चित्प्रमाणप्रवृत्तौ प्रसज्जतो ज्ञानस्य केनापि दोषेण तत्तदाकारत्वं प्रतिबध्य, तत आच्छिद्य, समर्पिततत्तदाकारमपहस्तिततत्तदाकारकतत्तज्ज्ञाननिरूप्यरूपेण, तद्रूपावभासप्रागवस्थात्मना, तदेवाज्ञानमिदं न जानामीति स्वात्मना वा, इदं रजतमिति रूपान्तरेण वावभासते। प्रतिबन्धकाभावे तु ज्ञानमेव तत्तदाकारमुपजायत-इति, तदेवाज्ञानं तत्तद्रूपमवभासत इति, उपपन्नो ज्ञानाज्ञानसमानविषयत्वावभासः।

अथ स विषयः प्राक् ज्ञानादस्ति न वा? न चेत् किंविषया प्रामाण्यवृत्तिः? अथास्ति, तर्हि प्रागज्ञात एवास्तीत्युपगन्तव्यम्। तत्र यद्यनादिभावरूपाज्ञानविषयत्वायोगः, ज्ञानाभावरूपाज्ञानविषयत्वमवश्यं

वाच्यम् । आरोपिते च इदं रजतं नाज्ञासिषमिति, अज्ञातत्वावभासस्य ज्ञानाभावविषयत्वावश्यंभावात् । प्राक् तद्विषयप्रमाणप्रवृत्त्यभावेन उक्तरीत्या तदज्ञातत्वावभासायोगात् । कथं पुनरेवं इदं न जानामीति सविषयत्वावभासः ? त्वदुक्तरीत्या ज्ञानादाच्छिद्य, तदभावे, तदाकारत्वारोपणादिति गृहाण । नैवं प्रकाशस्वभाव आत्मन्यागन्तुकज्ञानाभावेनानवभासायोगात् । तत्रानादिभावरूपाज्ञानावश्यकतायां नाभाव-रूपमप्यपरमज्ञानमनवभासप्रयोजकमाश्रयितव्यम् । गौरवात् । आरोपितरजताज्ञानानुभवश्च, तदानीं तदवभासमपेक्ष्य प्राक्कालतया तदधिष्ठानाज्ञानमेवावलम्बताम् । तादात्म्यात्तदधिष्ठानस्यैव रजतात्मना तदनु-षङ्गावभासोपपत्तेः । विषयसत्त्वासत्त्वविमर्शी तु नास्ति प्राग्विषय इत्येके । प्रमाणप्रवृत्तिः पुनरात्मविषयैव । तद्विषयज्ञानप्रतिबन्धात्तु तदज्ञानमेव, शब्दादिविषयात्मनावभासते । शुक्तिरिव रजतात्मना । सेयं दृष्टिसृष्टिरिति गीयते । अथवा प्रागज्ञातत्वं विषयस्येयदेव, यदज्ञानानुषङ्गावभासयोग्यत्वम् । तदनु-षङ्गावभासस्त्वज्ञानस्योक्तगतिर्निर्वाह्यः । तेषु तेषु विषयेषु ज्ञानादज्ञाननिवृत्तिस्तु, अज्ञानस्य तत्तदाकारत्व-भङ्ग एव । इयतैव व्यवहारविषये प्रमाणानां प्रमाणत्वम् । आत्मतत्वज्ञानेन तु आगामिकेन, अज्ञानस्य तदाकारत्वभङ्गे विषयान्तराभावेन निर्विषयतया तत्स्वरूपस्यैवापवादात्, आत्मस्वरूपावभासपरिशेष इति सर्वं शुद्धम् ॥ ५ ॥

दुःखानुषङ्गकलयापि विनोपसर्गं
जन्तोर्निसर्गसमभीप्सितमीहमानः ।
वेदोऽवबोधयितुमर्हति सर्वशस्त्वां
अञ्जः सदाशिव परामृतमात्मनीनम् ॥ ६ ॥

एवं वेद एवात्मनोऽवबोधक इति, प्रमाणनियमो व्यवस्थापितः । सकलोऽपि तस्यैवावबोधक-इति, विषयनियमं प्रतिष्ठापयितुं प्रारभते—**दुःखानुषङ्गेत्यादिना** ।

तत्रागमस्तावत्पुरुषार्थपर्यवसायितया प्रमाणम् । शास्त्रत्वात् । पुरुषहितशासनाद्धि शास्त्रत्वमा-चक्षते । स्वाध्यायाध्ययनविधेरन्यथानुपपत्तेश्च । न हि पुरुषार्थमनुपदर्श्य, पुरुषः क्वचिन्नियोक्तुं शक्यते । अत एवाश्रुतफलो विश्वजिदादिविधिरप्रमाणं माभूदिति फलकल्पनमुपगम्यते । स च पुरुषार्थो दुःख-लेशानुषङ्गरहितनिरतिशयसुखमेव मुख्यः । आब्रह्मकीटं अस्यैव स्वरसाभिलाषविषयत्वात् । तदुपहरणेन च वेदस्य मातापितृसहस्रेभ्योऽपि प्रत्यायिततमतया, निरतिशयप्रामाण्यम् । तादृशं स्वाध्यायविधिपरम-तात्पर्यविषयं प्रामाण्यं, वेदस्य कार्त्स्न्येन विवक्षता, सकलस्य वेदस्य परमात्मतत्वप्रतिपादन एव परमतात्पर्य-मभ्युपेयम् । तत्प्रतिपत्त्यैव हि परमपुरुषार्थसिद्धिः । स च "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" ॥ इत्यादिशास्त्रादवगम्यते, इत्याशयवानाह— **दुःखानुषङ्गेति** । योऽयं विश्वजनीन आहिरण्यगर्भसुखात्

साधनायासायतिक्षयानुसन्धानाभ्यां दुःखानुषङ्गो दुःखाविनाभावः। यथा स्मर्यते—"स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" इति। "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति च। "कर्मणां परिणामत्वादाविरिञ्चादमङ्गलम्" इति च। तस्य **कलया** लेशेनापि **उपसर्गं** उपप्लवं विना, **जन्तोः** प्राणिमात्रस्य, **निसर्गसमभीप्सितं** स्वभावादेवाभिलषितम्, न परोपाधिना, परमं सुखमित्यर्थः। **ईहमानः** इच्छन् चेतनवदुपचारः। विधिवशाध्ययनश्रमसाफल्यस्य, तदुपहरणप्रवृत्त इत्यर्थः। **वेदः सर्वशः** साकल्येन, उपनिषदतिरिक्तांशेनापि। हे **सदाशिव! आत्मनीनं** आत्मने हितं, परमप्रेमास्पदतया सर्वैरनुभूयमानं। **परामृतं** परं च तदमृतं च तथा। उपासनया आविर्भूतापहतपाप्मत्वादिगुणाष्टकविशिष्टं जीवस्वरूपमपि अमृतम्। यत्रेदमुच्यते "तयोर्ध्वमायन्नमृतत्वमेति" इति। तदपरममृतम्। अविद्याद्यनुपदाहात्। तथा च सूत्रम् "अमृतत्वं चानुपोष्य" इति। शताधिकया नाड्योत्क्रम्य यदमृतत्वं, तदनुपोष्य, अविद्याकामकर्माशयमदग्ध्वेत्यर्थः। तद्व्यावृत्त्यर्थं परिमिति विशेषणम्। निर्लेशसंस्पर्शशमिताविद्यादिकलुषनिश्श्रेयसस्वभावमित्यर्थः। यद्वा, परामृतमित्यास्वादनीयतमो रसविशेषो लक्ष्यते। यमास्वाद्य नितान्तशान्तजनिमृतिज्वर आनन्दकेवलात्मा भवति। स तादृशः परः रसः परमात्मा। यथा श्रुतिः—"रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति"। इति। तं **त्वां अञ्जः** अवबोधयितुमर्हति। अञ्ज इत्यव्ययमार्जवे। स्वरसवाहिपरमतात्पर्येण, न तु बलाहिततात्पर्येणेत्यर्थः। आत्मतत्त्वावबोधपरमतात्पर्ये हि सति, वेदस्य स्वाध्यायविधिप्रापितपरमपुरुषार्थपर्यवासनं स्यान्नान्यथा : न खल्वात्मतत्त्वमनधिगम्य पुरुषार्थसिद्धिः। "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति"॥ इत्यादिश्रुतेरिति भावः।

**ननु** स्वाध्यायविधिरक्षरावाप्तिफल इष्यते सिद्धान्ते, तत्कथं वेदस्य पुरुषार्थपर्यवसायितानिर्बन्धः? सत्यम्, अक्षरावाप्तावन्यथापि सिद्धन्त्यां, अध्ययननियमावाप्तैरक्षरैरन्यदेव पुरुषाभिलषितं फलमुपहर्तव्यम्। अन्यथा, अध्ययननियमादरः श्रमफल एव स्यात्। **ननु च**, अध्ययननियमादेव कश्चित्पुरुषार्थः कल्प्यते। तर्हि, शब्दस्वरूपमात्रनिर्वर्त्यादध्ययनादेव स कल्प्यताम्। ततश्च, अक्षरावाप्तेरनपेक्षतया तत्साधनप्राप्तेरेवाभावात्, अध्ययननियमानुसरणानुपपत्तिः। अथापि "स्वाध्यायोऽध्येतव्य" इति कर्मणि कृत्यसम्प्रत्ययात् स्वाध्यायस्यावाप्त्या, साध्यत्वे वक्तव्ये, तत्साधनप्राप्तेरध्ययननियमानुसरणमिति चेत्, एवमक्षरावाप्त्यन्ततया विधेयादध्ययननियमादेव पुरुषार्थ इति अक्षरावाप्तिफलत्वाभावेन, तत्फलत्वनिर्वाहाय तदर्थविवक्षादि न स्यात्। सत्यम्। विवक्षितार्थ एव वेदो, विषहरमन्त्रादिवदिति चेन्न, अङ्गाध्ययनविधिवैयर्थ्यात्। तन्नियमादप्यन्यः पुरुषार्थ इति चेत्, एवमपि शिक्षादीनामङ्गसमाख्या बाध्येत। अकिञ्चित्कुर्वतोऽङ्गत्वायोगात्। न खलु निगमनिरुक्तव्याकरणादिना वेदस्यार्थप्रत्यायनोपयोगिपदपदार्थव्युत्पादनादेरन्यः कश्चित्किञ्चित्कारो युज्यते। तस्मात् नित्यस्यैवाक्षरावाप्त्यन्ताध्ययनविधेः, अक्षरावाप्त्यन्तत्वार्थवत्त्वायाङ्गाध्ययनार्थवत्त्वाय च अर्थज्ञानादिप्रणालिकया कृत्स्नस्यापि वेदस्य पुरुषार्थपर्यवसानमाश्रयितव्यम्। तच्च आत्मतत्त्वावबोधनादेवेति सर्वं विशदम्॥ ६॥

कर्माणि नैत्यिकमुखानि चतुर्विधानि
नानाफलानि गतये न तवामृतस्य ।
पन्था न चान्य इति नाथ न कर्मणेति
प्रत्यक्षतः श्रुतिशिरस्सु समामनन्ति ॥ ७ ॥

स्यादेतत्, अस्ति सकलस्यापि वेदस्य पुरुषार्थपर्यवसानं, तत्तु कर्मविधिनैव स्यात्। तथाहि— न तावदात्मनः स्वभावादेवास्वास्थ्यलक्षणः संसारबन्धः। स्वभावहानायोगेन मोक्षशास्त्रानारम्भप्रसङ्गात्। न च बदरश्यामरक्तन्यायेनात्मनोऽवस्थाभेदो, बन्धमोक्षौ वा। अपरिणामित्वात्। नाप्यविवेकनिमित्तः। विवेकिनामपि संसारदर्शनात्। विवेकनाशे, पुनस्संसारप्रसङ्गाच्च। प्रागूर्ध्वं च विवेकाभावाविशेषात्। विवेकाभावस्य तुच्छस्य, संसारवस्तुहेतुत्वायोगाच्च। अविद्या च विद्यातोऽन्यत्कर्मैव। नान्यत्किञ्चिदिति कर्मनिबन्धनमेवास्वास्थ्यमात्मनः संसारबन्धः। "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" "शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम्। उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः"॥ इत्यादिश्रुतिस्मृतिभ्यः। तथा च नियतमेव नित्यनैमित्तिकानुष्ठानेन, निषिद्धकाम्यपरिहारेण च पुण्यपापानुपार्जनात्, आरब्धस्य च कर्मणो भोगेन क्षपणात्, निमित्ताभावेन संसारप्रवाहोपरमात्, स्वत एव स्वास्थ्यमात्मनः कैवल्यं, इत्यतो नात्मतत्वबोधनमन्वेषणीयमित्याशङ्कां परिहरति—**कर्माणि नैत्यिकमुखानीति**।

नित्यमनुष्ठेयतयावगतं नैत्यिकं, मुखमादिर्येषां तानि नैत्यिकमुखानि। चतस्रो विधाः प्रकाराः, नित्यं, नैमित्तिकं, प्रायश्चित्तं, काम्यमिति विभाजकोपाधयः येषां तानि चतुर्विधानि। तत्र यस्याकरणे प्रत्यवायः तत् जीवनादिनियतनिमित्तकर्तव्यं नित्यम्। यथा—"यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादि। स्वानिवर्तनीयानियतनिमित्तकर्तव्यं नैमित्तिकम्। यथा—"उपरागे स्नायात्" इत्यादि। स्वनिवर्तनीयनिमित्तकर्तव्यं प्रायश्चित्तम्। यथा—"ब्रह्महा द्वादशाब्दकृच्छ्रं चरेत्" इत्यादि। एष एवैषां निमित्ते सति कर्तव्यत्वेन नैमित्तिकत्वे समानेऽपि विशेषः। फलोद्देशकर्तव्यं काम्यम्। यथा— "यजेत स्वर्गकामः" इत्यादि। अथवा, एतान्येव पृथक् चतुराश्रम्यविभक्तानि चतुर्विधानि। तान्येतानि कर्माणि **नानाफलानि**। तत्र काम्यानि तावदन्यान्यफलानि सम्प्रतिपन्नानि। प्रायश्चित्तानि च पापक्षयफलानीत्यविप्रतिपन्नम्। अन्यानि पुनः स्वविधौ पृथगनुपदिष्टफलानि, पितृलोकादिफलसंबन्धेनोपसंह्रियन्ते। यच्छ्रुतिः "कर्मणा पितृलोकः" इति। "सर्वे एते पुण्यलोका भवन्ति" इति च। स्मृतिश्च "एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते" इति। "प्राजापत्यं गृहस्थानां" इत्यादिस्मृतिश्च, आश्रमकर्मणां प्रजापतिलोकादिफलतां दर्शयति। तानि, **तवामृतस्य** त्वदैकात्म्यपरिशेषलक्षणस्य निरुक्तनिःश्रेयसस्य, **गतये** प्राप्तये **न भवन्ति**। अनेन, ब्रह्मात्मतादात्म्याज्ञानमूलः संसारः, तदुपशमश्च नात्मतत्वज्ञानमन्तरेणेति सूचयति। त्रिभ्यो धर्मस्कन्धेभ्यो व्यवच्छिद्य हि "ब्रह्मसंस्थो-

ऽमृतत्वमेति" इति श्रूयते। न तु मुमुक्षुरेवं नित्यादि कुर्यादिति क्वचिच्छ्रूयत इति भावः। न केवलं प्रमाणाभावः, प्रत्युत कर्मणां मोक्षहेतुत्वनिषेधोऽपि, **उपनिषत्सु घटिकास्थाने** पठ्यत इत्याह—"**पन्था न चान्य इतीति।**" "तमेव विदित्वा अतिमृत्युमेति", "नान्यः पन्था विद्यतेऽयनाय" "तमेवं विद्वानमृत इह भवति", "नान्यः पन्था अयनाय विद्यते" इति श्रुतिमर्थद्वारोपस्थापयति। **न कर्मणेति च,** "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति श्रुतिं प्रतीकतः आदत्ते। अत्र इति शब्दः, "नास्त्यकृतः कृतेन", "नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्", "त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्" इत्यादिसंग्रहार्थः। **प्रत्यक्षत** इति सार्वविभक्तिकस्तसिः। प्रत्यक्षं, **सर्वश्रुतिगोचरो यथा तथा समामनन्तीत्यन्वयः।** यदि हि कर्मसाधनत्वनिषेधश्रुतिरनुमेया स्यात्, प्रत्यक्षतत्साधनत्वविधिगन्धेनापि हीयेत। औदुम्बरीसर्ववेष्टनस्मृत्यनुमेयश्रुतिरिव, तत्स्पर्शविधिना। यथाह **तन्त्रवार्तिककारः** "यावदेकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते। तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते" इति, न चैवमत्रेत्यभिप्रायः। श्रुतेः शिरांसीवोपनिषदः। तत ऊर्ध्वावयवाभावात्। तेषु श्रुतिशिरस्सु अनेन परबाधाभाव उपक्षिप्तः। बहुवचनेन च गतिसामान्यमादरणीयताहेतुरुपक्षिप्यते। तदाम्नानस्य केवलार्थवादत्वशङ्काव्युदासाय समामनन्तीति। समुपसर्गः, विधेयान्तरासन्निधानेन तत्प्रशंसया तद्विधिपरत्वमेव तदाम्नानसम्यक्त्वमिति।

**अयमाशयः**—यदि हि नित्यादीनि निष्फलानि, तदा स्यादपि नित्यादिकाम्याद्यनुष्ठानपरिहाराभ्यां, आत्मनः स्वास्थ्यलक्षणं कैवल्यम्। नत्वेवम्। फलानुद्देशकृतानामपि तेषां फलश्रवणात् "कर्मणा पितृलोक" इति। न च काम्यानामेव कर्मणामिदं फलवचनम्। विधिसमभिव्याहृतफलैरेव, तेषां निराकाङ्क्षत्वात्। नित्यानां पुनरस्ति फलाकाङ्क्षा, विधौ फलसमभिव्याहाराभावात्। निष्फले कर्मणि प्रेक्षापूर्वकारिणः प्रवर्तयितुमशक्यत्वाच्च। यथाहुः—"सर्वस्यैव हि शास्त्रस्य कर्मणोवापि कस्यचित्। यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" इति। अत एव हि विश्वजिदादौ फलकल्पना। अत एव च समानपदोपात्तमपि धात्वर्थमनपेक्ष्य पदान्तरोपात्तमपि स्वर्गादिकमेव फलमिष्यते। न चाकरणे प्रत्यवायभयादेव पुरुषः प्रवर्तते। अननुष्ठाने तावत्प्रत्यक्षमनायाससुखं, ततः प्रत्यवायात् कालान्तरे दुःखम्। अनुष्ठाने तु प्रत्यक्षः परमायासः, कालान्तरे निष्फलता चेति। वरं तुल्यायव्ययतया नित्याद्यननुष्ठानमेवेति, अनुसन्धतोऽप्रवृत्तेरप्युपपत्तेः। फलाभावे नित्यादेः, समीहितसाधनताबोधिनो विधेरेवात्मलाभायोगाच्च। अत एव तदकरणनिमित्तप्रत्यवायानुत्पाद एव फलमिति निरस्तम्। प्राक् फलकल्पनाया विहितत्वस्यैवासिद्ध्या, तदकरणे प्रत्यवायाप्रसङ्गात्। एतदकरणनिमित्तप्रत्यवायसदसत्त्वाभ्यां तदनुत्पादफलत्वानुपपत्तेश्च। न च मुमुक्षुसाधारण्येन नित्यादेरुपात्तदुरितक्षयः फलं कल्प्यते। मोक्षमाणेन कर्मणामननुष्ठेयत्वात्, तत्साधारण्यासिद्धेः। "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति मुमुक्षोः सन्यासविधानात। तदेवं नित्यादेराकाङ्क्षिते फलसम्बन्धे "कर्मणा पितृलोक" इत्युपतिष्ठते। **आहुश्च**—"यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" इति। अत एव साह्ने "तिस्र एव साह्नस्योपसदः" इति त्र्युपसत्ताविधेः, औचित्येन स्तुत्यर्थोऽपि द्वादशाहीनस्येति

द्वादशोपसत्ताविधिः, द्वादशाहविधिसम्बन्धेनोपसंह्रियते। तस्मान्नित्यादि कर्मैव क्रियमाणं बन्धाय स्यात्। अपि च सूक्ष्मदशामत्यन्तावहितानामपि, विहिताकरणं निषिद्धाचरणं च प्रामादिकमवर्जनीयम्। अन्ततआरब्धभोगस्यैव परोपघातायत्तत्वात्। **यथाहुः साङ्ख्याः**—"नानुपहत्य भूतान्युपभोगः सम्भवती"ति। तस्मात्खरादीनामनभिकृतानां, नित्याद्यकरणेऽपि प्रत्यवायाप्राप्तेः; काम्यादिकृतेरेवाप्रसक्तेः, उपभोगेन चारब्धक्षयादनायासेन आत्मनः स्वास्थ्यमुपपद्यते। न त्वधिकृतानाम्। इत्यत उत्प्रेक्षामात्रमेतत्। अपि च, अधुना निश्शेषकाम्यनिषिद्धवर्जनेऽपि प्राचीनानन्तकर्मानुशयाः सन्तीति कथमिवात्मनः स्वास्थ्यं स्यात्?

ननु चैकभविकः कर्माशयः, मरणं हि कर्माशयाभिव्यञ्जकं साधारणम्, तत्र किमभिव्यज्यतां फलाभिमुखीक्रियतां? किं वा न? इति को विशेषो हेतुः। अपि चानन्तरफलाविस्रम्भे कः काम्ये प्रवर्तताम्? निवर्ततां वा निषिद्धात्? तादात्विकफले हि कर्मणि स्वरसवाहिनी प्रायेण प्राणिनां प्रवृत्तिः। कालान्तरफले कृष्यादावपि कथञ्चित्प्रायशो दृष्टफलतया सम्भावनामात्रेणापि विस्रम्भात् कल्पकोट्यापि 'भवति न वेति' सन्दिग्धफले वैदिके महायासे कर्मणि कः प्रेक्षावान् प्रवर्तते? अतो अनन्तरोपभोग्यफलत्वं न्याय्यम्।

तत्र च नानुपभुक्तकर्माशये शेषोऽस्ति, "तस्मिन्यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते"। "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्"। "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। अस्मिन्कृतं तत्प्रतिगृह्य सर्वं अमुत्र भुङ्क्ते पुनरेति मार्गम्॥" इत्यादिश्रुतिस्मृतिभ्यः।

अथैवं काम्यानुष्ठायिनोऽपि स्वर्गं प्राप्ताः सर्व एव मुच्येरन्। तथा निषिद्धानुष्ठायिनो नरकं प्राप्ताः। न च तेषां प्रत्यावृत्तिहेतुरस्ति। "किञ्चित्कर्मे"ति काम्यनिषिद्धवर्जनमतन्त्रम्।

एकभविकवादिनामात्मनः स्वास्थ्यमिति चेत्, न कामिनो रागद्वेषवासनया कर्मफलशेषेण, पुनर्जन्मोपपत्तेः। "ततः कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते" इत्यादिस्मृतेः। न खलु कर्मशेषेणेत्याह, येन भुक्तफलादन्यः कर्माशयः शङ्क्येत। कर्मफलशेषेणेति तु ब्रवीति। वर्णा आश्रमाश्च स्वकर्मनिष्ठाः। प्रेत्य कर्मफलमनुभूय, तच्छेषेण, विशिष्टदेशजातिकुलरूपायुश्श्रुतवित्तवृत्तसुखमेधसः जन्म प्रतिपद्यन्ते इत्यत्रापि, कर्मफलानुभवसन्निधानात्तच्छेषेणेति, कर्मफलशेष एव गम्यते।

ततश्च प्रागेव फलोपभोगपरिसमाप्तेः सावशेषफलेन कर्मणा जन्म प्रतिपद्यन्त इति युक्तम्। एतेनैव नारकिणः कर्मफलशेषेण जन्मप्रतिपत्तिर्व्याख्याता। एतदभिप्रायमेव "तद्य इह रमणीयचरणाः रमणीयां योनिमापद्यन्ते, अथ य इह कपूयचरणाः कपूयां योनिमापद्यन्ते" इति। तस्मान्नित्याद्यनुष्ठायिनो निश्शेषकाम्यनिषिद्धपरिहारिणः क्लेशवासनाशून्यस्य, "तस्य तावदेव चिरं संसारबन्धमोक्षस्य यावदारब्धफलोपभोगक्षय" इत्युपपन्नमिति—**अत्रोच्यते**।

" जातिरूपादिहीनानां शुनामपि च दृश्यते । आन्दोलिका पयःपानं तूलिकास्तरणानि च ॥ भ्रूभङ्गलीलायन्तव्यराजमण्डलसम्पदः । संराजोऽपि हि दृश्यन्ते महारोगोपपीडिताः ॥ न च दुष्कृतशेषेण शुनां सुखफलोदयः । न वा सुकृतशेषेण राज्ञां दुःखफलागमः ॥ सुरासुरमनुष्येषु पशुपक्षिमृगेषु च । सुखदुःखव्यतीभावः श्रूयते दृश्यतेऽपि च ॥ धर्माधर्मफले ते च शास्त्रेण परिनिश्चिते । तस्मात्कर्माणि सुप्तानि कल्पकोटिशतेष्वपि ॥ कालेन संप्रबुध्यन्ते सुखदुःखे फलानि च ॥ "

ननु च तत्तद्भाव एव सन्ति समुपार्जिताः पुण्यपापाशयाः । ते चैकप्रघट्टकेन मरणकाले, फलाभिमुखीभूताः गुणप्रधानभावेन फलभोगाय कल्पन्ते । तत्र यदि पुण्याशयः प्रधानम्, तदा स्वर्गमुपभुञ्जानः पापाशयफलदुःखमपि, तत्र च तच्छेषप्रतिपादितजन्मनि चोपभुङ्क्ते । तेन जातिरूपादिसम्पन्नानां संराजामपि महारोगाद्युपपत्तिः । अथ पापाशयः प्रधानम्, तदा नरकमुपभुञ्जानः पुण्याशयफलं सुखमपि, तत्र तच्छेषप्रतिपादितजन्मनि चोपभुङ्क्ते । तेन शुनामप्यान्दोलिकाद्युपपत्तिः । अन्यथा एकैकभवसमार्जनीयानामेव कर्माशयानामपरिमेयतया, अनादिभवपरम्परार्जितानामेषामनन्तानां, फलावसराभाववितर्केण, कर्मस्वेवानाश्वासप्रसङ्ग इति चेन्नैवम् ।

" कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् । सप्त जन्म भवेद्विप्रः धनाढ्यो वेदपारगः । खरोष्ट्राश्ववराहाणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥ वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥ सर्वमेकभवे येन पुण्यपापमिदं कृतम् ॥ कथं सोऽन्यभवे नैतदुपभोगाय शक्नुयात् । सर्वदेहसमारम्भो युगपन्नहि शक्यते ॥ तस्मादवश्यं कर्माणि सुप्तानीत्युपगम्यताम् । नानाविधानि बीजानि प्रत्युप्तानि महीतले ॥ यथाकालेन रोहन्ति तथा कर्माशया अपि । फलानियतकालत्वे निश्चितेऽपि च शास्त्रतः ॥ श्रद्दधानाः प्रवर्तन्ते महायासेऽपि कर्मणि । "

तस्मात् " यावत्सम्पात " मित्यादि तदारब्धफलाश्रयम् । " यत्किञ्चेत्य " पि पुण्यं वा पापं वेत्यविशेषता ॥ परलोकोपभोक्तव्ये न कार्त्स्न्यमभिधीयते । न च " कर्मफलशेषेण " इति स्वर्गादिफलशेष एव जातिकुलरूपादिहेतुरिति युक्तम् । " क्लेशमूलः कर्माशय " इति प्रकृत्य सति मूले तद्विपाको जात्यायुर्भोग इति जात्यादेः कर्मफलत्वव्यपदेशात् । अतः फलान्तादुपभुक्तात्कर्मणः शेषेणानुपभुक्तफलेन कर्मान्तरेणेत्येव तत्राप्यवसीयते । एवं सति " ब्रम्हहा क्षयरोगी स्याद्दुश्चर्मा गुरुतल्पगः " इत्यादिकर्मविपाकशास्त्रं, बहुकल्पात्ययजीर्णप्रामादिकमानसब्रह्महत्यामवाप्नुहीत्यादिशापप्राप्तमिथ्याभिशंसनाहितादिविषयं व्याख्येयम् । न तु भुक्तफलकर्मशेषाभिप्रायम् । तस्मादेकभविकत्वाभावादनादिभवपरम्परासमार्जितानन्तकर्माशयेषु क्लेशवासनावष्टब्धेषु संसारमहागहनबीजेषु सत्सु, न नित्यादिनिष्फलत्वेऽपि निषिद्धादिपरिवर्जनेऽपि संसारोपरमेण स्वास्थ्यमात्मनः शक्यशङ्कमिति, अतो नोत्प्रेक्षितवर्त्मना नित्यादिकर्मणैव मोक्षसिद्ध्या आत्मतत्वावबोधनपरत्वाभाव आगमस्येति ॥ ७ ॥

उत्पाद्यमाप्यमपि कर्मफलं विकार्यं
संस्कार्यमप्यगसुतादयिताश्रयन्ति ।
कर्मैव शास्ति यदि तन्निरपायहित्यं
पान्थं तृषार्तमिव विप्रलभेत वेदः ॥ ॥ ८ ॥

अथापि स्यात्, यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति निःश्रेयसहेतुता स्मर्यते श्रूयते च "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति । स्वर्गश्च दुःखासम्भिन्नसुखमात्रमिति लक्षितं "यन्न दुःखेन सम्भिन्न" मित्यादिना । "स्वर्गे लोके न भयं किञ्चनास्ति, न तत्र त्वं न जरया बिभेति । उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके" इति चाभयादिलक्षणोऽनुवर्ण्यते । "स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके, सर्वान्कामानाप्त्वामृतस्समभवत्" इति च । तत्प्राप्तौ सकलकामावाप्तिरार्थिकी गम्यते । संवत्सरप्राप्ताविव दिनपक्षादिप्राप्तिः । काम्यत्वाच्चायमीदृश एव स्वर्ग इति युक्तम् । न खलु कामनया साधयन्सुखलवं कामयते । तादृशमेव च निःश्रेयसं ज्ञानादप्यवाप्यमुपगम्यते, "तरति शोकमात्मवित्", "अभयं हि वै ब्रह्म भवति", "य एवं वेद", "यो वेद निहितं गुहायां" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति इत्यादिश्रुतिदर्शिभिः । तच्चेन्निःश्रेयसं कर्मणैव साध्येत, कर्मविधिमहातात्पर्यमाम्नायस्य निरनुशयमाश्रयणीयम् । वेदान्तानामपि कर्मविध्यपेक्षितस्वर्गलक्षणफलस्वरूपकर्तृदेवतादिस्वरूपोपवर्णनेन, कर्मविधिशेषत्वोपपत्तेरित्याशङ्क्य परिहरति — उत्पाद्येत्यादिना ।

कर्मणः फलं तावदुत्पाद्यं वा स्यात्, यथा "पिष्टं संयौति" इति संयवनस्य पिण्डः । यथा वा ऐन्द्राग्नेः प्रजादिः । आप्यं वा, यथा "गां दोग्धी"ति दोहनस्य पयः । यथा वा सांग्रहण्यादेः ग्रामादिः । सविमर्शमुपस्थितान्ववसर्गेऽपि शब्दः । इदमपि कर्मफलमिति । विकार्यं वा यथा "व्रीहीनवहन्ती"त्यवहननस्य व्रीहयः । यथा वा श्येनादेरभिचरितव्यो भ्रातृव्यः । संस्कार्यं वा, "व्रीहीन्प्रोक्षति" इति प्रोक्षणस्य व्रीहयः । यथा वा जातेष्ट्यादेः पुत्रादिः । लौकिकस्यापि खलु कुलालादिकर्मणः घटादिरुत्पाद्यः, गमनस्य ग्रामादिराप्यः, गन्धानुलेपनादेरङ्गादि संस्कार्यम् । अवहननादेर्व्रीह्यादय एव विकार्याः । नातोऽन्यद्वैदिकस्य लौकिकस्य वा कर्मणः शक्यं फलमुत्प्रेक्षितुमित्याश्रयन्ति कर्म, फलतत्त्वविदः । अनेन सम्प्रतिपत्तिर्दर्शिता । हे अगसुतादयित इति सम्बोधनम् । दाम्पत्यनिबन्धनस्य कर्मणः उत्पाद्यादिनियतफलत्वे त्वमेव साक्षीति प्रदर्शनार्थम् । तस्मान्निःश्रेयसमपि चेदेष्वन्यतमं स्यात्, तस्य कामविशेष एवान्तर्भावात् । चतुर्थपुरुषार्थो दत्ततिलोदकस्स्यात् । पुरुषार्थचातुर्विध्यं च स्मर्यते—"धर्मार्थकाममोक्षाख्यः पुरुषार्थ उदाहृतः" इत्यादौ । तस्मान्निरस्तसमस्तदुःखानुषङ्गनिरतिशयनित्यसुखात्मलक्षणनिःश्रेयसादन्य एव, कर्मभिरुत्पाद्यः आप्यो वा निकषोत्कर्षशाली स्वर्ग आस्थेयः । "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", ज्योतिष्टोमेन यजेत स्वर्गकामः" "विश्वजिता यजेत स्वर्गकामः", इत्यादिन्यूनाधिककर्मसाधनकत्वावगमात् । साधना-

नुरोधेन फलेऽपि न्यूनाधिकत्वं कल्प्यम्। अन्यथा "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत्" इत्यादिन्यायेन लघूपायेन सिद्धयत्यर्थे गुरूपायानर्थक्यप्रसङ्गात्। तदिदमन्यानर्थक्यं समाहितमध्वरमीमांसायां "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्" इति। कृषितारतम्येन तत्फलतारतम्यवदग्निहोत्रादिसाधनतारतम्येन फलस्वर्गतारतम्यं कल्प्यमित्यर्थः।

ननु उत्कर्षनिकर्षोत्तीर्णे समस्वभाव एव स्वर्गे अग्निहोत्रादीनि विकल्प्येरन्। यथैकस्मिन्नेवारोग्ये गुरुलघुभेषजविकल्पः। यथा वैकस्यामेव पापनिवृत्तौ, सेतुदर्शनद्वादशाब्दकृच्छ्रादिगुरुलघुप्रायश्चित्तविकल्पः। यथा वैकस्मिन्नेव ब्रह्मलोके अश्वमेधक्रियातदुपासनादिविकल्पः। तथेहापि साधनतारतम्यस्य फलतारतम्याप्रयोजकत्वात् क एवं सत्यन्यानर्थक्यशङ्कापरिहारः? रुचिभेदव्यवस्थैव। तथा च स्मर्तारो वैकल्पिकेषु स्वच्छन्दमेव धर्मव्यवस्थाहेतुमिच्छन्ति "आत्मनस्तुष्टिरेव" च इत्यादि वदन्तः। दृश्यते चामयाविनो लघुन्यपि भेषजे सति, महत्येव स्वभावादभिरुचिः। एवमिहापि कस्यचित्क्वचित्कर्मणि श्रद्धा स्यात्। स्वभावादेव, श्रद्धा च फलसिद्धौ हेतुः। "श्रद्धां भगस्य मातरं इति हि श्रुतिः। विपर्यये च फलाभावस्स्मर्यते। "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" ॥ इति। एवमश्रुतं फलतारतम्यकल्पितं भवतीति चेत्, सत्यं, एवं यदि कर्मफल स्वर्गः, उत्पाद्यो न स्यादाप्यो वाप्यत्वे वा न स्यात्। तस्य पुनरुत्पाद्यत्वे चाप्यत्वे वा निकर्षोत्कर्षोपपत्तेः। अष्टदोषदुष्टो नाग्निहोत्रादिसाधनविकल्पो युक्त आश्रयितुम्। व्यवस्थितफलभेदोपपत्तेः। तत्र दुःखासंभेदवचनमनात्यन्तिकं, क्षयातिशयादिदर्शननिमित्तदुःखस्य नियतत्वात्। तथा च स्मृतिः "स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निष्कृतिः" इति। किन्तु मानुष्यकसुखादिवदनुक्षणं दुःखानुषङ्गाभावपरम्। यश्च "स्वर्गे लोके न भयं" इत्याद्युपवर्णितः सोऽपि नात्यन्तमभयादिलक्षणः। कर्मसाध्यत्वादेव अग्निविद्याफलं हि सः। "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो" इत्यादिदर्शनात्। न हि सद्वितीये निरङ्कुशनिर्भयत्वाद्युपपद्यते। "द्वितीयाद्वै भयं भवती"ति श्रुतेः। किन्तु, आभूतसंप्लवान्ततया मानुष्याद्यपेक्षयैव तत्प्राप्यलोकस्य निरङ्कुशाभयादिलक्षणनिःश्रेयसान्ततया वा तदभेदोपचारेण वा तथोपवर्णनमिति श्लिष्टम्। यः पुनरयं स्वर्गः यत्र सर्वे कामाः अन्तर्भवन्ति, सोऽयमात्मस्वरूपलक्षणो निःश्रेयसशब्दितः कर्मसाध्यस्वर्गादन्य एव। "प्रज्ञानं ब्रह्माहमस्मि" इति विद्वान्सः एतेन प्रज्ञेनात्मना भवन् अस्माल्लोकादहमभिमानविषयाद्देहात् उत्क्रम्य, तदभिमानत्यागेन जीवभावादूर्ध्वं गत्वा अमुष्मिन्प्रकृतप्रज्ञात्मनि, स्वर्गे अविदुषां परोक्षसुखरूपत्वात् उपचारितस्वर्गे दुःखभयादिसंभेदादत्यन्तविधुरसुखकैवल्यादनुपचरिते वा सर्वकामावाप्त्या अमृतत्वाभिधानात्।

यत्पुनरिदमुच्यते, कामनया कर्म कुर्मन्निरतिशयं सुखमिच्छन्तीति तत्तथैव। तत्तु कर्मणा न सिद्धयति। असामर्थ्यात्। यदि हि निरतिशयानुत्पाद्यादिस्वभावसुखकेवलस्वलक्षणं निःश्रेयसं नाम न स्यात्, तत "उपवासाद्वरं भिक्षे"ति न्यायेन, यावन्निरतिशयोत्कर्षं संभवति तत् तावदेवेति, तत्साधनकर्मपरतैवागमस्य कथञ्चिदास्थीयेतापि। अस्ति तु तत्। आत्मैव हि निरङ्कुशाभयशोकादिविधुरनिरतिश-

यानन्दस्वभावोऽनुश्रूयते । "अभयं हि वै ब्रह्म" "तद्वा तस्यैतदकामं रूपं शोकान्तरं" "आनन्दो-ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादौ । परमप्रेमास्पदं चात्मा जन्तुमात्रस्य, स्वसाक्षिकोऽनुभूयते । "तदेतत् प्रेयः पुत्रात्" इत्याद्या च श्रुतिः । तल्लक्षणश्चानन्दः । आत्मलाभश्च निःश्रेयसम् । प्रेत्यभावजीवात्यन्तिकोपरमात् । "आत्मलाभान्न परं विद्यत" इति च स्मृतिः । स च नोत्पाद्यः । तदुत्पत्तिहेत्वनिरूपणात् । तथा च सूत्रं "असम्भवस्तु सतोऽनुपपत्तेः" इति । भगवता भाष्य-कारेण व्याख्याता च "स वा एष महानज आत्मा" इत्याद्या च श्रुतिः । नाप्याप्यः । आत्मत्वादेव, नित्याप्तत्वात् । नापि संस्कार्यः । निरवद्यत्वादनाधेयातिशयस्वभावत्वाच्च । तथा च श्रुतिः— निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "साक्षी चेता केवलो निर्गुणश्च" इत्याद्या । अन्यथा विक्रियापत्तेः । "उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्" । इति न्यायात् । नापि विकार्यः । "अविकार्योऽयमच्युतः" इति स्मृतेः । अन्यथाऽनित्यत्वापातात् । यथा स्मरन्ति—"यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तस्य कुतो हि तत्त्वम्" इत्यादि । तस्मादकर्मसाध्योऽयमन्यादृशो निःश्रेय-सलक्षणः स्वर्गः ।

एवमीदृशं परमसुखं स्वभावादेवाभिलषतो, यदि तदनित्यफलस्वभावं कर्मैव शास्ति, परमतात्पर्येण विदधीत, तदा निरपायहित्यं, निरपायहितं आत्मन इच्छतीत्यर्थे निरपायहितशब्दात् "सुप आत्मनः क्यजि"ति क्यचि, "क्यचि चे"ति ईकारः । ततो निरपायहित ईयेत्यस्य, सनाद्यन्तधातुसंज्ञायां, क्विपि, धातोरतोलोपे, वलियलोपे च रूप निरपायहित्यमिति । तं निरपायहित्यं निरुक्तनिःश्रेयसाभि-लाषिणं । वेदः, तृषा पिपासया आर्तं पान्थमिव विप्रलभेत । यथा कश्चित्साधुः सत्येव पानीये स्वादुनि तदाप्तिपथे च, जाङ्गलसङ्गतं पन्थानमुपदिशन् विप्रलभेत । तथा वेदोप्यतत्साधनोपदेशात् । तथा चाप्रामाण्यमेव स्यादिति । अत्र 'कर्मैव' इत्येवकारेणात्यन्तमतत्साधनता कर्मणः । चित्तशुद्धि-विविदिषाविद्योदयप्रणाड्या, अपि तत्साधनता हि "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इति सूत्रे भगवता भाष्यकारेण दर्शिता । एवं हि सति "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" "यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इत्याद्या स्मृतिरर्थवती । किन्तु साक्षादतत्साधनता, साक्षात् तत्साधनं, आत्मतत्त्वमेव तु परमतात्पर्येण वेदः प्रतिपादयितुमर्हतीत्यभिप्रायः सूचितो भवति ॥ ८ ॥

त्वय्येव भावमवगाढमधीश सर्वे
वेदा यदित्युपनिषद्वचसि ब्रुवाणे
अन्याशयग्रहिलमोहमिहानुमन्तु—
माम्नायवाचि न कथञ्चन शक्नुयाम ॥ ९ ॥

एवं कर्मणो निःश्रेयसस्य चान्योन्यसाध्यसाधनभावायोग्यतया, पुरुषहिततमसाधनोपदेशप्रवृत्तस्य वेदस्य, न कर्मैदम्पर्यकैवल्यमुपपद्यते। किन्तु तत्साधनमात्मतत्त्वविद्या युज्यत इति। तत्रैव परमतात्पर्यमिति, अर्थापत्त्या समर्थितम्। इदानीं प्रत्यक्षेणागमेनैव, तत्तात्पर्यसिद्धौ किमर्थापत्तिगवेषणया इत्याह **त्वय्येवेति।**

हे '**अधीश**' सम्बोधनम्। विपरीतदर्शिनां त्वमेव शासितेति दर्शनार्थम्। त्वय्येव, न कर्मणि। **अवगाढं**, गाढनियम्रम्। अत्यन्तनिरूढमिति यावत्। **भावं**, तदवबोधनानुकूलत्वलक्षणं तात्पर्यम्। **सर्वे वेदा** यत्पदमामनन्तीत्युपनिषद्वचसि वेदान्तवाक्ये। **ब्रुवाणे** सति। उपनिषत्पद-ग्रहणेन, कर्मणैव निःश्रेयससिद्धिरिति वदतोऽपि निःश्रेयसस्वरूपस्योपनिषत्स्वेवावगन्तव्यत्वादुपजीव्यता सूचिता। अन्यस्मिन्कर्मविधावेव, आशयो वेदस्य तात्पर्यमिति ग्रहो निरूढोऽभिनिवेशः, तथा सोऽस्त्येषामिति **अन्याशयग्रहिलाः**। पिच्छादित्वान्मत्वर्थीय इलच्। तेषां **मोहं**, तमेव कर्मविधि-तात्पर्यभ्रमम्। उपजीव्यजातीयोपनिषद्वचनविरोधात् भ्रमत्वम्। **आम्नायवाचि**, सामान्यग्रहणात्कर्म-विधिवाक्येऽपि। **अनुमन्तुं**, अस्त्वित्यनुज्ञातुम्। **कथञ्चन न शक्नुयाम**, न समर्था भवेम। परमपुरुषार्थविघातप्रसङ्गादिति।

अथ कुतोऽयं केषाञ्चित् कर्मविधितात्पर्यभ्रमः? उच्यते। "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत शास्त्रं तदभिधीयते॥" वेदे च, शास्त्रयोनित्वादिति शास्त्रशब्दः प्रयुज्यते। कर्मविधिपरत्वाभावे च, प्रवृत्तिनिवृत्त्यनुपदेशित्वेन शास्त्रमेव न स्यात्। कार्यविषयैव च वृद्धव्यवहारे शब्दव्युत्पत्तिः। प्रवृत्तिनिवृत्तिदर्शनमूलत्वात्तस्याः। कार्यताज्ञानाधीने च ते। तस्मात्कर्म-विधिपरो वेद इति। कथं पुनरयं विभ्रमः? **उच्यते**। "त्वया प्रवर्तितव्यं वा कार्यं वेत्य-वबोधिते। नर्ते कश्चित्प्रवर्तेत स्वेष्टसाधनताधियाम्॥ हितं संप्रेप्सतां पुंसामहितं च जिहासताम्। उपायान्प्राप्तिहानार्थं शास्त्रं भासयतेऽर्कवत्॥ हितसाधनतत्त्वे च शास्त्रेण प्रतिपादिते। प्रवर्तेत यथा-कामं निवर्तेताथवा स्वयम्॥ न प्रवृत्तिर्निवृत्तिर्वा मानव्यापारगोचरः। सदसद्वस्तुबोधो हि प्रत्यक्षादिषु दृश्यते॥ वेदोऽपि मानमित्येव वस्तुबोधक इष्यताम्॥ हितसाधनतश्चायं शास्त्रमित्यभिधीयते॥ प्रमाणवस्तुतन्त्रं हि विज्ञानं हितसाधनम्। अतस्तदात्मयाथात्म्यं वेदान्तेषूपदिश्यते॥ अर्थस्यान्य-प्रमाणत्वात्तदशिष्यमिति ब्रुवन्। उपदेशार्थकं शासिं प्रयुङ्क्ते पाणिनिस्स्वयम्"॥

न च कार्य एव पदव्युत्पत्तिः, यत अङ्गुल्या निर्दिश्याम्बाताततमातुलादिशब्दान्, मात्रादिषु सिद्धेष्वेव, बाला व्युत्पाद्यमाना दृश्यन्ते। यथाव्युत्पत्ति च वस्तुतत्त्वावबोधकत्वं वेदस्यापि स्यात्। "यदि वस्त्ववबोधेन प्रसिद्ध्यति परं हितम्। आयासविचितात्पर्यं कस्माद्वेदस्य कल्प्यते॥ तस्मात्कृत्स्नस्य वेदस्य यदि ब्रूयुरबुद्धयः। क्रियाविधानतात्पर्यं ते मूढा इति मे मतिः"॥ अग्रे चायमर्थो निपुण-तरमुपपादयिष्यते॥ ९॥

वेदोपबृंहणपुराणवचांसि चापि
त्वय्येव वेदवचसामवसानमाहुः ।
वेद्योऽहमेव सकलैरपि नाम वेदैः
इत्यात्थ फल्गुनसखः परमेश्वर त्वम् ॥ १० ॥

एवं 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतिविनियोगादशेषस्यापि वेदस्य, कर्म व्यावर्त्य, परमतात्पर्यं ब्रह्मणीत्युक्तम् । अत्रेयमाशङ्का भवति । नैतावता कार्त्स्न्येन वेदस्य ब्रह्मतात्पर्यं सिद्ध्यति, सर्वे वेदा-यत्पदमामनन्तीत्ययोगव्यवच्छेदमात्रेणापि तदुपपत्तेः, नान्यदामनन्तीत्यन्ययोगव्यवच्छेदानपेक्षणात् इति । तामिमामाशङ्कां परिहर्तुं पुराणादिविनियोगादपि कृत्स्नवेदस्य तदेव ब्रह्मतात्पर्यमवगम्यत इत्याह— **वेदोपबृंहणपुराणवचांसीति** । वेदोपबृंहणानि च तानि पुराणवचांसि च तथा । **चापीतीति** हासवचनानि गृह्यन्ते । किं पुनरुपबृंहणं? वेदस्यापेक्षितार्थोपहरणेन वर्धनम् । यथा—"श्रवणा-यापि बहुभिः यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः" इत्यस्य कुत इत्यपेक्षितो हेतुः यत्नातिशया-भावादिरुपह्रियते । "अयतिः श्रद्धयोपेतो योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिं" इति । अर्थान्तरपरत्वव्युदासेन प्रतीतार्थपरत्वव्यवस्थापनं वा । यथा—ब्रह्मकारणत्वश्रुतेः प्रधानकारणार्थान्तर-व्युदासेन चेतनकारणपरत्वव्यवस्थापनं क्रियते मन्वादिस्मृत्या । अज्ञातार्थज्ञापनं वा । यथा—"त्रिरुन्नतं स्थाप्य समं शरीरं" इति श्रुतौ, केषु त्रिषून्नतं शरीरं स्थापनीयमित्यज्ञातं ज्ञाप्यते—समकायशिरोग्रीवं धारयन्नचलं स्थिरम् । विष्टभ्य कट्यूरोग्रीवा" इत्यादिना । सामान्यप्रवृत्तस्य विषयविशेषव्यवस्था-निर्धारणं वा । यथा—"ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इति प्रायश्चित्तविधेरविशेषप्रवृत्तस्य उपकुर्वाणविषयव्यवस्था निर्धार्यते । "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा" इति । धर्मविरुद्धार्थयैव प्रतीयमानस्य युक्तमेतदिति प्रामाण्याभ्यनु-ज्ञानं वा । यथा—"चाक्रायणादेरिभ्योच्छिष्टभक्षणादि" श्रुतेः, तद्भक्षणाद्यदोषत्वेन प्रामाण्यमनुज्ञायते, "जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इत्यादिना । एवमनेकप्रकारोपबृंहणे, तदर्थनिर्णयप्रयोजकत्वमेव पुराणादेरुपबृंहणत्वमिति युक्तम् ।

नन्वधिकार्थोपहार एवेति, तेन वेदप्रतिपाद्यस्य ब्रह्मणः "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इत्यवगतोपबृंहणाद्यनुरोधेन सविशेषत्वप्रसञ्जनमपास्तम् । तदिह सर्वे वेदा यत्पदमानन्तीत्यस्य, अयोगव्य-वच्छेदमात्रपरत्वव्युदासेन अन्ययोगव्यवच्छेदपरत्वमुपपादयन्तीति, "परमात्मा च सर्वेषां आधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ ये च वेदविदो विप्रा येचाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥" इति । "एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म शाश्वतम् । वेदानां परमं गुह्यं सौम्य राम परन्तप" इत्यादीनि । वेदवचसां सामान्यग्रहणादेक-देशमात्रव्यावृत्तिः ।

**त्वय्येव**, परमात्मनि। **अवसानं**, समाप्तिं निष्ठाम्। परमतात्पर्यमाहुः। पुराणवचने वेदेषु वेदान्तेषु चेति, इतिहासवचने वेदविदोऽध्यात्मविदश्चेति च, विभज्योभयोपादानादात्मतत्त्वस्य प्रतिपाद्यतया कृत्स्नवेदव्याप्तिरवगमिता भवति। सोऽयमर्थस्त्वय्येवेत्येवकारेण सूच्यते। अतो नायोगव्यवच्छेदमात्रा शङ्केति। एवं सर्वस्यापि वेदस्य ब्रह्मणि तात्पर्यं वदद्भिः पुराणादिवाक्यैः, तत्रैव पुराणादितात्पर्यातिशयोऽपि सूच्यते। दर्श्यते च भारते—"आदावन्ते च मध्ये च भगवान्गीयते हरिः" इति, तस्य ब्रह्मतात्पर्यम्। अनेन, **सकलोऽपि वेद** इत्यत्र अपि समुच्चितपुराणेदरपि, ब्रह्मावबोधनफलत्वमर्थादुपपादितं भवति। भगवतापि स्वात्मतत्त्वं सकलवेदप्रतिपाद्यमिति स्वयमेव गीतमित्याह — **वेद्योऽहमेवेति**। "वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्" इति भगवद्गीतावचनांशोऽर्थतोऽनुक्रान्तः। अहमेवेत्येवकारः पूर्ववद्व्याप्त्यर्थः। सकलैरपीति च एकवेदैकदेशव्यावृत्तिः। चतुर्भिरपि वेदैरहमेव कार्त्स्न्येन वेदनीय इत्यर्थः। **नामेति** तदुपपादकश्रुतिप्रसिद्धिं दर्शयति। "तपांसि सर्वाणि च यद्वदन्ति" इति हि श्रुतिः। यतश्चातुराश्रम्यधर्मास्तत्पदप्रतिपत्त्यर्थाः। अतस्तद्विधिविषयोऽपि वेदस्तत्परएवेत्यर्थः। **इत्येवमात्थ**, ब्रवीषि। वर्तमानसामीप्ये वर्तमानव्यपदेशः। **फल्गुनस्य, सखा**, "समप्राणस्सखा मतः" इत्युक्तः। अनेन "द्वा सुपर्णा सयुजा सखाया" इति श्रुत्यर्थोऽनुसंहितः। तेन सकलजीवानामपि निरुपाधिकहितकारितया, परमेश्वरस्य तद्वचनमत्यादरणीयमिति सूचितम्। फल्गुनसखत्वमिति सामानाधिकरण्येन "यान्येव तव नामानि तान्येव मम गोपते। आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते॥ ये केचिन्मूढमतयो भिन्नं पश्यन्ति मां हरेः। ब्रह्माणं च तथा तेषां ब्रह्महत्यासमं त्वघम्"॥ इत्यादिदर्शनात् ईश्वर इति च विष्णुरिति च परावरत्वमोहो निरस्तः। **परमेश्वरेति** सम्बोधने परमेति विशेषणं करणाधिपव्यावृत्त्यर्थम्। ईश्वरेति च तत्रैव भगवद्गीतायां—"ईश्वरस्सर्वभूतानां" इत्यादिवचनमनुस्मारयति। तेन "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥ तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्"॥ इत्युक्त्वा "सर्वगुह्यतमं भूयः शृणु" इति पूर्वोक्तस्यैव पुनर्वचनमुपक्षिप्य, तमेव शरणागतिप्रकारं तदेव चाप्तव्यं शाश्वतं स्थानमुपदर्शयंस्तमीश्वरमात्माभेदेनोपसंहरति "मन्मना भव मद्भक्तः मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे"॥ इति। अतोऽपि नेश्वरविष्णुपरत्वावरत्वविभ्रमः कार्य इति सूचयति॥ १०॥

**सुत्रामभित्रवरुणाग्नियमादिभेदैः**
**त्वामेकमेव बहुधा विबुधा वदन्ति।**
**तं त्वामधीश गुडजिह्विकया क्रियाणा-**
**माराध्यमर्पयितुमेव विधिप्रवृत्तिः॥ ११॥**

अथ यतो यत्प्रमीयते तत्तस्य प्रमेयम्। न च कर्मविधिभिरात्मतत्त्वं प्रमीयते। तत्र कथमतत्प्रमेये कर्मविधीनां तात्पर्यम्? इत्याशङ्क्य प्रणाड्या तत्प्रमितिप्रयोजनकत्वेन तत्तात्पर्यमुपपादयति— सुत्रामभित्रेत्यादिना।

**सुत्रामा,** इन्द्रः । **मित्रः** अहरभिमानी देवता । **वरुणः,** रात्र्यभिमानी देवता । "मैत्रं वा अहः वारुणी रात्रिः" इति श्रुतेः । **आदिशब्देन** मातरिश्वादिग्रहणम् । भिद्यन्त इति **भेदाः** । सुत्रामादिरूपैर्भेदैः । इत्थम्भावे तृतीया । इन्द्रादिदेवताविशेषात्मनेत्यर्थः । **स्वभावेनैकमेव** सन्तं **त्वां बहुधा, विबुधाः** श्रुतिस्मृतिविदः वदन्ति । तथा हि श्रुतिः—"सुपर्णं विप्राः कवयः वचोभिरेकं सन्तं बहुधा कल्पयन्ति, इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।" "एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।" "तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवं, एतस्यैव सा विसृष्टिः, एष उ ह्येव सर्वे देवाः, इत्याद्या । स्मृतिश्च—"एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥" इत्याद्या । **तं त्वां,** "एकस्सन् बहुधा विचारः, एको देवो बहुधा सन्निविष्टः" इत्यादिश्रुतिसन्निधापितत्वं तत्पदेन सूचयति । **अधीशेति** संबोधनेन, कर्माध्यक्षतां कर्मफलदातृतां च दर्शयति । यच्छ्रुतिः—"कर्माध्यक्षः सर्वभूताधिवासो", "विज्ञानमानन्दं ब्रह्म", "रातिर्ददातुः परायणम्" इत्याद्या । तं त्वां **क्रियाणां** विधेयानां सम्बन्धित्वेन, **आराध्यं,** पूजया प्रीणनीयम् । विधेयविशेषणमेतत् । तथात्वे**नार्पयितुं** प्रसङ्गेन प्रतिपादयितुमेव । **विधिप्रवृत्तिः,** न तु यत्किञ्चिदेवेन्द्रादिशब्दमात्रविकल्पितरूपं देवतेति गुणत्वेनैव संप्रदानमुपनिबध्य, कर्मैव प्राधान्येन विधातुं इत्येवकाराभिप्रायः ।

**नन्वेवं** किमर्थोऽयं वकबन्धयत्नो वेदस्य ? प्रतिपादनीयमेवात्मतत्वमाहत्य प्रतिपादयतु वेदान्तवदित्यत आह 'गुडजिह्विकयेति' । त्रिवर्गप्रवणचेतसो हि पुरुषाः प्रायेण नानाफलकामनया चोद्यमानाः "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति न्यायेन तत्सिद्धिहेतुतया क्रियामेवाभिनिविशमानाः, न हठात्ततो निवृत्यात्मतत्वं प्रतिपादयितुं शक्यन्ते । ततस्तद्बुध्यनुरोधेन मधुरोक्त्या क्रियाद्वारैव तत्प्रतिपत्ताववतार्यन्त इत्यभिप्रायः ।

**इदमत्र विवक्षितम्**—अस्ति तावन्मन्त्रार्थवादादिप्रामाण्यम् । तेषां अन्यार्थत्वेऽपि 'अविशिष्टस्तु वाक्यार्थः' इति न्यायेन स्वार्थप्रतिपत्तिहेतुत्वात् । तद्रूपविपर्ययाभ्यामपरिच्छिन्नार्थबोधकत्वमेव हि मानानां मानत्वम् । तच्च साधारणं मन्त्रादीनाम् । अभ्युपगतं च तत्प्रमाण्यं **भट्टपादैः** "मन्त्रार्थवादेतिहासप्रामाण्यात्सृष्टिप्रलयावपीष्येते" इति । ते च मन्त्रार्थवादादयो देवताया विग्रहादिमत्तां **दर्शयन्ति**—यथा तावत् "जगृभ्णाते दक्षिणमिन्द्रहस्तं तु विग्रीवो वपोदरस्सुबाहुरन्धसो मदे" इत्यादयो विग्रहवत्तां, "अर्धीन्द्र पिब च प्रस्थितस्य एकधा प्रतिधा पिबत् साकं सरांसि त्रिंशतम्" इत्यादयो भोक्तृतां "इन्द्रो दिव इन्द्र ईशे पृथिव्यां ईशानमस्य जगतः सुवर्दृशं" इत्यादय ईश्वरत्वम्, "आहुतिभिरेव देवान्यहुतादः प्रीणाति तेस्मै प्रीता इषमूर्जं च यच्छन्ति" इति प्रसन्नताम्, "स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यादयः फलदातृतामित्यतो न देवताया विग्रहवत्वाद्यपवादः । यद्यप्यत्र देवताया विग्रहवत्वादिकमेव न वाक्यार्थः, इन्द्रस्य हस्तग्रीवादिर्विधत इत्यनुपदेशात् । हस्तं जगृहिम तु विग्रीवादिलक्षण इन्द्रो वृत्राणि जघ्नत इत्याद्यर्थान्तरान्वयावगमात् । तथापि ग्रामं गच्छतः पथि तृणस्पर्शन्यायेनापि मन्त्रादि-

प्रत्यायितस्य बाधकाभावे, तथात्वमेवोपगन्तुं न्याय्यम् । स्तुतिरपि सदर्थावलम्बनैव युक्ततरा । "एते वदन्ति शतवत्सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः विषग्रावाणः सुकृतस्सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत" इत्यादावपि नासदर्थालम्बना स्तुतिः । सोमाभिषवे, तत्कुट्टने ग्राव्णां शब्दायमानस्य वदितृत्वे बहुवत् क्रन्दितृत्वे च, सोमलिप्तपुरोभागस्य हरितवर्णास्यत्वे च, तत्रैव सोमरसावसेकस्य तदशितृत्वोपचारे च सालम्बनत्वात् । यत्पुनरिदमुच्यते भोक्तृत्वे देवतायै प्रत्तं हविः क्षीयेतेति, तन्मधुकरीवद्रसग्रहणोपपत्त्या प्रत्युक्तम् । भोक्तृत्वमेव श्रुतमुक्तनिदर्शनानुगृहीतमौचित्यादन्नरसभोक्तृत्वमाक्षिपतीति, न तत्र पुनः प्रमाणान्तरमन्वेषणीयम् । यच्चेदमुच्यते "यो यद्यथाभिप्रायं विनियोक्तुमर्हति, स तस्येष्टे" न च देवता ग्रामं क्षेत्रं वा विनियुङ्क्ते । अतो न कस्यचिदीष्ट इति तदपि न । भूतावेशन्यायेन तं तं पुरुषमाविश्य, देवतास्तं तं अर्थं विनियुञ्जाना दृश्यन्ते । अनयैवोपपत्त्या मन्त्राद्यवगतमीश्वरत्वं नानुपगन्तुं न्याय्यम् । एवं प्रसादाद्यर्थवादस्यान्यविधिशेषत्वेप्यनपवादः । देवताविग्रहवत्त्वे च, वेदस्यानित्यत्वादि परिहृतं **ब्रह्ममीमांसायाम्** । देवताधिकरणे "शब्द इति चेन्नातः प्रभवादि" त्यादिना । आहुश्च **भट्टपादाः** "प्रतिसृष्टि चतुर्लिङ्गन्यायेन तुल्यनामप्रभवव्यापारवस्तूत्पत्तेर्नानित्यत्वप्रसङ्ग" इति । एवं सति देवताराधनात्मकं कर्म तत्प्रधानम् । कर्मकारकादपि हि सम्प्रदानमीप्सिततममिष्यते "मैत्रावरुणाय दण्डं प्रयच्छती" त्यादौ । देवता च कर्मणः सम्प्रदानम् । तथा चान्यार्थदर्शनं 'यस्यै देवतायै हविर्गृहीतं स्यात्' इति । यजतिश्च देवपूजार्थः प्रसिद्ध एव ।

नन्वेवं यदि देवतार्थं कर्म, देवता च फलदा, तर्हि 'ज्योतिष्टोमेन स्वर्गकामो यजेते' ति यज्यर्थस्य फलसाधनताज्ञानविरोधः कर्माराधितदेवतानाशसम्भावनया फलालाभानुशयेन कर्मण्यश्रद्धा च प्रसज्येत इति चेन्न, देवता हि फलं ददाति कर्मापेक्षयैव, ददाति सेवापेक्षयैव राजा सेवाफलमिति, तस्य फलकरणत्वाविघातात् । न हि देवताप्रीत्यवसानतैव कर्मण इष्यते, येन फलसाधनताज्ञानविरोधस्स्यात् । अतिथिप्रीत्यन्तस्येव वातिथ्यस्य देवताप्रीत्यन्तस्यैव वा तत्प्रीतिद्वारस्य वा, सेवाया इव सेव्यप्रीतिद्वारा यागादेः फलसाधनत्वोपगमात् । यद्यपि कर्मणा न देवताजातिं प्रीणयति । किन्तु तदात्वाधिकृतव्यक्तिविशेषं, तस्य च नाशः सम्भाव्येत, तथापि सा सैव देवताऽऽराधिता । स्वस्वाधिकारावसानात्प्रागेव फलं ददातीति कल्प्यताम् । विधौ देवतार्थत्वप्रत्ययानुरोधात् । **अथवा**, नरपत्युत्तमर्णन्यायोऽत्र स्यात् । यथा नरपतेरुत्तमर्णः नरपतिनाशेऽपि, तत्स्थानाधिकृतादन्यस्मादपि तद्धनवृद्धिं लभते, तथायमाराधकः तत्स्थानाधिकृतदेवतान्तरादेव तत्कर्मफलं लप्स्यत इति । अथवा परमात्मैव तत्तद्देवताराधनफलप्रतिभूरिति न देवताप्राधान्यं हातव्यम् । तथा च **श्रुतिः**—"एष उ ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" इत्याद्या । स्मृतिश्च "यो यो यां यां तनुं भक्त्या श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हि तान् ॥" इत्याद्या । अथवा परमात्मैव तत्तद्देवतामय आराध्यते, फलं च ददाति । तथा च **स्मृतिः**—"येप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामैव कौन्तेय यजन्त्यविधिपूर्वकम् ॥" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।" इत्याद्या । **पुराणमपि**—

"यजन्यज्वा यजत्येनं जपत्येनं जपन्नपि। घ्नंस्तथान्यं हिनस्त्येनं सर्वभूतो यतो हरिः ॥" इति। तदेवं कर्मविधिषु देवतास्वरूपविमर्शो परमात्मतत्त्वज्ञानपर्यवसानात्, तेषमपि तत्रैव परमतात्पर्यमिति ॥ ११ ॥

मन्त्रार्थवादविधिविस्तरकर्मवृत्त्या
प्रायः पराग्विषयवाग्ग्लपनं प्रमार्ष्टुम्।
वेदो भवद्विविदिषाविषये नियुङ्क्ते
साटोपमीश्वर तमेतमिति क्रियास्ताः ॥ १२ ॥

एवं कर्मविधीनामर्थगतिविमर्शनेन कर्माराधनीयदेवतार्पणद्वारा आर्थिकमात्मतत्त्वप्रतिपादनपरत्वमुपपादितम्। अथापि गुणत्वेन देवताश्रुतिरिति कर्मैव प्रधानं स्यात्, तथापि तादर्थ्येन विहितकर्मविनियोगश्रवणादेव तेषां तत्परत्वमवगम्यते, अङ्गविधीनामिव तद्विहितविनियोगादङ्गितात्पर्यमित्याह— **मन्त्रेति**। मन्त्रब्राह्मणभेदेन तावद्विभागो वेदः। यथाहुः— "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति। तत्र मन्त्रा उत्तमपुरुषामन्त्रणाद्यनियतलक्षणाः मन्त्रप्रसिद्धिभाजः प्रयोगकालेऽनुष्ठेयार्थप्रकाशकाः ऋग्यजुस्सामनिगमभेदेन चतुर्विधाः, "अग्निमीले पुरोहितं" "इषे त्वा" इत्येवमादयः। ब्राह्मणं तु द्विविधम्— अर्थवादविधिभेदात्। अर्थवादश्च द्विविधः। स्तुतिर्निन्देति विषयभेदात्। यथा— "वायुर्वै क्षेपिष्ठ देवता", "सोऽरोदीत्" इत्येवमादिः। स हि विधिनिषेधौ स्तुतिनिन्दाभ्यामुत्तम्भयति। पुरुषप्रवर्तननिवर्तनक्षमावापादयति। परकृतिपुराकल्पादीनामत्रैवान्तर्भावोपपत्तेर्न पृथग्व्यपदिश्यन्ते। विधिरित्युपलक्षणं निषेधस्यापि। अर्थसाधनताबोधी विधिः, अनर्थसाधनताबोधी निषेधः। प्रवर्तनाबोधी विधिः, निवर्तनाबोधी निषेध इत्यन्ये। तेषां **मन्त्रार्थवादविधीनां विस्तरः** प्रपञ्चः। शब्दप्रपञ्चस्येह विवक्षितत्वात् घञन्ताप्रयोगः। "प्रथने वावशब्द" इति हि **पाणिनिः**। विपूर्वात् स्तृणादेरशब्दप्रथने घञमनुशास्ति। तेन **कर्मवृत्त्या** तन्मुखेन कर्मप्रतिपादनेन, विधिनिषेधाभ्यां धर्माधर्मप्रमितिरूपजायमाना, अर्थवादेन स्तुतिनिन्दाभ्यां प्रवृत्तिनिवृत्तिक्षमा जायते। मन्त्रेण प्रयोगपर्यन्ता सम्पद्यत इति मन्त्रादिविभागेन, त्रयाणां ग्रहणम्। विधिनिषेधयोरर्थानर्थसाधनताबोधिनोः पुरुषतन्त्रव्यापारालम्बनतया तदुभयसाधारण्येन कर्मवृत्त्येत्युक्तम्। तया निमित्तेन **यत्पराग्विषयवाग्ग्लपनं**, पराग्विषयेषु अनात्मालम्बनेषु वाचां ग्लपनं, श्रमणं अवसादनम्। तथा च "नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लपनं हि तत्" इति श्रुतिरनात्मविषयप्रवृत्तौ, वाचां श्रममात्रफलतां दर्शयति। तदिदं **प्रमार्ष्टुं** "मृजेस्तुमुन्" प्रकर्षेण शोधयितुं, प्रशमयितुमित्यर्थः। **प्राय** इत्यव्ययं वितर्के। "शङ्के मन्ये ध्रुवं प्राय" इत्यादेः सम्भावनाद्योतकत्वं काव्यकोविदैरुदितम्। **वेदः** ताः क्रियाः, यद्वचनेन वाग्ग्लपनं तानि कर्माणि, **भवद्विविदिषाविषये** त्वत्स्वरूपतत्त्वविविदिषायां साध्यायाम् **तमेतमिति** श्रुतिप्रतीकोपादानं "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिना। **साटोपं**, अहो ममायं कर्मप्रतिपादनश्रमो धनार्जनश्रम इव महोदयः सम्पन्नः। यदमीषामार्जितस्येव

घनस्य तीर्थप्रतिपादने, महाफलायामात्मतत्वविविदिषायामुपयोग इति, सम्भ्रम आटोपः। तेन सहितं यथा भवति तथा। नियुङ्क्ते, साधनत्वेन तादर्थ्यमवबोधयति। अनेन कर्मणां विविदिषाविनियोग-वचनेन तज्जननान्तमेव कर्मानुष्ठानं, तस्यां तु वेदनोपायश्रवणादिपर्यन्तायां जातायां, कर्मत्यागः "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते" इति स्मृतेः। आहुश्च—"प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव" इति। अतो नाक्रमसमुच्चयो विद्याकर्मणोरिति सूचितं भवति। **ईश्वरेति** सम्बोधनेन कर्मणां विविदिषार्थत्वप्रतिपत्तिरपि, ईश्वरानुग्रहलभ्येति सूचयति। "एष उ ह्येव साधु कर्म कारयति" इति हि श्रुतिः। न खलु बलवदनिलादिवदीश्वरः कारयति, किन्तु हितबुद्धिजननेनेति। तथा च लिङ्गम् "न देवा दण्डमादाय रक्षन्ति पशुपालवत्। यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्॥" इति।

अथ कथं कर्माणि विविदिषायां विनियुज्येरन्? विषयिसौन्दर्यलभ्या हि सा। न कर्म-साध्या। अपि च सा खलु किं कर्मणामनुद्देश्यफलं? यथा—"यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इति, नित्यब्रह्मयज्ञाध्ययनस्य यागफलम्। यथा वा "सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्" इति। "सर्वे एते पुण्यलोका भवन्ति, कर्मणा पितृलोकः" इति च। सन्ध्योपासनादेर्ब्रह्मलोकादिफलं उत उद्देश्यफलम्? यथा ज्योतिष्टोमादेः स्वर्गादिफलम्। आद्ये तावत्, इत्थंमहीयांसि कर्माणि, यदात्मविविदिषा जायमाना तेषां फलमिति। कर्मविधीनामेवैषा स्तुतिस्स्यात्। तथा च तेषां ब्रह्मपरत्वाप्राप्तिः। द्वितीये तु, विविदिषा न स्वत एवोद्देश्यफलम्। इष्यमाणार्थत्वादिच्छायाः, किन्तु वेदनोपयोगितया। यथा तृप्त्युपयोगितया ओदन ओदनोपयोगितया पाको वा। तत्र प्रधानफलेच्छाधीना तदुपसर्जनसाधनेच्छेति विविदिषामिच्छतो वेदनेच्छा प्रथममवश्यं वक्तव्या, ततश्च तस्यां जातायां तदुद्देशानुपपत्तिः। सिद्धत्वात्। अजातायां तु सुतराम्। अनुपस्थि-तत्वात्। अजातायां बुभुक्षायामोदनस्यैवानेषणीयत्वाच्च। असत्यां साध्येच्छायां साधनेच्छायोगात्। अथ तर्हि, वेदन एव तानि कर्माणि विनियुज्येरन्। 'असिना जिघांसति', 'अश्वेन जिगमिषति' इत्यादिवदर्थतः प्रधानेनापि समन्वयोपपत्तेः। नैवमपि स्यात्। प्रमाणवस्तुतन्त्रस्य वेदनस्य कर्मानुद्देश्यत्वात्। अपि च विदिते विषये, तद्वेदनोद्देशानुपपत्तिः, सिद्धत्वादेव। अविदिते तु सुतराम्। निर्विषयवेदनोपस्थित्यभावात्। न च ब्रह्मात्मस्वरूपे मोक्षे कर्मणामुपयोगः। तस्य कर्मफलत्वे नित्यत्वव्याघातात्। अपि च, किं तान्येव कर्माणि विविदिषायां विनियुज्यन्ते? यान्याश्रमकर्माणि, उतान्यानि? न तावत्तान्येव। व्यवधानात्। प्रकरणान्तरे प्रयोजनान्यत्वं हि सूत्रितम्। कुण्डपायिनामयने "मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेत" इत्यादि नित्याग्निहोत्रादेरन्यदिति। तत्रानुपादेयगुणसमभिव्याहारवदिहाप्यनुपादेयफलसमभिव्याहाराच्च। अथ युक्तं तत्र विधिस्वरसजुहोत्याद्याख्यातपरतन्त्रतया, अग्निहोत्रादिशब्दस्य सिद्धप्रत्यवमर्शकत्वानुपपत्या, तदन्याग्निहोत्रादिविषयत्वम्। इह पुनर्वेदमनुब्रूयाद्यजेतेत्यादि कर्माख्यातं न श्रूयते। न च

कल्पनीयम्, गौरवात्। अतः स्वतन्त्रसुबन्तैर्यज्ञादिपदैः "एष वाव प्रथमो यज्ञो यज्ञानामि"त्यादाविव, सिद्धप्रत्यवमर्शसम्भवात्। तान्येव कर्माणि विविदिषायां विनियुज्येरन्निति चेन्न, युक्तं तावत्सोमेन यजेत', 'वार्तया जीवती'त्यादौ द्रव्यक्रियाकृषिजीवनादेः साध्यसाधनभावस्य लौकिकत्वात्, तत्पदसमभिव्याहारादेव तदर्थप्रतिपत्तिरिति। इह तु विविदिषासाधनता, यज्ञादेः स्वर्गादिसाधनतेव विध्येकसमधिगमनीयेति, प्रसिद्धवत्साध्यसाधनसमभिव्याहारमात्रात्तदर्थप्रतिपत्त्यनुपपत्तेरवश्यं विविदिषाकामो "वेदमनुब्रूयाद्यजेते"त्यादिविधया विधिसंक्रान्तिरुपगन्तव्या। अतः प्रकरणान्तरन्यायेन कर्मान्यत्वमशक्यं वारयितुं "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासा"वित्यत्र तु कारकविभक्त्यनुपादानात् प्रातिपदिकार्थमात्रवृत्तिसुबन्तेन सिद्धिप्रत्यवमर्शे, तस्य फलसम्बन्धमात्रं चतुर्थ्यावबोध्यत इति न तत्र प्रकरणान्तरेऽपि अनुपादेयफलसमभिव्याहारेऽपि कर्मान्तरत्वप्राप्तिरिति। अथ तर्ह्यन्यान्येव विधीयन्ताम्। नाप्रज्ञातरूपयज्ञादिविधिप्रतिपत्त्यनुपपत्तेर्युक्तं "यदुद्भिदा यजेत पशुकाम" इत्यादौ नामधेयविशेषावच्छिन्नयागभेदप्रतिपत्तौ, तत्राव्यक्तासु तु सोमस्येति न्यायात् सौमिका धर्मा अतिदिश्येरन्, इह तु यज्ञेनेति सामान्यश्रवणे कर्मस्वरूपभेदस्यैवाप्रतिपत्तेः क्व कस्य धर्मा अतिदिश्येरन्? येनातिदेशतोऽपि रूपं प्रज्ञायेत। अथ प्रकरणान्तरफलभेदाभ्यां स्वरूपभेदः कथञ्चिज्ज्ञायेत तथापि न तस्येयं संज्ञा। स एष यज्ञः पञ्चविधः। अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः सोमः। "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" इत्यादावन्यत्र कॢप्तशक्तेः, अन्यत्र कल्पनालाघवेन गौणत्वोपपत्तेः कौण्डपायिनामयने कर्मण्यग्निहोत्रादिशब्दवत्। एवं चोक्तं क्रियाभिधानं, तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यादिति न्यायेन, अग्निहोत्रादिसर्वयज्ञधर्मा अतिदिश्येरन्। ततश्चाव्यवस्था। अपि च किं वेदानुवचनादयः समुच्चयेन विधीयन्ते? विकल्पेन वा? न तावत्समुच्चयेन, "वेदानुवचनेन यज्ञेने"त्यादिभिन्नकारकविभक्त्यवगतनिरपेक्षसाधनत्वबाधेन, समुच्चयावगतिहेत्वभावात्। अत्र केचित्—एकवाक्यगतत्वेन वेदानुवचनादिकं समुच्चितमित्याहुः। तदन्ये न क्षमन्ते। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्, यथाग्निहोत्रं जुहोति" इति। न चेहाख्यातं सकृदुपात्तमित्येतावता शक्यमेकवाक्यत्वमुपगन्तुम्। पृथगाकाङ्क्षानुरोधेन तदनुषङ्गात्। "या ते अग्ने या शये"त्यादौ तनुर्वर्षिष्ठेत्यादिवदन्यथा "ब्रह्मणे ब्राह्मणमालभते क्षत्राय राजन्यं" इत्यादावप्येकवाक्यताप्रसङ्गात्। युक्त"मरुणया पिङ्गाक्ष्यैकहायन्या क्रीणाती"त्यादौ विधेयक्रयक्रियोपरागेण विशिष्टैकार्थ्यादेकवाक्यत्वमारुण्यादिसमुच्चयश्चोपपद्यते। आग्नेयादिषु च पृथगुत्पन्नेषु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति एकयजिपदोपादानेन फलसम्बन्धविधेरुपपन्नः समुच्चयः। न चेह तथा कश्चित्समुच्चये हेतुरस्ति, फलस्य विविदिषाया अविधेयत्वात्। यज्ञेनेत्यादिभिन्नपदोपादानाच्च। अन्ये तु "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यत्र वाक्यभेदाय वयोवस्थाविशेषवत्, 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि यूपं मिनोती'त्यत्र देशविशेषवच्च। वेदानुवचनादिभिरिह कर्मसामान्यं लक्ष्यते। ततश्च कर्मणा विविदिषन्तीत्येवं विनियोगपर्यवसाने सति, अर्थैक्यादेकवाक्यत्वं समुच्चयश्चोपपद्यत इत्याशयेनाहुः। यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा, स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्तीति, तत्रैव तच्चिन्तयितव्यम्। यत्खल्वनुष्ठेयं, तत् फलसाधनतया विधेयम्। अन्यथा नभोमुष्टिघातविधि-

वदानर्थक्यात्। न च कर्मसामान्यमनुष्ठातुं शक्यं समुदायो वा। तथा च तल्लक्षणायां यज्ञादिवाक्यस्यानर्थक्यं स्यात्। कथं तर्हि "स्वाराज्यकामो राजा राजसूयेन यजेत" इत्यादिविधिः? किमत्र कथं कथञ्चिदेकोपाध्यवच्छेदगृहीता नानेष्टिपशुसोमयागा एव व्यासक्तसाधनताका विधीयन्ते। तथैव च, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादावाग्नेयादयः। एतेनाग्निष्टोमादिसमुदितदेवताविधानं, जायापत्यादिसमुदितकर्तृविधानमित्यादि व्याख्यातम्। "दधि मधु घृतमापो धानास्तण्डुलाः तत्संसृष्टं प्राजापत्यं" इति चित्रायागद्रव्यविधौ तदित्येवैकेनोपाधिना नानाद्रव्योपादानात्, राजसूयविधितुल्यत्वैवेति सामान्यसमुदायसमानविधौ नोदाहरणम्। अथैवमिहापि सामान्योपाधिगृहीतानि, कर्माण्येव नानाविधानि, व्यासक्तसाधनताकानि विविदिषायां विधीयेरन्। लक्षितसामान्यद्वारा पुनर्विशेषलक्षणायां व्यवहितलक्षणादोषः प्रसज्येत। जातपुत्र इत्यादौ तु वयोवस्थाविशेषाधिकारान्वययोग्यः। अर्धमन्तर्वेदीत्यादौ देशविशेषश्च यूपसम्मानान्वययोग्योऽस्तीति वैषम्यमिति।

अपरे तु विविदिषोद्देशेन यज्ञाद्यनेकसाधनविधाने गृहं सम्मार्ष्टीत्यत्र गृहोद्देशेनैकत्वसंमार्गविधानवत्, यज्ञाद्यनेकोद्देशेन विविदिषाफलसम्बन्धविधाने गृहैकत्वोद्देशेन सम्मार्गविधानवच्च, वाक्यभेदमनिवार्यमङ्गीकृत्यैव 'एकहायन्या क्रीणाति वाससा क्रीणातीत्या'दि विहितसोमक्रयस्येव, सम्भवत्समुच्चयो यज्ञादेरित्याहुः। तन्न। वाक्यभेदे सति प्रतिस्वं निरपेक्षसाधनत्वागमे सत्यर्थैकत्वाद्विकल्पः स्यादिति न्यायेन, विविदिषैकार्थत्वाद्यज्ञादिविकल्पस्यैवापत्तेः, पशुफलैकार्थचित्रोद्भिदादिवत्। न च क्रयस्येव सम्भवत्समुच्चय इति युक्तं विक्रेतुरानत्या तत्कालप्रयोगाङ्गसोमप्राप्त्यर्थतया प्रतीतं निरपेक्षसाधनत्वहानेनापि नानाद्रव्यसाधनक्रयसमुच्चय इति, अश्वशफेन क्रीणातीति, मिथुनाभ्यां क्रीणातीत्यादि विषमविकल्पानुपपत्तेः। दशभिः क्रीणातीति समुच्चयदर्शनाच्च। विविदिषा तु पश्वादिवदनियतकालफलमिति चित्रादिवद्विकल्प एव युक्तः। विविदिषाप्राग्रूपविवेकादेरप्यनियतकालफलत्वात्। अत एव केचिज्जन्मनैव विवेकिनो दृश्यन्ते। तथा च लिङ्गं "अनेकजन्मसंसिद्धिस्ततो याति परां गतिम्" इति। अस्तु तर्हि वाक्यभेदाश्रयेण विकल्पेन विधीयन्तामिति, तथा च लिङ्गं, "जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः" इति। न। यतः "संभवत्येकवाक्यत्वे वाक्यभेदो न युज्यते।" विकल्पे च पक्षद्वयेऽपि प्रत्येकं प्रामाण्यत्यागाप्रामाण्यस्वीकारत्यक्तप्रामाण्यस्वीकारस्वीकृताप्रामाण्यत्यागलक्षणदोषचतुष्टयप्राप्तावष्टदोषदुष्टत्वापत्तेः। जप्येनैव त्विति तु जपप्रशंसैव। 'कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति, तदनादरवचनवाक्यशेषात्। तस्मात्कर्मणां विविदिषाविनियोगासंभवात् केवलमात्मतत्त्वप्रतिपादनार्थोऽयमर्थवाद इति, न कर्मविधीनां तत्परत्वोपपत्तिरिति। अत्रोच्यते—सत्यमात्मतत्त्वप्रतिपादनार्थोऽयमर्थवादः, किन्तु यज्ञादिकरणकथावनानां विविदिषाफलसंयोगस्यापूर्वत्वेन तद्विषयविधिरपि स्यात। दृश्यते हि ज्योतिष्टोमे ऽयुपसत्ताविधिस्स्तुत्यर्थोऽपि द्वादशोपसत्ताविधिः। प्रेताग्निहोत्रे "अधस्तात्समिधं धारयन्ननुद्रवेत् इति विधिस्स्तुत्यर्थोऽपि 'उपरि हि देवेभ्यो धारयति' इति विधिः। यत्रेदमुक्तं विधिस्तु धारणेऽपूर्वत्वादिति। तथा 'सम्लेत्यापि गिरती'ति विहितप्राशितृप्राशनार्थवादः 'तत्पूषा प्राश्यदतोरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि' इति विधिराश्रियते। तद्वत् यज्ञादेर्विविदिषाया उद्देश्यत्वानुपपत्तिरित्यत्र

वदामः—इच्छा तावद्द्विरूपा लौल्यमात्रावसाना यथारोचकिनः क्षीरादौ, प्रवृत्तिफलावसानाऽभिरुचिरूपा च, यथा चिकित्सितारोचकस्य तत्रैव। तत्राद्या विषयसौन्दर्यज्ञानाधीनैव। द्वितीया तु, भेषजादिसेवामपेक्षते। एवमिहापि मुक्तिहेतुतावगमादेव ब्रह्मवेदने जाताभिलाषस्याप्यभिरुचिरूपा तदुपायश्रवणादिप्रवृत्तिफलावसाना, कर्मभिरुद्देश्या स्यात्।

ननु सापि दृष्टानुश्रविकविषयदोषपरिभावनाप्रगुणितब्रह्मवेदनगुणभूमपरिशीलनया स्यात्, किं तत्र कर्मभिरिति चेन्न। विषयरागारोचकोपहतस्य निरुक्तहेतुकाभिरुचिप्रतिबन्धोपपत्तेः। तदुद्देशानुष्ठितधर्मभेषजसेवया, तद्रोचकापनये, सा निरुपप्लवा सम्पद्यत इत्युपपन्नमस्याः कर्मभिरुद्देश्यत्वम्। एवं शब्दमात्रादापाताधिगते ब्रह्मात्मन्यपरोक्षावगतिपर्यन्तवेदनस्य, कर्मापनेयप्रतिबन्धत्वेन तदेव वा कर्मभिरुद्देश्यं स्यात्। तथा च वेदनप्रतिबन्धलिङ्गम्—"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः इति। तत्र विविदिषायां वेदने वा, तान्येव समुच्चयेन विनियुज्यन्ते। यान्याश्रमकर्माणि तथा हि—विविदिषन्तीति तावन्न फलोपरक्ता भावना विधेया। कामतन्त्रतया फलकर्तव्यताया विधिनिरपेक्षत्वात्। यथाहुः "वेदैवासौ मयैतत्कर्तव्यमिति" इति। "फलांशे भावनायाश्च प्रत्ययो न विधायकः" इति च। करणोपरक्तामेव च तां फलसंबन्धेनैव विदधत् फलविधिरिति गीयते। सन्ति च विहिता वेदानुवचनादिनानाकरणोपरक्ता भावनाः। ताश्च विविदिषन्तीत्यत्र, एकेनान्तिप्रत्ययेनाग्नेयादयइवैकेन यजिपदेन राशीकृत्योपादीयन्ते। तथा च तत्र यथा यागेन भावयेदिति यत्तत्स्वर्गमिति, फलसम्बन्धमात्रमपूर्वं विधीयते, शेषस्य प्राप्तत्वात्, एवमिहापि वेदानुवचनादिना भावयेदिति। यत्तद्विविदिषामित्येतावन्मात्रं विधीयते। कथमेवं भिन्नपदोपात्तवेदानुवचनादीनां युगपदेव फलसम्बन्धविधेयभावनान्वयः? उच्यते—विविदिषन्तीति फलपदे तावद्विभिप्रत्यय उपादीयते। तदभिधेयभावना च फलोपरागेण विध्यन्वयायोग्यतया, करणोपरागेणोपस्थापनीया। तत्र प्रत्ययशक्त्यैव यावद्भावनोपस्थितौ सामर्थ्यादेव, यावत्करणोपरक्ता एवोपतिष्ठन्ते। तत्र वैदिकत्वप्रत्यासत्तिर्वा यज्ञादिपदसन्निधिर्वा विशेषव्यवस्थामात्रहेतुरिति, यज्ञादीनां भिन्नपदोपस्थितिरन्वयबोधे नापेक्ष्या। तथा च यज्ञादिकरणिका भावना एकेन प्रत्ययेनानूद्य, विविदिषाफलसम्बन्धेन विधीयन्त इति, एकवाक्यता समुच्चयश्च। तेषामेवाश्रमकर्मणां संयोगपृथक्त्वं चेत्युपपन्नम्। तस्मात्कर्मणां आत्मतत्वविविदिषाविनियोगात्, कर्मविधीनामपि तत्प्रतिपादनतात्पर्यं सिद्धम्। एवं च साधनपादे "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यादिसूत्रैः कर्मोपयोगोपवर्णनं, शास्त्रादौ कृत्स्नशास्त्रप्रमाणकत्वं ब्रह्मणः प्रतिज्ञातमुपपादयितुं, न तु शमादिकमिव विद्यामनुतिष्ठता, कर्माण्यनुष्ठापयितुं इति स्थितम् ॥ १२ ॥

कर्मप्रवृत्तिबहुलो भवतोऽपवाद-
शङ्कापराधमिव संशमयन्नयं नः।
त्वद्धीपराङ्मुखमखादिकमक्षरात्मन्!
कर्मान्तवत्समवसाययति प्रणिन्दन् ॥ १३ ॥

एवमात्मतत्त्वप्रतिपादनस्तुत्यर्थवादसरूपेणापि यज्ञादिवाक्येन कर्मणां विविदिषाविनियोगसामर्थ्यात्, कर्मविधीनां तत्प्रतिपादने परमतात्पर्यमुपवर्णितम्। तत्रेयमशङ्का भवति। "भूयसां स्यात्स्वधर्मत्वं, अभ्यासे हि भूयस्त्वमर्थस्य भवति, बहूनामनुग्रहो न्याय्यः" इत्यादिसौत्रलौकिकन्यायेन कर्मविधीनां भूयस्त्वात् तद्विधेरेव बहुलमभ्यासाच्च कर्मतात्पर्यमेव युक्तमाश्रयितुम्। भूयसां तेषामेव चानुग्रहाय, विविदिषा-वाक्यमपि प्रकरणान्तरादुत्कृष्य, कर्मविधीनामेव स्तुत्यर्थमुपसंहरिष्यते। 'यस्य येनार्थसम्बन्ध'—इत्युक्तन्यायेनाकाङ्क्षायोग्यतासत्त्वे सन्निधिकल्पनौचित्यात्। तथाहि— "अश्व इव रोमाणि विधूय पापं" "तदा विद्वान्पुण्यपापे विधूय" "निरञ्जनः परमं साम्यमुपैति" इत्यादौ पुण्यपापहानौ श्रुतायां, "तस्य पुत्रा दायमुपयन्ति" इति प्रकरणान्तरश्रुतमुपायनमुपसंह्रियते विद्यास्तुतिप्रकर्षाय। तथा 'वेत-सशाखयाग्निं विकर्षति' इत्यत्र 'आपो वै शान्ता' इत्यर्थवादासंगत्यपरिहाराय 'अप्सु जो वेतस' इति प्रकरणान्तरगतस्तुत्युपसंहार इष्यते। "एकविंशो वा इतोसावादित्य" इत्यर्थवादोपपादकतया, "द्वादश मासाः पञ्चर्तवः, हेमन्तशिशिरयोः समासेन, त्रय इमे लोका असावादित्य एकविंश" इति प्रकरणान्तरादुपसंह्रियते। एवमिहापीति, तामिमामाशङ्कां निराकुर्वन् 'अजक्षीरेण जुहोति' इति विधिस्तुत्यर्थे 'नाहुतिर्वै जर्तिलाश्च गवीधुकश्च' इति जर्तिलादिनिन्दया 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा' इति तद्विधेरेव, ब्रह्मविद्याविधिस्तुत्यर्थे कर्मनिन्दया, कर्मविधीनामपि स्वार्थतात्पर्या-भाव एवावगम्यते इत्यशयेनाह—**कर्मप्रवृत्तिबहुल** इति। कर्मसु विषयेषु, प्रवृत्तिर्व्यापारः प्रतिपादनं, तया बहुलः। सिध्मादित्वात् मत्वर्थीयो बहुशब्दाल्लच् प्रत्ययः। प्रकृत्यादितृतीयासमासः। कर्मसु बहुप्रवृत्तिक इत्यर्थः। अत एव प्राप्तं भवतः परमात्मनः **अपवादशङ्कापराधं,** वेदान्तेष्वपि हि कर्म-प्रवृत्तिर्व्यापिर्दृश्यते। आचार्यानुशासनापदेशेन, 'सत्यं वद, धर्मं चर' इत्यादिषु वेदमधीत्य अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् इत्यादिषु च। एवं सर्वत्र कर्मप्रवृत्तिबाहुल्ये सति, न केवलं कर्मतात्पर्यमेव, किन्तु शिष्टांशस्यापि कर्त्राद्यालम्बनेन कथञ्चित्कर्मप्रशंसार्थवादत्वोपपत्या कर्मापेक्षितकर्तृभोक्त्रादेरधिकः परमात्मा नास्तीति, तदपवादशङ्का जायते। सैव वेदकर्तृकः परमात्मनो-ऽपराधः। सूनृतच्छलवचनेऽपि हि महतामपराधः, किमङ्ग पुनरात्मनिह्नवप्रायवचने। अस्य चापवाद-प्रसङ्गस्य, पुरुषबुद्धिदोषमात्रमूलत्वात्; अपवादशङ्केत्युक्तम्। तमपवादशङ्कापराधं **शमयन्**, अपुनरुन्मज्जं प्रमार्जन्, लक्षणहेत्वोः क्रियाया इति हेतौ शतृप्रत्ययः। तदपराधसंशमनं च प्रयोजनतया **कर्मान्तरत्व-प्रत्यायने** हेतुः। संशमयितुमिति फलितोऽर्थः। **इवेति** च तस्यातथात्वं दर्शयति। पुरुषदोषः खल्वयं यदन्यथागमतात्पर्यग्रहणम्। आगमस्य तु परमतात्पर्यमात्मतत्त्वप्रतिपादन एवेत्यर्थः। **अयं** प्रकृतो वेदः। **नः** अस्मान्। **त्वद्धीपराङ्मुखमखादिकं** अक्षरात्मतत्त्वविद्याविधुरस्य होमयागतपःप्रमुखं कर्मजातं, **प्रणिन्दन्निति** शतृप्रत्ययः पूर्ववत्। न तु विदुषः, अनन्तमित्युपसंहरन्। **अन्तवत्** नश्वरफलम्। **समवसाययति,** सम्यक् तात्पर्येण निश्चाययति। "न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तर्हि स्तुत्यं स्तोतुमिति" न्यायेन, आत्मतत्त्वं प्रतिपादयितुमेवायथाभूतमापाततो वदति। उदितानुदितहोमनिन्दामिवानुदितोदितहोमौ ... **अक्षरात्मन्निति** सम्बोधनेन "यो वा

एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति, यदिहवाप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते" इति तदन्तवत्त्वनिश्चायकं वचनमुपस्थापयति । **प्राणिन्दन्नित्यनेन** च "प्लवा ह्येते अदृढा यज्ञरूपाः", "अष्टादशोक्तं अवरं येषु कर्म", "एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरां मृत्युं ते पुनरेवापियन्ति", "पुण्यचितो लोकः क्षीयते" इति कर्मनिन्दावचनान्तरमुपस्थापयति ।

**अयमत्राशयः** — भूयस्त्वं तावत्स्वार्थतात्पर्यसिद्धावप्रयोजकं, विधेरर्थवादानां भूयस्त्वेऽपि तदभावात् । न चाभ्यासादिह तात्पर्यम् । विधेयवैविध्ये विधिभूयस्त्वेऽपि तदभ्यासाभावात् । एकस्यैव हि भूयोवचनमभ्यासः । यद्यपि ज्योतिष्टोमस्त्रिष्वपि वेदेषु विधीयते, तथाप्यध्यायिव्यवस्थानाच्चं तं पुरुषं बोधयितुमेवेति, न स तदभ्यासः । ननु न ब्रूमो भूयस्त्वमेव तात्पर्यप्रयोजकमिति । किन्तु यतो यदवगम्यते तस्य तत्र तात्पर्यमित्युत्सर्गः । **अर्थवादेषु** च स्वार्थतात्पर्यमानर्थक्यादपोद्यते । तदिह, एकस्य विविदिषावाक्यस्य, कर्मणां विविदिषासंयोगविधिपरत्वे, कर्मविधीनां भूयसां स्वार्थतात्पर्यापवादः प्राप्नोति । कर्मविधिस्तुत्यर्थत्वे तु नेति । वस्तुगत्या भूयोनुग्रहन्यायादुत्तरः कल्प आश्रीयते । अतएव "आग्नेये दात्रे पुरोडाशमष्टाकपालं, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं, दधिमधुघृतमापोधानास्तण्डुलास्तत्संसृष्टं तत्प्राजापत्यं" इत्येतेषां सह प्रयोगे प्रक्रान्ते, ऐन्द्राग्नदध्नोः, ऐन्द्राग्नसान्नाय्यविकारतयाऽमावास्याधर्मापेक्षायां मुख्यतदनुरोधेन वृधन्वदाज्यभागाभ्यामेव प्रासङ्गिकोपकारे प्राप्ते, मधुघृतोदकानां द्रवत्ववर्णाभ्यामाज्यधर्मतया, उपांशुयाजविकारत्वात् पौर्णमासीधर्मापेक्षायां तदनुरोधेन भूयोऽनुग्रहाय वार्त्रघ्नाज्यभागाभ्यामेव तदुपकार इति व्यवस्थापितं द्वादश इति चेत् न, कर्मनिन्दापूर्वकं, आत्मतत्त्वप्रतिपादनेन कर्मविधीनां जर्तिलादिवदतत्परत्वावगमात् । अथ कर्मनिन्दा 'न हि निन्दान्यायेन' आत्मतत्त्वप्रतिपादनस्थितिरेवेति, चेदेवं, तर्ह्यात्मतत्त्वप्रतिपादने तावत्तात्पर्यमुपगन्तव्यम् । तत्रैवं सति, कर्मनिन्दा तन्निषेधायैव स्यात् । अलौकिकानर्थसाधनताबोधी हि निषेधः । कर्माणि च प्रत्येभावप्रमुखसंसारानर्थसम्भारसाधनानि । "पुण्यः पुण्येन कर्मणा भवति" इत्यादिनाऽवगम्यते । अत एव न सुकृतदुष्कृतमिति प्रकृत्य, "सर्वे पाप्मानोऽतो निवर्तन्ते" इति सुकृतेऽपि पाप्मशब्दः श्रूयते । "तस्य स्थानवरिष्ठस्य सर्वे निरयसंज्ञिताः" इति तत्फले च निरयशब्दः स्मर्यते । **यथाहुर्वार्तिककृतः** "ब्रह्मादीनां शरीराणि श्वसूकरशरीरवत् । यतोऽजिह्मासितान्येव तस्मात् धर्मेऽपि पाप्मगीः" इति । तस्मादनर्थहेतुकर्मनिषेधायैवात्मतत्त्वविधिप्रकरणे तन्निन्दावचनमिति युक्तम् ।

**नन्वेवं** जर्तिलादिवदेव कर्मणामविधेयतैवापद्येत । अत्रोत्तरं **शबरस्वामिना दत्तम्** । "न श्येनादिर्धर्मः । हिंसा हि सा । सा च प्रतिषिद्धा न हिंस्यान्नाभिचरित वा इत्यादिना । इत्युक्ते कथं पुनः श्येनादिरनर्थः कर्तव्यतया चोद्यत इति, तद्विधिविरोधमाशंक्य, नैव श्येनादिः कर्तव्यतया चोद्यते, किं तर्हि ? यो हि हिंसितुमिच्छति द्वेषौत्कट्येन निषेधमतिक्रम्य, तस्यायमभ्युपाय इत्युपदिश्यते" इति । तदेवं नानारागफलौत्कट्येन संसारानर्थमचिन्तयतः, अयमस्यायमस्य कामस्याभ्युपाय— इति

कर्माण्युपदिश्यन्ते । तथा प्रत्यक्षादिना सुरापानादेरिष्टसाधनतामात्रमवबोध्यते, तथा वेदेन कर्मणा-मित्यर्थः । तत्र यथा द्वेषाविधेयस्य श्येनादिनिषेधो न हिंस्यादित्यादिः, तथा कामाविधेयस्य कर्मनिषेध इति श्लिष्यते ।

**स्यादेतत्** । तदेतत्सत्यं "मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामाः" "सत्यं वद" इत्यादिषु, वेदान्तेषु कर्मविधिव्याप्तिरुपलभ्यते । "अपाम सोममममृता अभूम" "हिरण्यदा अमृतत्वं भजन्ते", "अनन्तं ह वा अपारमक्षय्यं लोकं नयति योऽग्निं नाचिकेतं चिनुते, नास्येष्टापूर्ते क्षीयेते, योऽग्निं नाचिकेतं चिनुत" इत्यादि कर्मप्रकरणे । "य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इत्यादि प्रकरणान्तरे च कर्मणामसंसारफलत्वं श्रूयते । अतोऽनर्थहेतुत्वाभावात् निन्दावचनम्, कर्मणां निषेधायैवेति न युक्तम् । एवं कर्मविधीनां कर्मतात्पर्यावश्यम्भावे, वेदान्तानामपि पूर्वोक्तविधया, तदेकतात्पर्यं स्यादिति चेन्मैवम् । कर्मविधि-व्याप्तिस्तावद्वेदान्तेषु, ब्रह्मविद्याविधिस्तुत्यर्थतया कर्मनिन्दादर्शनात्, तदुपासनाप्रवृत्तस्यापि कर्मभ्यः प्रमादो मा भूत्, अधिकारे सत्येव तदकरणे प्रत्यवायेन, तदुपासनाविच्छेदप्रसङ्गात् इत्येवमर्था । न कर्म-तात्पर्यमवगमयितुमीष्टे । यागदानादेरमृतफलत्वादस्तु भूतवर्तमानापदेशित्वात दृष्टविरुद्धः ।

न च रात्रिसत्रन्यायेन फलविपरिणाम इति युक्तम् । तत्र "प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति" इति स्तुत्या विधिशक्त्युन्मेषे फलाकाङ्क्षायां, उपस्थितप्रतिष्ठैव फलत्वेन विपरिणम्यते । प्रतितिष्ठेयुरिति लाघवाद्विरोधाभावाच्च । इह तु विधिसमभिव्याहृतस्वर्गादिफलैरेव यागादिविधेर्नि-राकाङ्क्षत्वात् । नित्यादिविधीनामपि पुण्यलोकाद्युचितफलोपबन्धात् "यद्यत्कृतकं तदनित्य"मिति न्यायानुगृहीतेन "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादि-शास्त्रविरोधेन तत्प्रतिबन्धाच्च । अविरोधापेक्षा हि कल्पनेति, उपासीनस्य कर्म न क्षीयत इति च नान्तरिक्षेऽग्निश्चेतव्य इत्यादिवन्नित्यानुवादः । विदुषस्तन्निष्ठस्य कर्मण एवाभावात् । तदभावेऽपि हि तस्यावचनिषेधवद्वादो भवति । यथा "अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते" इति । अथवा, तदेवोपासना कर्मेति गम्यते । यथा शिल्पिनः कर्म चतुरश्रमिति, तदेव शिल्पकर्मेति गम्यते तद्वत् ।

**अथानेवंविदः** कर्म क्षीयत इत्युक्त्वा, तद्विदः कर्म न क्षीयत इति तदेकार्थमिति यदि कश्चिदा-गृह्णीयात्, स कर्मणां समुच्चयादुपासनया तदेकफलत्वं व्युत्पादनीयः । उपासना च ब्रह्मलोकप्राप्ति-प्रणाडिकया अमृतफलेष्यते । वस्तुतस्तु, यथाविहितमकुर्वन् यदन्यत्करोति तन्निन्दितम् । विहितं यः करोति तस्य कर्म मङ्गलमित्युक्ते विहितक्रियास्तुतिरेव गम्यते । न तु विहितं कुर्वतस्तदेव निन्दितं कर्म मङ्गलमित्युपसंहर्तुं शक्यते । तथात्मानमविद्वान् यत्कर्म करोति तत्क्षीयते । "य आत्मानमुपास्ते नास्य कर्म क्षीयत" इति वचनं गमयितव्यम् । तस्मान्निर्विशेषात्मतत्त्वप्रतिपादनस्तुत्यर्थतया कर्मनिन्दा निष्प्रतिद्वन्द्वेति, तन्निषेधायैवेत्युपपन्नम् ।

एवं निषेधावसादितस्वार्थतात्पर्यनिगर्वाणां कर्मविधीनां आत्मतत्वविध्येकवाक्यतया यज्ञादिवाक्येन, विविदिषायां कर्मविनियोगः परमोऽनुग्रह इति, न तस्य प्रकरणादुत्कृष्य कर्मविधिस्तुत्यर्थता युक्ता कल्पयितुम्। प्रकरणानन्वयेन हि "पूष्णोऽहं देवयज्यये"त्यादिपूषानुमन्त्रणमन्त्रस्य "युवं हि स्थः स्वः पती" इति द्वयोर्यजमानयोः "प्रतिपदं करोति" इत्यादिविधेश्च, दर्शपूर्णमासज्योतिष्टोमादिप्रकरणादुत्कृष्य, पौष्णद्वियज्ञादिविध्येकवाक्यता कल्प्यते। न त्विह तथानन्वय इति, सिद्धं कर्मविधीनामपि ब्रह्मात्मतत्वप्रतिपादनपरमतात्पर्यमिति, कुतो वेदान्तानां स्वार्थतात्पर्यविघातेनाकर्त्राद्यात्मतत्वापवादशङ्केति।

अथाऽपि कथं काम्यविधीनामात्मतत्वविध्येकवाक्यतेति? उच्यते—यदि तावद्यज्ञादिवाक्ये नित्यान्येव विनियुज्यन्त इति मतम्, तदा देहाद्यात्ममोहव्यपोहेन परमात्वतत्वप्रतिपत्तिश्रद्धाजननेन सामर्थ्यादिति गृहाण। अथ प्रतिस्वफलादपच्छिद्याविशेषेण सर्वाणि कर्माणि विनियुज्यन्ते, कियत्या अपि स्वर्गादिभोगोपयोगितया तदापादनीयशुद्धेरेव कॢप्ताया, विविदिषोदयद्वारत्वापपत्त्या द्वारान्तरस्याकल्पनीयत्वेन विनियोगे नित्यकर्मतुल्ययोगित्वोपपत्तेरिति, तदा न कथंतावकाश इति सर्वमवदातम् ॥ १३ ॥

कर्माखिलं परिकरैरुपमर्दनीयं
त्वद्भावबोधकलया समुपक्रियेत।
एवं ब्रुवन् दिनमणिप्रकटप्रकाशं
देवेश सन्तमसवल्यमपि ब्रवीतु ॥ १४ ॥

स्यादेतत्। यत्तावद्देवतोद्देशेन कर्मविधिसामर्थ्यं, विविदिषायां कर्मविनियोगश्च, कर्मविधीनां ब्रह्मप्रतिपादनपरत्वे कारणमुपपादितम्। तदेव वेदान्तानामपि कर्मविधिपरत्वे कारणमस्ति। तथाहि— अस्ति ताव'द्यजेत स्वर्गकाम' इत्यादौ परलोकफलभागी कश्चिदात्मा, शरीरादिभ्योऽन्यः सम्प्रतिपन्नः। स-चायं कर्मविधिभिरपेक्षिते देवतेव वा, वेदान्तैः प्रतिपाद्यत इति, तेषां कर्मविधिपरत्वे सामर्थ्यम्, अत एव "स एष यज्ञायुधी यजमानः स्वर्गं लोकमेती"ति प्रत्यक्षविरोधादप्रमाणमाशङ्क्य, 'यस्यैतच्छरीरं सोऽपि यज्ञायुधी'ति विरोधे समाहिते "कोसावन्यो नैनमुपलभामह" इति पर्यनुयुज्य, शरीरव्यतिरेके प्राणादिलिङ्गं प्राणबुद्धिव्यतिरेके विज्ञानसुखादिलिङ्गं, क्षणिकविज्ञानव्यतिरेके स्मृतीच्छादिलिङ्गं चोपन्यस्य, "अविनाशी वा अरे अयमात्मे"त्यादिश्रुतिं चोदाहृत्य, स न शृङ्गग्राहिकया दर्शयितुं शक्यः, किन्तु स्वयंज्योतिः प्रतीतनिषेधेन "नेति नेत्युपदेश्य" इति ब्रुवन्, वेदान्तैरेव कर्मविधिभिरपेक्षितं शरीरप्राणविज्ञानसुखादिभ्योऽन्यमान्तरं स्वयंज्योतिषमात्मानं शबरस्वाम्यसीषिधत्। भट्टोऽपि "इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन" ॥ इति वेदान्तोपपादनीयं कर्मापेक्षितमात्मज्ञानं दर्शयति। तथा, एतेन कर्त्रादिप्रतिपादनब्रह्मोपनिषदां नैराकाङ्क्ष्यं व्याख्यातमित्यर्थवादन्यायेन विध्यपेक्षितसमर्पणेन

तदेकवाक्यतया वेदान्तप्रामाण्यं दर्शयति। ज्ञानशक्त्यादिमत्यो देवताश्च प्रजापतिरिन्द्रोऽग्निरादित्यो वायुरित्यादयो वेदान्तैरुपवर्ण्यन्त इति, वेदान्तानां कर्मविधिपरत्वे सिद्धं सामर्थ्यम्। विनियोगश्च "वेदमधीत्य स्नायादि"त्यादिः। स्वाध्यायाध्ययनविधिर्हि अर्थावबोधफलः सन्निहितत्वात् न स्वर्गादिफलः। उपस्थितिकल्पनागौरवात्। दृष्टसम्भवेऽदृष्टकल्पनागौरवाच्च। यथाह शबरस्वामी—"दृष्टो हि तस्यार्थः, कर्मावबोधनं नामे"ति। अर्थावबोध इति वक्तव्ये, वेदस्य कर्मैदम्पर्यातिशयेन, कर्मावबोधनमित्युक्तम्। एवं दृष्टफलत्वात् अध्ययनविधिरवघातविधिवत् फलसिद्धिपर्यन्त इति स्थिते, वेदमधीत्येत्यध्ययनविधिमनुष्ठायेत्युक्ते, स्नानादिद्वारसंयोगपूर्वकाग्निहोत्रादिकर्मोपयोगनियमोऽवगम्यते। अन्यथा पूर्वकालत्ववचनस्य सम्भवद्वादमात्रत्वे सत्यानर्थक्यापत्तेः। स चोपयोगो नादृष्टेन कर्मविधिप्रयोगापेक्षितकर्मस्वरूपतदङ्गकर्तृदेवतादिज्ञानसामर्थ्येन। दृष्टोपयोगसम्भवात्। तथा "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वेदान्तविधेयविद्यायाः कर्मविधिविनियोगोऽवगम्यते। अत एव कर्माङ्गकर्त्राद्यवबद्धोपासनाविधिविषयतयैवोपादानादपहतपाप्मेत्यादेरधिकोपदेशो नास्त्येव। सा चोपासना तदङ्गकर्त्रादिसंस्कारद्वारा कर्मसमृद्ध्यर्था स्यात्। तदिदमुक्तं वीर्यवत्तरं भवतीति। तस्मात् वेदतात्पर्यपर्यवसानविषयव्यवस्थानुपपत्तिरित्याशङ्क्य, अधिकोपदेशानन्यथासिद्ध्या कर्मविधिविरुद्धवादिनां वेदान्तानां कर्मपरत्वे सामर्थ्यं तावदुपरुणद्धि **कर्माखिलमिति**।

**कर्म** सामान्यतः क्रियामात्रम्। **अखिलमिति** ज्ञानच्छलोपासनापरिशेषार्थम्। अथवा, कर्तृत्वादिलक्षणकर्मबीजापरिशेषार्थम्। **परिकरैरिति** 'सह युक्तेऽप्रधान" इति तृतीया। कर्त्रादिकारकभेदैस्सह। **त्वद्भावबोधकलया**, तव भावः त्वत्वं, प्रत्यस्तमितसमस्तभेदं सत्तामात्रमवाङ्मनसगोचरम्। "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, स एष नेतिनेत्यात्मा"। "निष्कलं निष्क्रियं शान्तं" "प्रपञ्चोपशमः शिवोऽद्वैत आत्मैव" इत्यादिश्रुतिदर्शितम्। **अथवा**, त्वद्भावस्त्वादात्म्यं, आत्मनो ब्रह्मभूयं तत्वमसीत्यादिश्रुतम्। तस्य बोधः स्वरूपावगतिपर्यन्तोऽनुभवः। तस्य कलेव कला लेशः शब्दव्युत्पत्तिमात्रजनितं विज्ञानमित्यर्थः। शब्दविचारभवमननादिज्ञानैर्ह्युपचरितावयवमिवात्मावगतिपर्यन्तं ज्ञानमुपजायते। तयोपमर्दनीयमिथ्यैतदितिप्रत्ययेनावसादितसम्यक्त्वप्रत्ययमश्रद्धेयतां, अस्तिनास्तिव्यवहारयोग्यतां वाप्यापादनीयं, "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदि"त्यादिना तत्त्वदर्शनविषये सर्वक्रियाकारकभेदव्यवहाराक्षेपात् यदपरोक्षज्ञानं, यद्विषयविभ्रमविरोधि, तस्य परोक्षमप्यापातरूपमपि ज्ञानं, तद्विषयभ्रमविरोध्येव दृष्टम्। यथा दिङ्मोहमरीच्युदकभ्रमादेरौपदेशिकमपि दिगादितत्वज्ञानं, दृश्यते हि पित्तोपहतरसनो थिक्कुर्वन्नपि गुडं, तस्य तिक्ततां न श्रद्धत्त इति। एवं शब्दव्युत्पत्तिमात्रजनितेनात्म-त्वज्ञानेनोपमर्दनीयं सत् कर्म। त्वद्भावबोधकलयेत्यावर्तनीयम्। तथा त्वद्भावबोध एव कला, कर्मणोऽवयवः, अङ्गमुपकारक इति पूर्ववादिदृशा व्याख्येयम्। तया **समुपक्रियेत**, समर्थ्येत, सम्यक् महाफलं क्रियेतेत्येवं **ब्रुवन्**। **दिनमणेः** सहस्रकिरणस्य। **प्रकटं** बहुलविपुलम्। **प्रकाशं** आलोकम्। **सन्तमसस्य** विषूचीनस्य **तमसः**। **बल्यं** बले साधुं, तत्र साधुरिति यत्प्रत्ययः। बलकरं धूमाभ्रादिवदुपचयहेतुमपि। **अवीत**, निरङ्कुशनुग्रहस्य मूढमतेरघटितमवचनीयं न

किञ्चिदित्यपिशब्देन सूचयति । हे देवेश, देवानां द्योतमानानां, प्रकाशात्मकानामिन्द्रियाणामीश, प्रणेत-रित्यनेनेन्द्रियप्रणेता त्वमेवैवं वाचयसि, परतन्त्रः स किं करोत्वित्यनुकम्पनीयतामभिप्रैति ।

**अयमत्राशयः**—स्यादेतदेवम् । यदि वेदान्ताः कर्मविध्यपेक्षितकर्त्रादिप्रतिपादनेनैवावस्थेयुः । न त्वेवम् । स्वप्नान्ते बुद्धान्ते वा "रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इत्यकर्तारं, "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" "न तदश्नाति किञ्चन" "अनश्नन्नन्योऽभि-चाकशीति" इत्यभोक्तारं, अपेतब्रह्मक्षत्रादिभेदं कर्मविधिविरोधिस्वभावमधिकमात्मानं प्रतिपादयन्ति । न चैवंरूपं कर्माङ्गकर्तृसंस्कारकोपासनाविधिविधेयतयैवोपादीयते । एवंरूपं सम्पाद्यात्मानमुपासीतेति । न तत्त्वमेवोपदिश्यत इति वाच्यम् । स्वरूपमात्रोपदेशावसायिपदसमन्वयविरोधात् । ज्योतिर्ब्राह्मणे हि "तद्यथा महामत्स्य उभे कूले अनुसञ्चरती" त्यादिनिदर्शनेन, स्वप्नबुद्धान्तादिसर्वावस्थासंस्पृष्टमसङ्गमात्मन-मुपदिश्य, "सलिल एको द्रष्टाद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य" इति विद्याविधिविधुरमेव पर्यवसानं दृश्यते । एवमशनाद्यत्ययप्रतिपादनेऽपि तादृशोपदेशा दृश्यन्ते । "असौ वा आदित्यो देवमधु" "असौ वा व लोको गौतमाग्निः" इत्यादयः । नैवम् । अन्यार्था हि मध्वग्न्यादिशब्दाः, अन्यार्थाश्चादित्यादिशब्दाः प्रसिद्धाः । तत्रान्यतरशब्दस्यान्यतरस्मिन् गौणत्वं सम्पद-मध्यासं वा विना सामानाधिकरण्यमशक्यमुपपादयितुम् । 'आदित्यो यूप' इत्यादिश्च, यूपाञ्जनादि-विधिस्तुत्यर्थो गुणवादः । न चेह गुणवादस्य किञ्चित्प्रयोजनमुपपद्यते । अतः सम्पदध्यासो वावश्य-माश्रयणीयः । **अथवा** "एतदेवामृतं वेदय एतामेवं ब्रह्मोपनिषदं वेदे"ति मधुविद्याविधिः, "तद्य इत्थं विदुरेतान् पञ्चाग्नीन् वेदे"ति पञ्चाग्निविधिश्चास्तीति, आदित्यादौ लोकादौ वा मधुत्वादेरग्नित्वादेर्वा सम्पत्तिरेव युक्ता कल्पयितुम् । न चेहासङ्गत्वादिवादे तत्वमसीत्यादौ वा सम्पद्रूपत्वे किञ्चित्कारणमस्ति । "ब्रह्मविदाप्नोति परम्" "तरति शोकमात्मवित्" इति न च विद्याविधिरिति वक्ष्यते । तथा च स्वतन्त्रपुरुषार्थतयैव वेदान्तैरसङ्गाविक्रियात्मतत्वप्रतिपादने कर्मविधेरप्यविद्याविषये कर्तृत्वाद्यनपवादेनात्मनः शरीराद्यतिरेकसत्तापातसिद्धिमात्रेण, प्रासङ्गिकमुपकारमाश्रित्य, तैरेव कर्मविध्यपेक्षितात्मसिद्धिरुपपादित, **शबरस्वामिना** । न त्वर्थवादादिवद्वेदान्तानामपि कर्मविधिशेषतामेव विवक्षित्वा । अर्थविरोधात् । अत एवात्र युक्त्याऽऽस्मास्तितामाह 'तद्विषयबोधो वेदान्तनिषेवणेन दृढो भवति' इति व्यवच्छिद्य । **भट्टवचनमुपपन्नम्** । यः पुनरेतेनेत्यादिरर्थवादन्यायातिदेशो दर्शितः स यथाकथञ्चित्पुरुषार्थतयैव प्रामाण्यमागमस्य, नाख्यायिकावादमात्रेणेत्येवम्परः । न तु वेदान्तानामवश्यं विध्येकवाक्यतैवेति । केवलात्मतत्त्वप्रतिपादनेन स्वतः पुरुषार्थत्वोपपत्तेः । तथा च **ब्रह्ममीमांसासूत्रं** "पुरुषार्थोऽतश्शब्दादिति बादरायणः" इति । तस्मात्, सामर्थ्याद्वेदान्तानां कर्मविधिशेषतेति सिद्धम् ॥ १४ ॥

सन्यस्य सर्वमपि कर्म शिव प्रशान्तैः
वेद्यो भवानिति गृणाति परा श्रुतिर्नः ।
सर्वक्रियोपरमभावि भवत्स्वभाव-
विज्ञानमङ्गमिति मोहतमः क्रियायाः ॥ १५ ॥

एवं तावद्वेदान्तानां कर्मविधिपरत्वे न सामर्थ्यं कारणमित्युपपादितम्। यत्पुनरध्ययनविधेरर्थावबोधफलत्वमुपजीव्य, "वेदमधीत्य स्नायादि"ति विनियोगो द्वितीयं कारणमुपन्यस्तम्। तन्निराकरणाभिप्रायेणाह—**सन्यस्य सर्वमपीति**। आत्मतत्त्वज्ञानाङ्गतया सन्यासस्तावदनुश्रूयते—एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति। "त्यजतैव हि तज्ज्ञेयं त्यक्तः प्रत्यक् परं पदम्", संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः" ॥ इत्यादिश्रुतिस्मृतिभ्यः। स च नैष्कर्म्यलक्षणः। "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति"-इति प्रज्ञया यज्ञादिसकलसाधनसाध्यैषणात्यागलक्षणः सन्यास इति दर्शनात्। प्रैष्यतः पुत्रे कृतासंप्रतिकस्य दैवादमृतौ "यद्यगतः स्यात्पुत्रैश्वर्ये वसेत् परिवा व्रजेत्" इति सन्यासदर्शनात्। "सत्यानृते सुखदुःखे वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्" "तेषां न धर्मो नाधर्मो न सत्यं नापि चानृतम्। नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी। नैष्कर्म्यसिद्धिं परमां सन्यासेनाभिगच्छति।" इत्यादिस्मरणाच्च। तदेतदाह—**सन्यस्य सर्वमपि कर्मेति**।

कर्मग्रहणं "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः। स सन्यासी च योगी च न निरग्निर्न चाक्रियः" ॥ इत्यत्र पर्यस्तापह्नवालङ्कारगतिमविदुषः, कर्मफलत्याग एव सन्यास इति भ्रमं वारयितुम्। "काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः। नियतस्य तु सन्यासः कर्मणो नोपपद्यते" इति वचनात् काम्यकर्मणामेव सन्यासः, न नित्यानामिति भ्रमं निरसितुं सर्वमित्युक्तम्। "मोहात्तस्य परित्यागः तामसः परिकीर्तितः" इत्याद्युत्तरसन्दर्भे, ब्रह्मविद्यामनाश्रित्य हिंसादिदोषयुक्तत्वमोहादिनिमित्तत्यागनिन्दादर्शनेन, ब्रह्मविद्याव्यपाश्रयेण सर्वकर्मत्यागस्याभ्यनुज्ञाविज्ञानात्। अत एव भगवतैव "सर्वकर्माणि मनसा सन्यस्यास्ते सुखं वशी" इत्युक्तम्। **अपिशब्दो** जीवनमात्रहेतुव्यतिरिक्तदृष्टादृष्टार्थक्रियामात्रसंग्रहणार्थः।

**तथा च स्मृतिः**— "याः काश्चिज्जीवता शक्यास्त्यक्तुं नित्यक्षिताः क्रियाः। तास्सर्वास्संपरित्यज्य निमेषादिव्यवस्थितः" ॥ इत्येवं सर्वमपि कर्म **सन्यस्य** प्रैषोच्चारणपूर्वकं विधिना परित्यज्य, **प्रशान्तैः** यथा कुलालभ्रमितं चक्रं शनैर्वेगोपरमे स्वभावेऽवतिष्ठते, एवं अत्यन्तमलवाहिपरिणामतस्सत्वमात्रपरिसमाप्तसमस्तकरणैरित्यर्थः। **हे शिवेति** सम्बोधनेन, उपशान्तोऽयमात्मा सर्वेन्द्रियप्रवृत्त्युपरम एव वेदनीय इति योग्यतामनुसन्धत्ते। **भवानिति,** परमात्मस्वरूपमुपलक्षयति। **वेद्यो** विज्ञेय इति। **नो**ऽस्माकम्.

**परा**, विविदिषायां कर्मविनियोजिकायाः श्रुतेरन्या **श्रुतिः**। अथवा कर्मणि विद्याविनियोगविरोधिनि, "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्ये"दित्याद्या **गृह्णाति**। वाचनिकवृत्या ब्रवीति। न तु नेयवृत्या। तेन नान्यथासिद्धिशङ्कावकाश इति अभिप्रायः। अनेन कथं कर्मतदभावयोरात्मविद्याङ्गत्वम्। यत्र हि यो हेतुरवधृतस्तदभावे, तस्यैव कार्यस्य विघातात्। अन्यथा यागो यागध्वंसश्च स्वर्गादिकारणमित्युपपत्तौ, नादृष्टमपूर्वं कल्प्येतेति शङ्का निरसनीया। यथाप्रमाणं ह्युपपत्तिराश्रयणीया। तत्र यथा कृषिः क्षेत्रे सस्यनिष्पत्तिहेतुः, उप्तबीजे तु तत्र कृष्यभावः। एवमात्मनि कर्माणि विद्यानिष्पत्तिहेतुः, जातविविदिषे तु तत्सन्यास इति उपपन्नम्। **तथा च स्मृतिः**—"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते॥" इति। यागध्वंसस्य स्वर्गाकरणत्वे तु न प्रमाणमिति विशेष इति। तत्रैवं सति **सर्वक्रियोपरमभावि** सर्वेषां कायेन्द्रियाणां सर्वासां क्रियाणां सर्वस्मिन्निश्शेष उपरमे भवितुं शीलं यस्य तत्तथा। यच्छ्रुतिः—"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥" इति। "याः काश्चिज्जीवता शक्या" इत्याद्या च स्मृतिः। "मोक्षश्च सर्वोपरमः क्रियाभ्य"-इति च। **भवत्स्वभावविज्ञानं**, भवतः परमेश्वरस्य स्वो भावः प्रत्यगात्मत्वं, भवतः प्रत्यगात्मत्वेन विज्ञानं भवत्स्वभावविज्ञानम्। "ब्रह्माहमस्मीति यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवती"ति हि श्रुतिः। तद्धि विशिष्टं ज्ञानं परमपुरुषार्थत्वादिति **विशब्दः** ज्ञानमिति चापुरुषतन्त्रतया विधेयतां व्यावर्तयति। तेन क्रियाहेत्वज्ञाननिबर्हणतया, तदङ्गत्वायोग्यता दर्शिता। स्वभावग्रहणं, हिरण्यश्मश्रुत्वादिविशिष्टब्रह्मविद्योद्गीथादिव्यपाश्रया, कर्माङ्गमपि स्यादित्यनुज्ञार्थम्। तदिदं विज्ञानं **क्रियाया अङ्गं**, स्वरूपे फले वोपकारकमिति, **मोहतमः**। अयं तावन्मोहः। अहं कर्ता, कर्मण्यस्मिन्नधिकृत इति। विविदिषाजन्मनैव जरयेव कर्माधिकारपरिसमाप्तेः। अयं तु मोहतरः। मयेदं श्रेयस्साधनं कर्तव्यमिति। विद्यार्थिनः क्रियाफलविरागे सत्यपेक्षितमोक्षस्यान्यासाध्यत्वात्। तत्र स्वप्रवृत्तिप्रारम्भ एव क्रियाकारकभेदोपमर्दिनि, ब्रह्मात्मविद्याङ्गमिति मोहतमः। अतिशयिनो मोह इत्यर्थः। अथवा, मोह - एव तमः मोहतमः। यथा तमसा विनष्टदृष्टिर्वस्तुतत्वं न पश्यति तथा कर्मैव परं श्रेय इत्येवमभिनिवेशलक्षणमोहाविष्टमना ब्रह्मात्मविद्यायाः स्वातन्त्र्येण निश्रेयसफलैकान्त्यमजानन् कर्मोपकारकत्वं विपरीतं जानातीति।

**अयमत्राशयः**—स्वाध्यायविधेरर्थावबोधफलत्वे हि वेदमधीत्य स्नायादित्यर्थावबोधवतः कर्मविधानात्, आत्मतत्वविद्यायाः कर्मणि विनियोग आशंक्येत। न त्वेतदस्ति। अध्ययनविधावर्थावबोधकाम इत्याद्यनुपबन्धात्। न च प्रागध्ययनादर्थावबोधस्य सन्निधिरस्ति, येन तत्कामना निबध्येत। न च प्रमाणप्रसङ्गाभावे वेदार्थस्याज्ञातावगतिरपि सम्भवति, येन तस्यावबोधोऽवबोधकामनानुगुण एवेति निरुह्येत। न खल्वत्यन्तमप्रसक्तप्रमाणे गिरिगह्वरान्तरितादौ, कदापि कस्यापि जिज्ञासा जायत इति

दृष्टम्। अपि च नार्थावबोधः कमनीयः, सुखदुःखभावान्यत्वात्। न च स्वर्गादिफलक्रतूपकारकतया पुरुषार्थोपयोगित्वेन काम्यता, फलवत्क्रतुस्वरूपादिविज्ञानमेव हि वेदार्थावबोधो नाम। तदभावे तस्य क्रतूपकारकत्वविज्ञानाभावेन तदनुपपत्तेः। अथ प्रागेव फलवत्क्रतुस्वरूपादिविज्ञानं सम्पन्नम्, कृतमध्ययनविधेरर्थावबोधफलत्वव्यसनेन। अथावहननमिव वैतुष्ये‍ऽन्यसिद्धेऽप्यर्थावबोधे, अध्ययनं नियम्येत, तर्हि यथा वैतुष्योपकृतेनैव यागेनापूर्वं नान्यथा, तथा वेदज्ञानोपकृतेनैव फलम् नान्यथेति स्यात्। न चैवं सम्भवति। अविदुषोऽपि हि कर्म फलाय विधीयते। किं पुनर्यथातथापि विदुषः।

**तथा च लिङ्गदर्शनम्**—"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे"ति। अपि चैवं वैधानार्थसाधनत्वज्ञानाभावेऽनुष्ठितं सुरापानादि न प्रत्यवायाय स्यात्। अपि च न वेदार्थज्ञानं श्रेयस्साधनमिति पित्रादिभिरपि शक्यमुपदेष्टुम्, ब्राह्मणराजन्यादे राजसूयबृहस्पतिसवादिज्ञानस्य तदनुष्ठानानुपयोगित्वेन, तथात्वायोगात्। अपि चाध्ययनविधेरर्थावबोधफलत्वे, विद्याङ्गतया सन्यासविधिर्विरुध्येत। सन्यासो हि कर्मविधिवैवश्यपरिहारेण, निरन्तरश्रवणादिदृष्टसम्पत्तिद्वारोपकारकः, नादृष्टद्वारा। दृष्टसम्भवन्यायात्। **तथा च शास्त्रम्**—"सन्यस्य श्रवणं कुर्यादि"ति। 'सन्यानृते' इत्यारभ्य "इमञ्च लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्" इति च। तत्रैवं सति, अष्टवर्षो ब्राह्मण आचार्यमुपगत्याध्ययनविधिमर्थावबोधपर्यन्तमनुतिष्ठन् वेदान्तार्थब्रह्मात्मावबोधाङ्गसन्यासविधिमतिक्रमेत्। अथ गुरुकुलादसमावृत्त एव तादर्थ्येन सन्यासविधिमनुतिष्ठेत् पुनर्दारसंयोगाभावेन कर्मविधीनामननुष्ठानलक्षणमप्रामाण्यमापद्येत। 'अरण्यमियादि'ति तदन्ततो 'न पुनरेयादि'त्याद्या हि श्रुतिः। "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा॥" इत्याद्या च स्मृतिः। अथैष दोषो मा भूदिति वेदान्तार्थमविचार्यैव समावर्तेत, अध्ययनविधिरन्तराले विहतस्स्यात्। न च सन्यासाङ्गत्वादिभिः स्तुता ब्रह्मविद्या कर्मविधिशेष इति युक्तम्। अशनायाद्यतीतापेतब्रह्मक्षत्रियादिभेदात्मतत्वविद्यायाः कर्मविधावनुपयोगादधिकारविरोधाच्च। न च वेदान्ते तादृगात्मतत्वं न प्रतिपाद्यत इति दर्शितम्। तस्मादुपनीताधिकारिके नित्य एवाध्ययनविधावधीतात्स्वाध्यायादर्थावबोधो जायमानो, मानान्तरसिद्धिविरोधाद्यविवक्षाकारणाभावेन अध्ययनफलमवस्थाप्यते। अत एव हि वेदमधीत्य स्नायादिति स्मृतिविरोधमध्ययनानन्तरं धर्मविचारारम्भस्याशङ्क्य, "अतिक्रमिष्यामेममाम्नायमनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकं कल्पयेम दृष्टो हि तस्यार्थः कर्मावबोधनं नामे"त्युक्तं **शबरस्वामिना**। अन्यथाऽध्ययनविधिसमार्थकतया, वेदमधीत्याध्ययनविधिमर्थावबोधपर्यन्तं निर्वर्त्य स्नायादिति विधिविरोधाभावेन, तदतिक्रमवचनस्य मोहमूलत्वप्रसङ्गात्। धर्मविचारस्य प्रकृतत्वात्कर्मावबोधनमित्युक्तम्। विचारारम्भौपाधिकतयाऽर्थविवक्षायां, कृत्स्नस्य वेदस्य कर्मतात्पर्यविवक्षाहेत्वभावात्। एवमार्थिकफलेऽर्थावबोधे या सामग्री यावती च, लौकिकी वैदिकी च, गुरुकुलवासविचारादिलक्षणा सन्यासादिलक्षणा वा यदानुष्ठातुं शक्या, तदा तमनुतिष्ठतो धर्मावबोधो ब्रह्मात्मावबोधो वा तत्तदंशेन जायत इति न किञ्चिद्विरुध्यते। तथा चाध्ययनमात्रवत एव स्नानादिकर्मविधिः, न तु विद्यावतः, इति न समानाश्रयतयापि कर्मणि वेदमधीत्येति विद्याविनियोगाशङ्का ॥ १५ ॥

यद्विद्ययोपनिषदा च करोति कर्म
तद्वीर्यवत्तरमिति प्रकृतावरुद्धम् ।
नैवाभिवीक्षितुमपि क्षमते विमृष्टं
दाक्षायणीदयित तावकतत्त्वविद्याम् ॥ १६ ॥

यत्पुनर्वेदान्तानां कर्मपरत्वे 'यदेव विद्यया करोति' इति विनियोगलक्षणं तृतीयं कारणमुक्तम् । तदिदानीं निरस्यति—**यद्विद्ययेति** ।

अत्र **यद्विद्ययेत्यादि वीर्यवत्तरमित्यन्तेन** "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति वचनमर्थतोऽनुक्रामति । **विद्यया,** उद्गीथावयवोंकारविषयया **उपनिषदा,** योगेन । **चकारात्** श्रद्धया च युक्तस्सन् । **यत्कर्म करोति,** तद्वीर्यवत्तरं भवति समृद्धफलं भवति । **इतीदं** वचनं **प्रकृतावरुद्धम्;** प्रकृतयोद्गीथविद्यया विषयभूतयाऽवरुद्धम् । विद्यान्तरविषयतया व्यावर्त्य स्वविषयतयैव नियमितं विधेयविशेषणमिदं तथात्वेन विमृष्टमिति । किमिदं विद्ययेतिपदं, श्रुतिस्वारस्यात्सर्वविद्याविषयं, किं वा प्रकरणानुरोधात् उद्गीथविद्याविषयमेवेति विमृश्य निर्धारितम् । न खल्विदं वचनमनारभ्याधीतम् । तथात्वे हि सति सामान्यवचनतयाऽऽहवनीये जुहोतीतिवत् तं तं प्रत्युपस्थितविशेषमास्कन्दत् सर्वविद्याविषयमपि स्यात् । उद्गीथविद्याप्रकरणगतं तु तच्छेषोऽयं, कर्मसमृद्धिलक्षणफलार्थवादः । ततश्च यथा व्रीहीन्प्रोक्षतीत्यादिवचनं, व्रीहिश्रुत्या विहिताविहितव्रीहिविषयत्वप्रतीतावपि प्रकरणविशेषात् प्रकृतविहितव्रीहिविषयमेव, तथेदमपि यदेव विद्ययेत्यादि, प्रकृतविद्याविषयमेव, स्यात् । विद्यानुष्ठानप्रयोजनतया व्यक्तिवचनत्वेन सन्निहितविशेषपरत्वावश्यम्भावात् । विद्याविशेषस्यापि विद्यात्वेन विद्यापदश्रुतिस्वारस्यहानाच्च । अत एव ज्योतिष्टोमे आग्नेय्याग्नीध्रमुपतिष्ठते; ऐन्द्र्या सद इत्यादिषु सामान्यतो दाशतयाऽऽग्नेयादिमन्त्रप्राप्तौ, प्रकरणानुग्रहाय तल्लिङ्गप्रकृताग्नेयादिग्रहणं व्यवस्थापितम् । अधिकारे च मन्त्रविधिरित्यादिशेषलक्षणाधिकरणे । इत्येवं विमृष्टं सत्, **तावकतत्त्वविद्यां** तव परमेश्वरस्येदं तावकं, तत्त्वं ईश्वरोत्तीर्णनिर्भेदस्वभावः, तस्य विषयतया सम्बन्धिनीं विद्याम् । यद्वा, तवेयं तावकी तत्त्वविद्या । तथा तत्त्वग्रहणं सविशेषविद्याव्यावृत्त्यर्थम् । ताम**भिवीक्षितुमपि** अभिलक्ष्य वीक्षितुं परद्वारापि विषयीकर्तुम् । **न क्षमत** एवेत्येवकारोभिन्नक्रमः । ब्रह्मात्मविद्याविषयत्वसम्भावनामपि प्रतिषेद्धुमपिशब्दः । किमुत विनियोगम् । उपस्थितस्य हि विनियोगो नानुपस्थितस्येत्यभिप्रायः । **हे दाक्षायण्याः** परायाः शक्तेर्**दयित!** इति सम्बोधनेन यथा दाक्षायणी शिवैकताना, न परस्मिन्कटाक्षेणाप्यनुरज्यति तथा परमात्मतत्त्वविद्या तदेकताना, न कर्मण्यनुरज्यतीति सूचयति । **तथा च सूत्रम्**—"असार्वत्रिकी"ति । यदेव विद्ययेति श्रुतिस्तदवगमनीया कर्मणि विद्यापूर्वकत्ववीर्यवत्तरत्वव्याप्तिर्वा न सर्वविद्याविषया, किन्तु प्रकृतोद्गीथविद्याविषयैवेत्यर्थः ॥ १६ ॥

आम्नायमौलिवचनानि तव स्वभाव-
निर्वर्णनेन गलितानि निरूपयामः ।
विद्यानुदेशनमुपायतया पुमर्थे
विद्याफलश्रवणचोदनयोपयुक्तम् ॥ १७ ॥

**स्यादेतत्** । मा भूदुक्तविधया कारणाभावेन कर्मविधिपरत्वं वेदान्तानाम् । अन्यविधिपरत्वं तु स्यात्तन्नात्मतत्त्वप्रतिपादनपरत्वमित्याशङ्क्य, निराकरोति—**आम्नायेत्यादिना** । तत्र कुतोऽयं तव विधिरागः ? न तावत्कार्यार्थ एव शब्दव्युत्पत्तेः । सिद्धेऽपि हि सा दर्शितैव । नापि परिनिष्ठितत्वेनात्मतत्त्वस्य मानान्तरगम्यत्वात् । धर्मादेरपि स्वरूपतः परिनिष्ठितत्वेनाप्रयोजकत्वात् । अशब्दास्पर्शारूपादिस्वरूपस्यात्मतत्त्वस्य प्रत्यक्षायोग्यत्वात् । कार्यलिङ्गकस्य च सामान्यतो दृष्टस्य, कारणरूपोत्तीर्णवस्तुतत्त्वसिद्धावसामर्थ्यात् । अपि च वेदान्तेषु किंविषयो विधिरस्तु ? **ननु** मनोनिरोधविषयः, अनिरुद्धस्य मनसः बन्धहेतुत्वात् । श्रूयते हि—"मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्" ॥ "मन एव निरोद्धव्यं यावद्धृदिगतं क्षयम्" इत्यादिः । तदर्थ एव हि महान्भारो योगशास्त्रस्य । **मैवम्** । "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" ॥ इत्यात्मतत्त्वज्ञानार्थाग्र्यबुद्धिहेतुत्वेनैव "यच्छेत् वाङ्मनसी प्राज्ञः" इत्याद्याम्नानेन वेदान्तानां योगविधिपरत्ववादायोगात् ।

**ननु** निरुद्धे मनसि स्वयंप्रकाशमानस्यात्मनः प्रतिपादनं पिष्टपेषणमनर्थकमिति चेन्न, स्वयंप्रकाशमान एव विविधानर्थविभ्रममूलाज्ञानस्य तत्प्रतिपादननिवर्तनीयत्वात् । अथ ज्ञानविषयो विधिः, स हि न श्रूयते । नापि कल्प्यते इत्याशयेनाह—

**आम्नायन्ते** अभ्यस्यन्ते अध्ययनविधिविधेयैरित्याम्नायाः वेदाः । तेषां **मौलयः** शिरोभागा अन्ता उपनिषदः । तिष्ठतो हि पुरुषस्य शिर ऊर्ध्वोऽन्तः प्रधानं च । तथा विधितोऽधीयमानानां वेदानामूर्ध्वोऽन्त उपनिषदः कर्मविधीनामपि तच्छेषतया प्रधानानि चेति आम्नायमौलय इत्युपचर्यन्ते । तेषु **वचनानि** बहुवचनं गतिसामान्यप्रदर्शनार्थम् । **तव** परमेश्वरस्य । **स्वभावनिर्वर्णनेन** ईश्वररूपोत्तीर्णनिर्मृष्टनिखिलभेदप्रत्यगैकस्य लक्षणस्य स्वभावस्य तत्तद्भ्रमगृहीतरूपान्निष्कृष्य वर्णनेन । अनेन स्वयंप्रकाशमानस्याप्यात्मतत्त्वस्य तत्तद्भ्रममूलाज्ञानहानायावश्यप्रतिपादनीयतां सूचयति । **गलितानि** पुनस्तस्य विधिशेषत्वप्रतिपादने प्रशिथिलव्यापाराणि, स्वभावनिर्वर्णनमात्रावसितानि विधिशून्यानीति यावत् । **निरूपयामः** अध्यवस्यामः ।

**तथाहि**—ऐतरेये तावत् "आत्मा वा इदमेक एवाग्र आसीत्" इत्यारभ्य "प्रज्ञानं ब्रह्मे"त्यन्तमात्मस्वरूपप्रतिपादनमात्रपर्यवसायि दृश्यते । तथा तैत्तरीये "ब्रह्मविदाप्नोति पर"मिति ब्रह्मवेदनफलवादेनोपक्रम्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादि "स यश्चायं पुरुषे, यश्चासावादित्ये

स एकः" इत्येतदन्तम्। तथा छान्दोग्ये "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादि तत्त्वमसीत्यन्तम्। तथा आथर्वणे "यत्तदद्रेश्यमग्राह्यं" इत्यादि "पुरुष एवेदं विश्वम्" इत्यन्तमात्मतत्त्वप्रतिपादनपरमेव दृश्यते। न विधिगन्धमपि शृणुमः। एवमशेषोपनिषत्सु ब्रह्मात्मस्वरूपोपवर्णनमात्रपर्यवसानमनुसर्तव्यम्।

अथ 'ब्रह्मविदाप्नोति परं' 'तरति शोकमात्मवित्' 'ब्रह्म वेद ब्रह्मैव भवति' यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इत्यादिफलार्थवादबलादेव रात्रिसत्रादाविव वेदने विधिः कल्प्यते। एवमेव हि "ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति" "भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद" "न ह वा असा उदेति न निम्लोचति सकृद्दिवा है वास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद" इत्यादिषूपासनाविधिरपि कल्प्यत इत्याशङ्क्याह - **विद्यानुदेशनमिति**। पुमर्थे निःश्रेयसे '**उपायतया विद्याया**' अनुदेशनमनुशासनम्। अनुशब्देनेदं सूचयति "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह" "सोम्य त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि, तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः" इत्यादिदर्शनात् अविद्यानिवृत्त्या निःश्रेयसोपायत्वं विद्यायाः श्रुतिरभिप्रैति। तत्तद्विषयविद्यायाश्च तत्तदविद्यानिवर्तकत्वमन्वयव्यतिरेकसिद्धम्। अतो विद्याया निःश्रेयससमभिव्याहारे तदुपायतायाः पूर्ववत्तयाऽनुवादः, न तु विधिरिति। तेनान्यत्रापूर्वत्वाद्विधितात्पर्यं युक्तम्। न त्विह तथेति दर्शितं भवति। किमर्थस्तर्ह्ययमनुवाद इत्यत आह—**विद्याफलेत्यादि**। विद्या फलं यस्य तस्मिन् **श्रवणे मनननिदिध्यासनाङ्गके** चोदनया विधिना पुरुषप्रवर्तनया प्रयोजनभूतया, **उपयुक्तं** उपयोगवत् अर्थवदित्यर्थः। विद्याफलवादस्य तदुपायप्रवर्तनैव प्रयोजनमित्यन्यथासिद्धेः, न तद्विधितात्पर्यकल्पना युक्तेत्यभिप्रायः। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रूयते। अत्र निदिध्यासितव्य इति ध्यानमुपासनं मोक्षफलं विधीयते। वाक्यार्थज्ञानाय तत्त्वविदाचार्यात् न्यायोपायग्रहणलक्षणं श्रवणं, तत्प्रतिष्ठार्थं युक्तिभिरनुचिन्तनलक्षणं मननं च, निदिध्यासनस्वरूपोपकारितयाऽर्थप्राप्तमनूद्यते। द्रष्टव्य इति विधेयविशेषणं समर्प्यते। ततश्च साक्षात्काररूपतापत्तिपर्यन्तं निदिध्यासनं कर्तव्यमिति विशिष्टविधे न वाक्यभेद इति कश्चित्। तत्र मुक्तेरुपासिक्रियाफलत्वानुपपत्तिरग्रे वक्ष्यते। द्रष्टव्य इति च न विधेयध्यानविशेषणसमर्पणपरम्, विधेर्हि प्रथमं फलाकाङ्क्षा भवति न विशेषणाकाङ्क्षा। ततश्च विधिः प्रथमाकाङ्क्षया पदश्रुतिसन्निहितं धात्वर्थमेव फलत्वेनादानप्राप्तमपि पुरुषासमीहिततयोपेक्षमाणो, यदि स्ववाक्यसन्निहितं फलं न लभेत तदा रात्रिसत्रविधिवदार्थवादिकं, विश्वजिदादिवदाध्याहारिकं वा तदन्वेषते। ततश्च द्रष्टव्य इत्याकाङ्क्षायोग्यतासन्निधिमत्त्वैः फलसमर्पणपरमित्येव न्याय्यम्। विशेषणसमर्पणपरत्वे च, विधेयध्यानस्य दर्शनत्वं कर्तुमशक्यमिति दर्शनवद्विशदावभासत्वे लक्षणाप्रसङ्गाच्च। **ननु** दर्शनं चाक्षुषं ज्ञानम्, आत्मनि न

सम्भवतीति, फलपरत्वेऽपि साक्षात्कारमात्रे लक्षणा वाच्या । **सत्यम्** । सन्निहिता सा साक्षात्काररूपतायां तु व्यवहितेति विशेषः । स च साक्षात्कारः प्रमाणफलमिति उपक्रमोपसंहारादिवाक्यतात्पर्यलिङ्ग-निरूपणात्मकमीमांसापर्यायविचारशब्दितश्रवणमेव प्रमाजननोपयोगितया प्रमाणशरीरत्वात्तादर्थ्येन विधीयते। असम्भावनाविपरीतभावनानिवृत्त्या तत्प्रतिष्ठोपयोगिनी तु प्रमेयोपपत्त्यनुसन्धानतत्परिभावनालक्षणे मनननिदि-ध्यासने, तस्यैव श्रवणस्य फलोपकार्यङ्गतया विधीयते इत्येव युक्तमित्याभिप्रेत्य, विद्याफलश्रवणचोदनयेत्युक्तम्। तत्र विद्याया निःश्रेयसोपनिबन्धनैव पुरुषसमीहिततया फलत्वमुपपादनीयमित्यतस्तत्र तत्र विद्याफलवादः, न तद्विधितात्पर्येणेति । एवं सति कृत्स्नस्यापि वेदान्तस्य तद्विधिशेषताप्रसङ्गशङ्कापि न भवति । प्रमाण-फलवेदनार्थत्वेन श्रवणादिविधेरेव प्रमाणशेषत्वव्यवस्थापनात् इति ॥ १७ ॥

त्वद्भावबोधविधिविभ्रममेति मुग्धो
वेदावसानवचनानि यतो भवन्तम् ।
यद्वाऽवबोध्य यदि वानवबोध्य नाथ !
नालं भवद्विषयवेदनचोदनायाम् ॥ १८ ॥

**अथापि स्यात्** "स एतमेव पुरुषं ब्रह्म ततमपश्यत्" इत्यैतरेये "आनन्दो ब्रह्मेति व्यजानात्" इति तैत्तरीये "तदात्मानमेवावेदाहं ब्रह्मास्मि इति तस्मात्तत्सर्वमभवत्" इति वाजसनेयके "तद्धास्य विजज्ञा"विति छान्दोग्ये एवं सर्वत्रापि परकृतिसरूपार्थवादः "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ"दित्यादिवेदविद्याविधिं कल्पयिष्यति । अथवा "सम आत्मेति विद्यात् । आत्मन्येवात्मानं पश्येत् तमेवैकं जानथ आत्मानं तदेव ब्रह्म त्वं विद्धि" इत्यादिविधिश्रुतिरेव प्रत्यक्षेति, कथं न विद्याविधिः ? इत्यत आह **त्वद्भावेति** ।

तव ईश्वरस्य निर्विशेषस्वभावबोधे विधिरयमिति **विभ्रमम्** । **मुग्धो** विधिरागेण विधि-योग्यायोग्यविवेकविकलो मूढः । **एति** प्राप्नोति । न प्रत्यक्षविद्याविधिप्रत्यये कुतोऽयं विभ्रम इत्यत - आह - **यत इति** । **वेदा** अवसन्ति समाप्तिं गच्छन्ति येषु, पुरुषसमीहितनिरतिशयपुरुषार्थभूतब्रह्मात्म-तत्त्वोपदेशपर्यवसानेन ब्रह्मात्मतत्त्वविषया उपनिषद एव **वेदावसानान्युच्यन्ते** । तेषु **वचनानि** वाक्यानि । **भवन्तमित्यात्मतत्त्वमुपलक्षयति** । **यद्वेति यदि वेति** च विकल्पभेदोपन्याससूचकौ निपातसमुदायौ । **भवन्तमवबोध्य वाऽनवबोध्य वा भवद्विषयवेदनचोदनायां** ब्रह्मात्मतत्त्वालम्बनज्ञानविधौ, **नालं** न पर्याप्तानि न समर्थानि भवन्ति । अलंयोगेऽपि विषयत्वविवक्षया, चोदनायामिति सप्तमी । आत्मतत्त्व-मवबोध्य तावन्न तद्वेदनविधिः सम्भवति । सिद्धत्वात् । साध्यविषयो हि विधिः । अनवबोध्य तु न तराम् । निर्विषयाया विद्याया दुरधिगमत्वेनाप्रसिद्धार्थविधानानुपपत्तेः । यत एवमत आत्मतत्त्वबोधे विधिरिति, विभ्रम एवेति । **नाथेति** सम्बोधनेन ईश्वरप्रार्थनयापि नात्मतत्त्ववेदनविधिः प्रमाणयितुं शक्य इति सूचयति ॥ १८ ॥

मुक्त्वा गुणव्यतिकरं भवतोऽवबोध-
मीश! प्रमाणपरतन्त्रनिजस्वभावम्।
पुंव्याप्तृतिव्यवहितं विहितं चिकीर्ष-
न्नाधर्षितः खमपि खादितुमुत्सहेत ॥ १९ ॥

अथाधीतमात्राधिगते ब्रह्मात्मतत्त्वे, तदालम्बनं सम्यग्ज्ञानं विधायिष्यते। अन्यथा तदुद्देशश्रवणादि-विधेरप्यनुपपत्तेरित्यत आह—**मुक्त्वेति**।

**गुणाः** सत्त्वादयः। 'गुणास्सत्त्वं रजस्तम' इत्यमरः। अध्यात्मशास्त्रे च सर्वत्र सत्त्वं रजस्तम-इति 'गुणाः प्रकृतिसम्भवाः', 'गुणानेतानतीत्य त्रीन्' 'गुणकलुषस्य सनातनेन तेने' त्यादिषु गुण-शब्दस्य सत्त्वादिषु प्रयोगो दृश्यते। तेषां **व्यतिकरः** सम्भेदः। स चायं जीवस्य। तं **मुक्त्वा**, **भवतः** परमात्मनः। गुणसम्भेदोपाधिको हि परमात्मनः जीवभावः। "अनेन जीवेनात्मनानुप्रविश्य" "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इत्यादिश्रुतिस्मृतिभ्यः। तद्विवेके तु स एव परमात्मेत्य-भिप्रायः। "प्रेत्य स्वर्गे महीयते", "यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते", "किमुद्यममिमं व्यर्थं कृत्वा ते राक्षसाधिप", "आसाद्य तं जीवितसंशयस्ते मृत्युर्ध्रुवो ह्यद्य मया विरुध्य", "अभुक्त्वा-ऽऽमलकं पथ्यं" इत्यादौ बहुशः समानकर्तृकत्वव्यभिचारात् पूर्वकालतामात्रे क्त्वाप्रत्ययः। अथवा **भवत** इत्यावर्तते। तत्रैकं शतृप्रत्ययान्तं सत इत्यर्थे। **मुक्त्वेति** सम्बध्यते। गुणव्यतिकरं मुक्त्वा विद्यमानस्येत्यर्थः। अपरं तवेत्यर्थे सर्वनाम। मुक्त्वा सत इत्यध्याहारो वा। **यद्वा**, सर्वज्ञत्वसत्यकामत्वादिगुणव्यतिकरं मुक्त्वा भवतोऽवबोधमिति सम्बन्धः। ततश्च बोधाक्षिप्तः कर्ता समान-इति क्त्वाप्रत्ययोपपत्तिः। अन्यस्योपास्यस्य मनोमयत्वसर्वकामत्वादिगुणान्वयेन, ज्ञानमुपासानात्मकं शक्येतापि विधातुं, न तु प्रत्यगेकरसनिर्विशेषात्मतत्त्वावबोध इति दर्शयितुं गुणव्यतिकरं मुक्त्वेत्युक्तम्। तमेतमवबोधम्। **प्रमाण**मात्मन्यागमस्तेन, उपलक्षणमिदम्। विषयेण च। **परतन्त्रः** पराधीनः। **अथवा**, प्रमाणमागमः। परः परमात्मा। विषयस्तयोरधीन इति तथा। न तु क्रियास्वभाव इव पुरुषबुद्धितन्त्र इति भावः। सोऽपि ज्ञानोपाधिना प्रमाणपरतन्त्र एवेति तद्व्यवच्छेदाय **निजेति**। यद्वा, ज्ञानस्याप्यभ्यासोपाधिना पुरुषबुद्धितन्त्रता स्यादिति तद्व्यावृत्तये निजेति। तेन तत्त्वावबोधो हि न विषयाज्ञानविभ्रमनिवृत्तयेऽभ्यासमपेक्षते। आत्मतत्त्वावबोधश्च तथाफलपर्यवसायीत्यतो न विधियोग्य इति दर्शयति। तथाभूतस्स्वभावो यस्य, स तथा। तादृशं सन्तम्।

**क्रिया हि** लौकिकी वैदिकी वा, पुरुषेच्छया कर्तुमकर्तुमन्यथाकर्तुं शक्या। यथा गमनादि, यथा वा षोडशिग्रहणादिः। यथा वा अभ्युदयादौ सति दर्शादिः। ज्ञानं तु यथाप्रमाणं यथाविषयञ्च जायते। न पुरुषेच्छामनुविधत्ते। न हीष्टज्ञानं इदानीमिच्छतापि कर्तुं शक्यमनिष्टज्ञानं वाऽकर्तुम्। तत्पुनरिष्टज्ञानं वा कर्तुम्। यद्यपि "योषा वाव गौतमाग्निः" इत्यादौ योषाग्न्यादिज्ञानं शब्दमूलम्

तथापि शब्दार्थान्यत्वेन "यजमानः प्रस्तर" इत्यादिवत् गुणवादप्रयोजनाभावात्, तत्सम्पदात्मकं मानसक्रियैवेति, पुरुषबुद्धितन्त्रत्वाद्विधीयते। न तु ब्रह्मात्मतत्त्वबोधस्तथेत्यभिप्रायः। **विहितं** विधिबलेन कर्तव्यं च पुंव्यापृतिव्यवहितं च। प्रमाणविषयसमवधाने सत्यपि, क्रियावत्पुरुषप्रवृत्तिद्वाराऽऽत्मलाभं च विधेयविशेषणमिदं द्वयमपि तथा कृत्वा **चिकीर्षन्** कर्तुमिच्छन्। **आधर्षितः** खादेति बलात्प्रवर्तितः। **खमपि खादितुमुत्सहेत,** गगनमपि चर्वितुं शक्नुयात्। आकाशचर्वणं यथाऽशक्यं तथा पुरुषेच्छयाऽऽत्मतत्त्वबोधानुष्ठानमिति तात्पर्यम्। महच्चेदमप्रामाण्यनिदानं यदशक्यार्थविधानम्। ततश्चाकाशं भक्षयेदित्यादिवद्वेदनविधिवादिनः सम आत्मेति विद्यादित्यादिरप्रमाणमापद्येतेति भावः। ईशेति सम्बोधनेन, न पदार्थस्वभावमीशोप्यन्यथयितुमीष्टे, न खलु हिमं दहनं वा हिमं कर्तुमीशोऽपि शक्नुयात्। एवं प्रमाणवस्तुपरतन्त्रं ज्ञानं न विधेयमास्थातुं कश्चिदपि प्रभवतीति ॥ १९ ॥

पत्नीक्षते घृतमितीक्षणचोदना या
सा पुंप्रवृत्तिविषयेऽक्षिविमीलनादौ।
श्रोतव्य इत्युपनिषत्सु च देवदेव!
त्वद्बोधसाधनविधिं पृथगामनन्ति ॥ २० ॥

अथ "पत्न्यवेक्षते न नग्नां स्त्रियमीक्षेत" इत्यादिदर्शनविधिनिषेधा दृश्यन्ते। तत्कथं ब्रह्मात्मतत्त्ववेदनविध्यपवाद इत्यत आह **पत्नीत्यादि**।

**पत्न्यवेक्षते** इति विधेरपेक्षितं कर्म प्रकृतमाज्यमिति कृत्वा **घृतमिति** पूर्यते। **इतिशब्दः** प्रकारार्थो न नग्नामित्यादिनिषेधं संगृह्णाति। साक्षान्निषेधेनावेक्षणविषयतया तद्विधिनिषेधावविशेषेणे**क्षणचोदनेत्युच्येते**। अत एवानर्थोऽधर्मोऽपि प्रतिषेधचोदनालक्षण इति, तद्व्यावृत्त्यर्थं चोदनालक्षणोऽर्थो धर्म इत्यत्रार्थग्रहणम्। अन्यथा चोदनालक्षणत्वाभावादेवाधर्मव्यावृत्तौ, तद्ग्रहणमनर्थकं स्यात्। **यैषा** चोदना **सा, पुंप्रवृत्तिविषये** पुरुषयत्नसाध्ये**ऽक्षिविमीलनादौ** लोचनोन्मीलनविषयाभिमुख्यादौ ईक्षणसाधनचक्षुरुन्मीलनादिक्रियैव, विधिनिषेधविषय इत्यर्थः। हन्तैवं, 'सम आत्मेति विद्यात्' इत्यादिष्वपि वेदनसाधनविधिरेव स्यादित्यत आह **श्रोतव्य इत्यादि**। **उपनिषत्सु** चेति चः शङ्कानिवृत्तौ। उपनिपूर्वस्य सदः क्विपि रूपमुपनिषदिति। सदेर्विशरणगत्यवसादनलक्षणमर्थत्रयमाश्रित्य, तदर्थस्त्रेधा वार्तिके दर्शितः। अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः। तच्छब्दावयवार्थस्य विद्यायामेव सम्भवात्।

"उपोपसर्गः समीप्ये तत्प्रतीचि समाप्यते।
त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम् ॥
उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः।
निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेत् ॥

निहत्यानर्थमूलं स्वाविद्यां प्रत्यक्तया परम् ।
गमयत्यस्तसम्भेदमतो वोपनिषद्भवेत् ॥
प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः ।
यतोऽवसादयेद्विद्या तस्मादुपनिषन्मता ॥" इति ॥

एवं चावयवार्थानुगमात् ब्रह्मविद्यैव मुख्योपनिषत् । तादर्थ्यात् । तदभेदोपचारेण वेदान्ता अप्युपनिषद-उच्यन्ते । लाङ्गलं जीवनं, आयुर्घृतमित्यादिवत् । तासु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य" इत्येवंप्रकारं "सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इत्यादिकं, **हे देवदेव !** देवा द्योतनात्मकानीन्द्रियाणि "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः" इति हि श्रुतिः । तेषामपि देवः "चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो ह मन" इत्यादिश्रुतेः । अनेन सर्वेन्द्रियसाक्षिणि स्वयम्प्रकाशात्मनि ज्ञानसाधनविधिरपि नात्यन्तस्वरसः । अविद्याभ्रममात्रनिवृत्तिफल एव केवलमिति सूचयति **त्वद्बोधसाधनविधिं,** तव स्वरूपबोधे साधनस्य श्रवणादेर्विधिं, वेदनोपनिबन्धविधेः **पृथगेवामनन्ति** । तस्मिन्सति, वेदनोपनिबन्ध-विधिना, तत्साधनस्य लक्षितस्य विधानमनर्थकम् । यत्रापि पृथक्साधनविधिर्न श्रूयते सम आत्मेति विद्यादित्यादौ, तत्रापि स एव साधनविधिरुपसंहर्तव्यः । सर्वशाखाप्रत्ययन्यायात् । तत्र सम आत्मेति निर्देशप्राप्तभेदापवादेन स्वरूपमात्रोपसंहारी इतिशब्दः, विधिप्रत्ययश्च फलवत्त्वमात्रपर इति न किञ्चिद्विधेय-मवशिष्यते । एवं "आत्मन्येवात्मानं पश्येत्" इत्यादौ गमयितव्यम् । यद्वा, पश्येदित्युपलक्षित-श्रवणानुवादेन तत्र शमादिविधिरस्तु । वाक्यभेदश्चाभिमत एव । **तथा च वार्तिकं** "भूत्वेत्यस्याभि-सम्बन्धः सर्वैश्शान्तादिभिः पदैः" इति । अथवा, न वाक्यभेदः । तत्र नाम वाक्यभेदः, यत्र प्राप्तकरणभावनानुवादेनानेकविधानम् । यथा "य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते" इति कर्मान्तरविधिरिति । **पूर्वपक्षे** "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती"ति, तदनुवादेन रूपविधौ, अग्नेर्देवतायाः पुरोडाशस्य द्रव्यस्य च विधाने वाक्यभेदः । इह तु प्रातिपदिकमात्रोपात्तशमादेर्भूत्वेति विधेयभावनासमभिव्याहारे, विशेषकाभावेन युगपदनेकविशिष्टभावनाविधा-नान्न, वाक्यभेदशङ्कावकाशः । "तमेवैकं जानथ" इति च न विधिपरः प्रत्ययः । एवकारोपहतविधि-शक्तित्वात् । 'अन्या वाचो विमुञ्चथे'ति हि वाक्यशेषः । "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इत्यत्रापि सैव योजना । **अथवा,** आज्यमवेक्षत इत्यादाविव सर्वत्रैव वेदनसाधनविधिमभ्युपेत्य, समाधत्ते श्रोतव्य इति । **ननु** सर्वत्रैव वेदनसाधनविधौ पुनरुक्त्यानर्थक्यम् । अभ्यासन्यायेन समिद्यागादिवत् विधेय-भेदो वा, तथा सति विकल्पेऽष्टौ दोषाः । समुच्चये, प्रतिस्वं निरपेक्षसाधनत्वावगमविरोध इत्यत आह **पृथगिति** । शाखाभेदेनाध्येतृव्यवस्थया बोद्धृभेदादपौनरुक्त्यमित्यतो नोक्तदोषपरम्पराप्रसर इत्यर्थः । एक-शाखायामपि 'आत्मा श्रोतव्य आत्मानं पश्ये'दिति पुनः श्रुतिरन्यान्यबोद्धृविषयवृत्तान्तानुवादसरूपब्राह्मणभेद-प्रवृत्त्या, समाधातव्या । किमर्थं तर्हि "सम आत्मेति विद्यात्तद्विजिज्ञासस्व आत्मानं पश्येत्" इत्यादौ विद्या-मुपादाय तत्साधनं लक्षयित्वा विधीयते । **ननु** श्रोतव्य इत्यादिवत्तदेव साधनमुपादाय विधीयताम् । **सत्यम्** । किन्तु विद्ययैव विधेयस्य फलवत्त्वमार्थिकं सिद्ध्यतीति, साधने विधेये वेदनोपादानमर्थवत् । श्रवणादिविधिश्च **सिद्धान्तसिद्धाञ्जने** प्रपञ्चितः, तत्रैव द्रष्टव्यः ॥ २० ॥

**साक्षाद्भवन्तमपरोक्षतयान्तरात्म-**
**न्नारण्यके बृहति सन्त उदाहरन्ति ।**
**नित्यापरोक्षमहिमन्यपरोक्षबोध-**
**सञ्चोदनापि खलु न त्वयि शक्यशङ्का ॥ २१ ॥**

एवमापाताधिगते ब्रह्मात्मनि सम्यग्ज्ञानविधिर्न संभवतीत्युक्तम् । अस्तु तर्हि परोक्षावगते तस्मिन्नपरोक्षविधिरित्याशङ्क्य किं तस्मिन् परोक्षस्वभावे विधिः? उतापरोक्षस्वभावे? कथं पुनरयं विभागः? यदि प्रत्यगात्मनोऽन्यः परमात्मा, तदा परोक्षस्वभावः । अथ प्रत्यगात्मावसायी, तदा नित्यापरोक्ष इति । तत्राऽऽद्ये तावदशक्यविधिः । परोपाधिपरोक्षे हि पुरुषयत्नादपरोक्षं शक्यते कर्तुम्, यथा रत्नरक्तत्वविशेषे सौक्ष्म्यात्परोक्षे प्रणिधानादपरोक्षम् । यथा प्रतिसीराव्यवहितायां नर्तक्यां तदपनयात् । यथा वा दुन्दुभिध्वानाभिभूते वेणुस्वने तदुपरमात् । एवमन्यत्रापि यथायोगमपरोक्षं क्रियते । स्वभावपरोक्षे धर्मादौ तु न कथञ्चिदपि शक्यमपरोक्षं कर्तुमिति । कामिनो विधुरस्य कामिन्यामिवात्मनि भावनामयस्तु साक्षात्काराभासः, कथञ्चिद्विधातुं शक्यः । किन्तु स उपासनान्तर्गुण-एवेति, तद्विधौ दोषमनन्तरमेव वक्ष्यति । द्वितीयेऽपि प्रमाणवस्तुतन्त्रमेवापरोक्षं जायत इति न विधातुं शक्यमित्यभिप्रेत्याह—**साक्षाद्भवन्तमिति** ।

**हे अन्तरात्मन्!** "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मे"ति श्रुतिः । **भवन्तं** परमात्मानं, **बृहदारण्यके** वाजसनेयोपनिषदि । **साक्षादपरोक्षतया** प्रमातृसंविदमव्यवेतम् । अपरोक्षं नाम बुद्धिसुखादिकं वा शब्दस्पर्शादिकं वा, सत्तयैव वा प्रमाणवृत्त्या वा, संविदात्मसंबन्धा-दपरोक्षम् । ब्रह्मात्मा तु संविदेकरसस्वभावादेवापरोक्ष इति दर्शयितुं साक्षादिति विशेषणम् । अपरोक्ष-तयेति इत्थंभूतलक्षणे तृतीया । अपरोक्षस्वभावमित्यर्थः । **सन्तो** ब्रह्मविदः । "अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदु"रिति हि श्रुतिः । **उदाहरन्ति,** "यत्साक्षादपरोक्षाद्ब्रह्म" "य आत्मा सर्वान्तर" इत्यादिना अपरोक्षादिति सुपां सुप इति प्रथमार्थे पञ्चमी । सुपां सुलुगिति सोराद्वा । अथवा, अपरोक्षोऽतति सातत्येन स्वात्मना व्याप्य गच्छति प्रकाशत इत्यतेः क्विपि, अपरोक्षादिति । अन्तरात्मन्निति सम्बोधनेन, प्रत्यगात्मनोऽन्यः परमात्मा कथं साक्षादपरोक्ष इति शङ्कां निराकरोति । तत्र "कतमो याज्ञवल्क्य सर्वान्तर" इति प्रश्ने "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योपानेनापानिति स त आत्मा सर्वान्तर" इत्यादिना प्रत्युच्यते । ततोऽपि चेदपरः परमात्मा, द्वयोः सर्वान्तरत्वायोगेन प्राणनादिकर्तुः सर्वान्तरत्ववचनं पीड्येत । यः प्राणेन प्राणितीत्यादौ णिजन्तभावेन व्यवधारणं, उत्तरत्र च "न दृष्टेर्द्रष्टारं पश्येः" इत्यारभ्य "विज्ञातेर्न विज्ञातारं विजानीयाः एष त आत्मा सर्वान्तर" इत्युपसंहारे किन्तु ततः प्रत्यगात्मनो दृष्टिद्रष्ट्रादेरन्यं परमात्मानं पश्येरित्याद्यध्याहारं च कल्प-यन्नात्मन एव ब्रुह्यतीत्यभिप्रायः । एवं **नित्यापरोक्षश्चासौ महिमा च** । महानित्युक्ते महत्वधर्मी सविशेष आत्मेति मतिस्स्यात् । तन्निवृत्त्यर्थं भावमात्रमात्मेति दर्शयितुं **महिमेत्युक्तम्** । तथा च

श्रुतिः "एष नित्यो महिमा ब्राह्मणस्य", "धातुः प्रसादान्महिमानमीशं" इत्याद्या। अन्यत्रापि "भूमा त्वेव विजिज्ञासितव्य" इति भावप्रत्यायान्तेनात्मनिर्देश एतदर्थ एव। **तस्मिंस्त्वयि** परमात्मनि **अपरोक्षबोधसञ्चोदनापि** साक्षात्कारविधिरपि। **अपिः सम्भावनायाम्।** अन्यत्र साक्षात्काराभासे सम्भवन्त्यपीत्यर्थः। **न शक्यशङ्का,** शङ्कितुमप्यशक्या। **खल्विति** प्रमाणवस्तुपरतन्त्रतालक्षणा पूर्वोक्तज्ञानविध्ययोग्यतामुपस्थापयति।

**अथ** कथमागमात्परोक्षप्रमाणादात्मापरोक्षज्ञानं जायेत, अन्यथा सोऽपीन्द्रियवत्प्रत्यक्षप्रमाणमेव स्यात्। तथा च "प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्" इति स्मार्तविभागविरोधः। **उच्यते।** "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इति श्रवणद्वाराऽऽगमस्य साक्षात्कारफलत्वमुपनिबध्यते। तेन ज्ञानापरोक्षत्वं कारणायत्तमपि, अपरोक्षार्थविषयतायत्तमर्थापरोक्षत्वम्। तच्च प्रमातृसंविदव्यवेतत्वमित्यनन्तरमेवोक्तम्। **तथा चात्मनः** स्वभावापरोक्षत्वात्तद्विषयं ज्ञानमागमिकमपि अपरोक्षमेव। अत एव 'दशमस्त्वमसी'त्यादावहंवृत्त्या प्रमातृसंविदव्यवधानाद्दशमोऽहमस्मीति, अपरोक्षज्ञानमिष्यते। अत एव चेन्द्रियसन्निकृष्टे वक्रकोटरादिस्थाणुत्वादिलिङ्गपरामर्शेन स्थाणुत्वादिज्ञानं जायमानमपरोक्षमुपगम्यते। न च समानविषये प्रत्यक्षसामग्रीबलवत्त्वेनैन्द्रियकमेव तज्ज्ञानमिति युक्तम्। लिङ्गपरामर्शानपेक्षाप्रसङ्गात्। इन्द्रियसन्निकर्षस्यैव सहकारीति चेत्, केनोपकारेणेति वक्तव्यम्। संशयकोटिप्रतिबन्धेनेति चेत् न, तस्य स्थाणुत्वनिश्चयसामग्रीत्वाभावे, तदयोगात्। यद्धी यत्र प्रतिबन्धिका तत्सामग्री खलु तत्र प्रतिबन्धिका स्यात्। तत्र तद्धीजननाभावेप्यन्यत्र तद्धीजनकतया, यदि तत्प्रतिबन्धकत्वं तर्हि तथाभूता सैव प्रत्यक्षसामग्री, तत्प्रतिबन्धिकास्तु इति कृतं लिङ्गपरामर्शेन। अथ विशेषादर्शनं संशयसामग्री, तस्मिंस्तु सति तदभावे स्वसामग्र्यैवेन्द्रियसन्निकर्षेण स्थाणुत्वाद्यपरोक्षं जायत इति चेत, तर्हि निश्चयस्य संशयविरोधिता सर्वसिद्धा बाध्येत। तस्मादिन्द्रियसन्निकर्षेण विशेष्यालम्बना वृत्तिरुपजायमाना लिङ्गपरामर्शेन स्थाणुत्वाद्याकारोपजायते। सा च तस्य प्रमातृसंविदव्यवधिमावहन्ती, तद्विषयतया अपरोक्षज्ञानं संपद्यते। प्रत्यभिज्ञायां पुनरिन्द्रियसन्निकर्षेण जायमानेदंवृत्तिः, संस्कारेण तत्ताकारा जायते। किन्तु तस्यास्तद्देशादिसम्बन्धरूपाया अतीतत्त्वेनायोग्यतया प्रमातृसंविदव्यवधेरावोढुमशक्यत्वात्तदंशे परोक्षतैव।

एवं धर्मादिव्याप्यसुखादिपरामर्शेनाहंवृत्तौ, तदाकारायां धर्माद्यपरोक्षतापत्तिः, रसादिव्याप्यरूपादिपरामर्शेनाम्रादिचाक्षुषज्ञाने, तदाकारे रसादिचाक्षुषत्वापत्तिरित्यादिचोद्यं प्रति वक्तव्यम्। लिङ्गपरामर्शादिकमनपेक्ष्य यज्ज्ञाने यदपरोक्षतायोग्यं, तज्ज्ञाने लिङ्गपरामर्शेनान्येन वापि तदाकारे तस्यैवापरोक्षत्वोपगमात्। न चाहंवृत्तौ सुखादिरिव धर्मादिः। न वाम्रादिचाक्षुषज्ञाने रूपादिरिव रसादिरपरोक्षतायोग्यः। परस्यापि हि धर्मादे रसादेर्वा संयुक्तसमवायाविशेषे, सुखादिवद्रूपादिवच्च मानसत्वचाक्षुषत्वाद्यभावेन स्वरूपतायोग्यतैव फलबलकल्प्या। हेतुराश्रयणीयः सोऽस्माकमपीति नातिशङ्का।

**अथैवमपि** शंखपीतत्त्वभ्रमदशायां श्वैत्यव्याप्यशङ्खत्वपरामर्शेन शङ्खज्ञाने तदाकारे श्वैत्यापरोक्षतापत्तिः। तस्य शङ्खत्वचाक्षुषज्ञानेऽपरोक्षतायोग्यत्त्वात्। ततश्चापरोक्षतत्त्वज्ञानस्य भ्रम-

विरोधित्वात् शङ्खपैत्यभ्रमो निवर्तेतेति चेत्, न, सोपाधिकविपरीतरूपाकारे शङ्खज्ञाने लिङ्गपरामर्शेन श्वैत्याकारत्वायोगात्। न चाहंवृत्तावात्मज्ञाने भ्रमानन्तर्गतोपाधिनिबन्धना विपरीताकारता, येन नयनगतपित्तद्रव्योपाधिकशङ्खपैत्यभ्रम इव श्वैत्याकारता तत्राप्यात्माकारता न स्यात्। किन्तु, तदेवात्मज्ञानं भ्रमावभासमिति, तदपवादेनागमिकं ज्ञानं आत्मन्यपरोक्षमिति। एवं सर्वत्र यथायोगं परोक्षत्वापरोक्षत्वविभाग उन्नेयः। एवं च यद्यात्मापरोक्षप्रमाकरणत्वेन वेदान्ताः प्रत्यक्षभेदास्स्युः, स्युर्नाम। आगमविभागस्य धर्माद्यागमे सावकाशत्वात्। अथवा, प्रत्यक्षमिति प्रमाणस्वरूपभेदविवक्षया, इन्द्रियमुपचर्यताम्। अनुमानमिति च लिङ्गम्। इत्यतो न विभागविरोधः। अन्यथाऽऽगमस्य क्वचिल्लिङ्गविधयापि प्रमाणत्वात्। अनुमानान्तर्भावात्, आगमविभागविरोधापातादिति सर्वमवदातम् ॥ २१ ॥

ये त्वामकृत्रिमगिरामवबोधनीय-
निष्ठामुपास्तिविधिशेषमुशन्त्यबुद्धाः।
भङ्ग्यन्तरेण भगवन्! भवतोऽपवाद-
मिच्छन्ति मान्तरविरोधमपारयन्तः ॥ २२ ॥

अथापि स्यान्माभूदेवं ज्ञानविधिरात्मनः, उपासनाविधिस्तु स्यात्। श्रूयते हि "आत्मेत्युपासीत" "आत्मानमेव लोकमुपासीत", "अनुष्ठाय न शोचति" इत्यादिः। स्मर्यते च "अनुतिष्ठेद्गुहाशयम्" इत्यादिः। यागादिकर्मण इव पुरुषतन्त्रव्यापारविषयीकरणमनुष्ठानम्। स च व्यापार आत्मन्युपासनैव। एवमात्मोपासनाविधौ कोऽसावात्मा इत्यपेक्षायां, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं स आत्मा तत् त्वमसि", "यस्सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः", "इदं सर्वं यदयमात्मा" इत्यादिभिः स एवात्मा प्रतिपाद्यत इत्येवं, विधिरागिणः शङ्कामपवदितुमाह—ये त्वामित्यादि।

ये तावत् **अकृत्रिमगिरां**, करणेन पुरुषाशयपूर्वककण्ठादिस्थानस्पृष्टादिप्रयत्नव्यापारलक्षणेन निर्वृत्ताः कृत्रिमाः न कृत्रिमाः अकृत्रिमाः नित्या इत्यर्थः। तादृशीनां गिरां वेदानां। **अवबोधनीयनिष्ठां** कर्माणि तावदवबोधनीयानि नानाफलानि उपासनानि च, विशुद्धः परमात्मा च। तेषामवबोधनीयानामेषा निष्ठा, अवबोधनव्यापारसमाप्तिपदम्। न खलु ब्रह्मात्मतत्त्वेऽवबोधिते, परमवबोधनीयमवशिष्यते। तावतैव कृतं करणीयम्, प्राप्तं प्रापणीयमिति। यद्वा अवबोधनीय इति निष्ठा न त्वनुष्ठापनीय इतीति, यदवबोधन एव वेदानां प्रवृत्तिसमाप्तिः न त्वनुष्ठानशेषत्वापादन इत्यर्थः। तं **त्वां, उपास्तिविधिशेषम्,** उपास्तिरुपासना, उपपूर्वादासेः क्तिचि, "क्तौ च संज्ञायां" इति क्तिच्। तद्विधेः शेषम्। विधेयोपासनक्रियानिर्वर्तकतया समर्पणीयम्। न तु स्वयमेव प्रतिपादनीयम्। इदं विधेयविशेषणम्। **उशन्ति** कामयन्ते। **अबुद्धाः**, ते वेदतात्पर्यपर्यवसानगतिमविद्वांसः। **भङ्ग्यन्तरेण,** नास्ति ब्रह्मेति साक्षान्निषेधादन्या भङ्गिः। उपास्तिविधिशेष इत्येव भङ्ग्यन्तरम्। वचनरीतिभेदः। यत्पर्यायोक्तमाचक्षतेऽलङ्कारविदः। **तेन, हे भगवन्!** पूज्यमान! भवतः पूज्य भृशमिव प्रब्रूयात्कियांस्त्वमिति।

तदपि खलु महते दुरिताय। किं पुनस्स्वरूपस्यैवापवाद इति सूचयति। तथा च स्मृतिः "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा" इति। भवतोपवादं प्रतिषेधमेवेच्छन्ति। कुत इत्यपेक्षायां हेतुगर्भं विशेषणं मान्तरेत्यादि। मीयन्ते विषया आभिरिति वा, तेषां मितय इत्येव वा घञर्थे करणे भावे वा कविधाने, स्त्रियामजाद्यतष्टाविति टापि, माङो मेति रूपम्। आगमादन्यानि मानानि मान्तराणि तैर्विरोधम्। ब्रह्मात्माभेदे तावत्प्रत्यक्षादि-सर्वमानविरोधः। सर्वैर्वादिभिरुद्धाव्यते। तद्भेदेप्यसङ्गेऽशनायाद्यतीते, आत्मन्यपहतपाप्मादिलक्षणे, सर्वज्ञे सर्वशक्तौ परमात्मनि च। सकर्मवादिभिरुद्धाव्यते। अन्यथाऽकर्तृभोक्तृभावे, कर्मणामीश्वराराधनार्थत्वे वा स्वर्गादिसाधनतया, कर्मविधिविरोधात्। तमिमं विरोधमपारयन्तोऽसमापयन्तः परिहर्तुमशक्नुवन्त-इत्यर्थः। वेदान्तानामुपास्तिविधितात्पर्ये हि सति न तत्त्वमसीत्यादेः स्वार्थपरत्वम्। अपि तात्पर्यभेदे विध्येकवाक्यत्वायोगात्। युक्तं प्रयाजादिविधेरवान्तरतात्पर्यं दर्शादिविध्येकवाक्यत्वं च, अविरोधात्। उपास्योपासकरूपभेदसापेक्षस्य पुनरुपास्तिविधेरेव विरोधे सति, न तत्त्वमसीत्यादेरवान्तरतात्पर्यमप्युपगन्तुं शक्यम्। यथाहुराचार्याः—"त्वं कुरु त्वं तदेवेति प्रत्ययावेककालिकौ। एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद॥" इति।

तदेवं स्वार्थपरत्वाभावान्मानान्तरविरोधे सति "आदित्यो यूप" इत्यादिवद्वा, "उषा वा अश्वस्य मेध्यस्य शिरः" इत्यादिवद्वा, सामानाधिकरण्यमन्यार्थम्। अपि स्यात्तात्पर्यविषयोपास्तिविधेरविघातात्। एवं "असङ्गो ह्ययं पुरुषः अपहतपाप्मा विजरो विमृत्युः" इत्यादिवादा अपि "तृतीयस्यामितो दिवि साम आसीत् सोमस्यांशवः परापतन् ते पूतिका अभवन्" इत्यादिवत् गुणवादा एव स्युः। अन्यथाऽऽत्मनोऽसङ्गत्वादवान्तरतात्पर्येणाप्यवबोधिते, तस्यैवोपास्तिविधेरयोगात्। ब्रह्मात्मावबोधतात्पर्ये पुन-रागमस्य, उपास्तिविधेरपि तदर्थत्वात्, निरवकाशत्वेन च प्रबलत्वान्मानान्तरान्यथासिद्ध्या, तद्विरोधो-ऽपोद्येतेति।

अथ कथं मानान्तरविरोधे सत्यागमस्य ब्रह्मतात्पर्यमेवाधिगन्तव्यम्? ताद्रूप्येण तद्विपर्ययेण वा परिच्छिन्ने "अग्निर्हिमस्य भेषजं" "ग्रावाणः प्लवन्त" इत्यादाविवागमतात्पर्यायोगात्। तथा च मानान्तराविरोधे सति तात्पर्यं, तात्पर्ये च सति मानान्तरान्यथासिद्ध्या तदविरोध इतीतरेतराश्रयतेति। न। प्रथमं तावदागमतात्पर्यमनपेक्ष्यैव शब्दव्युत्पत्तिमात्रप्रसूतब्रह्मात्मापातप्रत्ययेनापि बहुशो दृष्ट-व्यभिचारस्यापि प्रत्यक्षादेरनाश्वसनीयत्वे शङ्किते, जात्यैव निश्चितप्रमाणभावस्यागमस्य उपक्रमोपसंहारादि-लिङ्गैरेव तात्पर्यावगततमोपपत्तेः। यथाहुः—"तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव। न तलं विद्यते व्योम्नि न खद्योतो हुताशनः॥ तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम्। प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्॥" इति च। तस्माद्ब्रह्मात्माद्यनपवादमिच्छता तत्प्रतिपादन एव तात्पर्यमुपगन्तुं न्याय्यम्। अथार्थवादादेः स्वार्थतात्पर्यमनपेक्ष्य विधिपरस्यैव, कर्मणि शब्दे च विरोधप्रतिभासे सत्येव देवतादिप्रतिपादकत्वमिष्यते। विरोधश्च समाधीयते। "विरोधश्च कर्मणीति चेन्नानेकप्रतिपत्तेः", "शब्द इति चेन्नातः प्रभवात्" इत्यादिना। एवमिहाप्युपास्तिविधिशेषेणैव ब्रह्मात्मप्रतिपादने

विरोधस्समाधास्यत इति चेत्, कथं पुनरसङ्गादिवादस्य कर्तृत्वभोक्तृत्वाद्यालम्बनविधिप्रत्यक्षादिविरोधः समाधीयताम्। प्राक् कर्त्रादिस्वभाव एव सन् यथाशब्दमुपासनया, असङ्गादिरूपः सम्पत्स्यत इति। तदशक्यं स्वभावहानायोगात्। अथ कर्त्रादिरौपाधिकः, उपासनयोपाधिविलये सति असङ्गादिस्वभाव-एवावतिष्ठत इति, तदप्यशक्यम्। यदि ह्युपाधिना कर्तृत्वादिरात्मनि क्रियते, वस्त्रे भल्लातकादिकलङ्क-वदित्युच्येत, निरञ्जनत्वनिर्विकारत्वादिवादेषु विरोधः। अथोपाधिनाऽऽरोप्यत इति तर्हि असङ्गत्वादि-बोधनेनैव कर्तृत्वाद्युपमर्दे, बुद्धस्योपास्तिविधिविरोधः। तदवबोधार्थे चोपास्तिविधौ, प्रागवबोधात्कर्तृत्वा-द्यनुपमर्दादविरोधः। तस्मान्मानान्तराविरोधेन वस्तुसिद्धिमिच्छता, ब्रह्मात्मादिवादेषु नोपास्तिविधिशेषत्व-मुपगन्तुं युक्तम्। यत्पुनरात्मेत्येवोपासीतेत्याद्युपास्तिविधिरित्युदाहृतं, तन्न, एवकारोपहतविधिशक्तित्वात्। "षड्विंशातिरित्येव ब्रूयादि" तिवत् प्राप्तविषयत्वाच्च। यथा न चतुस्त्रिंशदिति ब्रयादिति, "चतुस्त्रिं-शद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य" इति वैकृतमन्त्रनिषेधे "षड्विंशतिरस्य वंक्रय" इत्यस्यातिदेशत एव प्राप्तस्य "षड्विंशतिरित्येव ब्रूया" दिति एषोऽनुवादः। एवमिहापि "स एष इह प्रविष्ट" इति प्रकृत्य "प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः" इत्यादिनिर्दिष्टेष्वौपाधिकनामरूपविशिष्टेष्व-नुयायिनमात्मानमपश्यन्, "स योत एकैकमुपास्ते प्राणिमि वच्मि पश्यामी" त्यादिप्रकारेण "न स वेदे" त्यादिनिन्दया, न तथोपासीतेति निषेधे सिद्धे, अर्थप्राप्तमात्मेत्येवोपासनमशेषस्याहंयोरिति, न विधेयमवशिष्यते। एषैव "आत्मानमेव लोकमुपासीत" इत्यत्रापि योजना। "यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते" इति निन्दया "किं प्रजया करिष्यामः "न कर्मणा न प्रजये" त्यादिदर्शनात, न कर्मोपासीतेति निषेधे सिद्धे, स्वात्मतत्त्वप्रतिपादनादेव तदुपासन-स्यार्थसिद्धत्वादिति। भाष्यकृतस्तु, अनात्मनिषेधेनात्मतत्त्वज्ञानस्यैव "सिद्धमेवात्मोपासनमारब्धबला-दनात्मदर्शनप्रसक्तौ पाक्षिकं मा प्रसांक्षीत" इति तन्नियमार्थमपि स्यादित्याहुः। सर्वथाऽपि न वेदान्ता-नामुपस्तिविधिशेषता युक्तेति ॥ २२ ॥

वैधं फलं सकलमाकलयन्ति सन्तो
वेधोविधातरनुषञ्जितबाधमन्तः।
निर्बाधमन्थरसुखं तु भवन्तमिच्छ-
न्नच्छाशयो न विधिमृच्छति तत्र हेतुम् ॥ २३ ॥

अथ वेदान्तानामुपास्तिविधिशेषत्वेऽपि, विधितात्पर्यादेव फलत्वेन ब्रह्मात्मादिसिद्धिरविरुद्धेत्यतो नापवाद इत्याशङ्क्य किमुपास्तिविधेरुपास्यसाक्षात्कारः फलम्? स च वस्तुतत्त्वविषयः? इति तत्सिद्धि-रभिमता, उत साक्षाद्ब्रह्मात्मभावादिरेव फलमिति? नाद्यः, उपास्तिविधिविषयत्वेनैव मनोब्रह्मेत्यादिवत्। परोक्षगृहीते भावनामयसाक्षात्कारस्य विधुरपरिभावितकामिनीसाक्षात्काराभासवदवस्तुतन्त्रत्वात्। न खलु विधेयोपासनापि प्रमाणतया क्लृप्ता। येन वस्तुतत्त्वसाक्षात्कारः तत्फलं कल्प्येत। प्रमाणसहकारिणी

सेति, तत्र विधेयश्रवणादेरिव वस्तुतत्त्वसाक्षात्कारः फलं स्यादिति चेत्, तर्हि तत्सहकार्यं प्रमाणमागम एवेति, तत्प्रतिपादकागमशेषतैवोपास्तिविधेरपि प्राप्ता। न द्वितीयः। विधेयक्रियायाः सिद्धवस्तुफलत्वानुपपत्तेरित्यभिप्रेत्याह—वैधमित्यादि।

वैधं, विधेयक्रियाहेतुकम्। सकलम्, बाह्यान्तरक्रियाहेतुकत्वभेदमुत्पाद्याप्यादिभेदं वानपेक्ष्य सर्वमेव फलम्। अन्तरनुषञ्जितबाधम्, आस्तां तावदन्ते क्षयदर्शननिमित्ता बाधा, अन्तर्मध्येप्यनुषञ्जिना स्वभावेनैवानुषक्ता कृता बाधा यस्य तत्तथा। कर्मसाध्यस्य हि फलस्य तारतम्यदर्शनक्षयानुसन्धानादुपभोगदशायामपि दुःखमविनाभूतमित्यर्थः। अथवा कर्मणैव फलं साधयताऽनुषञ्जितः बाधः क्षयः यस्य तत्तथा। कर्म खलु स्वभावादन्तवदेव फलं साधयतीत्यभिप्रायः। अन्तरित्यनेन अन्तर्गुण एवायं क्रियाफलस्य क्षयस्वभाव इत्यतो न कथञ्चित्परिहर्तुं शक्यत इति दर्शयति। विधेयविशेषणमेतत्। तथात्वेन सन्तो ब्रह्मविद आकलयन्ति। आङुपसर्गोऽयमभिव्याप्तौ। कलनस्याभिव्याप्तिश्च, सर्वतः श्रुतिस्मृतिदर्शनम्। "यदिह वाप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते", "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति, यजते, तपस्तप्यते, बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति", "एवमेवामुत्र पुण्यचितो लोकः क्षीयते", "असिन्कृतं तत्परिगृह्य सर्वममुत्र भुक्ते पुनरेति मार्गम्" इत्यादिस्मृत्यालोचनेन "भावनाजं फलं यत्स्याद्यच्च स्यात्कर्मणः फलम्। न तस्यास्त्विति मन्तव्यं पण्यस्त्रीसङ्गमं यथा॥" इति कथयन्तीत्यर्थः। "यो ब्रह्माणं विदधाति पूर्वं"मिति श्रुत्यनुसारिणा हे वेधो विधातरिति सम्बोधनेन, कर्मणो हि सोपासनस्यापि ब्रह्मलोकः परं फलम्। "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते", "य एवमेतद्विदुः येचारण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ती"ति प्रस्तुत्य "तान्वैद्युतान्पुरुषो मानव एत्य ब्रह्मलोकान्गमयति", "यः पुनरेतत्त्रिमात्रेणोमित्येतेनैवाऽक्षरेण परं पुरुषमभिध्यायति स सामभिरुन्नीयते ब्रह्मलोकं" इत्यादिश्रुतिदर्शनात् सोऽयमपि स्वर्गान्तर्गतः संसार एवेति सूचयति। अत एव "एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते तेषामिह न पुनरावृत्तिः" इति। इममिहेति विशेषणान्मानवान्तरे पुनरावृत्तिदर्शनमुपपन्नम्। अथ कल्पान्तरेऽपि श्रुतिवृत्त्यविशेषादिममिहेति विशेषणादेव कल्पान्तरेप्यनावृत्तिर्गम्यते। अन्यथा, "यतो वा इमानि भूतानि जायन्ते" इति विशेषणात्, सर्गान्तरे भूतानां ब्रह्मकारणत्वनिषेध आपद्येतेति चेत्, न, "एतेन प्रतिपद्यमाना" इति वर्तमाननिर्देशाविशेषणात्, तत्तन्मानवे ब्रह्मलोकं प्रतिपद्यमानास्तत्तन्मानवं नावर्तन्त इत्येव श्रुतिवृत्त्यविशेषोपपत्तेः। यतो वा इमानीत्यादौ तु नैवं विधिः प्रतिबन्धोऽस्तीति विशेषः। तथाचोदीरितश्रुत्युपपत्तिमूला स्मृतिः "आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति। एवं विधिफलं सकलमनित्यमिति स्थिते, निर्बाधमन्थरसुखं तु विधिफलत्वानर्हत्वसूचनार्थस्तुशब्दः। क्षयित्वलक्षणाद्बाधात्तदनुसन्धानमूलाया बाधायाश्च निर्गतम्। नित्यनिर्दुःखमिति यावत्। मन्थरं स्तिमितं अतिगम्भीरमिति यावत्। तादृशं सुखं भवन्तं नित्यनिरतिशयानन्दात्मकं परमात्मानमित्यर्थः। यच्छ्रुतिः—"आनन्दो ब्रह्मेति व्यजानात्", "विज्ञानमानन्दं ब्रह्म", "कं ब्रह्म खं ब्रह्म", "या वै भूमा तत्सुखम्" इत्याद्या। तमिच्छन् मुमुक्षुरित्यर्थः।

अथ "तेषां सर्वेषु लोकेषु कामचारो भवति स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरस्समुत्तिष्ठन्ति" इत्यादिश्रुतसमग्रभोगसम्पन्नब्रह्मलोकान्तिकामनैव मुमुक्षेत्यस्ति मुमुक्षोरुपास्तिविधेरवकाश इत्यत आह अच्छाशय इति। अच्छो विमल आशयो यस्य स तथा। पुत्रेणैवायं लोको जय्यः कर्मणा पितृलोको विद्यया देवलोक" इति श्रुतसकलसाध्यसाधनैषणामलरहिताशयस्य हि मुमुक्षा, न देवलोकविशेषब्रह्मलोकविषया युक्तेत्याशयः। "स एवं पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च" व्युत्थितो मुमुक्षुः। तत्र इष्यमाणे मोक्षे। विधिं विधेयक्रियाम्। हेतुं नार्च्छति, नाभ्युपैति तत्रेत्यनेनापरोक्षप्रकाशानन्दसत्तामात्रपरमात्मपरिशेषतैव मोक्षः। न संसारानर्थनिवृत्तिमात्रम्। तेन प्रायश्चित्तविधिफलपापध्वंसवत् ज्ञानविधिफलमपि नित्यं स्यादिति न शङ्कनीयमिति सूचयति। न खलु दुःखाभाव एव पुरुषार्थः। तस्य सुखशेषत्वात्। अन्यथा बह्वायासे निन्दिते ग्राम्यधर्मादावप्रवृत्तिप्रसङ्गात्। नन्वचिकित्सितमहारोगस्य प्राप्तमपि शरीरसुखमनपेक्ष्य दुःखनिवृत्त्यर्थैव प्रवृत्तिरुद्बन्धनादौ दृश्यते। सत्यम् दृश्यते। हिमकणस्पर्शमभिभूयांगारराशिपरिवर्तनतापस्येव, सुखलवानुभवमभिभूय रोगदुःखस्यैवोत्कटत्वात्। यदि पुनरस्य क्षणमपि निर्दुःखसुखलवानुभवोऽपि संभाव्यते, अनुमन्यतेतमाम्। इत्यतः सुखार्थतयैव रोगदुःखनिवृत्तिरपि काम्या। तच्च निर्गलितनिश्शेषदुःखं परमं सुखमात्मैवेति, न क्रियाफलं युक्तम्। अथैवमपि दुःखनिवृत्त्यंशेन क्रियासाध्यता स्यात्। केवलज्ञानसाध्यतापि हि तथैव वक्तव्येति, नैवं, अनर्थस्याविद्यामूलतया तन्निवृत्तेर्ज्ञानैकसाध्यत्वात। तथा च श्रुतिः "तरति शोकमात्मवित्", "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्," "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्ये"त्यदिः। नन्वनुष्ठाय न शोचति इत्यादौ, उपासनाया अपि शोकनिवृत्तिहेतुत्वमवगम्यते। सत्यम्। किन्तु तत्र ज्ञानमुपसंह्रियते। उपास्तेरपि विद्यासाधनत्वात्। यथा श्रुतिः "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति। स्मृतिश्च "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ इत्याद्या। अन्यथा साक्षादेव विधेयोपास्तिक्रियासाध्यत्वे मोक्षस्य, तारतम्यमापद्येत। आप्रायणानुष्ठेया हि सा। प्रायणं चानियतकालम्। अतस्तत्कालह्रासदैर्घ्याभ्यां तारतम्यवती। साधनतारतम्ये च फलतारतम्यम्। सूत्रितं जैमिनिना "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषस्स्यात्" इति। आह कश्चित्कालह्रासदैर्घ्यकृतं साधनतारतम्यं फलतारतम्येऽतन्त्रम्। शिक्षिताशिक्षितानुष्ठीयमानयागस्यैकस्यैव तथा तारतम्ये फलतारतम्यप्रसङ्गादिति, तत्तुच्छम्। अनुष्ठेयक्रिया हि शिक्षितस्याशिक्षितस्य वा तावत्येव, यावती फलाय चोद्यते। उपास्तिक्रिया तु प्रत्ययावृत्तिलक्षणा, नैरन्तर्येणानुष्ठीयमाना कस्यचिद्भूयसी, कस्यचिदल्पीयसी स्यादिति, क्रियातारतम्यं फलतारतम्यमनिवार्यमेव। अथ कश्चिदबलः शतशः सहस्रशो वा परशुनिपातनैर्दारु विदारयति, अन्यस्तु प्रबलः सकृद्द्विस्त्रिर्वा परशुनिपातनैः। न च तावता दारुविदारणे तारतम्यम्। किं कारणम्? तस्यानतिशयस्वभावत्वात्। एवं मोक्षेऽपि स्यादिति चेत् सत्यम्, मोक्षो निरतिशयस्वभावः। अत एव स न सातिशयसाधनसाध्यः संभवतीत्याचक्ष्महे। अबलप्रबलकृतमृदुदृढपरशुनिपातनेषु पुनः, दारुविदारणहेत्ववयवविश्लेषणद्वारत्वादनेकावयवविश्लेषणक्रमयौगपद्याभ्यां तारतम्यमर्थवद्भविष्यति। न चैषा

गतिरुपासनायामुपपद्यते । कर्मविद्यानिवृत्तौ वा, देवयानपथप्राप्तौ वा लिङ्गभङ्गे वाऽपहतपाप्मादिस्वरूपादिनिष्पत्तौ वा, विशेषस्योत्प्रेक्षितुमशक्यत्वात् । यद्येवं, किं तर्हि तव दहराद्युपासनसाध्यम् ? यत्र तत्तारतम्यमर्थवत् । ब्रह्मणा सालोक्यं सामीप्यं सार्ष्टिः सायुज्यं चेत्यनेन, भोगपर्वाऽऽब्रह्मलोकाप्तिरेवेति ब्रूमः । सा च संसारगतिरेव । आवृत्तिश्रवणादित्युक्तम् । "न च पुनरावर्तते," "एतस्मान्न पुनरावर्तन्ते" इत्याद्यपुनरावृत्तिवादास्तु तत्तदावर्तविषयास्तल्लोके तत्वविविदिषया वा नेतव्याः "स एतस्मात् जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" ते "ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रति सञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥ इत्यादिदर्शनात् । तस्मादुपास्तिविधौ मुमुक्षोरनपेक्षैवेति सिद्धम् ॥ २३ ॥

आयासहायमवबोधनमात्रलभ्य-
मानन्दसारमुपहारयतीश यस्त्वाम् ।
तं प्रेरणैकविषयं निगमं निगाते
व्यायामतः स्तिमितसत्वतया सुखीयन् ॥ २४ ॥

स्यादेतद्यद्येवमुपास्तिविधिपरत्वमपि वेदान्तानां व्यापाद्येत । कथं तर्हि तेषां पुरुषार्थपरता ? कथंतरां तदभावे प्रामाण्यं वा ? न हि वस्तुतत्त्वप्रतिपत्तिमात्रेण पुरुषव्यापारमनपेक्ष्य "सप्तद्वीपा वसुन्धरा" इत्यादौ, "प्रजापतिरकामयत प्रजास्सृजेये"त्यादौ वा, कश्चिल्लौकिको वैदिको वा पुरुषार्थ उपलब्धचरः । सुखाप्तिदुःखहान्योः सर्वत्रैव क्रियासाध्यत्वदर्शनात् । अत एव हि भूतार्थानामानर्थक्यादप्रामाण्यं मा प्रसांक्षीदिति, जैमिनिना तेषां क्रियाविधिशेषत्वमावेदितम् । "तद्भूतानां क्रियार्थेन समाम्नाय आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् । तस्मादनित्यमुच्यते विधिना त्वेकवाक्यत्वात्स्तुत्यर्थत्वेन विधीनां स्युः । उक्तं समाम्नायैदमर्थ्यम् । तस्मात्सर्वं तदर्थं स्यात्" इत्यादिना । न च विधिमन्तरेण निश्रेयससाधने ज्ञानेऽपि प्रवृत्तिरुपपद्यते । श्रूयते च वेदान्तेषु वस्तुतत्त्वप्रतिपत्यनन्तरोऽपि विधिः, "आत्मानमनुविद्य विजानाति," "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इत्यादिः । तस्माद्यदि वेदान्तानां प्रामाण्यमनुसर्तव्यं, यदि वा पुरुषार्थपरत्वं, तदा ज्ञानक्रियाविधितात्पर्यमपि बलादाश्रयणीयम् । इति विधिव्यसनिशङ्कामात्र परिहरन्नाह **आयासेति** । **आयासहायं**, आयासं हित्वा । 'द्वितीयायां चे'ति णमुल् । यथाह स्वर्गसाधनयागस्वरूपनिर्वृत्तौ परम आयासस्तदुपकरणसम्भरणादिक्लेशान् न तथा निश्रेयससाधनज्ञानस्वरूपनिर्वृत्तौ । तस्यापि दिग्भ्रम्यादिज्ञानवत् प्रमाणवस्तुतन्त्रत्वाद्यद्यपि ज्ञानार्थं एवात्मा द्रष्टव्यः श्रोतव्यः इत्यादिशमदमाद्यङ्गकश्रवणादिविधिरुपेयते । तथापि स दुरितोपहतचित्तस्य तात्पर्यग्रहप्रतिबन्धकदुरितनिवृत्तिद्वारा प्रमाणसहकारितयैव, सारस्वतादिसिद्ध्यर्थं ग्रन्थाभ्यासादिसहकारितया वाग्देवताराधनादिविधिदर्शनात् । विशुद्धचित्तस्य तु प्रमाणप्रवृत्त्यैव वस्तुतत्त्वज्ञानमुत्पद्यते । **यथाहुराचार्याः**-
"कृत्स्नानात्मनिवृत्तौ तु कश्चिदाप्नोति निर्वृतिम् । श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते च वचोऽपरः ॥

वाक्यश्रवणमात्राच्च पिशाचकवदाप्नुयात्" । इति । अपि च श्रवणादिविध्यनुष्ठानमनायास एव । सर्वायासोपशमात्मकत्वात् । जागरायासोपशमसुषुप्तियत्नवत् । तस्मात्सूक्तमायासहायमिति । अव-बोधनमात्रे सति लभ्यम् । यथा यागादेरवबोधानन्तरं, अनुष्ठानायासान्तरायेण कालान्तरे लभ्यं स्वर्गादिफलं, न तथेहात्मावबोधानन्तरमनुष्ठानान्तरायः कालान्तरव्यवधिर्वेत्यर्थः । "ब्रह्म वेद ब्रह्मैव भवति," "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे" इत्यादौ, तिष्ठन्गायतीत्यादौ तिष्ठतिगायत्योरिव ज्ञानतत्फल-योरनन्तरायश्रवणात् । अनेन "विज्ञाय प्रज्ञां कुर्वीत"त्यादौ न ब्रह्मात्मबोधानन्तरं किञ्चित्कर्तव्यतया चोद्यते । अनियोज्यब्रह्मात्मावबोधविरोधात् । उदाहृतश्रुतिविरोधाच्च । किन्तु तदवबोधार्थमेवाग-माचार्योपदेशजनितज्ञानानन्तरं प्रकृष्टं ज्ञानं मननात्मकं निदिध्यासनात्मकं वा विधीयते । ताभ्यां यथा-क्रममसंभावनाविपरीतभावनानिवृत्तौ, आगमादेव तत्त्वावबोधः प्रसूयेतेति । यथा क्रियासमभिहारेण परि-शील्य भावनया च, चक्षुषैव रत्नतत्त्वावबोधः इति उपपादितं भवति ।

नन्वेवमनायासलभ्यमल्पायासलभ्यं वा फलमसारमल्पं च स्यात्, आलस्यलीलासुखवदिति, महाफल-कामस्य तदपेक्षा न शङ्कनीयेत्यत आह आनन्दसारमिति । विषयवृत्तिविच्छिन्नानामानन्दानां यस्सारः । स्थिरांशः आत्मस्वरूपानन्द एव हि विविधविषयवृत्तिविच्छेदेन प्रियमोदादिलक्षणो विषयानन्द इत्यभिधी-यते । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतेः । अतिरेके मानाभावाच्च । तेषु च विशेषेषु विषयवृत्तिविच्छेदविलयाद्विलीयमानेषु, तदनुगतस्वभावानन्दात्मा तदवस्थो विकृतोऽवति-ष्ठते । इत्यतस्तेषां सार उच्यते । तं त्वां, यो निगमः उपहारयति, उपेत्युपसर्गः सामीप्ये । तच्च प्रत्यगात्मनि समाप्यते । ततश्च प्रत्यगात्मतया हारयति बोधयतीत्यर्थः । उपहारयतीत्यनेन यथा सामन्तादय उपहारितमुपायनं चक्रवर्तिने दर्शयन्त एव केवलं प्रमदमावहन्ति, तथा निगमोऽपि प्रति-पादितं निरतिशयानन्दं ब्रह्मात्मानमवबोधयन्नेव' मुमुक्षवे कैवल्यसुखमावहति । न तु किञ्चित्कारय-न्निति सूचयति ईशेति सम्बोधनेन, यथेशो वस्तुशक्त्यनुरोधेन विक्रियया पृथिव्यादिकं प्राण्युपकाराय नियच्छति । कालाकाशादिकं तु कूटस्थतयैव, तथा निगमोऽपि यागादिक्रियां फलाय कर्तव्यतया बोधयति, ब्रह्मात्मानं पुनः कैवल्येन केवलमवबोधयति । न तु सर्वत्रैकरूप्यमनुसर्तव्यमिति गमयति । एव-मनायासेन परमपुरुषार्थपरं निगमं । स्तिमितसत्वतया, स्तिमितमालस्येनाभिभूतं सत्वं प्रशमप्रसाद-लक्षणः सत्वगुणो यस्य स तथा, तस्य भावस्तत्ता, तया हेतुना । व्यायामतः शरीराद्यायासाद्धेतोरुष्ट्र-इव लगुडप्रहारात् । सुखीयन् सुखमात्मन इच्छन् । यमधिकृत्येदमुक्तं, "अत्यन्तस्तिमिताङ्गानां व्यायामेन सुखैषिणाम् । भ्रान्तिज्ञानवतां पुंसां प्रहारोऽपि सुखायते" ॥ इति, स तादृशो मूढः । प्रेरणैकविषयं, प्रेरणा प्रवर्तनाविधिरित्यर्थः । सैवैको मुख्यो ब्रह्मात्मा तु तच्छेषतया विषयो यस्य तम् । विधेयविशेषणमेतत् । तथात्वेन निगाते निगच्छति । अनायासेन महाफले सिद्ध्याया-साय विधिपरत्वं नाश्रयणीयमित्यर्थः ।

अयमाशयः न तावत्पुरुषार्थपरतयैव प्रमाणानां प्रमाणत्वम् । अनर्थोपेक्षणीयविषयाणामप्रमाण-त्वाभावात् । किन्त्वबुद्धवस्तुबोधकतयैव । आगमस्य परमध्ययनविधिपरिग्रहात् पुरुषार्थपरत्वमधिकम् ।

तत्र यदि तावदर्थोऽलब्ध एव, लिप्सितो यथा लौकिकस्स्रगादिः, वैदिकस्स्वर्गादिर्वा, अनर्थश्चाहीन एव, जिहासितो यथा वलयितचरणः फणी,पाप्मा वा तदा तदाप्तिहानी पुरुषप्रवृत्तिमपेक्षेते । अथ पुनरर्थो लब्ध एव, मोहादलब्ध इव लिप्सितो यथा प्रस्मृतं ग्रीवायां प्रतिमुक्तमेव ग्रैवेयकम् । अनर्थश्च हीन एवाज्ञानादहीन इव जिहासितो यथा चरणवलयारोपितः फणी, तत्र बोधमात्रादेव तदाप्तिहानी, न पुरुषप्रयत्नमपेक्षेते । तदेवं सति पृथिवीवर्णकादौ सर्गाद्यर्थ एव वा न पुरुषार्थस्स्यात् । माभूत । न तु तद्दृष्टान्तेन स वेदान्तेष्वपवदितुं शक्यः । प्रकाशैकरसानतिशयानन्दात्मन्येवाविद्यया संसारानर्थाद्यारोपादात्मतत्त्वावबोधमात्रादेवार्थानर्थाप्तिहानोपपत्तेः । अनर्थश्चात्मन्यविद्यामूल एवेति व्यवस्थाप्यते । एवं सति यज्जैमिनेरक्रियार्थानामर्थवत्त्वाय क्रियाविधिशेषत्ववचनं, तत्कर्मकाण्डीयार्थवादादिविषये शिक्षणीयम् । शिक्षितं च प्राचीनैराचार्यैः " अवबोधनमात्रेण प्रसिद्ध्यति परामृते । आयासविचितात्पर्यं वेदान्तेषु किमीयताम्" । तथाह्याभाणकः "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत्" । इति । यत्तु विना विधिं ज्ञानेऽपि प्रवृत्तिर्न स्यादित्यादि, तत्र वक्तव्यमुक्तमेव । अपि च न विधिर्बलवदनिलादिवदर्थानर्थाप्तिहानिभ्यां पुरुषं प्रवर्तयति । प्रमाणस्वभावविरोधात् । प्रमाणेन च सता पुरुषार्थपरेण विधिना, तदेवावबोधनीयम् । यदवबोधे सति स्वयं पुरुषः प्रवर्तते । तच्च, शक्यस्य सतो हितसाधनत्वमेव । न खलु कृतिसाध्यमिति वा प्रवर्तनेति वावबोधे सत्यपि विषाशनादौ पुरुषः प्रवर्तते । उक्तं च तन्त्रवार्तिककृता "श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते" इति "तथा धात्वर्थकर्मत्वे पदश्रुत्योपदर्शिते । भावनाया विधिश्रुत्या पुरुषार्थांशसाध्यता" इति च । "हितसाधनतत्त्वे च शास्त्रेण प्रतिपादिते । प्रवर्तेत यथाकामं निवर्तेताऽथवा स्वयम्" ॥ ज्ञाने च हितसाधनत्वं "ब्रह्मविदाप्नोति पर"मित्याद्यर्थवादेनापि शक्यमधिगन्तुमिति तत्र विधिव्यसनमनर्थकम् ।

किञ्चैवं कृत्स्नस्य वेदस्य क्रियाविधिनैव पुरुषार्थपरत्वनिर्बन्धे "ब्राह्मणं न हन्यात्", न सुरां पिबेत्", इति निषेधानर्थक्यं स्यात् । न हि तत्र हननं पानं वा क्रिया विधीयते । रागप्राप्तत्वात् । न च निषेधस्याभावार्थस्य विधिरुपपद्यते । भावार्थविषयत्वाद्विधेः । तथा च सूत्रम् "भावार्थाः कर्मशब्दाः तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयत इति । अत्र केचित्—न हन्यात् हननाभावं कुर्यादिति अभाव एवाग्निभक्षणसम्बन्धव्यापारेण विधीयते । लिङादिप्रत्ययस्य विधिशक्तत्वात् । अतो यागादिविधितुल्यतैव निषेधविधेरिति, नाक्रियार्थता । तत्रैकत्राभावानिरूपितव्यापारस्यैव विधेयत्वादन्यत्र भावरूपस्यैव व्यापारस्य विधेयत्वाच्च । विधिनिषेधभेदव्यवहारः । क्रियाविधिस्तु सर्वत्र न विशिष्यते इति ।

अन्ये मन्यन्ते— रागादिप्राप्तप्रवर्तनानुवादी लिङादिप्रत्ययः । यद्धन्यात्पिबेद्वेति । तन्नेति तु तद्विरोधी निषेधो बोध्यते । निषेध इति च नाभावः । रागादिप्राप्ताया हननादिप्रवृत्तेरभावबोधनानुपपत्तेः । किन्तु निवर्तना यस्यामवबोध्यमानायां 'निवर्तेय'ेति मतिः प्रवृत्त्युन्मुखस्य जायते । नन्वभावशक्तो नञ्, कुतो निवर्तनाबोधः ? सत्यम् अनुवादार्थेनापि विधिप्रत्ययेनानुरागाद्यदनुग्रहेणातिरिक्त-

शक्तिरुपेयते । अन्यथा विधिनिषेधयोः प्रवर्तकत्वनिवर्तकत्वाभ्यां भेदव्यवहारोच्छेदप्रसङ्गात् । यथाहुः— "अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः । दृश्यते तादृगेवेदं विधानप्रतिषेधयोः" ॥ इति । सा च निवर्तना, नञुपहितार्थनिवृत्तिभावना भाव्यका च । सा चौदासीन्यपरिपालनं प्रत्यवायाभावपरिपालनं वा भाव्यत्वेनादत्ते इति ।

अपरे पुनराहुः—अभावार्थकस्य नञो विधिप्रत्ययसमभिव्याहृतस्य, तस्य वा नञ्समभिव्याहृतस्यानिष्टसाधनताशक्तिरेव कल्प्यते । "ज्वरितः पथ्यमश्नीयान्न सर्पायाङ्गुलिं दद्यात्" इत्यादिव्यवहारेषु वृद्धप्रवृत्तिनिवृत्त्योरात्मीयप्रवृत्तिनिवृत्तिवदिष्टानिष्टसाधनताज्ञानपूर्वकत्वनिश्चये, तज्ज्ञानस्य चान्वयव्यतिरेकाभ्यां विधिनिषेधवाक्याधीनत्वावगमादिति ।

परे पुनरनेकशक्तिकल्पनमन्याय्यं मन्यमानाः परिचक्षते । विधिप्रत्ययानूदितेष्टसाधनत्वाभाव एव नञाऽवबोध्यते । अदृष्टाविरोधीष्टसाधनत्वमेवेष्टसाधनशब्दार्थ इति, न तदभावबोधने प्रत्यक्षादिविरोधः । अथवा, अनर्थादधिकोऽर्थः पुरुषार्थः । अर्थादधिकश्चानर्थोऽपुरुषार्थः । अन्यथा सर्वत्रैवार्थानर्थसंकरेण, तदव्यवस्थाप्रसङ्गात् । ततश्च हननस्य पुरुषार्थसाधनत्वनिषेधः । सामर्थ्यादर्थस्यानर्थादधिकत्वाभावे पर्यवस्यति । अथवा, सामर्थ्यादेवार्थानर्थस्याधिक्ये पर्यवसानादनर्थसाधनमित्युक्तं भवतीति ।

वस्तुतस्तु निषेधेषु तावत्प्रवृत्तिमूलज्ञानमपबाध्यते । तत्खलु बलवदनिष्टाननुबन्धीष्टसाधनतामालम्बते । इष्टसाधनतामात्रज्ञानेऽपि विषानुषक्तमध्वशनादावप्रवृत्तेः । सा च हन्यादिति विधिप्रत्ययेनानूद्य नेति निषिध्यते । विशिष्टनिषेधावबोधश्च, विशेष्ये सति विशेषणाभावमालम्बमानो बलवदनिष्टसाधनतामावेदयति । ततो रागादिबीजक्षये तदेवौदासीन्यं परिपालितं भवतीति, सर्वथैव निषेधेषु न क्रियाविधिः ।

अथ च । पुरुषार्थपरत्वमिति कुतो वेदान्तेषु तथात्वे प्रद्वेषः ? यः पुनराह— नित्यनिषेधविधिषु न नियोगनिवृत्त्यतिरिक्तपुरुषार्थपरत्वमस्तीति, स नित्यविधीनां प्रागुक्तन्यायेन पुरुषार्थपरत्वं व्युत्पादनीयः । निषेधविधिमपि पुरुषार्थाभावे दृष्टसुखं सुरापानादि परिहृत्य किमर्थमनुतिष्ठेत् ? विपर्यये प्रत्यवायभयादेवेति चेत्, तर्हि प्रत्यवायानर्थाभाव एव तदनुष्ठाने पुरुषार्थस्स्यात् । नियोज्यविशेषणमपि ह्यर्थावबोधोऽध्ययनविधिफलमुपेयते । अन्यथाऽध्ययनविधिनाऽध्यापनविधिप्रयुक्तयाप्यनुष्ठितेन न धर्मविचारो नाशास्येत । एवं प्रत्यवायानर्थाभावोऽपि निषेधविधिफलं भविष्यतीति, न विधेरेकस्य साध्यद्वयापत्तिदोषोऽपि । तस्माद्वस्तुतत्त्वावबोधनमात्रेणैव वेदान्तानां परमपुरुषार्थपरत्वं प्रामाण्यं चोपपद्यतेतमामिति सर्वं रमणीयम् ॥ २४ ॥

इति परमरहस्यं पण्डिताखण्डलानां
विमलमतिविमृग्यं वेदतात्पर्यगत्या ।
परमशिवपदस्योदस्य मानान्तराणि
प्रसव उदितमाद्ये वेदवेद्यत्वमस्मिन् ॥ २५ ॥

एवमियता प्रपञ्चेनोपपादितं प्रकरणावयवप्रमेयं पण्डितपुण्डरीकपरिशीलनीयतया तस्य परदुरूहतां दर्शयन्, इदं तदित्युपसंहरति **इति परमरहस्यमिति** ।

इतिरत्रोपसंहारार्थः । **परमशिवपदस्य** वाह्यकरणोपपादनीयधर्माराध्यत्वमेव तावद्रहस्यम् । न पृथग्जनसमवाय उपदेश्यम् । तद्विभूतिभूतनानादेवताश्रयात्ततोऽपि, तदुपासनाराध्यत्वं रहस्यतरम् । नाना गुणविकल्पाश्रयात्ततोऽपि, वेदवेद्यत्वं रहस्यतमम् । वस्तुतत्त्वमात्रालम्बनत्वात् । इत्यभिप्रेत्य परमरहस्यमित्युक्तम् । पण्डा शास्त्रविज्ञानम् । तदेषां सञ्जातामिति **पण्डिताः** । तदस्य सञ्जातं, 'तारकादिभ्य इतजि'ति, तारकादित्वादितच् प्रत्ययः । **तेषामाखण्डला** इन्द्राः । पण्डितश्रेष्ठा इत्यर्थः । तेषां **विमलया** मान्द्यदढविपरीतश्रुतिदुराग्रहदुस्तर्कसंशयविपर्ययादिकल्मषरहितया **मत्या विमृग्यं** उपपत्याऽऽलोच्यावधारणीयम् । न तु पाण्डित्यभिमानमात्रेणावधारयितुं शक्यमित्यर्थः । तदिदं परमशिवपदस्य, प्रत्यगात्माऽपि शिवः । देहेन्द्रियादिसम्बन्धनिबन्धनत्वात्तदशिवस्य । परमात्मा तु परमशिवः । नित्यासंस्पृष्टाशिवलेशनिरतिशयानन्दस्वरूपत्वात् । पद्यते गम्यत इति **पदम्** । "तदेतत् पदनियमस्य सर्वस्य यदयमात्मे"ति श्रुतेः । तस्य वेदवेद्यत्वं, वेदैरेव वेदनीयत्वम् । न तु विधेयत्वं तस्य । यदि परमशिवपदस्य मानान्तरवेद्यत्वं, न तर्हि वेदवेद्यत्वं । यस्य हि मानान्तरगम्यत्वसम्भावनापि, यथाऽश्वरशनादाने "इमामगृभ्णन्रशनामि"ति मन्त्रविनियोगस्य, पुरोडाशप्रथने "उरु प्रथस्वेति पुरोडाशं प्रथयति" इत्यस्य प्रशंसापरत्वं वा, तथा वेदस्याऽपि स्यादित्यत आह—**मानान्तराण्युदस्येति** । मानान्तराविषयत्वमुपपाद्येत्यर्थः । अथाप्यन्यपरत्वे **वेदस्य** देवताविग्रहादिवत् तद्वेद्यत्वमयुक्तम् । मानान्तरविरोधात् । इत्यत आह **वेदतात्पर्यगत्या** इति । वेदस्य तत्रैव परमतात्पर्यगमनेनेत्यर्थः । **अस्मिन्नाद्ये प्रसव उदितमिति** । इदं प्रकरणं शिवतत्त्वरत्नकलिकेति संज्ञया, कलिकात्मना रूपितम् । कलिका च नाम स्तबकः । "कलिका स्तबकेऽपि च" इति क्वचिद्दृश्यते । स बहुप्रसवसमुदायः । तदौचित्यात्स्तबकरूपितप्रकरणावयवस्य प्रसवरूपकेण निर्देश इति सर्वमवदातम् ॥ २५ ॥

**इति** श्रीशिवतत्त्वरत्नकलिकाव्याख्यायामामोदरञ्जनाख्यायां
प्रमाणवासनोल्लासः प्रथमः ॥



॥ श्रीः ॥

## अथ द्वितीय उल्लासः

यद्वेदनाय विहिताभिरिह क्रियाभिराराध्यते स्वयमुताखिलदेवतात्मा ।
तं सर्ववेदविनिवेद्यसुखैकरूपं वन्दे गुरुं परशिवं विधिदूरपारम् ॥

एवं चतुर्विंशत्या पद्यैः परमात्मनः सकलवेदपरमतात्पर्यविषयत्वोपपादनेन तत्प्रतिपादनकैवल्यलक्षणं प्रमाणवृत्तं प्रतिपादितम् । अधुना प्रमेयवृत्तं प्रतिपादयितुं, प्रथमपद्ये सूत्रितं तस्यावाङ्मनसगोचरत्वमुपपादयितुं प्रस्तौति ॥

तत्रानन्तरपूर्वपद्ये परमात्मस्वरूपानन्द एव विविधविषयवृत्त्युपाधिविच्छेदात् प्रियमोदादिभेदभिन्नो विषयानन्द उपचर्यते । तस्मिन्परमानन्दे लब्धे सकलानन्दलाभात्तल्लाभ एव परमपुरुषार्थ इति आनन्दसारपदेनावेदिते, सोऽपरोक्ष एव पुरुषार्थः इति तदपरोक्षतोपपत्तये, स च प्रत्यगात्मैवेत्युपक्षिप्तं भवति । न खलु पृथगेव जीवस्वरूपमप्यानन्दः । येन विषयवृत्त्युपाधिना स एव विषयानन्दोऽस्तु, स्वयमपरोक्षतया च पुरुषार्थ इति शङ्क्येत । तत्र हि न श्रुतिः । आनन्दो ब्रह्मेत्यादिवत् । अस्ति परमप्रेमास्पदत्वं तु लिङ्गम् । परमानन्दैकात्म्येऽप्युपपद्यते । इति स्थिते, तत्रैवमाशङ्का भवति । न स्वरूपानन्द एव विषयानन्दः । आनन्दमीमांसायां हि "युवा स्यात्साधु युवाध्यायकः, आशिष्ठो द्रढिष्ठो बलिष्ठः, तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्" इति गुणविभूतीरनुक्रम्य, तासामेवानुकूलवेदनीयतयाऽऽनन्दत्वमभिधीयते "स एको मानुष आनन्दः" इति । तासामुत्तरोत्तरोत्कर्षे च मनुष्यगन्धर्वादीनामानन्दस्योत्कर्षइत्यनुवर्ण्य, परमात्मनो गुणविभूतिपौष्कल्यात्, इयत्तया वाङ्मनसोरविषयः परमानन्द उपसंह्रियते" । "ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः" इति । स च गुणभूत आनन्दो यथायथं तस्य तस्यापरोक्ष इति, परमानन्दस्य प्रत्यगैकरस्यमनपेक्षितव्यः । मुक्तस्य पुनरभिनिष्पन्नापहतपाप्मादिस्वरूपस्य, स्वगतनिरतिशयविकासिनित्यविज्ञानेन, परमात्मस्वरूपगुणविभूतिरूपानन्दाः सर्वे एवापरोक्षा भवन्ति । "सोऽश्नुते सर्वान्कामान् सह, ब्रह्मणा विपश्चितेति" इति ह्याम्नातम् । तत्र च साधनमुपासनैवेति, कुतो ज्ञानमात्रादेव परमपुरुषार्थलाभ इति, तामिमां शङ्कां परिहरन्नाह आमानुषादिति ।

आमानुषादवरमा च हिरण्यगर्भा-
दानन्दभेदमधिकं परिमाय शम्भो ।
आनन्दवारिधिमपावधिमागमान्तो
वावक्ति वाङ्मनसयोरपदं भवन्तम् ॥ २६ ॥

आङभिविधौ "पञ्चम्यपाङ् परिभि"रिति पञ्चमी । आमानुषात् मानुषमभिविधाय, मानुषानन्दमभिव्याप्य । अवरं हिरण्यगर्भानन्दमारभ्यार्वाक्पदेष्वपकृष्टम् । आहिरण्यगर्भादिति पूर्ववत् ।

हिरण्यं हैममण्डलं, । यस्मिन् प्रजापतिर्लोकपितामहो ब्रह्मा जज्ञे । स गर्भो यस्य स तथा । यद्विषया श्रुतिः "हिरण्यगर्भस्समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत्" इत्याद्या । यद्विषयेयं निरुक्तिश्च "हिरण्मयस्य गर्भेऽभूद्धिरण्यस्यापि गर्भजः । तस्माद्धिरण्यगर्भं तं पुराणज्ञाः प्रचक्षते ॥" इति । स्मृतिश्च – "स वै शरीरी प्रथमः स वै पुरुषउच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत", "मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते"॥ इत्याद्या । "ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥ यस्य च लोकेऽरश्चारण्यश्चार्णवौ ऐरंमदीयं सरः सोमसवनोऽश्वत्थः प्रभुविमितं हिरण्मयं वेश्म" इत्यादिभिरुपवर्ण्य "ते यस्य लोकं तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्य देवयानेन पथा सम्प्राप्य न पुनरावर्तन्ते" स ज्ञानक्रियाशक्तिसमष्टिमयः परमात्मा, नः प्रथमाहम्भावभोगायतनं हिरण्यगर्भः । हिरण्यगर्भस्यायं इत्यणि, संज्ञापूर्वकविधेरनित्यत्वोपगमादादि-वृद्ध्यभावः । अथवा, हिरण्यगर्भ इति तदानन्दो लक्ष्यते । आहिरण्यगर्भात्–हिरण्यगर्भानन्दम-भिव्याप्य । **अधिकं**–परं । मानुषानन्दमारभ्योर्ध्वपदेषूत्कृष्टम् । **आनन्दभेदं,** भिद्यते परापरभावेनेति भेदः, आनन्द इति भेदस्तथा, तमानन्दविशेषं, **परिमाय**–युवास्यादित्यारभ्य 'स एको मानुष आनन्दः' इत्यादिना 'स एको ब्रह्मण आनन्दः' इत्यन्तेन गुणविभूतिविषयवृत्त्युपाधितारतम्येन तारतम्यवत्तया सर्वतः संख्याय, आगमान्तः "सैषानन्दस्य मीमांसा भवति" इत्यादिः । शं सुखं भवत्यस्मादिति शम्भुः । डुप्रकरणे "मितद्वादिभ्य उपसंख्यानं" इति भवतेर्डुप्रत्ययः । तस्य सम्बुद्धिः शम्भो इति । अनेन "एष ह्येवानन्दयति" इति श्रुतेः, अशेषविषयानन्दाङ्कुरालवालतया निरवधिकानन्दस्वरूपत्व-मावेदितं भवति । **आनन्दानां**–मानुषादीनां **वरिधिमिव** वारिधिं–समुद्रम् । यथा वारिराशेर्वायुवृत्ति-विच्छिन्ना वारिकणाः तथा निरतिशयानन्दात्मनो विषयवृत्तिविच्छिन्नाः ब्रह्माद्यानन्दा लेशाः । "एषोऽस्य परमानन्दः" "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । तदतिरेकेमा-नाभावाच्चेत्यभिप्रायः । वारिधेरवधिमत्वेन. वारिधिव्यपदेशप्रसञ्जितं तत् **वारयितुमपावधिमिति** विशेषणम् । अपरिमेयमित्यर्थः । अनेन, "स एको ब्रह्मण आनन्दः" इति न परमानन्द उच्यते, परिमितत्वादिति सूचयति । तद्वशं **भवन्तम्** । भवत ईश्वरस्य याथात्म्यं । **वाङ्मनसयोरपदं,** अविषयम् । **वावक्ति-** भृशं वक्ति । तात्पर्यमत्र भृशार्थः ।

**अयमत्राशयः** – ब्रह्मवल्यां तावत् "ब्रह्मविदाप्नोति परं" इति प्रकृत्य तदेवाप्तव्यं परं ब्रह्म घटजलाद्याकाशाधारमिवाकाशं प्रियमोदाद्यवयवानन्दमयाधारं आनन्दात्मकमभिप्रेत्य, "ब्रह्मपुच्छं प्रतिष्ठे"त्यनुकृष्य, "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिना तामेवानन्दात्मकतामुद्घाट्य, तस्यैव निरतिशयतया परमपुरुषार्थतां दर्शयितुमानन्दमीमांसाऽऽरब्धा

"सैषाऽऽनन्दस्य मीमांसा भवति" इत्यादिना। तत्र यदि गुणविभूतिलक्षणो गुणभूत आनन्द उपवर्ण्येत, स्वरूपानन्दमीमांसाप्रक्रमो विरुद्ध्येत। अतो यः शरीरादितादात्म्याध्यासमाश्रित्य युवादिरुपवर्णितः स आत्मैव, तद्गुणविभूतिविषयवृत्त्युपरञ्जनाभिव्यक्तस्वभाव एको मानुष आनन्द इत्युच्यते। "युवा स्यात्साधु युवाध्यायकः, स एको मानुष आनन्दः" इति सामानाधिकरण्य-सामञ्जस्योपपत्तेः। अत एव "प्रजापतिर्वरुणायाश्वमानयत्, स स्वां देवतामार्च्छत्" इत्यत्र समान-विभक्तिनिर्देशेन सामानाधिकरण्यम्। 'स' इति प्रजापतिरेवावमृश्यत इत्यतो दातुरेवाश्वप्रतिग्रहेष्टिरिति व्यवस्थितं प्रथमतन्त्रे। ततश्च मनुष्यगन्धर्वादावुत्तरोत्तरगुणविभूत्युत्कर्षनिबन्धनाभिव्यक्तितारतम्यात् सातिशय इव संख्यात इव च निर्दिश्यते। "स एको ब्रह्मण आनन्दः" इति च हिरण्यगर्भानन्द-एवोच्यते। प्राजापत्यानन्दशतगुणितत्वेन परिमितत्वात्। पुराणे हि प्रजापतेरनन्तरमाविर्भूताति-शयितशक्तिर्हिरण्यगर्भो निर्दिष्टः। "शक्रः समस्तदेवेभ्यस्ततश्चापि प्रजापतिः। हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः॥" इति। "श्रोत्रियस्य चाकामहतस्ये"ति तस्य श्रोत्रियाकाम्यत्वाभि-धानाच्च। न हि सर्वतो विरक्तस्यापि श्रोत्रियस्य मुमुक्षोः ब्रह्मानन्देप्यकामहतत्वमुपपद्यते।

अथ यद्यपि "एतद्वै सत्यकामपरं चापरं च ब्रह्म, यदोंकार" इत्यादिदर्शनात् ब्रह्मश्रुति-र्हिरण्यगर्भेऽपि न विरुध्यते। तथाप्यत्र प्रकरणे "ब्रह्मविदाप्नोति परं" "ब्रह्मपुच्छं प्रतिष्ठा", "असद्ब्रह्मेति वेद चेत्," "आनन्दं ब्रह्मणो विद्वान्" इत्यादौ ब्रह्मशब्दः परमात्मवृत्तिरेव दृष्टः। तत्प्रायपाठादयमपि तथैव भवितुमर्हति। परिमितत्ववादस्तु तत्प्रायवादसम्पातायातः। अथवा, "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटि कोटिशतानि च॥ रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते॥" इति पुराणे दर्शनादण्डाभिमान्यनन्तप्राजापत्यानन्द-शतगुणितैकानन्दवाचोयुक्त्या परिमितानन्द एवोक्तो भवति। श्रोत्रियस्य चाकामहतस्येति च पूर्वपूर्वपदाकामहतस्योत्तरोत्तरानन्द इत्युच्यते। स एव चेयत्तया वाङ्मनसयोरगोचर उच्यते। निर्दिश्यते। "स एको ब्रह्मण आनन्दः" इति च हिरण्यगर्भानन्द एवोच्यते। प्राजापत्यानन्द-शतगुणितत्वेन परिमितत्वात्। पुराणे हि प्रजापतेरनन्तरमाविर्भूतातिशयितशक्ति र्हिरण्यगर्भो निर्दिष्टः। "शक्रस्समस्तदेवेभ्यस्ततश्चापि प्रजापतिः। हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः"॥ इति। "श्रोत्रियस्य चाकामहतस्ये"ति तस्य श्रोत्रियाकाम्यत्वाभिधानाच्च, नहि सर्वतो विरक्तस्यापि श्रोत्रियस्य मुमुक्षोः। ब्रह्मानन्देप्यकामहतत्वमुपपद्यते।

अथ यद्यपि "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार" इत्यादिदर्शनात् ब्रह्मश्रुतिः हिरण्यगर्भाऽपि न विरुध्यते। तथाप्यत्र प्रकरणे "ब्रह्मविदाप्नोति परं," "ब्रह्म पुच्छं प्रतिष्ठा," "असद्ब्रह्मेति वेद चेत्" "आनन्दं ब्रह्मणो विद्वान्" इत्यादौ ब्रह्मशब्दः परमात्मवृत्तिरेव दृष्टः।

तत्प्रायपाठादयमपि तथैव भवितुमर्हति । परिमितत्ववादस्तु तत्प्रायवादसम्पातायातः । अथवा, "अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटिकोटिशतानि च ॥ रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते" इति पुराणे दर्शनादण्डाभिमान्यनन्तप्रजापत्यानन्दशत-गुणितैकानन्दवाचोयुक्त्या परिमितानन्द एवोक्तो भवति । श्रोत्रियस्य चाकामहतस्येति च पूर्वपूर्व-पदाकामहतस्योत्तरोत्तरानन्द इत्युच्यते । स एव चेयत्तया वाङ्मनसयोरगोचर उच्यते । "यतो वाचो निवर्तन्ते" इत्यादिनेति । उच्यते । परमात्मवृत्तिब्रह्मपदप्रायदर्शनलक्षणात् सन्निधेः, परिमितत्ववादस्य लिङ्गस्य बलीयस्त्वादिदमेकं ब्रह्मपदमपरमात्मवृत्ति स्यात् । पूर्वपूर्वानन्दपरिमित-त्ववादप्रायदर्शनादेव च "सएको ब्रह्मण आनन्दः" इत्यत्रापि परिमितानन्दपरत्वमवसीयते । यदि पुनरिहानन्तप्रजापत्यानन्दशतगुणितत्वेनापरिमितानन्दविवक्षा, "ते ये शतं प्रजापतीनामानन्दाः" इति बहुवचनं स्यात् । मनुष्यगन्धर्वाणां देवगन्धर्वाणामित्यादौ बहुत्वे बहुवचनस्यानुक्रमणात् । इन्द्रस्य बृहस्पतेरित्यादाविव प्रजापतिरित्येकवचनात्तु न तद्बहुत्वविवक्षेत्यवगम्यते । अतो नार्थादपि तदुत्तरानन्दस्य तदुत्तरानन्दस्यापरिमितत्वसिद्धिरुत्प्रेक्षितुं शक्या । यथा च तत्तत्पदाकामहतस्यैव तत्तदानन्दप्राप्तिः, तथा सिद्धान्तसिद्धाञ्जने प्रपञ्चितम् । तस्माद्धैरण्यगर्भगुणविभूतिपरमोत्कर्ष-निबन्धनपरातिशयविषयानन्दोत्तीर्णो मुमुक्षुलब्धव्यनिष्केवलनिरतिशयात्मस्वरूपानन्द एव वाङ्मन-सागोचरो निर्दिश्यत इति युक्तम् । स यदि प्रत्यगात्मनोऽन्यस्स्यात् तस्य स एव परोपाधिनाऽखिलो विषयानन्द इत्यपरोक्षो न स्यात् । मुक्तस्यापि न स्वरूपातिरिक्तनिरतिशयविकासनित्यविज्ञाने प्रमाणमस्ति । स्वरूपज्ञानस्यैव विषयप्रवृत्त्युपाधिना विषयज्ञानत्वोपपत्तेः । स्वरूपज्ञानं च स्वावासिताव-भासमिति प्रत्यगात्मनोऽन्यत्वे मुक्तौ परमानन्दो नापरोक्षः स्यात् । अतस्स प्रत्यगात्मैव । स एव च विषयानन्दो मानुषादिहिरण्यगर्भान्तइत्यतस्तल्लाभे सर्वे कामा अवाप्ता एव भवन्तीति, मुक्तौ सर्वकामाप्तिवचनं "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"त्यादि इति सर्वमवदातम् ॥ २५ ॥

एवं समासेनावाङ्मनसगोचरत्वं प्रतिज्ञातम् । तत्र प्रथमं वागगोचरत्वमुपपादयितुं, ये तावत्सम्बन्धो जातिगुणौ कर्म द्रव्यं तथा नाम भेदाभेदावष्टौ, शब्दव्यवहारहेतवः कथितास्तेषां शास्त्रप्रतिपाद्ये परमात्मन्यभावं प्रतिपादयति – यस्यासीति ।

यस्याऽसि यश्च तव तं न विदन्ति सन्तो
हीनं च जातिगुणकर्मतनुप्रतीकैः ।
तं त्वामधीश गुणिनामसमाजभाजं
वाणी समुद्दिशतु कैव कदङ्गनेव ॥ २६ ॥

सर्वेऽपि हि भावाः स्वरूपेण स्वभावपरिनिष्ठिता एव भवन्ति । तेषां पुनः क्रियानिबन्धनः कारकभावेन सम्बन्धः । यथा देवदत्तस्य गाव इति क्रयादिक्रियानिबन्धनः कर्तृकर्मभावेन सम्बन्धः । मधुनो माधुर्यं, वियतो महत्वमित्यादावप्यात्मभरणलक्षणभवतिक्रियानिबन्धन एवाधाराधेयभावेन सम्बन्धः । एवं सर्वत्र यथायोगं क्रियानिबन्धने सम्बन्धे परमात्मनः केनापि तेन वा कस्यापि न सम्बन्धनिमित्तं क्रिया सम्भवतीत्यतः, सम्बन्धाभावादौपगवादिवत्तन्निबन्धना शब्दप्रवृत्तिरात्मनि नोपपद्यत इत्याह **यस्य** सम्बन्धी **त्वमसि यश्च तव** परमात्मनः सम्बन्धी, उपगोरिवौपगवः, **तं सन्तः** परमात्मतत्वविदो **न विन्दन्ति** । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" सफलक्रियाकारकफलविलक्षणो निषिद्धाशेषविलक्षणो हि परमात्मा न प्रतियोगितयाऽनुयोगितया वा कस्यचित्सम्बन्धीत्यर्थः ।

**ननु** जगत आत्मा, आत्मनश्च जगदिति कथमसम्बन्धः ? अस्ति च सम्बन्धनिमित्तं क्रिया सृष्टिः । "स इमाँल्लोकानसृजते"ति । धारणं वा, अविशरणेन स्वकार्यक्षमत्वापादनं, "एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति । नियमनं वा, "यस्सर्वाणि भूतान्यन्तरो यमयति" इति लीलारसोपभोगो वा, "अप्रमेयोऽनित्यश्च यत्र कामगमो वशी । मोदते भगवान्भूतैर्बालः क्रीडनकैरिव" ॥ इति । इति चेत् — **सत्यम्** । अस्ति कारणात्मन एष सम्बन्धः । कारणोत्तीर्णस्वभावश्च परमात्मा शास्त्रेण प्रतिपिपादयिषितः । "अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इत्यादिना, यस्य तत्सर्वज्ञादिगुणमयं कारणरूपं लक्षणमुच्यते "यतो वा इमानि भूतानि जायन्ते" इत्यादि । तद्ब्रह्मेति । कथं पुनरेवं सर्वज्ञादिविशेषविधौ निर्विशेष आत्मा ? "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं", "उपशान्तोऽयमात्मा" "प्रपञ्चोपशमः शिवोऽद्वैत आत्मैव," "स एष नेति नेत्यात्मा", इत्यादिनिषेधस्य परत्वेन प्रबलत्वात् । यथा चैतत्तथा **प्रपञ्चितमन्यत्र** । न चैवमर्थबाधे कारणवादिवेदाप्रामाण्यम् । यथातथाभूतकारणवादेन प्रतिपिपादयिषितात्मतत्वप्रतिपत्तौ पुनस्तत्प्रामाण्यस्यानपेक्ष्यत्वात् । प्राक् तु तत्वप्रतिपत्तेः, तत्प्रतिपत्त्युपयोगिमात्राकारेण कारणरूपस्याबाधेन, तदा तावमात्रप्रमाणत्वस्यानपायात् इति ।

**ननु** मा भूदेवमात्मनि सम्बन्धनिबन्धना शब्दवृत्तिः, जात्यादिनिबन्धना तु स्यादित्याशङ्क्याह-**हीनमित्यादि** । **जाति**र्देवासुरमनुष्यादिः । **गुणा** ज्ञानशक्त्यादयः । शुक्लादिर्दीर्घादयो वा । **कर्म**, क्रिया लौकिकी वैदिकी वा । **तनुप्रतीकाः** देहावयवाः । **तैर्हीनं च त्वां सन्तो विदन्ति** । "अर्वाग्देवा अस्य विसर्जने," "न पुमान्न देवो न नरो न पशुर्न च पादपः" "अयमात्माऽनन्तरोबाह्यः", "कृत्स्नः प्रज्ञानघन एव", "न सन्दृशे तिष्ठति रूपमस्य", "निष्कलं", "अशरीरं शरीरेषु", "अकायमव्रणमस्नाविरं शुद्धं" इत्यादिदर्शनात् ते च शब्दप्रवृत्तौ निमित्तं । यथा जातिः -

देवो मनुष्यो ब्राह्मणः पुरुष इत्यादौ। गुणः – सर्वज्ञ उग्रो नीलो लोहितः कृष्ण इत्यादौ। कर्म – ईशानो विष्णुरित्यादौ। तनुप्रतीकाः – नीलकण्ठश्चतुर्भुजइत्यादौ। उपलक्षणमिदम् – अन्यदपि नियतविशेषणं द्रव्यं शब्दवृत्तौ निमित्तम्। यथा कृत्तिवासाः पीताम्बर इत्यादौ। तानि च न सन्ति परमात्मन इति न तन्निबन्धनापि शब्दवृत्तिरिति। ननु स्वगतशब्दव्यवहारहेतुविरहेऽपि, परगतेनापि तेन शब्दवृत्तिर्दृश्यते। यथा – प्रासादैर्धवला पुरी, अशोकैररुणं वनमित्यादिः। एवं परमात्मनोऽपि स्यादित्यत आह – गुणीनामसमाजभाजमिति। गुणाः शब्दप्रवृत्तिनिमित्तभूता उपसर्जनधर्माः, सन्त्येषामिति **गुणिनः**। तेषां **समाजं** समवायं **न भजतीत्यसमाजभाक् तम्**। असूर्यंपश्याइत्यादिवन्नञोऽसामर्थ्येऽपि समास इष्यते। अनेन, युक्तं प्रासादपुर्यादेरवयवावयविभावेन तादात्म्यसम्बन्धाद्धवलादिशब्दव्यवहार इति। इह पुनरशेषविशेषनिषेधेन प्रतिपाद्यस्य परमात्मनो, न कथञ्चिदपि शब्दप्रवृत्तिविषयत्वमुपपद्यत इत्युक्तं भवति। **तं त्वां** परमात्मानं, अत्र तमिति "यत्र नान्यत्पश्यति" "नेति नेत्यात्मा" इत्यादिनिषिद्धाशेषविशेषस्वरूपमात्रमवमृशति। तेन, निषेधस्यापि विशेषत्वेन निषेध्यकोटिनिवेशान्न तन्निबन्धनापि परमात्मनि शब्दवृत्तिराशंकनीयेत्यभिप्रैति। **कैव वाणी** लौकिकी, वैदिकी वा। वाक्यालङ्कार **एवकारः**। **वार्थो** वितर्के। **समुद्दिशतु** – अयमसाविति। न कापीत्यर्थः। "अवचनेनैव प्रोवाचे"ति हि श्रूयते। अत्र '**अर्धांशे**'ति सम्बोधनेन, बलात् आवर्जिताऽपि न समुद्दिशतीति सूचयति। तेन, नहि वस्तुशक्तिरीश्वरेणाप्यन्यथयितुं शक्यते, शब्दशक्तिश्च विशिष्टविषयैव नान्यथेति विवक्षा दर्शिता भवति। **कदङ्गनेवेति**, व्यतिरेकोपमानम्। यथा कुलशीलरूपादिगुणहीना कुत्सिता वधूर्जातिगुणादिहीनं गुणवज्जनपर्युदस्तं कापुरुषमप्युद्दिशति एवं श्रुतिरपि इति भावः ॥ २६ ॥

सम्बन्धादिनिमित्तैवं शब्दवृत्तिरपह्नुता ।
परमात्मन्यभेदादिनिमित्तां निह्नुतेऽधुना ॥

एकस्वभावमभवद्द्वयमेकमीश
त्वामात्मना गुणसमन्वयपर्युदस्तम् ।
शृण्वन्गुणैरुपधिनाप्युपरञ्जयंस्त्व-
य्यासञ्जयेन्नववधूमिव कस्त्रयीं ताम् ॥ २७ ॥

**एको** न विशेषणभेदेन नाना, **स्वभाव** आत्मलक्षणा सत्ता, यस्य तं तथा। जातिगुणादिविशेषणभेदभिन्नस्वभावं हि नीलोत्पलादिकम्। तदनुगतस्वरूपाभेदनिबन्धना, इन्दीवरादिशब्दवृत्ति-



18

रालम्बते। ननु तत्र जातिभेदनिबन्धना सा। न, नीलत्वसामानाधिकरण्यावच्छिन्नोत्पलत्वेनैव कुमुदकल्हारादिव्यवहारसिद्धौ, अतिरिक्तजातिभेदकल्पने मानाभावात्। अन्यथा नीलघटादिष्वपि जातिभेदकल्पनाप्रसङ्गात्। तत्र यदि नीलपीतादिसाधारणकुलालविशेषप्रभवत्वानुमापकजातिभेदैः सांकर्यभयान्न तादृशभेदः, तर्हि चात्रापि कुमुदादिसाधारणगिर्यादिदेशभेदप्रभवत्वानुमापकजातिभेदाः सन्तीति, तत्साङ्कर्यभयादेव न जातिभेद इति तुल्यम्। अथापि स एवोपाधिरिन्दीवरादिशब्दवृत्तिनिमित्तं स्यान्नाभेदः। न। निरुक्तोपाधावभेदस्योपजीव्यत्वात्। वस्त्वभेदमनादाय, नीलोत्पलत्वसामानाधिकरण्यस्याधिगन्तुमशक्यत्वात्। अतो "नीलोत्पलाभेदनिबन्धनैवेन्दीवरादिशब्दवृत्तिः। परोपाधिनाऽपि देशकालादिना, भिन्नस्वभावो देवदत्तादिः, सोऽयमित्यभेदनिबन्धनव्यवहारालम्बनं भवति। नैवमात्मा। निरस्तसमस्तसजातीयविजातीयस्वगतभेदो निर्विकल्पैकरसनिरञ्जनपरमस्वभावकेवल **इत्यभिप्रायः**।

अथाज्ञानाधर्मादिशब्दा ज्ञानधर्मपर्युदासेन तमोदुरितलक्षणाभावभेदवृत्तयो दृश्यन्ते। एवमात्मन्यपि समस्तविसजातीये, नेत्यादयो वत्स्यन्तीत्यत आह — **अभवद्द्वयमिति**। अभवत् असत् अविद्यमानं, द्वयं द्व्यवयवं सजातीयादिभेदैर्भिन्नं, यस्य तमभवद्द्वयम्। अभवदिति लटाऽधुना वर्तमानप्रत्ययमपि द्वयं नास्त्येवेति, तस्य भेदप्रतियोगितायोग्यताभावं दर्शयति। तेन निष्प्रतियोगिकभेदासम्भवात् न तन्निबन्धनात्मनि शब्दवृत्तिः सम्भवतीत्यभिप्रायः।

**अथ** कथमस्तिप्रत्ययं द्वयं नास्तीति शक्यमुपगन्तुम्? आत्मप्रत्ययसमाश्वासेन हि विषयसत्वासत्वसम्प्रत्ययः। यथाहुर्वृद्धाः — "संविदेव हि भवति विषयसत्वोपगमे नः शरणम्" इति। अन्यथात्मापि न स्यात्। **सत्यम्**। एवमस्तिप्रत्ययेनैव सर्वमसदिति **प्रतिजानीमहे**। भूरस्ति जलमस्तीत्यादिप्रत्ययैर्हि सर्वे भावा व्यावृत्तानुवृत्तात्मानः प्रत्याय्यन्ते। तत्रानुवृत्तात्मा सत्ता। व्यावृत्तात्मानो भूजलादिविशेषाः। ते चानुवृत्तात्मनि सत्तायामेव, भूर्न जलं जलं न भूरित्येवं अन्योन्यावच्छेदेन निषिध्यमाना एवास्तिप्रत्ययमनुभवन्ति। अन्यथैवं व्यावृत्तत्वाप्रतीतौ, व्यवहारसाङ्कर्यप्रसङ्गात् सोऽयमेषां प्रतिपत्त्युपाधौ निषेधप्रतियोगितालक्षणो बाध इष्यते। यथा — अयं सर्पः इयं रज्जुरित्यनुवृत्तात्मनीदमि, रज्जुरूपविशेषावच्छेदेन निषिध्यमानस्य सर्पस्य। नन्वेवं, सर्परूपविशेषावच्छेदेन तत्रैवेदमि, स एव रज्जुनिषेधप्रत्ययस्तद्बाधस्स्यात्। **स्यादेव**। किन्तु सर्पस्य तेनैवेदमात्मना पुनरलब्धात्मकतया परप्रत्ययप्राबल्येन सर्पबाधो व्यवतिष्ठते। भूजलादिषु पुनस्तस्यामेव सत्तायामन्योन्यावच्छेदेन, निषेधप्रत्ययो बाधो, विशेषाभावान्न व्यतिष्ठत इत्येष विशेषः।

**यद्येवं**, घटवदिदं भूतलं नेदमित्यपि निषेधप्रत्ययो घटादिबाधस्स्यात्। किमुक्तं भवति अवच्छेदकभेदेन निषेधप्रत्ययो न बाध इति, तर्हि इयं रज्जुर्न सर्प इत्यपि बाधो न स्यात्।

स्त्वावच्छिन्नेदमि हि सर्पः प्रतीतः, रज्जुरूपावच्छिन्ने निषिध्यत इति। का तर्हि व्यवस्था ? उच्यते — "अवच्छेदकताटस्थ्ये निषेधमतिगोचरे। न बाधस्तदताटस्थ्ये बाध इत्यवतिष्ठते॥" तत्र निषेधमतिर्देशे काले वा तत्सम्बन्धमनपेक्ष्य, परत्र प्रतियोगि यल्लब्धात्मकं प्रतीयते, तदिदं निषेधावच्छेदकस्य प्रतियोगिनस्ताटस्थ्यम्। तस्मिन्सति तत्र तस्य निषेधप्रत्ययो न बाधः। यथा — निषेधमतिविषयतत्कालभूतलसम्बन्धमनपेक्ष्यान्यकालभूतलान्तरे घटो लब्धात्मकः प्रतीयत इति, ततोऽन्यत्र तन्निषेधप्रत्ययो न बाधः अतथात्वे, तत्र तस्य निषेधप्रत्ययो बाध एव। यथा — सर्पनिषेधमतिविषयतत्कालरज्विदमात्मतामपेक्ष्यैव लब्धात्मकः सर्प इति, सत्त्वेदमि, तन्निषेधप्रत्ययो बाधः। यद्वा, निषेधमतिगोचरेऽभाव एव यदवच्छेदकमधिकरणं तस्य ताटस्थ्ये, अधिकरणान्तरे प्रतीयमानप्रतियोग्यनवच्छेदकत्वे तत्र घटादिनिषेधो न बाधः। नायं सर्प इति निषेधाधिकरणरज्विदमस्तत्रैव प्रतीयमानसर्पावच्छेदकत्वे, तन्निषेधो बाधः। अथवा, निषेधमतिगोचरे निषेधाधिकरणे, अवच्छेदकस्य ताटस्थ्ये प्रतियोग्यधिकरणानन्वयित्वे सति, अभावप्रत्ययात्प्रागेव "अन्तर्घट" इति प्रतियोग्यधिकरणात् इदं बहिरित्यधिगतभेदेऽधिकरणान्तरे न बाधः। यथा मूले वृक्षः संयोग्यग्रे नेति, अग्रतादात्म्यावच्छेदेन प्रतियोगिभिन्नाधिकरणे संयोगनिषेध प्रत्ययो न तद्बाधः। तथावच्छेदकताटस्थ्याभावे प्रतियोग्यधिकरण एव रज्जुसर्पनिषेध प्रत्ययो बाधः। एवं जलाद्यनुगतसत्तात्मतामपेक्ष्यैव, भूम्यादेरात्मलाभप्रत्ययात् तस्यामेव सत्तायां तन्निषेधप्रत्ययो बाध इति, व्यावृत्तास्तिप्रत्ययैरेव सत्तायामशेषविशेषबाधे, सत्तैव केवला परमार्थोऽवशिष्यते। स एव नात्मेति, तत्र निष्प्रतियोगिकभेदासम्भवात्, न तन्निमित्तशब्दव्यवहारालम्बनमित्युपपन्नम्। यद्यपि तादात्विकप्रतियोगिप्रत्ययमपेक्ष्य तन्निषेधेन, 'नेति नेति' आत्मोपदिश्यते, तथापि नञ्शब्दप्रवृत्तिनिमित्तनिषेधस्यापि तुल्यवदिति, शब्दार्थप्रतियोगिकोटिनिविष्टतया युगपन्निषेधात्, विनैव शब्दवृत्तिमात्मोपदेश इति संक्षेपः।

अस्तु तर्हि डित्थादिवदात्मनि नामनिबन्धनैव शब्दवृत्तिः। अस्ति च ब्रह्मणो वैदिकं नाम "सर्वे वेदा यत्पदमामनन्ति" इति प्रकृत्य "तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्", "ओमिति ब्रह्म" इति हि श्रूयते। अत्रेतिशब्दो नामशब्दप्रवृत्तिनिमित्तनामविशिष्टप्रत्यवमर्शार्थः। न तु शब्दस्वरूपप्रतीकत्वार्थः। "कं ब्रह्म खं ब्रह्म" इति विनैवेतिशब्दं ब्रह्मशब्दसामानाधिकरण्यदर्शनात्। यथाह भगवान्भाष्यकारः "ब्रह्मणोहीदं नेदिष्ठं नामे"ति। यथाहुर्योगाः — "तस्य वाचकः प्रणव" इति। "तस्य नाम महद्यश" इति नामान्तरम्। 'यशोऽहं भवामि ब्राह्मणानां यशो विशामी'त्यादिव्यवहारदर्शनात्। "तस्योदिति नामे"ति नामान्तरम्। "अथ नामधेयं सत्यस्य सत्यमि"ति च नामान्तरमित्यतः आह — एकमिति। केवलमनामरूपमित्यर्थः। "अगोत्रमवर्णमि"ति श्रुतेः। "नाम रूपं न यस्यास्ति योऽस्तित्वेनोपलभ्यते। नामरूपादिनिर्देशविशेषणविवर्जितः" इत्यादि

स्मृतेश्च । **अपिच** – रूपं तावद्विनिर्दिश्य नामधेयं विधीयते । अप्रसिद्धस्वरूपे हि तद्विधानामसुग्रहम् ॥ अङ्गुल्या रूपनिर्देशो डित्थादेस्सम्भविष्यति । आत्मनस्तु विनिर्देशो वाच्यश्शब्देन वैदिकः ॥ अतो न प्रतिपत्यर्थस्तस्य नामाविधिः श्रुतौ । न च स्वव्यवहारार्थः पाणिनेष्टिद्युभादिवत् ॥ येनात्मा स विनिर्देश्यः तेन शब्देन तद्गतेः । अपूर्वाङ्गफलान्यत्वव्यावृत्तिविततां क्रियाम् ॥ तद्भिदादिविधिर्न्नूते विधत्ते नाम न क्वचित् । तेनैव तद्व्यवहृतेः किन्तु नामोपगम्यते ॥ तत्रोद्भिदादिव्युत्पत्तिन्यायादत्रैव साध्यते । जातिद्रव्यक्रियादिर्हि निमित्तमिह सम्भवेत् ॥ तस्मादुपासनार्थाय नामधेयविधिः परे । स्वरूपोपाधिरूपाभ्यां आत्मा सर्वत्र वर्ण्यते ॥ सत्यं ज्ञानं जगद्योनिरिति बोधाय मुक्तये । तथैवाभ्युदयादिभ्यो नामरूपक्रियादिभिः ॥ ज्ञानोपायोपधिद्वारैरुपास्यश्चापि चोद्यते इति । तत्र यत्तावत् "ओमित्येतद्ब्रह्मणो नामे"ति तत्सगुणविषयमुपासनार्थमित्यनुजानीमः । यथा श्रुतिः – "ओमित्येवं ध्यायथात्मानं", "ओमित्यात्मानं युञ्जीत," "एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते", "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स सामभिरुन्नीयते ब्रह्मलोकम्" इत्याद्या । **स्मृतिश्च** – "ओमित्येवं सदा विप्राः पठत ध्यात केशवम्" । "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम्" ॥ इत्याद्या । यशो नाम्नश्च, उपासनाविधिशेषफलकामाङ्गत्वमुदाहृतम् । उन्नाम्नश्चोद्गीथोपासनाङ्गत्वमत्रिप्रतिपन्नम् । सत्यस्य सत्यमिति नामविधौ तु यद्यपि नोपासना प्रकृता, न च क्वचित्तस्य विनियोगः श्रुतः, तथापि "प्राणा वै सत्यं तेषामेष सत्यमि"ति वाक्यशेषे यौगिकत्वावगमादौपाधिकतद्विधिव्यपदेशेन, वस्तुतत्वप्रतिपादनपरत्वमेवावसीयते । न तु ब्रह्मणो वास्तवमिदं नामेत्येवंपरत्वम् । प्रयोजनान्तराभावात् ।

"तस्मादुपास्य नामेदमोंकारादि प्रतीयताम् । तेन तत्वावबोधश्च कथञ्चिदुपपद्यते" ॥ यस्येदमुपास्यस्य सतो नाम स आत्मेति – "नेतिनेत्युपदेशेन शून्यवादप्रसङ्गतः । नामधेयविधिद्वारा वस्तुशेषो निवेद्यते" ॥ तस्मात्परमात्मनि न नामनिबन्धनापि शब्दवृत्तिरिति सिद्धम् । यद्यत्र कैवल्यविशेषणे नैकेनैव जातिगुणक्रियादिसमस्तशब्दवृत्तिनिमित्ताभावः शक्यमुपस्थापयितुमिति शेषविशेषणवैयर्थ्यम्, तथापि यथा वेदान्तेषु । "निर्विकल्पमनन्तमि"त्येव विवक्षितात्मस्वरूपसिद्धावपि "अस्थूलमनणु", "अशब्दमस्पर्शं" "अदृश्यमग्राह्यम्" इत्यादिविशेषणान्युपादीयन्ते निरसनीयभ्रमानेकत्वात्, तथेहापि निवर्तनीयभेदात् विशेषेण तत्तद्व्यावर्तनाय विशेषणविशेषोपादानमविरुद्धमिति ।

**अथापि** स्याद्वस्तुतो निर्विशेषेऽपि परमात्मनि तत् आरोपात् तन्निबन्धना शब्दवृत्तिस्स्यात् । यथा शुक्त्यादौ रजतशब्दवृत्तिः, यथा वा ब्राह्मणो यजेतेत्यादावात्मनि पारत्रिकफलभागिनि

ब्राह्मणादिशब्दवृत्तिः। अस्ति च "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादौ सम्प्रत्यारोपिताग्नित्वनिबन्धनापि दिव्याग्निशब्दवृत्तिः। एवं यथायथमात्मनि सर्वशब्दवृत्तिः स्यादित्यत आह – **आत्मना गुणसमन्वयेत्यादि**। आत्मना स्वेन त्वय्यैव गुणसमन्वये विषये पर्युदस्तं, "साक्षी चेताः केवलो निर्गुणश्च" "नेति नेत्यात्मा" इत्यादिना सर्वतः प्रतिषिद्धम्। अत्र समुपसर्गग्रहणेनारोपितगुणान्वयेनोपासनाविधिविषये, तन्निमित्तकशब्दवृत्तिरनुमतेति सूच्यते। आत्मतत्त्वप्रतिपादनं तु निश्शेषनिषेधेनैवेत्यभिप्रायः। तत्तादृशं **त्वां** परमात्मानं, **शृण्वन्** श्रुतिमुखेन जानन्। शतायं लक्षणे। **कः** विद्वान्। **अत्रेशेति** सम्बोधनेन, त्वदाहितशक्तिर्ब्रह्मापीति सूचयति। **उपाधिना** छलेन। आरोपेणापि। **गुणैरुपरञ्जयन्नुपरक्तं कुर्वन्**। शतायं हेतौ। **ताम्**, या परमात्मानं गुणसमन्वये पर्युदस्यति, तां **त्रयीम्**। **त्वय्यासञ्जयेत्**। लिङत्र सम्भावनायाम्। श्रुतिवृत्तं जानन् कश्चिदपि तां त्वय्यासक्तां, परमात्मविषयवृत्तिमतीं कुर्यादिति न सम्भवतीत्यर्थः। अत्र त्रयीमिति सामान्यग्रहणेन मङ्गलामङ्गलगुणविषयभेदेन विधिनिषेधव्यवस्थापि उदस्यते। निषेधपरमा हि सर्वनिर्विशेषप्रतिपत्त्यर्थकारणरूपोपाश्रयोपासनाविधिशेषा गुणविधयः, सामान्यतो विशेषतश्च निषेधस्योदाहृतस्य प्रसक्तयावद्गुणविषयत्वात्। ततश्च निर्विशेषं प्रतिपत्तुमशक्तस्य मन्दस्य, तत्प्रतिपत्त्यर्थोपासनाविषये गुणान्विदधाना, तत्र वृत्तिमत्यपि श्रुतिर्न परमतात्पर्यविषये निश्शेषविशेषनिषेधप्रतिपाद्ये परमात्मनि वृत्तिमतीत्युक्तम्। नववधूमिवेति व्यतिरेकोपमोपादानम्। यथा कश्चिन्मुग्धवधूं तदज्ञाते पुरुषे निर्गुणेऽपि, तदभिलषितवयोरूपसंहननादिगुणारोपेण तमुपवर्ण्य आसञ्जयति, न तथा प्रौढवधूम्, तस्य पुरुषस्य वयोरूपादिगुणाभावं जानतीमासञ्जयितुं शक्नोति। एवं त्रयीमप्यात्मनीति, बाधे सत्यारोपनिबन्धनशब्दवृत्तिर्न सम्भवतीति भावः ॥ २७ ॥

**एवं** निर्विशेषस्वभाववस्तुवृत्तेन निश्शेषविशेषनिषेधमुखप्रतिपादनस्वभावश्रुतिवृत्तेन च, शब्दवृत्तिरात्मनि न सम्भवतीत्युपपादितम्। अथ तर्हि निरालम्बन एव "तत्त्वमसि", "नेति नेत्यात्मा" इत्यादिशब्दः स्यात्। खपुष्पमसदित्यादिवदित्याशङ्क्य, शब्दप्रवृत्तिदशायामारोपितभावाभावविशिष्टात्मवृत्त्युपगमात्। नैवमित्याह

वर्याङ्गनेव वरणीयगुणव्यपेक्षा
मा त्वामपोढगुणमभ्युपगूढ वाणी।
मायागुणानभिनयन्गुणवानिव त्व-
मात्मैकवृत्तिमगजामिव तां विधत्से ॥ २८ ॥

**वर्या** श्रेष्ठा विशिष्टकुलशीलरूपादिगुणैः **अङ्गना**, यथा **वरणीयस्य** कुलशीलवयोरूप-संहननादिगुणेषु **व्यपेक्षा** यस्याः सा, तथाभूता सती। वरणीयेति सम्बुद्धिर्वा। **अपोढाः** परिवर्जिताः **गुणा** यस्य तं **पुरुषं नोपगूहते**। एवं **वाणी** शब्दप्रवृत्तिनिमित्तजातिगुणक्रियादिविशेषणव्यपेक्षा सती, **अपोढगुणं** प्रतिषिद्धाशेषविशेषणं **त्वां** परमात्मानं **नाभ्युपगूढ**, नाश्लिष्यति न विषयीकरोति। अत्र वरणीयेति सम्बोधनेन, परमप्रेमास्पदतया सार्वजनीन आत्मा, न नास्तीति, नात्यन्तनिरालम्बनता शब्दस्येति सूचयति। त्वं पुनरीश्वरात्मा। **मायया गुणा** मायागुणास्तान्। आत्माविद्यैव विचारविशरारुविशदावभासविषयविचित्रकार्यकरत्वोपाधिना मायेत्युच्यते। माया चाविद्या च स्वयमेव भवति। "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते योगी मायाममेयाय तस्मै विद्यात्मने नमः॥" इति मायाऽविद्याऽभेदस्य व्यपदेशात्।

**ननु** "माया वयुनं ज्ञान"मिति निगमः। तथा च "इन्द्रो मायाभिः पुरुरूपईयते" इत्यत्र मायाभिः प्रज्ञाविशेषैरिति भगवता **भाष्यकृता** व्याख्यातम्। तत्कथमविद्या मायेति? उच्यते। सैवैका तमोगुणेनात्मावरणादविद्या, सत्वगुणेन प्रकाशनान्माया ज्ञानमित्युच्यते। यथा जीवस्य बुद्धिसत्वं ज्ञानं, एवमीश्वरस्य सत्वसमष्टिमयी माया इति। **यथाहुस्साङ्ख्याः** – "तस्य निरतिशयं सार्वज्ञबीजम्" इति। एवमविद्यामायानिमित्तान् सार्वज्ञसर्वशक्तिजगत्कारणतदनुप्रवेशविश्वरूपा-पत्त्यन्तान् **गुणानभिनयन्** नट इव मायावी रामादिगुणानसत एवात्मनि दर्शयन्। **गुणवानिव** भूत्वा। **इवकारेणा**शेषविशेषनिषेधादगुणतैव स्वभावः, गुणवत्ता त्वविद्यामूलारोप इति दर्शयति। **तां** वाणीम्। **आत्मैकवृत्तिं**, आत्मनि स्वस्मिन्नेकस्मिन् नान्यस्मिन् वृत्तिरभिधानं यस्यास्सा तथा, ताम्। विधेयविशेषणमेतत्। विशिष्टवृत्तिद्वारा निर्विशेषपरमतात्पर्यवतीत्यर्थः। आत्मन एव सर्वगुण-वैशिष्ट्यप्रतिपादने हि तन्निषेधेन निर्विशेषाद्वितीयं आत्मतत्त्वं प्रतिपादयितुं सुशकम्। अन्यथा तत्र प्रतिषिद्धानामन्यत्र भावेऽद्वितीयत्वविरोधात्। **अगजामिवेत्यन्वयोपमानम्**। अगजामित्यनागरिकतया मौग्ध्येन, सुप्रलम्भनीयतां दर्शयति। यथोमां मायामयमङ्गलतनुगुणलीलया सैकतानां **विधत्से**, तथा वाणीमपि मायारोपितनानाविशेषनिमित्तैरात्मैकवृत्तिं विधत्स इति। यत्र क्व च शब्दवृत्तिः तत्सर्वमात्मैवेति। सर्व एव शब्दास्तदेकवृत्तय इत्यभिप्रायः। तथा च, श्रुतेरात्मतत्वप्रतिपत्त्युपयोगि-विशिष्टात्मवृत्तिकत्वात् न खपुष्पादिवदत्यन्तनिरालम्बनतेति ॥ २८ ॥

**नन्वेवं** निर्विशेषात्मतत्वे शब्दवृत्त्यभावे, कथं तत्प्रतिपादनपरत्वं श्रुतेरुपपद्यताम्? शब्दतात्पर्यस्य वृत्तिनिर्वाह्यत्वात्। सर्वेषामेव करणानां स्वविषयव्यापारेणैव, तत्र फलजनकत्वात्। अन्यथा कुठारस्य दारुविषयव्यापारेण, गगने च्छिद्रापत्तेः। इत्याशङ्क्य, विशिष्टवृत्त्यैवाभिहिते सविशेषे, सर्वविशेषनिषेधे सति, या स्वत एव निर्विशेषात्मसिद्धिः सैव तदुद्देश्येति। विशिष्टवृत्तेरपि

शब्दस्य तत्प्रतिपादनपरत्वं स्यात्। यथा कुठारस्य संश्लिष्टावयवविशिष्टदारुविषयव्यापारेण, अवयवेषु व्यस्यमानेषु, स्वत एव भवति दारुच्छेदकारणत्वं, तद्वदित्यभिप्रेत्याह —

लज्जानतस्मितमुखी ललना नवोढा
वोढारमिष्टमिव संसदि पृच्छ्यमाना।
भावैरतन्निरसनानुगतैर्भवन्त-
मावेदयत्यनिदमादिरपौरुषेयी वाणी ॥ २९ ॥

**संसदि** सदसि जनसमवाये। तद्गतत्वेनावगतम्। **इष्टमात्मनः** प्रियम्। **वोढारं** भर्तारम्। स्वरूपविशेषजिज्ञासया **पृच्छ्यमाना** अयमसौ वा तत्र भर्तेति। **नवोढा ललना,** मुग्धावधूः। अन्यत्र स्वभावप्रसृताक्षिव्यापारा। भर्तृगोचरप्रसक्तौ, **लज्जया नतं,** तत्सूचनायाक्षिव्यापारोऽपि नास्तीति दर्शयितुं लज्जानतेति विशेषणम्। तेन निर्विशेषात्मनि शब्दस्य लक्षणावृत्तिरपि नेष्टेति सूचितं भवति। तादृशं, **स्मितं** प्रणयेन मृदुविकसिताधरं, **मुखं यस्यास्सा** तथा सती। अतन्निरसनानुगतैर्भर्तृव्यतिरिक्तनिषेधमनुगतैः, न त्वयमसाविति भर्तृविधिसंस्पर्शिभिः। **भावैरि**ङ्गितविशेषैः। यथा **परिशेषत एवावेदयति** ज्ञापयति। यद्यपि परिशेषानुगृहीतादन्यत एव तज्ज्ञानं, तथापि तत्रातद्विषयेऽपि ललनाव्यापार एव मूलमिति, साऽऽवेदयतीत्युपचारः। एवं **अयमादिरस्या न विद्यत** इत्यनिदमादिरनादिः। **अपौरुषेयी वाणी** श्रुतिरपि। **अत्रेशेति** सम्बोधनेन विशिष्टवृत्त्युपगमं सूचयति। तथा च, व्योम्न इव नात्यन्तं करणव्यापाराविषयत्वमिति, नोक्तातिप्रसङ्ग इत्यभिप्रायः। अत्र दृष्टान्ते, इतरनिषेधानुगृहीतमानान्तरेण विवक्षितविषयसिद्धिः। इह त्वितरनिषेधे सति स्वत एव तत्सिद्धिरिति विशेषे सत्यपि तद्विषयव्यापारमन्तरेणैव तत्सिद्धिरिति, इयति विवक्षितविशेषे साम्यभावनार्थेऽपिशब्दः। अतन्निरसनानुगतैर्भावैरित्यत्रापिः सम्बध्यते। इत्येवमर्थो वा। तथा च "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इत्यादिनापि, अनात्मनिषेधानुगतैरेव भावैर्विधिमुखप्रत्ययैः, सत्यज्ञानानन्दादिभिस्तात्पर्यैर्वा। तात्पर्यस्यैकत्वेऽपि वाक्यबहुत्वोपाधिकं बहुवचनम्। भवन्तं परमात्मानम्। आवेदयति, न केवलं नेतिनेत्यात्मेत्यादिभिरेव, तथाऽऽवेदयतीत्यभिप्रायः।

**अथ** कथं विधिमुखप्रवृत्तेषु 'सत्यं ज्ञानमि'त्यादिषु निषेधमुखेन वस्तुसिद्धिः? उच्यते। अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन चेति हि विभज्य वृत्तिरात्मनि वेदान्तानामाचार्यैरभिहितेति। उच्यते। यद्यथा प्रतीतमस्ति व्यवहाराविसंवादि तस्मिन्, अनृतविरोधिरूपसत्तानुगते सत्यशब्दो व्युत्पद्यते। ज्ञानशब्दोऽप्यावरणात्मकाज्ञानलक्षणजडविरोधिरूपप्रकाशानुगते प्रमाणवृत्यादौ। एवमानन्द-

शब्दोऽपि दुःखविरोधिरूपानुकूलभावानुगते स्रक्चन्दनादिविषयवृत्तिभेदे व्युत्पद्यते। एवं व्यवहारतो भिन्नार्थानामेव सतां सत्यादिपदानां सामानाधिकरण्यादभेदो वाक्यार्थो गम्यते। न च भिन्नविशेषण-विशिष्टतया, भेदेनावगतानामर्थानामभेदप्रत्ययः सम्भवति। विशेषणसाङ्कर्यप्रसङ्गेन भेदप्रत्ययनिरोध्य-त्वात्। अत एव "नानाशब्दादिभेदात्" इति सूत्रकृता शब्दान्तराभ्यासादिविशेषणविशिष्टोपासना-भेदस्साध्यते। जैमिनिनापि "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्" इत्यादिना यजति,ददाति, जुहोतीत्यादीनां भेदो व्यवस्थापितः। अतोऽनृतादिरूपनिषेधेनैव चरितार्थानि। अभेदश्च वाक्यार्थो भेदनिषेध एव न रूपमालम्। एकैकेनापि तदुपस्थितौ भेदप्रत्ययविरोधात्। अतः समानाधिकरण-पदैर्भेदे व्यावृत्तिरवश्यं बोधनीयैवेति, तेनैव वाक्यमपि चरितार्थम्। निर्विशेषवस्तुस्वरूपावगतिपरिशेषस्तु फलम्। आचार्यवचनं तु "साक्षादतद्व्यावृत्तिरूपेण नेतिनेतीत्यादिना, विधिमुखेनातद्व्यावृत्तिरूपेण सत्यं ज्ञानमित्यादिना च तदर्थं तत्पदार्थं चिन्तयेत्" इत्येवं व्याख्येयम्। तथा तत्त्वमसीत्यादावपि तत्पदम्। "सदेव सोम्येदमग्र आसीत्, तदैक्षत, तत्तेजोऽसृजत, ऐतदात्म्यमिदं सर्वं" इति प्रकृतं सद्वयत्वविरोधि सार्वात्म्यानुगतं वस्त्ववमृशति। त्वंपदं च परोक्षविरोधि प्रत्यक्त्वानुगतं जीवात्मानमुप-स्थापयति। तदुभयसामानाधिकरण्यादभेदो वाक्यार्थोऽवगम्यते। विशिष्टाभेदप्रत्ययासंभवाच्च पदद्वयं सद्वयत्वपरोक्षव्यावृत्त्यैव चरितार्थम्। वाक्यं च भेदव्यावृत्त्यैव। निर्विकल्पवस्तुस्वरूपावगति-परिशेषस्तु फलम्।

नन्वभिन्नवस्त्ववगतिरेव समानाधिकरणवाक्यफलमस्तु। किमुच्यते वस्तुस्वरूपावगतिपरिशेष इति?। उच्यते। अनात्मन्यपि तावन्नीलमुत्पलमित्यादौ कुमुदकल्हारादिव्यावृत्त्यैव विशेषणचारितार्थ्ये, सामानाधिकरण्यादभेदो यस्यावबोधनीयस्तत्रैव सत्त्वे भेदस्य न निषेधो बोधयितुं शक्यः। अथ विशिष्टयोः सतोर्भेदस्य स्वरूपे निषेधो बोध्यत इति चेत्तर्हि स्वरूपाभेदे किमायातम्? न हि घटपटयोरन्योन्यभेदस्य गवाश्वे निषेधेऽपि तदभेदस्सिद्ध्यति। तत्रैव भ्रमप्रसञ्जितस्य भेदस्य निषेधे तु बोध्यमाने, प्रतियोगिबाधात् निष्प्रतियोगिकनिषेधविशिष्टप्रत्ययपर्यवसानानुपपत्तिः। परन्तु तत्र स्वरूपकेवलावगतिपरिशेषे प्राप्ते नोलोत्पलत्वादिविशेषबाधकाभावात् पदोपस्थिते तस्मिन्नुपनीयमाने, विशिष्टाभेदो वाक्येन बोध्यत इति विभ्रमः। आत्मनि पुनर्नेतिनेतीत्यादिना प्रसक्तयावद्विशेषनिषेधे, भेदनिषेधो भिन्नाद्विशेषतया निषिद्ध एव भवतीति न सत्यज्ञानाद्यभिन्न आत्मेत्येव गतिपर्यवसान-मुपपद्यते। किन्तूदितन्यायेन केवलस्वरूपावगतिपरिशेष एवेति। तस्मात्सूक्तमतन्निरसनानुगतैर्भा-वैरावेदयति इति।

नन्वत्र को वाक्यार्थः? यदवगतिपरिशेषो वाक्यस्य फलं, स क इति यदि प्रश्नः, तदा सर्वविधपदवृत्तिनिमित्तोत्तीर्णपदार्थस्वरूपमात्रमित्युत्तरम्। अथ तदवगतिपरिशेष एव, वाक्यमूलेन

यदालम्बनविज्ञानेन भवति, स क इति प्रश्नः, तदा पदार्थाभेद इति उत्तरम्। अथ यद्विषया वाक्यवृत्तिः स क इति प्रश्नः, **अत्र केचिदाहुः** – अभेदे समानाधिकरणे वाक्यार्थे, संसर्गे वा व्यधिकरणवाक्यार्थे वाक्यस्य, न शक्तिर्लक्षणा वा वृत्तिरुपपद्यते। न खलु समभिव्याहारोपाधिकपद-समुदायव्यतिरेकेण वाक्यं नाम किञ्चिदुपगम्यते। यथा वैयाकरणैस्स्फोट इति। तत्र पदानां पदार्थे तत्संसर्गे च, शक्तिकल्पनं गौरवं स्यात्। पदवाक्यार्थोपस्थितियौगपद्यप्रसङ्गश्च। लक्षणा च शब्दस्य "गङ्गायां घोष" इत्यादौ प्रज्ञातशक्यसम्बन्धे दृष्टा। न चेह तथा। अपूर्वे वाक्यार्थे पदशक्यसम्बन्धो-ऽविज्ञातपूर्व इति शक्यमुपगन्तुम्। अपि चैवं शब्दवृत्तिविषयत्वे वाक्यार्थस्य, विशेषणविशेष्यभावेन भानं प्रसज्येत। संसर्गमर्यादया च भानं सर्वसिद्धमिति। **अन्ये तु** – शब्दवृत्तिविषयस्यैव शाब्दबोधे भानमिति नियमः। अन्यथा यथाकथञ्चिदुपस्थितस्यापि शाब्दबोधविषयत्वे, पदाध्याहारानर्थक्यात् मन्त्रोहादिशास्त्रबाधप्रसङ्गात्। अतो वाक्यार्थे शब्दवृत्तिरवश्यमाश्रयितव्या। तत्र शक्तौ गौरवमप्रामा-णिकम्। लक्षणायां च समभिव्याहृतपदार्थानामभेदः संसर्गो वेति सामान्यतः शक्यसम्बन्धः प्रज्ञात एवेति न दोषः। न च शब्दवृत्तिविषयस्य विशेषणादिभावेन भाननियमः। "गौर्नित्ये"त्यादौ लाक्षणिकस्य गोत्वादेर्गोरूपिततयैव केवलमवभासात्। एवमिह वाक्यार्थस्यापि पदार्थरूपिततयैव केवलमवभासोपपत्तेः इति। **अपरे पुनराहुः** – उभयत्र पदशक्तौ पदवाक्यार्थोपस्थितियौगपद्यप्रसङ्गः। लक्षणया वाक्यार्थप्रत्यायने, शक्यपदार्थोपस्थितिर्न हेतुः स्यात्। लाक्षणिकतीरप्रत्यायने गङ्गापदशक्योपस्थितेरन्वय-विरोधेनाहेतुत्वदर्शनात्। अपि च लक्षणानान्वयानुपपत्तिप्रतिसन्धानात्। तदानीमन्वयस्यैवाप्रतीतेः। न तात्पर्यानुपपत्तिप्रतिसन्धानात्। "पिता त्वमाहूत" इत्यादौ तात्पर्याज्ञानेऽपि संसर्गप्रत्ययात्। निरूढलक्षणायां तु नानुपपत्तिप्रतिसन्धानमपेक्ष्यते। शक्तिभ्रमेण जातिव्यक्त्यादिसहोपस्थितिनिय-मदर्शनात्। यत्र तु न शक्येन सहोपस्थितिर्लक्ष्यस्य, तत्रानुपपत्तिप्रतिसन्धानमपेक्ष्यत एव। निरूढलक्षणायामपि यथा दर्शपूर्णमासाभ्यामित्यादौ कालसम्बन्धात्तन्नामकत्वलक्षणायाम्। इह तु वाक्यार्थस्य पदार्थेन सहोपस्थित्यभावादनुपपत्तिप्रतिसन्धानमपेक्ष्यते। तदभावान्न लक्षणया बोध इति। **अन्ये तु** माभूल्लक्षणा। पदानां वाक्यार्थे शक्तिरेव। न च पदवाक्यार्थोपस्थितियौगपद्यप्रसङ्गः। अन्वयव्यतिरेकाभ्यां समभिव्याहृतसर्वपदार्थोपस्थितेर्वाक्यार्थप्रतीतिहेतुत्वात्। किन्तु वाक्यार्थस्यापूर्वत्वात् तदंशेऽज्ञातैव सोपयुज्यते। अत एव तस्य संसर्गमर्यादया भानमप्युपपन्नम्। यत्र हि सा ज्ञातोपयुज्यते, तत्र परं विशेषणादिभावेन भानमिति। **वयं तु** पदार्थ एव शब्दवृत्तिर्न वाक्यार्थेऽपि। गौरवात्। समभिव्याहारसामर्थ्यादेवानुषङ्गिकतयैव वाक्यार्थसिद्ध्युपपत्तेश्च। अत एव "घटेन जलमाहरे"त्यादौ छिद्रेतरत्वादावानुषङ्गिकेन शब्दवृत्तिरिष्यते। नियमेन पदार्थरूषिततावभासितया च शाब्दत्वमप्युपपद्यत इति **युक्तमुत्पश्यामः** ॥ २९ ॥

एवमात्मनः सामान्यतः प्रतिज्ञाते वाङ्मनसागोचरत्वे, वागगोचरत्वं तावदुपपादितम्। तत्रेद-मनन्तरमुक्तम्, आत्मवस्तुस्वरूपाधिगतिपरिशेषो वाक्यस्य फलमिति। सा त्वधिगतिर्यदि वाक्यजन्यमेव

ज्ञानं आत्मनि, अनात्मवत् ज्ञेयत्वमात्मनः प्रसज्येत। अथ स्वभावः तर्हि स्वतःसिद्धेरनागन्तुकत्वादुपदेशवैयर्थ्यम्। उभयं च शास्त्रे दृश्यते। "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति", "नारायणं महाज्ञेयम्", "ज्ञेयं यत्तत्प्रवक्ष्यामि,' इत्यादौ ज्ञेयत्वम् "अदृश्येनात्म्ये," "यत्तदद्रेश्यमग्राह्यम्", "अन्यदेव तद्विदितादथो ऽविदितादधि", "अविज्ञातं विजानतां विज्ञातमविजानताम्" "स वेत्ति वेद्यं न च तस्यस्ति वेत्ता", "येनेदं सर्वं विजानाति तत्केन विजानीयात्" "विज्ञातारमरे केन विजानीयात्" इत्यादावज्ञेयत्वमिति। तद्व्यवस्था वक्तव्येत्यतः प्रतिज्ञातं मनोऽगोचरत्वमुपपादयितुं प्रारभते।

तत्र यदुक्तं वागगोचर आत्मेति, तत्तथा स्यान्नाम। किन्तु ते ते भावास्स्वभावादेव भारत्यापि विविच्याख्यातुमशक्याः, प्रत्यक्षानुभवसमधिगमनीया दृश्यन्ते। यथा मधुमाधुर्यादिविशेषाः। **यथाहुः** – "इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्। तथापि न तदाख्यातुं सरस्वत्यापि शक्यते॥" इति। एवमात्मापि स्यात्। केन कारणेन पुनरयमात्माऽपरोक्षानुभवो जायते? मनसैवेति वदामः। किं तन्मनो नाम? यदन्तःकरणमाचक्षते। किं लक्षणं तत्? युगपज्ज्ञानानुत्पत्तिलिङ्गकं कामसङ्कल्पाद्युपादानं च। यथा श्रुतिः – "अन्यत्रमना ऽभूवं नाश्रौषमि"ति, "मनसा ह्येव पश्यति मनसा शृणोति", "कामस्सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति च। यस्य व्यासङ्गे सति दर्शनाद्यभाव इति, विभुत्वमस्य निरस्तम्। एतत्सर्वं मन एवेति, तादात्म्यव्यपदेशेन कामाद्युपादानतयाऽणुत्वमपि निरस्तम्। तच्च त्रैकालिकविषयम्। यथाहुस्साङ्ख्याः – "साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" इति। विषयविशेषविकल्पनं चास्याऽसाधारणं कार्यम्। तस्मात् "अपि पृष्ठत उपस्पृष्टो मनसा विजानाति" इति श्रुतिः।

**ननूपादानमेव** ज्ञाने मनः, कथं करणमिति? उच्यते। विशिष्टमर्यादस्याहंकर्तुरात्मनो ज्ञानाद्याश्रयतायामुपाधित्वान्मनः करणमुपचर्यते। 'मनसा विजानाती'ति। यथा कषायविशिष्टमर्यादस्य पटस्य रक्तिमाश्रयतायामुपाधित्वात्कषायः करणमुपचर्यते, "काषायेण रज्यति पट" इति यथा वा "यः प्राणेन प्राणिति स त आत्मे"ति **तद्वत्**। तदेतन्मन आत्मापरोक्षानुभवे करणं स्यात्। यस्मिन्करणे व्याप्रियमाण एव यद्विषयरूषितमज्ञानमनुभूयते "तदिदं वा न जानामी"ति, "न साक्षात्करोमी"ति वा, तेन कारणेन तस्य ज्ञानं परोक्षमपरोक्षं वा जननीयम्। यथा चक्षुषि व्याप्रियमाण एव "शुक्तिं न पश्यामी"त्यज्ञानमनुभूयते। तज्ज्ञानं च तेन जननीयम्। अन्यथा तदज्ञाननिवृत्तेः। मनसि व्याप्रियमाण एव "ब्रह्मात्मानं न साक्षात्करोमी"त्यज्ञानमनुभूयते। सुषुप्ते लीने मनसि तथा विषयरूषिताज्ञानानुभवाभावात्। ततस्तेन तदपरोक्षानुभवो जननीय इति। **अथवा**, यत् यद्विषयापरोक्षभ्रमे करणं, तत् तद्विषयतत्वापरोक्षहेतुः। यथा शुक्तौ रजतापरोक्षभ्रमकरणमक्षि,

तत्त्वापरोक्षहेतुः। मनश्चात्मन्यहं कर्ता सुखी दुःखीत्याद्यपरोक्षभ्रमे करणं, अतस्तदात्मतत्वापरोक्ष-हेतुरित्यनुमिमह इत्याशङ्क्य, आद्यन्यायमूलाशङ्कां परिहरन्नाह –

विद्याधिनाथ विदिताविदितेतरत्वं
त्वय्याश्रुतं श्रुतिशिरस्सु विहन्तुकामम्
वेदान्यहं न तमवेदमिति प्रवृत्तं ।
चित्तं त्वयैव विदितं वितथागुवृत्तम् ॥ ३० ॥

विद्यानां ज्ञानानां "संज्ञायां समजनिषदि"त्यादिना विदेर्भावे क्यप्। अधिनाथति, अधीष्ट इत्यधिनाथः। ब्रह्मादिव्यावृत्यर्थमधीतिविशेषणम्। "ईशानस्सर्वविद्याना"मिति हि श्रुतिः। स्मृतिश्च – "मत्तस्स्मृतिर्ज्ञानमपोहनं चे"ति। तस्य सम्बुद्धिः हे विद्याधिनाथ। अनेनागन्तुक-विद्यायाः प्रागेव, स्वतस्सिद्धिमात्मनः सूचयति। तेन जननीयज्ञाननिरपेक्षसिद्धिके तस्मिन्नज्ञानानुभवो न तत्कारणप्रवृत्तिप्रयोज्य इति हेत्वसिद्धिरुपक्षिप्ता भवति। त्वयि स्वयंज्योतिस्स्वभावे परमात्मनि। श्रुतिशिरस्सु, श्रूयन्त एव न केनचित्क्रियन्त इति श्रुतयः वेदाः। तासां शिरांसीव प्राधान्यात् परमपुरुषार्थप्रतिपादनेन, उपनिषदः शिरांस्युच्यन्ते, तेष्वाश्रुतं "अन्यदेव तद्विदितादथो अविदितादधि" इत्यादिना प्रतिज्ञातम्। विदिताविदितेतरत्वं ज्ञाताज्ञातान्यत्वम्। यदि हि ब्रह्म वेदनेनावभास्येत, तद्वेदनमवभासमानं नान्यदवभासयितुं शक्नोति। अप्रकाशमिव तमो रूपादिकम्। अथ तद्भासेत तद्यदि स्वत इत्युच्यते, गौरवमापद्येत एकेनैव स्वप्रकाशेनात्मना सर्वावभासोपपत्तेः। श्रूयते हि "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। अथात्मनैव तद्वेदनं भासेत, तर्हि वेदनमनपेक्ष्यैव स्वतो भासमानं विदितादन्यदिति युक्तम्। एवमवेदनेन यत् व्याप्रियेत, तदवेदनमेव न सिद्ध्येत्, तदवेदनावभासात्मसिद्धिकमविदितादन्यदिति युक्तम्। तदिदं विदिता-विदितेतरत्वं कर्म। विहन्तुकामं, विहन्तुं कामो यस्येति 'सुप्सुपेति' समासः। 'तुं काममनसोरपी'ति मलोपः। तथाप्रवृत्तं इति सम्बन्धः। कथं प्रवृत्तमित्यत आह वेदानीत्यादि। अहं तं परमात्मानं वेदानि जानानि। प्राङ् नावेदमित्येवं ज्ञेयत्वसङ्कल्पमज्ञातत्वानुसन्धानं चाहंकर्तुरावहत्प्रवृत्तं चित्तं, त्वयैव स्वयंप्रभेणात्मनैव विदितं, सह ज्ञेयत्वसङ्कल्पाज्ञातत्वानुसन्धानविकल्पाभ्यां अवभासितम्। त्वयैवेत्येवकारेणान्यस्मिन्प्रक्रान्ते ऽन्यदापतितमिति न्यायं सूचयति। अतस्तच्चित्तं, वितथागु वृत्तम्। आगुरिति आङ्पूर्वकाद्गमेर्डुप्रत्ययः। 'भ्रमेश्चडूरि'ति चकारेण। 'गमेर्ड' इत्यतो गमिरनुकृष्यत

इति। वितथा व्यर्था आगुः संवित् यस्य तत् वितथागु व्यर्थसंवित्कम्। मोघसङ्कल्पं सम्पन्नम्। आत्मनो ज्ञातत्वमज्ञातत्वं वा सम्पादयितुं न समर्थमित्यर्थः।

**अयमत्राशयः** – यदुक्तमात्मरूषिताज्ञानानुभवप्रयोजकप्रवृत्तिकत्वान्मनस्तज्ज्ञाने करणमिति, तत्रासिद्धो हेतुः। कथम्? विदिताविदितेतरत्वं ह्यात्मनः प्रतिज्ञातम्। तत्कथमुपपादनीयम्? वेदनावभासकतया स्वतस्सिद्धेर्विदितादन्यत्वमुक्तम्। अवेदनविषयत्वमविदितत्वम्। अवेदनमिति च न वेदनाभावमात्रम्। धर्मिप्रतियोगिवेदनसत्त्वे तदसत्त्वे वा तदनुभवायोगात्। किन्तु वेदनप्रतियोगिकमावरणात्मकं भावान्तरमेव, यदज्ञानमविद्या तम इत्युच्यते। तच्च सुषुप्तावप्यनुभूयते। अन्यथा, 'न किञ्चिदवेदिषमि'ति प्रतिबुद्धप्रत्यवमर्शायोगात्। नन्वनुमानात् तदात्वज्ञानाभावलक्षणाज्ञानसिद्धिरिति चेत्, न, पक्षाद्यनिरूपणात्। न तावत्सुषुप्तकाल एव पक्षः। अशेषविशेषविज्ञानाभाव एव सुषुप्तमिति, तदज्ञाने, आश्रयासिद्धेः। तज्ज्ञाने सिद्धसाधनात्। नाप्यात्मैव पक्षः। कालविशेषाविशेषिते तत्राशेषविशेषविज्ञानाभावः। अनयैव दिशा तत्कालास्मरणादिलिङ्गभङ्गो व्यूहनीयः। यथा चायमनुमानायोगः तथान्यत्र विस्तरः। **ननु च** तवापि 'सुखमहमस्वाप्समि'ति, अशेषविशेषविज्ञानाभावः प्रत्यवमृश्यते, तत्रानुमानमवश्यमाश्रयणीयमिति चेत्, सत्यम्, तदात्वानुभूतभावरूपाज्ञानप्रत्यवमर्शेन निरुक्तस्वापानुमानमुपपद्यते। विषयविशेषारूषिताज्ञानानुभवकालोऽशेषविशेषविज्ञानशून्यः, तादृशाज्ञानानुभवकालत्वात्, यो यद्विषयाविशेषिताज्ञानानुभवकालः स तद्विषयज्ञानशून्यः, यथात्माज्ञानानुभवकाल आत्मज्ञानशून्यः इत्यादिना। न च सुषुप्तावज्ञानानुभवो जन्य उपपद्यते। सकलकरणव्यापारोपरमात्। अतः स्वयञ्ज्योतिरात्मैवाज्ञानानुभवो वाच्यः। स चेदविदितः न किञ्चिदपि ज्ञायेतेति आन्ध्यमापन्नमशेषस्य। अतो अविदितादधीत्युच्यते। अधि, उपरि अन्यदित्यर्थः। तस्मान्नात्माज्ञानानुभवे प्रयोजिका मनःप्रवृत्तिः। तदभावेऽपि सुषुप्तादावज्ञानानुभवात्। यद्यपि मनःप्रवृत्तिदशायामेवात्मविषयरूषितत्वविशिष्टाज्ञानानुभवः, तथापि तत्र न मनःप्रवृत्तिः प्रयोजिका। यदि ह्यहङ्कारोत्तीर्णो ज्ञानानन्दादिस्वभावो ह्यात्मा, आगमेनापाततो मनागपि न व्युत्पाद्येत, अहमात्मज्ञान एव मनसः प्रवृत्तिरुपक्षीयेतेति, तद्विषयरूषिताज्ञानानुभवानुपपत्तिः। अज्ञानस्य च ज्ञानविरोधितया, तत्तद्विषयरूषितत्वानुभवः तत्तज्ज्ञानप्रसक्तप्रतिबन्धप्रमाणप्रवृत्त्यपेक्षयेति, उपपादितमन्यत्र। तस्मादात्मप्रमाणागमज्ञानोपक्षीणत्वान्मनःप्रवृत्तेः, न तदात्मनि प्रमाणम्। किन्त्वागम एव। तत्प्रवृत्तावेव तद्विषयरूषिताज्ञानानुभवात्। परन्त्वागमेनात्मज्ञाने जनयितव्ये तस्याहमात्मधर्मतया कामादिसाधारण्येन निमित्तमेव मन इति॥ ३०॥

एवमात्मन आत्मविषयरूषिताज्ञानानुभवप्रयोजकप्रवृत्तिकत्वलक्षणानुमानमूला मानसत्वशङ्का निरस्ता। अथ तद्विषयापरोक्षभ्रमहेतुत्वलक्षणानुमानमूलां तदाशङ्कामनुवादपूर्वं निरस्यति –

अभ्युद्यतं त्वयि समर्पयितुं चिराय
गौरीमिवाचलगुरुः परमेश विद्याम्
जिहेति मानसमिदं निजदुस्स्वभाव-
जन्मादिवेदिनि भवत्यपि सम्मुखत्वे ॥ ३१ ॥

**इदं मानसं** इदमित्यात्मसाक्ष्यतयाऽपरोक्षतां दर्शयति। अन्यथा न्यायिनामिवात्यन्तपरोक्षत्वे मनसो धारणादिविधानमशक्यं स्यात्। अनेन तत्पुत्रस्य तत्पितृत्वमिव, तदवभास्यस्य तदवभासकत्व-मयुक्तमिति सूचयति। मन एव **मानसम्**। प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः। राक्षसवायसादिवत्। **विद्यां** ज्ञानशब्दितां स्ववृत्तिम्। **अचलगुरुर्हिमवान्**। **गौरीं** पार्वतीमिव। अत्र **परमेशेति** सम्बोधनेन "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" इति स्मृतौ क्षेत्रज्ञ एव परमेश्वर उक्त इति, तदुपस्थापनेन मनोवृत्तिविषयत्वशङ्कायोग्यतां दर्शयति। अत्र परमश्चासावीशश्चेति विशेषणसमासः। आत्मा च विशेष्य ईशित्रीशितव्यादिविशेषोत्तीर्णः। परम ईशश्चोपाधितः। "ईशत ईशनीभिरि"ति हि श्रुतिः। न त्वीशविशेषणं परम इति, प्रयोजनाभावात्। अनुपसृष्टादीशपदादेव निरङ्कुशेश्वरत्वलाभात्। तेन प्रत्यगतिरिक्तः परमेश्वर इति शङ्का निरस्ता भवति। जीवपरैकात्म्यं च वक्ष्यते। **त्वयि** प्रत्यगेकरसे परमात्मनि। **समर्पयितुं** सङ्क्रमयितुं परमात्मविषयतां नेतुम्। **चिराय** विभक्तिप्रतिरूपक-मव्ययम्। चिरं स्वात्मलाभप्रभृत्यभ्युद्यतं, आभिमुख्येन धृतोत्साहम्। पराग्विषयविज्ञानेष्वपि याऽहंवृत्तिः सर्वदा, सा मानस्यैवेति, चिरायाभ्युद्यतमित्युक्तम्। अनेन यत्तत्पूर्वबीजमुक्तमात्मन्यपरोक्ष-भ्रमकरणत्वं, तदुपक्षिप्तम्। अथवा, चिराय यावत्तरति शोकमात्मवित् "आत्मलाभान्न परं विद्यत" इत्याद्यनुश्रुतं तदाप्रभृतीत्यर्थः। अनेन यत्तदुक्तमुक्तहेतुसाध्यमात्मनि तत्त्वापरोक्षहेतुस्स्यादिति, तदुपक्षिप्तम्। एवमनूदितं शङ्कापदं दूषयति **जिहेतीत्यादिना**। 'अभ्युद्यतमपि सत्' इत्यपिरप-कृष्यते। अथवा, अभ्युद्यतमिदं मानसमित्यानुलोम्येनैवान्वयो बोध्यः। भवति, साक्षिभूते परमात्मनि विषये। अपिर्भिन्नक्रमः। सम्मुखत्वेऽपि अभिमुखत्वेऽपि। **जिहेति** लज्जते। पराग्विषयलक्षणा-त्पाराङ्मुख्यान्न व्यावर्तत एव मनः। दूरे तद्विपरीतं प्रत्यग्विषयत्वमात्मसम्मुखत्वमिति, अपिशब्दार्थः। एवमित्यतो हेतुगर्भं विशेषणं **निजदुस्स्वभावेत्यादि**। निजः आजानः दुष्टः स्वः, न त्वात्मन इवौपाधिको भावः। अनवस्थितत्वलक्षणः। यदैव हि क्वचिद्रज्यति तदैव, तत्सिद्धेः प्रागेव ततो विरज्यति, अन्यत्र वा रज्यतीति, मनसो दुस्स्वभावो जन्मप्रभवः। जागरादौ। आदिशब्देन प्रसुप्तादौ प्रलयो गृह्यते। जागरे तावत्सकलेन्द्रियैरेव विषयव्यवहारः। स्वप्ने तु बाह्यकरणानामु-परमो न मानसः। "सधीस्स्वप्नो भूत्वे"ति हि श्रुतिः। सुषुप्ते पुनर्मनो विलीयते। एवं हि श्रूयते, "तानि यथा गृह्यात्यथैतपुरुषः स्वपिति नामे"ति प्रकृत्य "तद्गृहीत एव

प्राणो भवति, गृहीता वाक्, गृहीतं चक्षु, गृहीतं श्रोत्रं, गृहीतं मन" इति। "यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यति" इति प्रकृत्य "मनस्सर्वैर्भ्यातैस्सहाप्येति" इति च। जन्म च जागरादौ श्रूयते – "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः" इत्यादौ, "स यदा प्रतिबुध्यते, अथाग्नेः क्षुद्रा विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेतस्मदात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्त" इत्यादौ च। प्राणाधीनवृत्तित्वादिन्द्रियाणि प्राणा उच्यन्ते। प्राणेन्द्रियसंवादे "त एतस्यैव सर्वे रूपमभवंस्तस्मदेत एतेनाख्यायन्ते प्राणा इति" इत्यादिश्रुतेः। तदिमानि निजदुस्स्वभावजन्मादीनि वेदितुं शीलमस्तीति तथा, तस्मिन्। भवतीति, यथा लोके कश्चिदनार्यशीलः सुशीले यौवनसम्बन्धमिच्छन्निजदुश्शीलादिवेदिनि, सम्मुखीभवितुं लज्जते तथेदं मन इत्युपचर्यत इत्यभिप्रायः। अत्र ताच्छील्यार्थणिनिप्रत्ययेनागन्तुकस्वरूपविज्ञानेन तद्वेदनाव्यभिचारितां दर्शयति। **यथाहुराचार्याः** – "अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम्। एवं यो वेद धीवृत्तं सोऽहमित्यवधारय"॥ इति। तथा च स्वप्रकाशसंविदात्मनः स्वत एव स्वरूपकैवल्यावभास इति सुवचम्। तदवभास्यस्य तदवभासकत्वशक्तिवैकल्यात्। रूपादेस्तत्प्रकाशकालोकप्रकाशकत्वादर्शनात्। अतो बाधादपि न मानसत्वमात्मनोऽनुमातुं शक्यमित्यभिप्रायः ॥ ३१ ॥

अथापि स्यात्, यत्साक्षात्काराय यत् करणं प्रणिधीयते, तत्र तत् प्रमाणम्। यथा रत्नतत्त्वसाक्षात्काराय प्रणिधीयमानं चक्षुः। आत्मसाक्षात्काराय च मनः प्रणिधीयते। अनुभवाद्योगविधानाच्च। तस्मान्मनस्तत्र प्रमाणमिति, न्यायान्तरेणात्मनो मानसत्वमाशङ्क्य निराकरोति —

**स्वावलम्बनोपधिभवद्भिदिविप्रलब्धं**
**त्वामात्मलभ्यमिव संयसतीश चेतः ।**
**आमृष्टमग्रकरजेन फलं कथञ्चित्**
**हस्तापचेयमवयन्निव मन्दचेताः ॥ ३२ ॥**

**स्वेनालम्बनम**ात्मनस्तादात्म्याध्यसनप्रयोजकं मनःकर्तृकं छायाग्रहणम्। **स एवोपाधिः** तेन यो **भवद्भिदिः**, भवत आत्मनो मनःकरणकमहमिति वेदनं, तेन **विप्रलब्धं** प्रलोभितम्। **अत्रेशेति** सम्बोधनेनाऽहमित्यवच्छिद्यमान एवात्मन्यानुषङ्गिक ईशभेदः, गुहेत्यवच्छिद्यमान एवाकाशे बहिर्महाकाशमिव सूचयति तेन तदुपाधिविवेके सति, आत्मैव केवलमिति। कथमीशात्मनो जीवमनोगम्यत्वाशङ्का ? न हि देहगमकं चक्षुस्तदन्तरात्मगमकं भवतीति, चोद्यानवकाश इत्यभिप्रायः। अत एव **त्वां** परमात्मानं। **आत्मना** स्वेन **लभ्यमिव** ज्ञेयमिव। अवयदिति लिङ्गव्यत्ययेना-

पक्ष्यते । चेतः संयसति प्रयस्यति । 'संयसश्च' इति हि श्यन्विकल्प्यते । करणे कर्तृत्वोपचाराद्वा । एकस्यैव मनस्तत्वस्य कर्तृकरणरूपभेदित्वाद्वा, चेतः संयसतीति स्वातन्त्र्यव्यपदेशः । लोके हि यद्यस्य सङ्कीर्णज्ञाने करणं, तदेव प्रणिधीयमानं तस्य विविक्तज्ञानेऽपि करणं दृष्टम् । यथा कोलाहल-ज्ञाने करणं श्रोत्रं प्रणिधीयमानं, विविक्तवीणादिज्ञानेऽपि करणम् । एवं मनोऽपि स्वसङ्कीर्णात्मज्ञाने करणतया, विविक्तात्मज्ञानस्य प्रयस्यतीति युक्तमिति भावः ।

**ननूक्तमात्मनः** स्वयमेव स्वभावकेवलावभासप्रसक्तावनाद्यविद्यावरणादहं मनुष्य इत्याद्यवभासो विभ्रमः, न मानसी वृत्तिरिति । सत्यमुक्तम् । तथैव च सिद्धान्तरहस्यम् । किन्तु नात्मनो मनस्तादात्म्यविभ्रमः, किं तर्हि, मनस एवात्मतादात्म्यविभ्रमः । इति साङ्ख्यच्छायानुसारिसिद्धान्तेन मनोवृत्तिरूप एवाहमिति विभ्रम इति आश्रित्यैतदुक्तम् । अत एव स्वेनालम्बनमात्मन इति समासो दर्शितः ।

केनचित्पुनरनपेक्ष्य मनोवृत्तिमात्मनस्तादात्म्यभ्रमोपपत्तावपि, अहङ्कारात्मस्मृतिहेतोः संस्कारस्य तदनुभवनाशजन्यत्वात्तद्विषया वृत्तिरङ्गीकर्तव्या । सा च मानस्येवास्तु । अहंवृत्त्युपाश्रयतया शब्दादि-विषयवृत्तेः 'अहमिदं जानामी'ति वृत्तिद्वययौगपद्याविरोधात् । अन्यथा, विषयज्ञानदशाया'महमि'ति सविशेषावभासाभावप्रसङ्गात् इति मन्यन्ते । तदपरे न क्षमन्ते । अन्वयव्यतिरेकाभ्यामनुभवो हि स्मृतिमूलसंस्कारहेतुः । न तन्नाशः । मानाभावात् । अपि च नाहमात्मनः स्मृतिरुपपद्यते । सति तस्मिन्नपरोक्षस्वभावत्वादसति च स्मर्तुरभावेन स्मृत्यनुपपत्तेः । सोऽहमिति प्रत्यभिज्ञाहेतुस्तु संस्कारः प्रागवस्थाविशिष्टानुभवनाशादप्युपपद्यत इति, किं तद्गोचरमनोवृत्त्याश्रयणेन । अन्यथा तद्वृत्तेरपि वृत्त्यन्तरापेक्षया स्मर्तव्यत्वकल्पनायामनवस्थानात् इति । अत्र 'आत्मलभ्यमि'वेति इवकारेण न वस्तुत आत्मा मनोगम्य इत्युपक्षिपति । तेनाऽभ्युपगतमपि तदपरोक्षत्वभ्रमकारणत्वं तत्साक्षात्काराय प्रणिधीय-मानत्वं च मनसः तत्प्रमाणत्वे प्रयोजकमिति सूचितं भवति । यदि हि मनःप्रमाणक आत्मा स्यात्, मनोवृत्तिलक्षणसाक्षात्कारे तदुपाधिक एवावभासेत, न केवलः । केवलात्मावभासश्च पुरुषार्थः । स च सर्वात्मना मनोवृत्त्युपशम एव भवतीति, न मनस्तत्र प्रमाणम् । मनःप्रणिधानं तु सूक्ष्मवस्तुदर्शने चक्षुष इवागमस्यात्मतत्वदर्शने सहकारितया विधीयत इत्युपपन्नम् । नन्वागमेनाप्यात्मनि मनोवृत्तिलक्षण एव साक्षात्कारो जनयितव्यः । तस्मिन्सति तदुपाधिक एवात्मावभासेतेति, तुल्यो दोषः । न । स्वस्यापि निषेधविकल्पितात्मनि साक्षात्कारवृत्तिरागमिकी केवलात्मावभासपरिशेषा भवतीत्यागम एव तत्प्रमाणमिष्यते । आगमनिरपेक्षा पुनरात्मनि मानसवृत्तिनिषेधकाभावान्न स्वनिषेधविकल्पितेति, न केवलात्मावभासपरिशेषेति वैषम्यादिति । एवमतल्लभ्येऽपि तल्लभ्यत्वभ्रमहेत्ववष्टम्भेन प्रयासे दृष्टान्तमाह **आमृष्टमित्यादिना** । कथञ्चित् अङ्गुष्ठाग्रावस्थानादिप्रकारेण । **करजो** नखः । अग्रश्चासौ करजश्च

तथा। तेन नखाग्रेणेति यावत् आमृष्टमीषत्स्पृष्टम्। **फलमाम्रादि**। **हस्तापचेयं** हस्तेनापचेतुमाहर्तुं शक्यम्। **अवयन्** जानन्। **मन्दचेता** अल्पबुद्धिर्बाल इवेति। यथा बालः कथञ्चिन्नखाग्रस्पृष्टमिति फलं हस्तग्राह्यमिव भ्राम्यन् प्रयस्यति, न च हस्तेन तत्फलं गृह्यते, एवं कथञ्चिद्विशिष्टत्वेन मनोवृत्त्यामृष्टमात्मानं स्वग्राह्यमिव भ्राम्यन्मनः प्रयस्यति। न च तेन स गृह्यत इत्यर्थः। तस्मादात्मा न मानस इति ॥ ३२ ॥

अथापि स्यादात्मनि तावदागमः प्रमाणमाद्रियते। तेन चावश्यं तद्विषयप्रमा जनयितव्या। तद्विषयत्वं च प्रमायास्तदज्ञाननिवृत्त्यवभासप्रयोजनकत्वम्। तथारूपं हि तस्याः शब्दादिविषयत्वमुपगम्यते। अन्यथाऽऽत्मनस्तद्विषयत्वाभावे, कथमात्मप्रमाणमागमः स्यात्। सा च प्रमा अहमात्माश्रया मनोवृत्तिरेव। **यामाहुर्विद्येति**। ततश्च मनोवृत्तिविषयत्वावश्यम्भावे सत्यात्मन आगमोपदेशसंस्कृतमनोगम्यत्वमेवास्तु। सन्निहितत्वात्। गन्धर्वोपदेशसंस्कृतश्रोत्रगम्यत्वमिव षड्जादेः। यथोपदेशं चात्मानमवधारयन्मनः स्वात्मनोऽपि विविक्तमेवावधारयतीति, न केवलात्मपरिशेषविरोधोऽपि इत्याशङ्क्य, मनोवृत्तिविषयत्वमेवात्मनो निराकरोति —

आयोजिताऽपि मनसा वचसा च विद्या
नालिङ्गितुं प्रभुरनावरणं भवन्तम्।
शालीनभावपरिशीलनयेव लीना
सावेक्षितैव भवता गिरिश! क्षिता वा ॥ ३३ ॥

आस्तां तावदागमसंस्कृतं मनः। प्रणिहितमनस्सहकृतो वाऽऽगमः प्रमाणमात्मनीति विशेषव्यवस्था। उभयं त्वपेक्षितो हेतुरात्मविद्योदय इति 'मनसा वचसा चे'ति समुच्चीयते। **ताभ्यामायोजिताऽपि** सङ्गमिताऽपि। तदनुषङ्गनिरूप्यतालक्षणतदाकारतया तद्विषयतामापादिताऽपि। प्रमाणस्वभावो हि तद्विषयप्रमाजनकत्वम्। आत्मा पुनरविषयस्वभाव इति, तद्विषयत्वायोगं सूचयितुमपिशब्दः। **विद्या** मनोवृत्तिलक्षणा। अत्र गिरि वाचि वेदलक्षणायां शेते, प्रतिपाद्यतया वर्तत इति गिरिशः। शेतेर्डः 'हलदन्तात्सप्तम्याः संज्ञायामि'ति अलुक्। **हे गिरिशेति** सम्बोधनेनागम एवात्मनि प्रमाणमिति, प्रमाणविशेषव्यवस्थां सूचयति। यदि पुनरात्मनि मनः प्रमाणं स्यात्, तद्यध्यप्यध्यारोपापवादमुखप्रवृत्तागमेन संस्कृतं, तथापि स्वप्रवृत्तिस्वभावेन स्वसत्तासापेक्षमेव, श्रोत्रमिव षड्जादौ तत्र प्रमाणं स्यात्। तदिति तद्विशिष्टावभासत्वादात्मावभासकैवल्यं न स्यात्। आगमे तु प्रमाणे तस्य सर्वापवादसामर्थ्येनाऽन्यसत्तानपेक्षणादात्मावभासकैवल्यं स्यादित्यभिप्रायः। भवन्तं

परमात्मानम् । **आलिङ्गितुं** स्वगोचरीकर्तुम् । **न प्रभुर्न** समर्था । कुत इत्यतो हेतुगर्भं विशेषणमनावरणमिति । नास्यावरणमनवभासलक्षणमस्तीति, अनावरणम् । यस्य खल्वज्ञानादनवभासस्तस्य, ज्ञानादवभास इति तद्विषयता युज्यते । न च तदुभयमात्मनः । स्वयमेव ज्ञानाज्ञानावभासकत्वात् । अथ शब्दादिविषयस्येवात्मनोऽपि ज्ञानाज्ञानयोर्निरूप्यतायामुपारञ्जकतैव, न तु तदवभासकतेति चेत्, तर्हि केन तदुपरक्तम्? ज्ञानमज्ञानं वा निरूप्यताम् । तद्विषयज्ञानेनेति चेत् तत्र यदि तावदज्ञानज्ञानं प्रमाणेन जननीयम् । सुप्तादावज्ञानं न ज्ञायेत । तत्र सकलप्रमाणोपरमात् । ज्ञेयं च तत्रावश्यमज्ञानम् । अन्यथा, 'न किञ्चिदवेदिषमि'ति प्रतिबुद्धप्रत्यवमर्शानुपपत्तेः । **अथ** यदा यद्विषये सकलप्रमाणप्रवृत्तिस्तदा तद्विषयमज्ञानं तयैव ज्ञायत इति चेत्, न, तदज्ञानप्रमाणस्यैव तद्विषयप्रमाणतया तत्र सकलप्रमाणप्रवृत्तेरभावात् । तत्प्रमाणाप्रवृत्तौ तद्विषयरूपिताज्ञानानुभवायोगाच्च । न हि कदाचित्केनचिन्मेरुकुहरान्तरितविशेषरूषितमज्ञानमनुभूयते । अथ तद्विषयप्रमाणप्रवृत्तावपि तदनुपलब्धिरेव तदज्ञानाज्ञाने हेतुरिति चेत्, न, अनुपलब्धिरिति हि ज्ञानाभाव उच्यते । अज्ञानमेव च ज्ञानस्याभावतया विरोधितया चानुभूयते 'न जानामी'ति । ततश्च विषय एवाज्ञानं तज्ज्ञाने करणमित्युपगतं स्यात् । **तच्चाशक्यम्** । तस्यामेवैकस्यां ज्ञानक्रियायां तस्यैवैकस्य करणतया कर्मतया च गुणप्रधानभावविरोधात् । तस्मात्स्वयंप्रकाशात्मैव ज्ञानाज्ञानमाश्रयणीयम् । तत्र प्रसक्तप्रतिबन्धे तद्विषयावभासे तद्विषयरुषितमज्ञानमवभासते । अन्यथा, विषयावभासाप्रसङ्गे प्रकाशमात्ररुषितमवभासत इति । न प्रकाशात्मन्यावरणसम्भवः । तथा प्रमाणज्ञानमपि यदि ज्ञानान्तरेण जायेत, अनवस्था स्यात् स्वयमनवभासमानस्य तिमिरद्विषयावभासाप्रयोजकत्वात् । जन्यज्ञानस्य स्वप्रकाशत्वेऽपि तदुत्पत्तिनिधनासिद्धिप्रसङ्गः । यथा चैवं तथा व्याख्यातं "दृष्टिश्रुतिप्रभृतिसम्भवदर्शिनं त्वामि"त्यत्र । तस्माज्ज्ञानस्यापि ज्ञानमात्मैवेति, न तस्य प्रमाणज्ञानाधीनोऽवभास इति । नन्वेवमात्मप्रमाणमागमो न स्यात् । किञ्चैवमात्मन्यावरणाभावे कथं ब्रह्मात्मानं न जानामीत्यनुभवः । किमर्थं च ब्रह्मात्मविज्ञानमागमिकमन्विष्यते । उच्यते । आत्मा तावत्स्वयमवभासमान एवानाद्यज्ञानाहमाद्यात्मना विपर्यस्तरूपो वा भासते । तत्रात्मनि भेदाभेदादि विशेषारोपणेनैव 'ब्रह्म न जानामि ब्रह्मात्माभेदं न जानामी'ति । प्रकाशात्मानं न जानामीत्यादि विषयविशेषरूषितमज्ञानं विपर्यस्यते । तद्विपरीतस्वभावात्माकारप्रमाणप्रवृत्तौ सत्यामेव, तदवभासात्मा केवलस्वरूपावभासपरिशेषो भवतीति, तदन्वेषणोपपत्तिः । तथा च तदाकारप्रमाजनकतामात्रेणाज्ञानादिविपर्ययदशामपेक्ष्यैव, तदवभासप्रयोजनकप्रमाकरणत्वादात्मप्रमाणमागम इति परिभाष्यते । न वस्तुगतिमपेक्ष्य किञ्चित्प्रमाणमित्युपपन्नम् । **यथाह भगवान्भाष्यकारः** "अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि च" इति । तदेतदनावरणं भवन्तमिति विशेषणादुत्थितम् । आवरणविपर्यासदशायामेव तदवभासप्रयोजनिकेव विद्याऽभिलप्यते । तदभावे विपर्यस्तरूपावभासित्वादिति ।

नन्वात्माकारायामागमिकप्रमायां सत्यामपि, कथं केवलात्मस्वरूपावभासपरीशेषः? तथैव तदनुषङ्गविपर्यस्तरूपावभासित्वात् इत्यत आह – **शालीनेत्यादि**। सा मनोवचोभ्यामायोजिता ब्रह्माकारतयोत्पादिता विद्या, भवता प्रत्युपस्थितविषयप्रकाशेनात्मना ऽवेक्षितैव सती। न तु निमित्तान्तरमपेक्ष्येत्येवकारार्थः। अथवा, भिन्नक्रम एवकारः। **क्षितैव वेति** सम्बध्यते। शालीन-भावस्याधृष्टभावस्य कातर्यस्य। परिशीलनया परिचयेन, दृढरूपेण कातर्येणेति यावत्। **इवकारेणोत्प्रेक्षा** व्यज्यते। **लीना** अन्तर्हिता वा। लये हि बीजपरिशेषापत्तिः। अतोऽवधारयति क्षितैव क्षीणैव वेति। "क्षियो वा क्रोशदैन्ययो"रिति दैन्ये कर्तरि निष्ठायां दीर्घाभावे, "क्षियो दीर्घात्" इति विहितनिष्ठानत्वाभावः। तेन च दैन्येन विनाशमुपलक्षयति। तथा च विद्याया अप्युपशमे केवलात्मावभासपरिशेष उपपद्यत इति भावः। **अनेन,** यथा भर्त्रनुरागरहिता कुलवधूर्बन्धुभिः भर्तृसङ्गमाय प्रवर्तितापि अनावरणदेशे भर्त्रा वीक्षितैव लीयते, तथा विद्यापीति सूच्यते ॥ ३३ ॥

अथ कुतः क्षयः विद्यायाः? न तावत्स्वविषयज्ञानेन। तस्य नित्यसिद्धतया न्यायिनामिव तद्विरोधित्वाभावात्। अथ क्षणिकतया स्वयमेवेत्युच्येत, तथापि तदुपादानाहङ्कारानपाये सति, आत्मनो निःश्रेयसानुपपत्तिः। अथ तन्नाशाय यत्नान्तरमाद्रियेत, परमपि तन्नाशाय यत्नान्तरमित्य-नवस्थानात् सैव निःश्रेयसानुपपत्तिः इत्याशङ्क्य, विद्यया ऽविद्यानिवृत्तौ, तन्मूलस्याहङ्कारादेरशेषस्य निवृत्तावात्मकैवल्यमुपपद्यत इति, मन्दमतिग्राह्यं मतमाश्रित्याह –

विद्या निसर्गसुकुमारितराऽऽत्मजन्म-
सँल्लाभसक्षणकुलक्षयमीक्षमाणा।
सन्दर्शने तव परस्य विलज्जितेव
स्वेनैव सा समवसीदति देव सद्यः ॥ ३४ ॥

**विद्योक्तलक्षणा। निसर्गेण** स्वभावेन। अतिशयेन सुकुमारी **सुकुमारितरा**। 'घरूपकल्पचेलडि'त्यादिना ऽऽद्यो ह्रस्वः निसर्गसुकुमारितरेति काकुरध्यवसाये, नूनमित्यर्थः अत एव सा विद्याऽऽत्मनः स्वस्य विद्याया एव **जन्मनः सँल्लाभः** सम्प्राप्तिः। विद्याजन्मैव शोभनं, यतः पुरुषस्य कैवल्यमिति, समुपसर्गः। तेन **सक्षणं,** सह क्षणो यस्य तम्। 'वोपसर्जनस्ये'ति सहस्य सः। **क्षयं** नाशम् लोकदृष्टयोत्प्रेक्षोपयोगित्वेन **कुलशब्दनिर्देशः**। 'ईक्षमाणेवे'त्यत्रापि सम्बध्यते। न खल्वीक्षमाणैव भवति। आत्मविद्याया अपि सहैव विनाशेनाहङ्कारादिविनशाविषयत्वात्। अत उत्प्रेक्षा केवल**मीक्षमाणैवेति। परस्य**

परमात्मनः। स्वगोचरमतीतस्य तत्र सन्दर्शने समवेक्षणे विलज्जिनेव। अत्र देवेति सम्बोधनेन स्वयं विद्योदयनाशादिद्योतकत्वात् तदसन्दृश्यत्वं दर्शयति। स्वनैव सद्यः समवसीदति न हेत्वन्तरेण, न वा विलम्बेनेत्यर्थः। विषयज्ञानस्येव संस्कारशेषत्वं व्यावर्तयितुं समुपसर्गः। अत्र यथा काचित् दुर्योगजन्मा कुलक्षयकरी नारी स्वजन्मनिमित्तं कुलक्षयं पश्यन्ती, परस्य तदभिज्ञस्य सन्दर्शने ह्रीणा स्वयमेवाचिरेण समवसीदति, तथा विद्येति सूच्यते।

अयं भावः – विद्या तावदविद्याविनाशेनैवात्मानं लभते। तमोविनाशेनेव प्रकाशः, यथा स्मृतिः – "अन्धंतम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम्। यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम्"॥ इति। अविद्यायाश्च विलासः सह विद्यया। अहङ्कारादिर्देहान्तः स्वोपादाननाशान्नश्यति। तन्तुनाशादिव पटः, आश्रयनाशादिव शिखा। अतोऽहङ्कारादिविनाशेन हेत्वन्तरापेक्षयाऽनवस्था। हन्तैवं विदुषः सद्यः शरीरपातापातः। तथा च "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति जीवन्मुक्तिशास्त्रविरोधः। न। मञ्जूषानिहितचिरकालपरिवासभृशजीर्णघटितपटस्य दग्धपटस्य वा पटव्यवहारतावन्मात्रकारितयेव, विद्वद्देहादेरपि विद्या विनाशितस्यैव भोगतावन्मात्रकारितया स्थित्युपपत्तेः। तथा च विदुषो "जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा वयस्यैर्वा नोपजनं स्मरन्" इत्यादिविहारोपदेशा न विरुध्यन्ते। इषुक्षेपणमिव कुलालचक्रभ्रमणमिव च प्रवृत्तवेगं हि प्रारब्धकर्म, स्वफलभोजनाय विदुषो देहेन्द्रियादि विधारयति। तथा च विद्वद्विषया श्रुतिः – "तद्यथा हि निर्ल्वहिनी वल्मीके मृता प्रत्यस्ता शयिता एवमेवेदं शरीरं शेते अथायमशरिरो मृतप्राणो ब्रह्मैव तेज एवे"ति। तस्मादुपपन्नं, विद्यया सविलासाऽविद्यानाश इति ॥ ३४ ॥

अथाविद्यानाशो न परमार्थः। अत्र तन्निरूप्यत्वात्। रज्जुसर्पविसर्पणादिवन्न चानृतः। तत्कल्पनाबीजाविद्यानुवृत्तिप्रसङ्गात्। भूयस्तन्निवृत्तियत्नानवस्थायामनिर्मोक्षप्रसङ्गः। न च सोऽपि अविद्याविलास एवेति, प्रागेव विद्यया निवर्तत इति शक्यशङ्कम्। प्रागप्राप्तविनाशानुपपत्तेः। विनाशविनाशोऽपि तथैवाविद्याविलास इत्यप्रामाणिकानन्तविनाशकल्पनाप्रसङ्गाच्च। अथ "नसन्ना-सन्नसदसन्नानिर्वाच्योऽपि तत्क्षयः। यक्षानुरूपो हि बलिरिति केचित्प्रचक्षते"। तन्न। अपूर्व-कल्पनाप्रसङ्गात्। किञ्च स पञ्चमप्रकारः कल्पितोऽपि मोक्षे यदि ज्ञायेत, अवश्यमविद्यादिकमपि प्रतियोगि ज्ञातव्यम्। ततश्च स्वमात्रावसितदृशिस्वभावस्यात्मनो दृश्यदर्शित्वमाविद्यकतत्सम्बन्धाधीन-मेवेत्यविद्यानुवृत्तावनिर्मोक्षप्रसङ्गः। अथ न ज्ञायेत, कथमात्मस्वरूपभूतज्ञानसम्बन्धे सत्यविद्यादि-नाशस्याज्ञेयता? अयोग्यत्वादिति चेन्न, प्रतियोगियोग्यत्वे तन्नाशायोग्यत्वस्यादृष्टचरत्वात्। न च प्रतियोगिनो विद्यादेर्ज्ञानात्मसम्बन्धलब्धात्मकत्वे सति, तन्नाशस्य तदसम्बन्धसत्वकल्पना युक्ता।

प्रतियोगिनो यत्सम्बन्धेनात्मलाभो यथा घटादेः कपालादिसम्बन्धेन, सति तस्मिंस्तन्नाशस्य तत्सम्बन्धसत्वनियमात्। अविद्यादिनाशविषयभावरूपाज्ज्ञानकल्पनापुनरत्यन्तपापीयसी। तस्माद्विद्यया ऽविद्यादेर्नाश इत्युक्तमित्याशङ्क्य, तर्हि विद्यया ऽस्तिनास्तिव्यवहारानर्हत्वापादनलक्षणो बाध एवाविद्यादेरिति सिद्धान्तरहस्यमाह —

विद्याऽविशेषमुषिताखिलवस्तुभेदा-
यात्मानमप्युदयते परिनिह्नुवाना।
सा सूचितैव भवता क्षियती भियेव
नावेक्षितुं पुरहर! क्षमते भवन्तम् ॥ ३५ ॥

**अविशेषेण** हेयाहेयविशेषमनपेक्ष्य सामान्येन यथाशास्त्रं, "साक्षी चेताः केवलो निर्गुणश्च", "सत्यं ज्ञानमनन्तम्" इत्यादि। अथवा, विशेषेणेदमद इति प्रसक्तरूपभेदेन यथाशास्त्रं, "अस्थूलमनणु" "अशब्दमस्पर्शं", "नेतिनेत्यात्मा" इत्यादि। तथा **मुषिता** अपहृता निषिद्धा इत्यर्थः। **नास्ति खिलं** अनिषिद्धो निषेधोप्यवशेषः येषु ते तथा। **वस्तुनः** आत्मनः। **भेदा** भिद्यत आत्मा एभिरिति भेदा विशेषा यया सा तथा। या विद्या, सामान्यतो विशेषतश्च प्रसक्तयावद्विशेषनिषेधरूपतया, **आत्मानं** स्वं विद्यामपि। तस्या अप्यात्मन्यरोपितविशेषत्वाविशेषात्। **परिनिह्नुवाना** निषेधयन्ती, संस्कारशेषत्वाप्रसङ्गाय परिग्रहणम्। **उदयते** निखिलाध्यारोपितनिह्नव एव विद्योदय इति, निह्नुवानोदयत इति तुल्यवर्तमानकालव्यपदेशः। **सा** तद्विधा निःशेषविशेषनिषेधविकल्पमयी विद्या। भवता सन्निहितस्वभावप्रकाशेन परमात्मना। **सूचितैव** दृष्टैव। न ह्यनवभासमाना विद्या किञ्चिदवभासयति। न च जडस्वभावो स्वयमवभासत इत्येवकारार्थः। यद्वा, यथा घटादिर्दृष्टो यत्नान्तरेणाभावमापद्यते, न तथा लेति यत्नान्तरव्यावृत्त्यर्थ एवकारः। **भियेव** भयेनेवेत्युत्प्रेक्षा। **क्षियती** 'क्षिधातुस्तदादिष्वपि पठ्यते' गच्छन्ती नश्यन्ती तिरोभवन्ती अभावं प्राप्नुवती सती। पुराणि स्थूलसूक्ष्मकारणशरीराणि त्रिपुरमिव हरत्यभावमापादयतीति त्रिपुरहरस्तस्य सम्बुद्धिः। **हेपुरहरेति**। अनेन यदैव तादृशीं विद्यामवभासयत्यात्मा तदैव स्वरूपकैवल्यमिति दर्शयति। बाधितानुवृत्त्यैव च देहादेर्जीवन्मुक्तव्यवहार उपपद्यत इति भावः। **भवन्तं** स्वस्याप्यभावावभासेनावशिष्यमाणम्। **अवेक्षितुमवभासयितुम्। न क्षमते**। या सत्यपि स्वभावभासमात्मानमवभासयितुमक्षमा, सा कथमभावमापद्यमानाऽवभासयेदित्यभिप्रायः। अत्र चोरनारी यथा दण्डनेता दृष्टैव भयादवसीदन्ती, तं नावेक्षितुं क्षमते, तथा विद्याऽऽत्मानमिति सूचितं भवति।

इदमत्रानुसन्धेयम् — सन्ति तावत्सामान्यतो विशेषनिषेधाः "साक्षी चेताः केवलो निर्गुणश्चे"त्याद्याः। विशेषतश्च "अस्थूलमनण्वि"त्याद्याः। सन्ति च विशेषविधयः "सर्वज्ञः सर्ववित्"। "सत्यकामः सत्यसङ्कल्पः" इत्याद्याः। तत्र निषेधा आत्मवस्तुस्वरूपावबोधनपराः। विधयस्तु तदुपलक्षणकारणरूपानुपातिनो न तदुपलक्ष्यवस्तुतत्वपरं निषेधं विरोद्धुं प्रभवन्ति; प्रत्युत निषेधा एव सहकारणरूपेण गुणविधीनुपरुन्धन्ति। ततश्चाध्यारोपिताशेषविशेषापवादेन स्वरूपविशेषसमर्पणया सर्वमेव वेदान्तवाक्यं सद्वितीयत्वपरोक्षत्वनिषेधेन नित्यापरोक्षप्रकाशानन्दसत्तामात्र-केवलात्मावसायि, तत्वमस्यादिवाक्यैकवाक्यतां भजते। तदिदमतो महावाक्यमुच्यते। शेषस्य तदर्थप्रतिपत्त्युपयोगित्वात्। यथा चोदनार्थप्रतिपत्त्युपयोगितया मन्त्रार्थवादादेः सैव महावाक्यमुच्यते। तद्वृत्तप्रभवा च विद्यया सह स्वेन तटस्थोपनीतविश्वनिषेधविकल्पिताखण्डात्माकारा, जायमानैव निषेधे नैवावभासत इति, केवलात्मस्वरूपावभासपरिशेष उपपद्यते। आरोपितप्रतियोगितया निषेधस्यापि, तदपामार्जनेनैवापमृष्टत्वात्। हन्तैवमात्मनि विद्याया अपि निषेधे, तत्रैव तस्या आत्मलाभायोगः। तत्रात्मलाभे वा तदैव निषेधायोग इति। नैवम्। यथा हि शाल्मलीतूलांशु-संयोगः महादवे, विनाशे नैवात्मानं लभते। यथा वा 'मामन्यं वा न जानामि' इति निषेधेनैव तत्तद्विषयतया ज्ञानमात्मानं लभते, तथा विद्याया अप्यात्मनि निषेधे नैवात्मलाभो न विरुध्यत इति॥ ३५॥

अत्रैवं सर्वनिषेधेन विद्याया अप्यभावप्राप्त्युपगमे, विद्या कथमात्मसिद्धिप्रयोजिका स्यात्? न हि ज्ञानाभावेन कश्चिदर्थः सिद्ध्यति। किं चैवं शून्यपरिशेष एव कस्मान्न भवति? न च तदभावसाधकतयान्यस्यापेक्षायां शून्यपरिशेषानुपपत्तिरिति वाच्यम्। सिद्धान्ते तस्या एव विद्याया इव तदवभासकस्यैव सहस्वेन सर्वाभावसाधकत्वोपपत्तिरिति शङ्काद्वयं परिहरन्नाह —

विद्युल्लतामिव समुल्लसितां समक्षं
विद्यामवेक्ष्य कमनोमिव कामुकस्त्वम्।
उत्तानभावमुपयन्निव दर्शितात्मा
विद्योतसे मधुरिमाञ्चितमात्मनैव ॥ ३६॥

**विद्युल्लतामिव,** इदमित्थमित्यतर्कणीयलावण्यां। **समक्षं** अक्षगोचरे। **समुल्लसितां** हावभावादिविलासैरुद्दीपिताम्। **कमनीं** सुन्दरीमिव। विद्युल्लतामिव तत्क्षणतिरोभाविनीम्। **समक्षं**

स्वप्रकाशगोचरे समुल्लसितां सम्यगबाधितविषयतयोद्भूताम्। **विद्यामवेक्ष्यात्रभास्य,** कामिनीमवलोक्य, **उत्तानभावं** उत्तानमगम्भीरं सुग्रहलौल्यकार्पण्यं भावमाशयम्। उत्तानस्य वा कापुरुषस्य भावं, **उपनयन्** उपगच्छन्। **कामुक इव त्वं** उत्तानभावं स्फुटप्रकाशतामुपयन्। नित्यमेव स्फुटप्रकाशस्यात्मनः प्रागनृताविद्यावरणेन गम्भीरत्वमपेक्ष्य, विद्याकाल एव स्फुटप्रकाशत्वमुपचर्यते। **दर्शितात्मा** प्रकाशमानस्वभाव इत्यर्थः। प्राचीनमधिकारिणम्। प्रमातारमपेक्ष्यायं णिच्प्रयोगः। आत्मनैव, न तु विद्यया। मधुरिम्णाऽऽस्वादनीयस्वभावेनाञ्चितं पूजितं यथा भवति तथा **विद्योतसे,** यथा कामुको दर्शितवेष **आत्मनैव** कामिन्यै श्लाघमानो भवति, तद्वदत्र **मधुरिमाञ्चितं** विद्योतस इत्यनेन, आनन्दापरोक्षस्वभावतया, पुरुषार्थपर्यवसानमुक्तं भवति।

**अयमत्राशयः** न तावद्विद्या स्वयमभावापन्नस्वभावैव संवर्तते, येन खपुष्पकल्पा सा नात्मस्वरूपावभासप्रयोजिका स्यात्। किन्तु, सर्वनिषेधाकारैव केवलमुपजायते। जायमानैव च सा "वियद्वस्तुस्वभावानुसारादेव न कारकात्। वियत्सम्पूर्णतोत्पत्तौ कुम्भस्यैवं दृशां धियाम्"॥ इति न्यायेन, आत्मचैतन्यव्याप्ता तेनावभास्यमानैवाभावमापद्यते। तत्स्वरूपकेवलावभासपरिशेष इत्युपपन्नं तावदात्मावभासप्रयोजकत्वं विद्यायाः। नापि शून्यपरिशेषापत्तिः शङ्कनीया। तदवभासकस्य स्वयमेव स्वाभावसाधकत्वात्। तस्य सत्वेनावभासे स्वभावसाधकत्वविरोधात्, असत्वे च तस्य स्वयमेवावभासायोगात्। अभाव एव हि परमार्थः, सत्तया च तदवभासकस्यारोपः। तथा तदेव तदेव तत्वज्ञानमारोपश्चेति विप्रतिषिद्धम्। तस्माद्विद्यया अविद्यादिसर्वबाधेनात्मस्वरूपमात्रावभासपरिशेष इति सिद्धम्।

**अथ कोऽयं बोधो नाम?** न तावत्प्रवृत्तिसंवादः, प्रवृत्तिविघातो वा। यत्र प्रवृत्तिरेव न प्राप्नोति, उपेक्षणीयगगननीलिमाद्यारोपे, तत्र बाधाभावप्रसङ्गात्। गन्तव्यज्ञानस्य सर्पव्याघ्रादिना प्रवृत्तिविघाते, बाधप्रसङ्गाच्च। ज्ञानस्य मिथ्यात्वनिश्चयो बाध इति चेन्न। स्वरूपेण तदयोगात्। 'मिथ्यैव रजतमभादि'ति तज्ज्ञानाभावावमर्शनानपवादात्। अर्थस्य च मिथ्यात्वं, न यत्र यदा यस्य येन सम्बन्धेन सत्वप्रत्ययः, तत्र तदा तस्य तेन सम्बन्धेन निषेधप्रतियोगित्वमिति युज्यते एकदैकत्रैकावच्छेदेन भावाभावसहभावविरोधात्। समानसत्ताकयोरेव भावाभावयोः सहभावविरोध इति सङ्कोचकल्पना च, आरोपिततदभावसहभावसिद्धिप्रत्ययाधीना, तत्सिद्धिप्रत्ययश्च विरोधसङ्कोचकल्पनाधीन इति परस्पराश्रयता। अपि चारोपितनिरूप्याभावोऽन्यत्र समानसत्ताकः प्रतिपन्नोपाधौ तु विषमसत्ताक इति कल्पना निर्मूला। आरोपितनिरूप्यस्य सर्वथैव रज्जुसर्पविसर्पणादेरिव तत्समानसत्ताकत्वौचित्यादिति। उच्यते। अस्तिनास्तिव्यवहारानर्हत्वापादनमेवारोपितस्य बाधः। तत्र

चारोपितनिषेधेन वस्तुतत्वावभासो हेतुः । तथाहि — शुक्तितत्वावभासदशायामारोपितं रजतं नास्तीति व्यवहारार्हम् । तदभावापरिशेषात् । न खल्विदं रजतमित्यारोपितमवमृश्य, नेत्येव केवलमारोपिताभाव एव । अत एव गृह्यते । निरवधितद्ग्रहायोगात् किं तर्हि ? इदमित्यवधाय रजतं नेत्यारोपि साधारणसामान्यावच्छिन्नरजताभाव एव । अत एव नाप्यस्ति व्यवहारार्हम् सामान्याभावग्रहस्य तत्र यावद्विशेषसत्वावभासविरोधित्वात् । तस्मादारोपितवृत्तिधर्मावच्छिन्ननिषेधेन तदवधिवस्तुतत्वावभासेऽनात्मनि व्यवहारदशायामारोपितजातीयवस्तुभूतरजताद्यभावमेवालम्ब्य, नेदं रजतमित्यादिनिषेधव्यवहारोऽपि प्रतायते । आत्मनि पुनरारोपितजातीयवस्तुभूतनिषेध्यान्तराभावात्, आरोपितमात्रनिषेधस्य च तदेकनिरूप्यतयारोपितकोटित्वेन वस्तुतत्वावभासे सति शिष्यमाणत्वायोगात्, आरोपितभावाभावविषयसर्वव्यवहारोत्सेदात्, आत्मनः स्वरूपप्रतिष्ठा कैवल्यमेवेति सर्वमवदातम् ॥ २६ ॥

एवं ज्ञानाज्ञानसाधकतया स्वतस्सिद्धिलक्षणया प्रेक्षामूलोपपत्त्या निश्शेषविशेषनिषेधे, परिशेषतः सिद्धिलक्षणया श्रुतिमूलोपपत्त्या च नात्मनः शब्दादेरिव मनोवृत्तिविषयतया सिद्धिरित्युपपादितम् । तत्र निषेधस्यापि विशेषकोटिनिक्षिप्तत्वात् कल्पितैकनिरूप्यत्वाच्च । निषेधे सति विश्वभेदस्य न विधिर्न प्रतिषेध इति विधिप्रतिषेधानर्हत्वापादनं, आत्मतत्वविद्यया बाध इत्यवसितम् । तत्रेयमाशङ्का भवति — यस्य हि न विधिर्न प्रतिषेधो वा तत्तुच्छम् । यथाचक्षते शशशृङ्गादिविधिनिषेधवादे "सचेतसां मूकतैवोचिते"ति, तल्लक्षणत्वोपगमे विश्वस्य तत्वविद्यायाः प्रागपि व्यवहारगोचरानुपपत्तिः । तत्तुच्छस्य जन्माद्यभावे तत्कारणं ब्रह्मेति लक्षणानुपपत्तिश्च । अथासत एव सत्वेनारोपात् न तदनुपपत्तिरिति चेत्, न, असत एवारोप्यत्वं विषयत्वं च युज्यते । निरधिष्ठानविभ्रमस्यादृष्टचरत्वात् । केशोण्डूकादिभ्रमस्यापि सौरालोकाद्यधिष्ठानत्वोपगमात् । अथ सत्येवात्मनि, असतः सत्वेनारोप इति चेत्, न, सदसत्सम्बन्धविरोधात् । असत आरोपे विषयसत्वन्यग्भावेन सत्वारोपो हि विरुध्यते । अथ तर्हि सदेवात्मतत्वं विश्वात्मनारोप्यते । तथा च भगवान्पराशरः "ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः । तदेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम्" ॥ इति । "ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे" ॥ इति च । तर्हि तस्य कथं विधिप्रतिषेधानर्हत्वापत्तिः ? स्वत एव विश्वभेदावभासित्वात् । तथा च स्मृतिः — "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥" इति । सेयमुभयतःपाशा रज्जुरिति तामिमामाशङ्कां, अन्तिमपक्षाश्रयणेनात्मभावकेवलतया विधिप्रतिषेधानर्हता विश्वभेदस्य, न स्वरूपशून्यतयेति परिहरन्, तत्वविद्याविषये ज्ञात्रादिभेदोत्सादलक्षणयापि "यत्र त्वस्य सर्वमात्मैवाभूत्" इति श्रुतिमूलोपपत्त्या, नात्मनो ज्ञानविषयतया सिद्धिरित्यभिप्रेत्याह —

त्वद्भावविप्लुतविधिप्रतिषेधशेषं
दृश्यं च दर्शनपथादिदमस्तमेति।
ज्ञातारमस्य सकलस्य महेश! तं त्वां
जानातु केन करणेन कथं नु को वा ॥ ३७ ॥

**तव भावस्त्वद्भावः** परमात्मभूयम्। तेन तन्मात्रतया न तु तुच्छतया, **विप्लुतोऽ**भावमापन्नः। अस्तीति **विधिश्च** नास्तीति **प्रतिषेधश्च** विधिप्रतिषेधौ भावाभावौ, तावेव **शेषः** यस्य तत् यथा भवति तथेति क्रियाविशेषणम्। "यत्र त्वस्य सर्वमात्मैवाभूदि"ति श्रुतिर्हि न विधिशेषं न वा निषेधशेषं नापि तुच्छमेवेत्येवकारेण सूचयति। इदं बुद्धिसन्निहितम्। **दृश्यं** ज्ञातुं योग्यम्। **चकारोऽ**प्यर्थे। यत् ज्ञेयत्वेन सम्भावितं **तदपीदं** रूपादि, **दर्शनपथात्** दृष्टिगोचरादिति ल्यब्लोपे पञ्चमी। ज्ञानविषयतामतीत्येत्यर्थः। **अस्तमदर्शनमेति** निलीयते। अस्ति नास्तीति वा न ज्ञायत इत्यर्थः। यदा दृश्यमदृश्यं सम्पद्यते तदा तत्वविद्यायां सत्यामात्मनोऽदृश्यत्वमसम्भावितं कथं शक्यशङ्कमित्यभिप्रायः। यद्वा, चकारोऽनुक्तसमुच्चायार्थः। दृश्यं रूपादि द्रष्टा च प्रमाता तदुपकरणं दृगादिकरणं च सर्वं दर्शनपथात् तदनुकूलवृत्तित्वकरणप्रेरकत्वविषयप्रवणत्वादिलक्षणं ज्ञानमार्गं तज्जननप्रकारमतीत्यास्तमेति। एवं सति, **अस्य** सकलस्य दृश्यद्रष्टृदृगादिरूपाभिः कलाभिरवयवैः सहितस्य त्रिपुटीलक्षणस्य **ज्ञातारं**, तदुपधाने सत्यवभासयितारम्। अनेन, ज्ञात्रादिसत्वेऽपि न ज्ञातुं योग्य आत्मा, किं पुनस्तदभाव इति सूचयति अस्य सकलस्य ज्ञातारमित्यनेन सूचितमज्ञेयतया ज्ञातृत्वं श्रुतिप्रसिद्धमित्यनुसारयति। तमिति तदुपस्थापनार्थम्। तदविघातार्थं **महेशेति** सम्बोधनम्। ईशाननिरङ्कुशत्वदर्शनायमहत्वविशेषणम्। "यः सर्वेषु भूतेषु तिष्ठन् सर्वाणि भूतान्यन्तरो यमयति" स हि महेशः। परमात्मा, "अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाते"त्येवंलक्षणकः श्रूयते। **तं त्वां** परमात्मानम्। **केन कारणेना**ऽऽगमेन मनसा वा **कथं नु** "अहं ब्रह्मेति वाऽहमित्येव वा" कोवा ज्ञाता स्वयमन्यो वा **जानातु**? सर्वस्यैव भेदस्यात्ममात्रतयाऽस्तमितत्वान्न ज्ञेय एवात्मेत्यर्थः।

**अयमत्राभिप्रायः** — "तदात्मानं स्वयमकुरुत" "तन्नामरूपाभ्यामेव व्याक्रियत", "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतिदर्शनात् आत्मैव तावद्विश्वभेदात्मनाऽवभासमान एव द्रष्ट्रादिभेदकल्पनया जन्मादिविकल्पनया चावभासते। ततश्च न विद्यायाः प्राक् व्यवहारानुपपत्तिः। तथाहि श्रूयते — "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्या"दिः। न वा जगज्जन्मादिकारणत्वेन ब्रह्मलक्षणानुपपत्तिः। अविद्याविषये सत एवात्मनो विश्वभेदावभासित्वेन,

तस्यात्यन्तिकतुच्छत्वानुपगमात् । विद्याविषयेऽपि विश्वस्यात्मभावावसितत्वात् । "तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा । ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ तत्त्वमस्यादिवाक्योत्थ-सम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नासीदस्ति भविष्यति ॥ गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम्" ॥ इत्यभियुक्तवचनं च तत्त्वविद्यायां सत्यामात्मभावावसितत्वेन, यदस्तीति नास्तीति वा नावभासते, तत्परमेव, न तु खपुष्पादिवत् अत्यन्तासदित्येवम्परमिति । तदेवं विद्याविषये ब्रह्मात्ममात्रतया ज्ञात्रादिबाधन्न ज्ञानविषयतया-ऽऽत्मसिद्धिः । किन्तु स्वयमेवेति ॥ ३७ ॥

न केवलं विश्वगोचरज्ञात्रादिभेदनिषेधेनार्थादात्मनोऽपि ज्ञात्राद्यभावादज्ञेयतया सिद्धिः, किन्त्वाहत्यैव श्रुत्या तज्ज्ञात्रादिनिषेधादपीत्याह —

वेद्यं स वेत्ति शिव! तस्य न वेदितेति
प्रत्यक्षमामनति वेद्यपदातिगं त्वाम् ।
संवेद्यते सकलमेव च येन तं त्वां
वेदाम केन च कथं च विदिस्वभावम् ॥ ३८ ॥

अत्र "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता", "तमाहुरग्र्यं पुरुषं महान्तम्" इति श्रुतिः । छन्दोविरोधात्पदविपर्यासेनानुक्रम्यते । सः "अपाणिपादो जवनो ग्रहीते"त्यादिना लक्षितः प्रकृतः परमात्मा । **वेद्यं** वेदनीयं ज्ञातृज्ञेयादिभेदभिन्नं विश्वं **वेत्ति**। तस्य च परमात्मनो **वेदिता नास्ति। इति शब्दः** प्रभृत्यर्थे। "को अद्धा वेद क इह प्रवोचत्", "अविज्ञातं विजानतां विज्ञातमविजानताम्", "मां तु वेद न कश्चन", "ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्" ॥ इत्यादिसङ्ग्रहार्थः । अत्र **शिवेति** सम्बोधनेन सर्वोपशमात्मकतया विशेषशून्यत्वेन, वेद्यत्वायोग्यतां **दर्शयति। त्वां** वेद्यपदं वेद्यस्थानं वेद्यविषयम् । वेद्येष्वन्यतमभावमतीत्य गच्छतीति, **अतिगम्**। अन्येभ्योऽपि दृश्यत इति गमेर्डः । अवेद्यमेवेत्यर्थः । विधेयविशेषणमेतत् । **प्रत्यक्षं** साक्षात् । **आमनति** अभ्यस्यति । सर्ववेदान्तानामेकवाक्यतया तेषु सर्वत्र वेद्यत्वनिषेधदर्शनादभ्यासवचनमुपपन्नम् । अत्र वेदितृनिषेधसमानवित्तिवेद्यतया वेद्यत्वनिषेधस्य च प्रत्यक्षाम्नानवादो न विरुध्यते । 'अविज्ञातं विजानता'मित्यत्र च विज्ञानकर्मीकुर्वतामविज्ञातमिति प्रत्यक्षमेव ज्ञेयत्वनिषेधः । वक्रोक्त्या तु वेदितृनिषेधो गम्यते । 'विज्ञातमविजानतामि'ति, वेदितृनिषेधेन वक्रोक्त्या स्वत एव सिद्धिरात्मनो

अभिप्रेयते । "यत्तदद्रेश्यमव्यवहार्यं", "अग्राह्यो न हि गृह्यते" इत्यादिप्रत्यक्षं वेद्यत्वनिषेधाः स्थिता एव । तदेवं 'तस्य न वेदिते'त्याम्नाते, यत्खल्वस्ति तस्य वेदिता कथं स्यात् ? तदभावे वा वेद्यस्य खपुष्पवदसत्वमेव कुतो न स्यात् ? इति शङ्कानिरासायापेक्षितोपपत्तिरभिधीयते — **संवेद्यतेत्यादिना** । **येन** त्वया संविदात्मना **सकलमेव संवेद्यते** । अत्रैवकारो योऽप्यात्मनो ज्ञाताऽतिरिक्तः शङ्क्यते, तदुपकरणं वा, तस्य सर्वस्यापि वेद्याकुक्षिनिक्षेपार्थः । अथवा, एवकारो भिन्नक्रमः । येनैव सकलं संवेद्यते । अनवस्थापरिहाराय यतो वेदितुर्वेद्यत्वं व्यावर्तत इत्यर्थः । श्रुत्युपपत्तिसमुच्चयार्थश्चः । **तं त्वां** सर्वोपरि वेदितारं केन च करणेन वेद्यं, विषयकादाचित्कवेदने वेदितुः करणावश्यम्भावसूचनार्थश्चः कथं च केन **प्रकारेण** वेद्यस्य किञ्चिद्विशेषावश्यम्भावश्चकारार्थः ? अवश्यं हि **केनचित्प्रकारेण वेदनीयं वेद्येत** । अन्यथा, विशेषाभावेन वेदनव्यतिरेकस्यैवासिद्धौ, वेद्यत्वाभावप्रसङ्गात् । ननु ज्ञातृत्वमेव विशेषः । नेत्याह — **विदिस्वभावमिति** । अत्र विदिशब्देन धातुवाचिना धात्वर्थमुपलक्षयति । विदिर्वेदनं स्वभावो यस्य स तथा, तम् । ज्ञेयसन्निधानोपाधिकमेव ज्ञातृत्वमात्मनः । ज्ञानात्मकैवल्यं तु स्वभाव इति भावः । अत एव संविदेकस्वभावस्यात्मनः स्वतः सत्वसिद्धेरवेद्यत्वेऽपि खपुष्पादिवदसत्वशङ्कापि निरस्ता भवति तं **त्वां केन कथं** वेदाम जानाम । केनापि कारणेन कथञ्चिदपि प्रकारभेदेन कश्चिदपि वेदिताऽऽत्मनो नोपपद्यत इत्यर्थः । तथा च श्रुतिः "येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात्" इति ।

**अयं भावः** — ज्ञानस्वभाव एव तावदात्मा ज्ञेयसम्बन्धोपाधिना तु स ज्ञातोपचर्यते । प्रकाश इव प्रकाश्यसम्बन्धोपाधिना प्रकाशकः । न तु ज्ञातृस्वभावः । स खलु यदि तावदज्ञानस्वभावः, तदात्मधर्मेण सता ज्ञानेन प्रकाश्योऽपि विषयो नात्मनः प्रकाशेत । स्वतो जडत्वात् । जात्यन्धस्येव सौरालोकप्रकाश्यो रूपादिः । अथ ज्ञानस्वभावस्तथापि स खद्योतवदात्ममात्रावभासितावभासत्वेन पश्यदन्धकल्प इति, तस्यापि पूर्ववदेव विषयप्रकाशायोगः । अत एव विषयप्रकाशात्मधर्मा ज्ञानमात्मने प्रकाशत इति तस्य विषयप्रकाशोपपत्तिरिति निरस्तम् । स्वमात्रावभासितावभासतयात्मनस्तस्मै विषयप्रकाशज्ञानप्रकाशायोगात् । न खल्वन्तर्दृष्टये पश्यदन्धाय रूपादिप्रकाशः सौरालोकादिः प्रकाशते । अथ स्वधर्मभूतं विषयप्रकाशं ज्ञानमात्मा स्वप्रकाशगोचरीकरोति । "अथ यो वेदेदं जिघ्राणीति स आत्मे"त्यादिश्रुतेरिति चेत्तथापि, तैमिरिकस्येव नक्तमुल्मुकाग्निरात्मनः स्वसम्बन्धिज्ञानांश एव प्रकाशते । न तु तत्काष्ठांश इव विषयांशः । तत्सम्बन्धाभावात् । अथ विषयप्रकाशात्मनैव ज्ञानमात्मनः प्रकाशत इति आत्मनो विषयप्रकाशनमुपचर्यत इति चेन्न, नियमेनात्मप्रकाशनीयसत्ताकस्य ज्ञानस्य स्वतो विषयप्रकाशत्वे मानाभावात् । किमेवमात्मैव विषयप्रकाशं ज्ञानमुपगन्तव्यम् । तथा सति "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिः 'अहं जानामी'ति ज्ञातृत्वानुभवश्च विरुध्येत । अतो विषयप्रकाशमात्मधर्मो ज्ञानम् । तत्प्रकाशश्चात्मेत्युररीकरणीयमिति चेत्, न,

ज्ञानात्मन एव कथञ्चिदौपाधिकस्वरूपभेदेन ज्ञातृत्वाद्यभिमानोपपत्तेः। बोध्यबुद्धिमनुरुध्यैव ज्ञातृत्वेन श्रुतावात्मस्वरूपोपलक्षणोपपत्तेश्च। अथापि कथमान्तरस्यात्मनो बहिर्विषयसम्बन्ध इति चेत्, न, स्वतः "अपूर्वमनपरमनन्तरमबाह्य"मित्येवंलक्षणस्यापि विश्वभेदारोपापेक्षया "दिव्यो ह्यमूर्तः पुरुषः", "स बाह्याभ्यन्तरो ह्यजः" इत्यादिसर्वात्मत्वश्रवणात् सर्वेषां भूतानां अन्तरपुरुषः "स म आत्मेति विद्याद्यः प्राणेन प्राणिति", "स त आत्मा सर्वान्तर" इत्याद्यान्तरत्वश्रवणं त्वात्मन उपलब्धिपदापेक्षया। सर्वगतोऽपि ह्यात्मा स्वभावादेव बुद्धिगुहायामुपलभ्यते। "पुरुषे त्वेवाविस्तरात्मे"ति हि श्रुतिः।

नन्'वहं जानामी'ति ज्ञातृत्वमनुभूयते, स चाहमात्मान्तर एवेति बहिर्विषयसम्बन्धानुपपत्तिरिति चेत्, न, "अहङ्कारश्चाहङ्कर्तव्यं च महाभूतान्यहङ्कार" इत्याद्यवगतप्रकृतिपरिणामाहङ्कारोपाधानादनहमात्मन एव तथानुभवोपपत्तेः। तथाप्यहङ्कारोपाधिपरिच्छिन्नरूपस्य बहिर्विषयसम्बन्धायोगात्तस्य ज्ञातृत्वानुभवः कथमिति चेदुच्यते। सर्वात्मतयाऽऽत्मनः स्वत एव सर्वविषयसम्बन्धे सति, मानाधीनतत्तद्विषयाकाराहङ्कारवृत्त्युपजनेन तस्यैवात्मनोऽहङ्कारोपधानानुपधानकृतभेदापगमे तदेव विषयसम्बन्धोपाधिकं ज्ञातृत्वं, अहङ्कारोपग्रहा'दहं जानामी'त्यवभासते। अहङ्कारोपहितस्यैव वा निरुक्ततत्तद्वृत्त्युपाधिके विषयोपरागे तन्निबन्धन एव अहं जानामीत्यनुभव उपपद्यते। एवमात्मनः स्वत एवाज्ञानसम्बन्धे सति तत्तद्विषयप्रमाणप्रवृत्तौ प्रसज्यमानं ज्ञानं, कुतश्चित्प्रतिबन्धात् स्वयं विषयाकारमसम्पद्यमानं प्रतियोगितया तदेवाज्ञानं तदाकारं निरूपयत् अहमिदं न जानामीत्यनुभवनिमित्तं भवति। तदिदमज्ञातृत्वमात्मनः। एवं विषयाकारवृत्तिभावाभावाभ्यामेव पर्यायेणाहङ्कारोपहितस्यात्मनो विषयोपलब्ध्यनुपलब्धिव्यवस्थोपपत्तेरेते दोषाः न शङ्कितव्याः। आत्मनो विषयोपलब्ध्यनुपलब्धी पर्यायेण तावदनुभूयेते। तदात्मन एव विषयज्ञानत्वेन स्यात् नित्यमेव विषयसम्बन्धेन नित्योपलब्धिप्रसङ्गात्। अथ विषयसम्बन्धेऽप्यनुपलब्धिः, नित्यमेवानुपलब्धिप्रसङ्गः। नियामकहेत्वन्तराभावेन नित्यमेव वा तदुभयप्रसङ्ग इति। अत एव चात्मनो द्रष्टृत्वश्रोतृत्वादयोऽपि उपपत्स्यन्ते। चक्षुःश्रोत्रादिकरणाधीनाहङ्कारवृत्तिभेदोपाधिकत्वात्। तस्माद्विषयसम्बन्धोपाधिना संविदात्मैव ज्ञातोपचर्यते, न तु विषयसंविदाश्रयतया ज्ञातैवात्मेति। तदिदं सिद्धान्तसिद्धाञ्जने प्रपञ्चितमिति नेह प्रपञ्च्यते। तस्य चात्मनो नातिरिक्तो वेदितोपपद्यते, तस्याप्यतिरिक्तः तस्यचापीत्यनवस्थापत्तेः। न चाप्येकस्मिन्देहे परस्परवेदितारौ द्वावात्मानौ सम्भवतः। कल्पनागौरवात्, अनुभवविरोधात्, तयोर्भिन्नाभिप्रायतया परस्परप्रतिबन्धेन दैहिकव्यवहारनिरोधप्रसङ्गाच्च।

अथ स्वयमेव स्वस्य वेदिता स्यात् मामहं जानामीत्यनुभवादिति चेन्, न, तस्यामेव क्रियायां तस्यैव कर्मकर्तृत्वविरोधात्। अथ को विरोधः? परसमवेतक्रियाफलशालित्वं कर्मत्वं, परत्र फलजनकक्रियाश्रयत्वं कर्तृत्वम्। तथा च तमपेक्ष्यैव तस्य परत्वविरोध इति चेत्, न, वृक्षात्पर्णं

पतति, कुठारमुद्यच्छतीत्यादौ, पर्णसमवेतपतनक्रियाफलविभागशालिनो वृक्षस्य, कुठारोद्गतिक्रियाफलसंयोगशालिनो ऊर्ध्वदेशस्य च, कर्मत्वप्रसङ्गात्। कुठारस्योर्ध्वदेशसंयोगजनकोद्गतिक्रियाश्रयतया कर्तृत्वप्रसङ्गाच्च। तस्मात्करणव्यापारविषयत्वं कर्मत्वं करणप्रयोजकत्वं धात्वभिहितक्रियाश्रयत्वं वा कर्तृत्वम्। तदुभयमात्मन एव स्यादित्यविरोध इति चेत्, न, परसमवेतेत्यादेरतिप्रसङ्गिनोऽपि, कर्मत्वादिव्यापकतया व्यापकतन्निवृत्तौ व्याप्यकर्मत्वादिनिवृत्त्यवश्यंभावात्। अपि च क्रियायां गुणभूतः कर्ता प्रधानभूतं कर्म। न च तस्यामेव ज्ञानक्रियायां स एव गुणत्वेन प्रधानत्वेन च शक्यः प्रत्येतुम्। अथैवं सति बादरिनयविरोधः। तत्र हि द्रव्यगुणसंस्कारेषु बादरिः शेषत्वं मेने। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ यागकर्तव्यतामेव वाक्यार्थं मन्यमानः इति पूर्वपक्षमुक्त्वा, कर्माण्यपि फलार्थत्वादिति जैमिनिः। फलं च पुरुषार्थत्वात्, पुरुषश्च कर्मार्थत्वादिति त्रिसूत्या यागफलपुरुषा अपि शेषाः, न द्रव्यादय एव। अपूर्वमन्तर्भाव्य यागस्य स्वर्गसाधनतावगमात्। फलस्यापि स्वर्गादेः पुरुषार्थतयैव काम्यत्वात्, पुरुषस्य च कर्तृत्वादिति सिद्धान्तितम्। सत्यमेवम्। किन्तु प्रतिपत्त्यनुबन्धितया भावनां कार्यं वा वाक्यार्थं प्रति गुणभूता एव। स्वर्गकामो यागेन स्वसमीहितं भावयेदिति वा स्वर्गकामस्य स्वसमीहितसाधनयागविषयकं कार्यमिति वा तदवगमात्। वस्तुस्वरूपानुबन्धिपुनरमीषामन्यमन्यं प्रति गुणप्रधानत्वं शाब्दप्रतिपत्त्यनुबन्धिगुणभावानुगुणमेव। तथा गुणप्रधानभूतानामेव तेषां वाक्यप्रतिपाद्ये भावनादौ विशेषणत्वात्। स च यागफलपुरुषाणामर्थिकोऽप्येषगुणप्रधानभावो न तामेवैकां क्रियां प्रति। यागो हि फलं प्रति शेषः फलं तु पुरुषं प्रति पुरुषश्च कर्म प्रतीतिभेदात्। अथापि पुरुषस्य तामेव यागक्रियां प्रति कर्तृतया गुणत्वं फलितया प्रधानत्वं च प्राप्नुत इति, न गुणप्रधानभावविरोध इति चेत्, युक्तम्। तत्र न वस्तुतो विरोधः, अवस्थाभेदात्। न हि यदवस्थः कर्ता गुणभूतो यागं प्रति तदवस्थ एव फली प्रधानभूतः। फलित्वस्य क्रियानिवृत्त्यनन्तरभावित्वान्न प्रतीतितः। यदि हि स्वर्गकामस्य यागक्रियां प्रति कर्तृतया गुणत्वेन शाब्दान्वयः तदा फलित्वेन प्राधान्यमाक्षेपात्तटस्थप्रतीत्युपहरणीयमिति न शाब्दगुणत्वप्रतीतावेव विषयः। अथ फलितया प्राधान्येन शाब्दान्वयस्तर्हि कर्तृतया गुणत्वमाक्षेप्यमिति। इह तु मामहं जानामीति तामेव ज्ञानक्रियां प्रत्यवस्थाभेदमनन्तर्भाव्य तदेकप्रतीतिविषयगुणप्रधानभावविरोधो दुष्परिहरः। अत एव हि वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयपदस्य द्रव्यपरत्वे यागस्य स्वाराज्यनिरूपितं करणतया गुणत्वं द्रव्यनिरूपितकर्मतया प्रधानत्वमिति भिन्नरूपितमपि तदुभयं सकृत्प्रत्येतुमशक्यमिति वाजपेयपदं न द्रव्यपरम्। किन्तु नामधेयमिति व्यवस्थापितम् **धर्ममीमांसायाम्**। अत एव च "सर्वत्र प्रसिद्धोपदेशात्" इत्यधिकरणे "मनोमयः प्राणशरीरः" इत्यादिरूपोपास्यो न जीवः किन्तु पर एव। "एवमितः प्रेत्याभिसम्भवितास्मि" इति कर्मकर्तृव्यपदेशाच्चेत्युपास्योपासकभेदहेतुं सूत्रयन् एकस्यां क्रियायां, एकस्य कर्मकर्तृत्वविरोधमभिप्रैतीति गम्यते।

कथं पुनरेवं मामहं जानामीत्यनुभवः। केचिदाहुः — ज्ञानं हि जायमानं स्वस्वाश्रयविषयाणामसत्त्व-संशयादिविरोधितयाऽवभासकमुपेयते। तेन ज्ञानाश्रयतया यदाऽऽत्माऽवभासते तदालम्बनोऽयं मामहं जानामीति व्यवहार एव, नानुभवः। उक्तकर्मकर्तृभावविरोधादेव। न चैवमपि घटादिज्ञाने जाते घटे मामहं जानामीत्यादिव्यवहारप्रसङ्गः। व्यवजिहीर्षायां सत्यामिष्टत्वात् तदभावे तत एव तदभावोपपत्तिरिति तदयुक्तम्। मामहं जानामीत्यनुभवस्यैव सार्वजनीनत्वात्। एडमूकोऽपि मामहं जानामीत्यनुभवत्येव। अथ तर्हि द्रव्यतया ज्ञेयत्वं ज्ञानवत्तया ज्ञातृत्वमित्य-वच्छेदकभेदादविरोध इति चेत्, न, मामहमित्येवात्मरूपैकालम्बनतया रूपभेदालम्बनत्वकल्पनायोगात्। अथ तर्हि ब्राह्मणत्वसुखित्वादिबहिरन्तराकारविशिष्टो ज्ञेयः, केवलाहमात्मा तु ज्ञानवत्तया ज्ञातेति ज्ञातृज्ञेयताविरोध इति चेत्, न, मामहं जानामीत्युभयथा तुल्याहमर्थानुभवस्यैव सर्वसाक्षिकत्वात्। देहादिप्रस्मरण दशायामपि 'मामहं जानन्नेवासं' इति विश्वजनीनानुभवाच्च। तस्मात्संविदात्मैव केवलमहङ्कारे वेद्यमाने तदुपाधिकमात्मनो वेदितृत्वं तादात्म्यारोपेण मामहं जानामीति द्विधा भासते इत्यान्यासिद्धोऽयमनुभवो, नात्मनः स्ववेदितृत्वमुपहर्तुं शक्नोति। कर्मकर्तृत्वविरोधादेव। 'पुनीत आत्मानं तथा पितॄणां मुमुचे स्वबन्धनादि'त्यादिः प्रयोगश्चोपचारादुपपद्यते। "आग्निपाव-मानीभ्यां गार्हपत्यमुपतिष्ठत" इति यदुपस्थाने कर्तृत्वं तदेव तदुपस्थानफलभूतपवनकर्तृत्वरूपेणो-पचर्यते। पुनर्यत्नान्तराभावात्। तथा प्रजोत्पादनकर्मणापि पितॄणामृणापगमो भवति। "एष वा अनृणो यः पुत्री"त्यादिश्रुतेः। ततस्तदेव प्रजोत्पादनकर्तृत्वं ऋणमोकक्तर्तत्वरूपेणोपचर्यते इति नैकस्यां क्रियायां एकस्य कर्मकर्तृत्व उदाहरणम्। तस्मात्स्वयंप्रकाशसंविदात्मनो न कश्चिद्वेदितेति सिद्धम् ॥ ३८ ॥

उक्तं तावज्ज्ञातारमस्य सकलस्य संवेद्यते सकलमेव च येने'ति ज्ञातृज्ञेयादिभेदिनो विश्वस्या-प्यात्मवेद्यत्वं, आत्मनश्चान्यावेद्यत्वं, तत्कथमित्याकाङ्क्षायामुपपादयति — दृश्यमिति।

दृश्यं विभो! किमपि दर्शयते न दृश्यं
द्रष्टा च दृश्यपरतन्त्रविकारवृत्तिः।
त्वं द्रष्टृदृश्यसरणिद्वितयं व्यतीतः
पश्यन्पदद्वयमदस्स्वयमेव भासि ॥ ३९ ॥

**दृश्यस्य** विश्वस्यात्मवेद्यत्वानुपगमे, किमन्योन्येन सिद्धिः? अथवाऽहङ्कारेण? नाद्य इत्याह— किमपि बाह्यमबाह्यं वा दृश्यं कर्तृ, अन्यद्दृश्यं कर्म **न दर्शयते** स्वदर्शनेन प्रयोजयति।

"णेरणौ यत्कर्म णौ चेत्सकर्ताऽनाध्याने" इति आत्मनेपदम् । **दृश्यं दृश्यान्तरं न स्वद्रष्टृपादयति**, दृश्यान्तरेण न वेद्यत इत्यर्थः। आत्मनो विषयोपाधिकमेव द्रष्टृत्वमिति कृत्वाऽत्रापि दृश्यं न दर्शयत – इति निर्देशः। विश्वभेदस्यान्योन्यवेद्यत्वमयुक्तम्, असंवित्त्वाविशेषात् इत्यभिप्रायः। अहमर्थं वेद्यं तर्हि भविष्यति, अहमिदं संवेद्मीत्यनुभवादिति द्वितीयमाशंक्याह – **द्रष्टा चेति**। द्रष्टा दृष्ट्र्यादिवृत्तिपरिणाम्यहङ्कारः। अत्र **चकारः** संविदात्मकतयाऽऽत्मनो विषयोपाधाननिबन्धनं साक्षितालक्षणं द्रष्टृत्वमुपपद्यते। न त्वहङ्कारस्यासंविदात्मन इति विशेषसूचनार्थः। अथवा, यथा दृश्यस्य दृश्यान्तरं न द्रष्टृ, तथाऽहङ्कारोऽपि, दृश्यत्वाविशेषात् इत्यनुशयसूचनार्थः। **दृश्येन परतन्त्रा** पराधीना **विकारवृत्तिः** ज्ञानरूपपरिणामावस्था विशेषो यस्य स तथा। अथवा, द्रष्टृदृश्याभ्यामन्यत्प्रमाणं, परिशेषात् परशब्देनाभिधीयते। तन्त्र्यते धार्यते लब्धात्मिका क्रियत इति तन्त्रा, दृश्यपरयोर्विषयप्रमाणयोः तन्त्रा विकारवृत्तिर्यस्य स तथा। सावधारणमिदं विशेषणम्। 'अब्भक्षा वायुभक्षा' – इत्यादिवत् न तु कस्यचित्प्रकाशक इत्यर्थः। विकारिणो हि विकारोदयाद्यवभासो अवश्यमन्यतन्त्र एष्टव्यः। तेनैव विकारेण प्रकाशात्मनापि तदुदयादिदशायामसता, तदवभासायोगात्। ततश्च, येन तदुदयादिरन्येनावभास्यते, तेनैव तस्यापि विकारिणोऽहङ्कारस्य वेद्यत्वेन गोघटादितुल्ययोगित्वान्नाहङ्कारवेद्यत्वं दृश्यस्येत्यभिप्रायः। अत्रात्मा संविद एव विषयावभासित्वे तस्या व्यापितया सर्वदा सर्वविषयावभासप्रसङ्गशङ्कापरिहाराय ज्ञानशब्दिताहङ्कारवृत्तिर्विषयप्रमाणतन्त्रेति, ततश्च यद्विषयप्रमाणप्रवृत्तौ यदाकारा वृत्तिरुपजायते स विषयस्तया वृत्त्या प्रमातृसंविदव्यवहितोऽवभासते नान्य इति अव्यवस्था परिहृता भवति। अत एव विषयवेदनस्याहङ्कारवृत्त्युपाधिकतया'ऽहं संवेद्मी'त्यनुभवोऽन्यथासिद्ध इति न दृश्यस्याहङ्कारवेद्यत्वमावहतीति सिद्धं भवति। एवं सति, परिशेषात् संविदात्मनैव सकलं वेद्यमित्याह – **त्वमित्यादिना**। अत्र **विभो** इति सम्बोधनं संविदात्मनो व्याप्त्या विश्ववेदकत्वयोग्यतामुपहरति। **द्रष्टुरहङ्कारस्य** सरणिः विषयवेदनार्थप्रवृत्तिमार्गः दृष्ट्र्यादिवृत्तिविकारपरिणामित्वं **दृश्यस्य** वेद्यस्य सरणिरसंवित्त्वमन्याधीनप्रकाशत्वं, **तयोर्द्वितयं व्यतीतः**, अविकृतसंविदात्मतयाऽतिक्रान्तः। **त्वं** संविदात्मा। **अदः** प्रकृतम्। पदद्वयं पद्यत इति तन्त्रेण कर्तरि कर्मणि च पदशब्दः उक्तद्रष्टृदृश्यमरः तयोर्द्वयं **पश्यन्**, 'अहमिदं जानामी'ति साक्षितया साक्षादवभासयन्। **स्वयमेव भासि** न तु द्रष्टृदृश्याद्यात्मकमिव विश्वमन्येनेति यद्वा, स्वयमेव पश्यन्निति द्रष्टन्तरं वारयति। तेन यदात्मनोऽन्यो वेदिता नास्तीत्युक्तं तदुपपादितं भवति।

**ननु** द्वौ द्रष्टारौ, परमात्मा तावदेकः, जीवश्चाहमात्माऽन्यः। न चैकस्मिन्देहे द्रष्टृद्वयविरोधः। साधारणे भोग्य एकस्मिन् भोक्तृद्वयसमावेशो हि विरुध्यते। तयोर्विरुद्धाभिप्रायसम्भवेन, शुनोरिव भोग्यस्योन्मथनप्रसङ्गात्। न च परमात्माऽन्यस्मिन्देहे भोक्ता, किन्तु जीव एव। तथा च मन्त्रवर्णः –

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन् अन्योऽभिचाकशीति" इति। "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये" इत्यत्र तु पिबदपिबतोः, स्वष्टिन्यायेन लक्षणैव। जीवं पिबन्तं परमात्मा पाययतीत्येकपानक्रियायोगात्। तदिदं व्यवस्थितं ब्रह्ममीमांसायां, "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" इत्यत्र। तस्मादयमहमात्मा चेतनः परमात्मनो वेदिता स्यात् इति। नैवं स्यात्। नह्येकस्मिन्देहे द्रष्टृद्वयं सम्भवति। "अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाते"ति परमात्मानं प्रकृत्य, "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्यादिनिषेधात् अतोऽन्यो नास्ति द्रष्टृ। किन्त्वेष एव परमात्मा बुद्धिविज्ञानशब्दिताहङ्कारोपाधिमारूढो रूपादीनां द्रष्टृादिरित्यर्थः। तथा च श्रुत्यन्तरं "एतत्सर्वं पर आत्मनि संप्रतिष्ठत" इति सर्वप्रतिष्ठाभूतं परमात्मनं प्रकृत्य "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष" इति। तस्मादौपाधिकात्मभेदालम्बनात् द्वा "सुपर्णादयो" मन्त्रा वेदितव्याः। अथापि नामाहमात्मा द्रष्टा स्यात्, नायं परमात्मनो वेदिता स्यात्। "नखल्वदृष्टो द्रष्टे"ति श्रूयते। दृश्ययोश्च गोघटादिवदन्योन्यद्रष्टृत्वानुपपत्तेश्च॥ तदिदमुक्तम् "दृष्यं विभो किमपि दर्शयते न दृश्यमि"ति। तस्मात्सर्वथैवाऽवेद्य आत्मेति सिद्धम् ॥ ३९ ॥

स्यादेतत्, यद्येवमात्मा सर्वथैव वेद्यो न स्यात्तर्हि "नारायणं महाज्ञेयं" तं "वेद्यं पुरुषं वेद," "ज्ञेयं यत्तत्प्रवक्ष्यामि" इत्यादयो ज्ञेयत्ववादाः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः", "उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत", "तद्विज्ञानार्थं स्वगुरुमेवाऽभिगच्छेत्" इत्यादयः तद्वेदनोपायविधिवादाः, "ब्रह्मविदाप्नोति परम्," "तरति शोकमात्मवित्," "ब्रह्म वेद ब्रह्मैव भवति" इत्यादयस्तद्वेदनफलवादाः, "सत्यं ज्ञानमनन्तं ब्रह्म," "विज्ञानमानन्दं ब्रह्म" "अस्थूलमनण्वह्रस्वमदीर्घमपूर्वमनपरमनन्तरमग्राह्यमयमात्मा ब्रह्म, सर्वानुभूः" इत्यादयस्तद्वेदनाय स्वरूपोपदेशाश्च षण्डसुरतदेशीयास्स्युरित्याशङ्क्य, शास्त्रोपाप्यायाया विद्यया ब्रह्मात्मनि सर्वविभ्रमनिषेधेन स्वरूपावभासपरिशेषोपयोगितया पुरुषार्थपर्यवसायित्वात्, न तेषां वैयर्थ्याशङ्केत्यभिप्रेत्याह —

विद्यामयेन विदिताविदितभ्रमस्य
त्वय्यत्ययेन विदिताविदितावभासे।
चिज्ज्योतिषैव शिव! यत्स्वयमेव भासि
सा वेद्यता तव मनोवचनोपपाद्या ॥ ४० ॥

अस्ति तावदहमित्यात्मा **विदितः,** अहं ब्रह्मेत्यविदितः इति आत्मनि **विदिताविदितभ्रमः।** न ह्यहंरूप एवात्मा, येन विदित इति भ्रमो न स्यात्। स हि विकारी दुःखसमवायी। व्यतिरेकी च स्वापादौ। आत्मा च साक्षी प्रियतमः सर्वावस्थानुयायी च। न खलु विकार्येव स्वविकारोदयादि-साक्षी भवितुमर्हतीति उपपादितम्। न च दुःखनिदानं प्रियं भवति। कादाचित्कदुःखनिमित्तमपि, अहिकण्टकादौ द्वेषदर्शनात्। न च स्वापादावव्यतिरेक्यहङ्कारः। तदानीमपि तदनुभवप्रसङ्गात्। ननु तदनुभवहेतुमन आद्युपरमात् तदननुभवः, न तु तदभावादिति चेत्, न, जागरादावपि तदनुभवस्य हैतुकत्वे कर्मकर्तृत्वविरोधात्। अतः स्वयंप्रकाशत्वं वाच्यम्। स्वप्रकाशात्मना परेणानुभास्यत्वं वा। न च स्वापादावहमित्यनुभव इति स तदा नास्तीत्येव निश्चिनुमहे। अहङ्कारानात्मत्वप्रपञ्चश्च **सिद्धान्त-सिद्धाञ्जने** द्रष्टव्यः। तस्मादात्मा अहमिति विदित इति भ्रम एव। न चाहङ्कारादिसाक्षिणो नित्यावभासादन्यद्ब्रह्म। "अयमात्मा ब्रह्म सर्वानुभूः" इत्यादिश्रुतेः। ततो ब्रह्मात्माऽविदित इति अपि भ्रमः। तस्य, **त्वयि** स्वयंप्रकाशात्मनि। विदिताविदितभ्रमस्य तद्भ्रमत्वमुपपादयितुं 'विदिता-विदितावभास इति विशेषणं। अवभासयतीत्यवभासः। विदिताविदितयोरवभासः विदिताविदितावभासः तस्मिन्। "मामिदं वा वेद्मि धर्मं ब्रह्मात्मानं वा न वेद्मी"ति अवश्यं केनचिद्वेदितव्यम्। अन्यथा, तद्व्यवहारानुपपत्तेः। येन च तदुभयं वेद्यते, स सकृदिव स्वयं भासमानो न विदितो नाप्यविदित — इति, तत्र विदिताविदितज्ञानं भ्रम एवेत्यभिप्रायः। त्वयि परमात्मनि **विद्यामये, नात्ययेन** निर्विकल्पात्मनि सर्वस्यापि विकल्पस्य भ्रममात्रत्वेन, विद्यया न निवृत्तिर्युक्ता। किन्तु निषेधप्रत्ययो विद्याबाध — एवेति, भ्रमात्ययो विद्यामय उच्यते। हेतौ तृतीया। तेन हेतुना **यात्स्वयमेव** भासीति सम्बन्धः। अत्र **हे शिवेति** सम्बोधनं, स्वेनैव विद्याया अपि बाधेनात्मनि सर्वोपशमात्मकेऽवभासकान्तरशङ्कापि नास्तीति सूचयति। स्वयं भानोपपत्तेश्च। **चिज्ज्योतिषेति,** ज्योतिश्शब्दो हि अज्ञानविरोधिस्वभावत्वतमोविरोधिस्वभावत्वरूपप्रवृत्तिनिमित्तभेदेन भिन्नशक्त्यावभासमानत्वे सति साक्षात्परम्परया वा स्वसम्बन्धिविषयावभासप्रयोजकत्वलक्षणप्रकाशत्व-रूपैकनिमित्तेनाभिन्नशक्त्या वोभयत्र प्रयुज्यते। "आदित्येनैवायं ज्योतिषास्ते," "चन्द्रमा एवास्य ज्योतिर्भवति," "योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः," "अथ यदतः परो दिवो ज्योतिर्दीप्यते तं देवाज्योतिषा ज्योतिरायुर्होपासतेऽमृतं" इत्यादौ। अतो जडज्योतिर्व्यावृत्त्यर्थं चिदिति विशेषणम्। न्यायिमत इव ज्ञानत्वेप्यस्वप्रकाशत्वव्यावृत्तये ज्योतिषेति इयं तृतीयेत्थम्भूतलक्षणे। तदात्मना स्वयं भासीति। स्वरूपमपि चिज्ज्योतिरात्मनः स्वयमवभासप्रकारं प्राप्तस्य लक्षणत्वमुपचर्यते। **अत्रैवकारः** सत्तानन्दयोरपि प्रकाशात्मतावन्मात्रतया स्वगतभेदव्यावृत्त्यर्थः। अथवा, इयमपि हेतौ तृतीया। स्वरूपस्यापि स्वभाने हेतुत्वोपचारात्। विदिताविदितभ्रमात्ययेनापि चिज्ज्योतिषेति च व्यधिकरणे तृतीये भ्रमात्ययश्चिज्ज्योतिषा स्वयं भाने हेतुः। भ्रमात्यये हि प्रमाणज्ञानेनापि

भातीवात्मा । तदत्यये तु चिज्ज्योतिषैवेति । तदत्ययस्यात्र हेतुत्वोपचारमुक्तम्भयितुमेवकारः । अथवा, समानाधिकरणे एव विश्वविभ्रमनिषेधविकल्पितविद्यावभासितया विद्यामयेन, अत एव विदिताविदित-भ्रमबाधावधितया तदत्ययरूपेण चिज्ज्योतिषेति । अलैवकारः विदितादिभ्रमात्ययातिरेकं वारयति । स्वयमेव, न तु केनापि विकल्पेन विशिष्टः, न वा प्रमाणज्ञानेन । कृत्स्नबाधात् । भासीति यत् सा विद्योदयमपेक्ष्य स्वयमेव भासमानता । तत्र केवलात्मनः । **मनोवचनोपपाद्या**, मनसा योगपरिशुद्धेन, वचनेन वेदान्तवाक्येन च उपपाद्या सम्पाद्या । वेद्यता, न तु शब्दादिवद्विद्यार्थानभानता । अथवा, विद्यायां भवन्त्यां वेद्यत इतीव मनसाऽनुभवेन वचनेन च तं वेद्यम् । "दृश्यते त्वग्र्या बुद्ध्या"त्यादिनाऽभिधानेन चोपपाद्या वेद्यता, न त्वन्येति ।

**एतदुक्तं भवति** — शास्त्रं तावद्बोध्यबुद्धिमनुरुन्धे । यथा वर्णाश्रमाद्यभिमानिनो बुद्धिमनुरुध्यैव, 'ब्राह्मणो बृहस्पतिसवेन यजेत', 'नित्यं मद्यं ब्राह्मणो वर्जयेत्,' 'ब्रह्मचार्यधीयीत' 'ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि' इत्यादिविधिनिषेधा दृश्यन्ते । ततश्चाहं दुःखी, दुःखान्मुच्यासं, तदुपायं न वेद्मीति मिथ्याभिमानिनो बुद्धिमनुसृत्य ब्रह्मात्मा ज्ञेयः । तज्ज्ञानादेव निःश्रेयसं, तस्य श्रवणादिसाधनमित्यवबोधिते, तेनैवाभिमानेन ब्रह्मात्मविद्योपायमनुतिष्ठन्तं विशुद्धबुद्धिम् । आत्मा सत्यज्ञानादिलक्षणः, समतीतनिःशेषः । स त्वमसीत्यवबोधयति । एतदवधिरस्याविद्यानिबन्धनो वित्तिवेद्यवेदित्रादिव्यवहारः । तथा च भगवान्भाष्यकारः, "अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि, सर्वाणि शास्त्राणि च विधिनिषेधमोक्षपराणि" इति । तस्य च तथावबोधितस्य ब्रह्मात्मस्वलक्षणा-वगतिपर्यन्तो विद्याशब्दितो मनोवृत्तिलक्षणो बोधो जायमानः सह स्वात्मना, समूलं दुःखित्वादिमु-मुक्षातदुपायमोक्षविभ्रमानपबाधमान एव जायते । "न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" इति हि श्रुतिः । ततश्च स विद्वानुपशान्तसकलविकल्प-कल्लोलसम्प्रसन्नस्तिमितगम्भीरनिरतिशयानन्दप्रकाशसत्तामात्रकेवलो निरिन्धनज्योतिरिव स्वयमेवावभास-मानो विशिष्यते । इत्यनया प्रणालिकयाऽऽत्मनि वेद्यताद्युपचार एव, न वस्तुगत्याऽऽत्मा वेद्यस्तस्य वेदिता वा तद्वेदनफलं वेति ॥ ४० ॥

अथ कथमित्येवात्मनो वेद्यतादिवादेषूपचारकल्पनाश्रियते ? वेद्यतैव हि तत्रावश्याश्रयणीया । ब्रह्मात्मतत्वविद्या मोक्षहेतुरिति ब्रुवता, तदविद्या संसारानर्थनिदानमुपगम्यते । समानविषया च विद्याऽविद्याया निर्वर्तिका, यथा रज्जुतत्वविद्या सर्पादिभ्रममूलस्य तदविद्यायाः । अन्यथाऽतिप्रसङ्गात् । अतो विद्ययाऽविद्यानिवृत्तिवादे, वाङ्मनसवेद्यतैवात्मनो युक्ता । "यतो वाचो निवर्तन्ते" । इत्यादि-वादाश्चाऽऽनन्दात्मन इयत्तापरिच्छेद्यत्वाभिप्रायाः व्याख्येया इत्याशङ्कां परिहरन्नात्मनो वाङ्मनसा-

विषयत्वं ज्ञानाज्ञानाद्यवभसकत्वज्ञात्रभाववेद्यतानिषेधैरुपपादितं शब्दप्रवृत्तिनिमित्ताभावलक्षणयुक्त्यन्तरोपक्षेपेणोपसंहरति —

सामान्यभिन्नमविशेषपरस्वभावं
मामृक्षतां गिरिश ! वाङ्मनसे भवन्तम् ।
त्वद्भावलम्भकमनन्तरविप्रकर्षा-
दालक्ष्यते भुवनबीज ! पदं क्षिणीतः ॥ ४१ ॥

ब्रह्मात्मतत्वं तावन्न सामान्यम्, गोत्वाद्यनुगमनीयखण्डादिवत्तदनुगमनीयविशेषाभावात्। अथ मृदिव घटशरावादिषुगगनादिकार्येष्वनुगतं ब्रह्म तत्सामान्यं भविष्यति। अपि च विश्वभेदसत्तैव ब्रह्मात्मतत्वमुपगम्यते। तत्कथमसामान्यमिति ? सत्यम्। अविद्याविषये विश्वभेदविशेषापेक्षया सामान्यता, विश्वभेदनिषेधावगमनीयं तु ब्रह्म न सामान्यतामर्हतीति सामान्यभिन्नम्। न च कस्यचित्सामान्यस्य विशेषः, भेदशून्यत्वात्। ननु सत्तासामान्यस्य विश्वसाधारणस्य विशेषस्स्यात्। जातिजीवादिसाधारणस्य ब्रह्मत्वसामान्यस्य वा, देहादिसाधारणस्याहंत्वस्य वा, जीवसाधारणस्य ज्ञातृत्वलक्षणस्यात्मत्वस्य वेति। सत्यम्। अविद्याविषय एव सजातीयादिभेदापेक्षया विशेषोऽपि स्यात्। तन्निषेधावगमनीयस्तु ब्रह्मात्मा। न विशेष इत्यविशेषः। परः सजातीयादिभेदोत्तीर्णः, "स एष नेति नेतीत्यात्मा" इति श्रुतेः। स्वभावो यस्य स तथा तम्। भवन्तं परमात्मानम्। वाङ्मनसे मामृक्षतां नामृशतः न विषयीकुरुतः। वाग्घि सामान्यविषया। सामान्यावच्छेदेन सम्बन्धग्रहात्। अनुमानवत्। अतोऽसामान्यं ब्रह्म वाङ्नामृशति। मनस्तु यदि प्रत्यक्षं प्रमाणं विशेषमप्यवगाहेत। यथाहुस्साङ्ख्याः — "सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना बुद्धिः प्रत्यक्षमि"ति। तथाप्यविशेषस्वभावं ब्रह्म मनोऽपि नामृशति। अथापि स्यादसामान्यविशेषस्वभावमपि स्वलक्षणमेव ब्रह्म मनसा वेद्येत, प्रत्यक्षस्य स्वलक्षणग्रहणेऽपि सामर्थ्यात्। अत एव सौगता अपि निर्विकल्पकं परमार्थस्वलक्षणविषयं प्रत्यक्षमास्थिषत। न्यायिनोऽपि जात्यादियोजनाहीनस्वलक्षणमात्रविषयं निर्विकल्पकमातिष्ठन्ते, यथा सूत्रितं गौतमेन "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमि"ति। विशिष्यापदिश्यते व्यावृत्या येन, स व्यपदेशो विशेषणम्, तमर्हतीति व्यपदेश्यं, जात्यादिभिर्विशिष्टम्। न व्यपदेश्यं विषयतया यस्य तदव्यपदेश्यं वस्तु स्वलक्षणमात्रविषयमित्यर्थः इति तन्न। न हि सन्निकृष्टे योग्ये च विशिष्टे सति स्वलक्षणमात्रविषयं प्रत्यक्षमिति युक्तम्। मनश्चाहमित्येव विशिष्टज्ञानजनकमिति, न स्वलक्षणब्रह्मात्मा

मनसा वेद्येत। अथागमेन विश्वभेदनिषेधे सति, मनः स्वलक्षणमात्रविषयं ज्ञानं जनयतु, यथा नायं सर्प इति। आप्तोपदेशसनाथं चक्षूरज्जुतत्वज्ञानं जनयति तथा नेतिनेत्यात्मेत्यागमोपदेशसनाथं मनः इति चेत्, तर्हि निरालम्बननिषेधायोगात् ब्रह्मालम्बनेन विश्वभेदं निषेधान्नागम एव तज्ज्ञानं जनयतु। तथापि तज्ज्ञानं मनसैव जननीयमिति चेत् अस्तु तावत्। न हि वयं पृष्ठेन तज्ज्ञानं जायत इत्युपेमः। मनसः सर्वप्रमाणसहकारित्वात्। न तु तदात्मनि स्वयं प्रत्यक्षं प्रमाणमिति तदपि ज्ञानं निषेधविकल्पिताकारमेवेति नात्मस्वलक्षणालम्बनं निषेधस्यापि निषेधादात्मनि निषेधासंस्पर्शेन निषेधाकारताटस्थ्येऽपि तस्य ज्ञानस्य स्वाकारविशिष्टरूपावभासप्रयोजकतया केवलात्मावभासस्य तद्विषयतानुपपाद्यत्वात्। तत्सिद्धमसामान्यविशेषं ब्रह्मात्मानं वाङ्मनसे नामृशत इति। यद्येवं ब्रह्मात्मनि वेदो न प्रमाणं स्यादिति शङ्कानिरासायाह **गिरिशेति** सम्बोधनम्। गिरिर्वेदलक्षणायां वाचि तत्प्रतिपाद्यत्वेन शेत इति गिरिशः। डप्रकरणेऽन्येषामप्युपसंख्यानमिति शेतेर्डः। हलदन्तात्सप्तम्याः संज्ञायामिति वा, तत्पुरुषे कृतिबहुलमिति वा सप्तम्या अलुक्। अनेन वेद एव ब्रह्मात्मनि प्रमाणं न मन इत्यपि सूचितम्। ननु तद्विषयज्ञानाजनकस्य वेदस्य वान्यस्य वा तत्प्रमाणत्वमयुक्तमित्याशङ्क्य तदवभासप्रयोजनकज्ञानजनकत्वमेव तत्प्रमाणत्वं, तच्च प्रणाडिकयापि ब्रह्मात्मनि वाङ्मनसयोरस्तीति उपपादयन्नाह – **त्वद्भावेत्यादि**। तव ईश्वरस्य भावो याथात्म्यं प्रकाशानन्दसत्ताकैवल्यं त्वद्भावः, तस्य **लम्भकं** प्रापकं भवतीति। भुवनं वियदादिकं विश्वं, तस्य बीजमिवाङ्कुरस्य बीजं कारणं "बीजे यथा महावृक्षः शक्तिसंस्थानः। स्थित्वाङ्कुरदिद्रूपत्रकाण्डस्कन्धादिक्रमेण शाखोपशाखाप्रपञ्चः सम्पद्यते। एवं ब्रह्मणि वियदादिप्रपञ्चः शक्तिसंस्थानः स्थित्वा तन्मात्र स्थूलभूतादिक्रमेण भूरादिलोकविस्तारः सम्पद्यते"। इत्यतो मायोपाधिकं जगद्बीजमुच्यते। तस्य पदं तदारोपापवादस्थानम्। तदपिहत्यारोपापवादकलुषत्वान्न तत्र पर्यवसानमिति त्वद्भावलम्भकमित्युक्तम्। कथं भुवनबीजपदस्यान्यत्वे त्वद्भावलम्भकत्वमित्याशङ्क्य, यथा मणिप्रभाऽधिगमिता मणिलम्भिका तथा स्यादित्याह – **अनन्तरविप्रकर्षादिति**। अन्तरंछिद्रमसम्बन्धः, तेन विप्रकर्षो व्यवधानम्, अन्तरविप्रकर्षः। न अन्तरविप्रकर्षस्तस्मात्, असम्बन्धव्यवधानाभावात्। त्वद्भावलम्भकमिति न हि भुवनबीजं तद्रूपाध्यारोपापवादपदमधिष्ठानं निष्केवलात्मस्वलक्षणं वा स्वरूपेणान्यदन्यदेव। किन्तु तदेवैकं ब्रह्मात्मतत्वं तेन तेनोपाधिना **भुवनबीजमधिष्ठानं वा**। ततश्च तदेव भुवनबीजारोपापवादविकल्पकलुषोपशमे प्रकाशानन्दसत्ताकेवलस्वलक्षणमवशिष्यत इति, तज्ज्ञाने सति न यत्नान्तरमास्थेयमिति अभिप्रायः। यद्वा, **अनन्तरविप्रकर्षादालक्ष्येति** सम्बध्यते। भुवनबीजं हि वाङ्मनसयोरालम्बनम्। प्रवृत्तिनिमित्तगुणयोगात्। ब्रह्मात्मतत्वमेव च मायोपाधि जगद्बीजमिति, तदधिष्ठानतया तल्लक्षणीयमात्मस्वलक्षणमपेक्ष्य, वाङ्मनसयोरदूरविप्रकर्षः। ततो हेतोरुदितविशेषणं भुवनबीजपदमालक्ष्य तदपि भुवनबीजारोपापवादावनालम्ब्य साक्षाल्लक्षयितुं न

शक्यत इति । ईषदर्थे आङ् । अङ्कनार्थो लक्षयतिश्च प्रयुज्यते । ते वाङ्मनसे क्षिणीतः, क्षीणव्यापारे भवतः । न केवलात्मस्वलक्षणावभासाय व्याप्रियेते इत्यभिप्रायः । अनेन "यस्मिन्मने-वचन वृत्तिरदूरवृत्त्ये"ति यदाद्यपदे सूत्रितं, तदुपपादितं भवति । यद्वि च क्षिणातिः सकर्मकः तदा त्वद्भावस्य लम्भकं ज्ञापकं भुवनबीजमेव, पद्यते गम्यत इति पदम् । आत्मतत्त्वावबोधनप्रवृत्तयोर्वाङ्-मनसयोरालम्बनमालक्ष्यादर्श्यं तदेव क्षिणीतो नाशयतोऽपवदतः । "अपूर्वमनपरमि"त्यादिना कारण-रूपापवादविषय एव वाङ्मनसव्यापारोपक्षयः । न पुनरात्मस्वलक्षणविषयोऽपि व्यापार इत्यभिप्रायः । तदेतदभिप्रेत्याह श्रुतिः — "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहे"ति । अप्राप्य निवर्तन्त इति, प्रवृत्तिस्तावदवगम्यते । अन्यथाऽप्रसक्तेरप्राप्तिनिवृत्तिवचनायोगात् । प्रवृत्तिश्च वाङ्मनसयो-रभिधानतदाकारज्ञानपरिणामाभ्यामन्यात्मनि, दूरपातिनि पतगे चक्षुरादेरिव दुर्निरूपा । एकविषये च प्रवृत्तिनिवृत्ती उपपादयितुं युक्ते, अतो ब्रह्मात्मनि कारणादिरूपारोपतदपवादनिमित्ता प्रवृत्तिर्भूपानि-रूप्यतया अपवादस्याप्यपवादेन निमित्ताभावात्तत एव निवृत्तिश्चेत्युपपन्नं वाङ्मनसाविषयत्वम् । **एतदुक्तं भवति** — सत्यमात्मनः संसारभ्रममूलमविद्या समानविषयविद्यानिवर्तनीया । यदि तत्राविद्या-रोपिता न स्यात् । अत एव रज्जोरहिभ्रममूलमविद्या तत्रानारोपितत्वात्तत्वविद्यया निवर्तनीया । आरोपिता तु साऽऽत्मनि । रज्जावहिरिव केवलं निषेधेन विद्यया बाधनीया अतो विद्याया बाधनीय-समानविषयत्वमतन्त्रम् । अथाप्यारोपसमानविषयत्वं बाधस्याश्रयितव्यम् । निरवधिकमारोप्य निषेधा-योगात् । सत्यम् । आरोपापवादविकल्पनैव तद्विषयत्वमिष्यते । अपवादविकल्पोपशमे चात्मनः केवलस्वरूपावभास इति विषयत्वम् । अस्तु वा समानविषयविद्यानिवर्तनीयैवात्मविद्या । तत्समानविषयत्वं तु विद्याया इयदेव, यदविद्यया समानाकारत्वम् । ज्ञानाकारतया तदवभासादेव तदाकाराविद्यायां निवृत्तायां निष्केवलस्वभाव आत्मा स्वयमवभास एवावशिष्यते । न तु विद्यानिबन्धनावभास इति निरतिशयानन्दप्रकाशसत्तैकरस- ब्रह्मात्मा वाङ्मनसाविषय इति ॥ ४१ ॥

इति परमरहस्यमित्यादिश्लोकावतारः पूर्ववत् ।

इति परमरहस्यं पण्डितारवण्डलानां
विमलमतिविमृग्यं वेदतात्पर्यगत्या ।
परमशिवपदस्यावाङ्मनोगोचरत्वं
प्रसव उदितमस्मिन् सोपपत्तिर्द्वितीये ॥ ४२ ॥

अत्र कर्मसमृद्ध्यर्थतया कर्माङ्गेषूपास्यत्वमेव परमात्मनो **रहस्यम्** । केवलकर्मठसमाजेष्वनुप-देश्यम् । क्रममुक्त्यर्थतयाऽहंग्रहोपास्यत्वं **रहस्यतरम्** । सद्योमुक्त्यर्थतया वाङ्मनसागोचरस्वरूप-

परिशेषस्तु रहस्यतम इति **परमरहस्यम्**। **अवाङ्मनोगोचरत्वं**, वाक् च मनश्च वाङ्मनसी, समासान्तविधेरनित्यत्वाद्वाङ्मनसेत्यचतुरादिसूत्रनिपातितसमासान्तप्रत्ययानादरः। अथवा, वाक्साहितं मनो वाङ्मनः, शाकपार्थिवादिवत्समासः। तद्गोचरत्वाभावोऽवाङ्मनोगोचरत्वम्। असूर्यंपश्या इत्यादिवत् नञोऽसमर्थसमासः। वेदतात्पर्यगत्याऽस्मिन्द्वितीये **प्रसव उदितमित्यन्वयः**। नन्विदं वङ्मनसागोचरत्वं पूर्वप्रसवोदितवेदवेद्यत्वविरुद्धमित्यत आह – **सोपपत्तीति**। स्वरूपालम्बनविश्वभेद-निषेधाकारसाक्षात्कारलक्षणविद्यावभासेन केवलस्वरूपावभासपरिशेषताऽऽत्मन – इष्यते। सा च विद्या वेदजननीयेति वेदवेद्यत्वमात्मन उच्यते। न तु धर्मादिवत्साक्षादेव वेदवेद्यत्वमित्यतोऽविरोध इत्यभिप्रायः **शेषव्याख्या तु पूर्ववदेवेति सर्वमवदातम्** ॥ ४२ ॥

इति श्रीशिवतत्त्वरत्नकलिकाव्याख्यायामामोदरञ्जनाख्यायां

प्रमेयवासनोल्लासो द्वितीयः ॥



॥ श्रीः ॥

## तृतीय उल्लासः

विद्या विद्युतितेव विद्युदचिरादालीनमन्धन्तमः
सापि स्वोदयनिस्सहात्मभरणादूरे चिरस्थायिका ।
नाकाशं न दिशोऽथवा न तरणिं नापीन्दुवैश्वानरौ
पारे वाङ्मनसास्पदं तु परमव्यामैकमोजायते ॥ ॥ ॥

एवं पद्यैः सप्तदशभिः प्रकाशानन्दसत्ताकेवल आत्मेति सिद्धं कृत्वा, वाङ्मनसाविषयत्वं तस्य प्रतिष्ठापितम्। अधुना तदेवात्मनः कैवल्यं साधयन्नाद्यपद्ये, "यो विश्वकारणगुणोपाधिपारभूमिरिति" सूचितं कारणोत्तीर्णत्वमुपपादयितुमारभते। तत्रानन्तरपूर्वपद्ये ब्रह्मात्मस्वलक्षणोपलम्भकं भुवनबीजपदमित्युक्तम्। तदयुक्तम्। भुवनबीजपदमेव हि जगत्कारणरूपं सर्वत्र शास्त्रे प्रतिपादनीयं लक्ष्यते – "आत्मा वा इदमेक एवाग्रआसीन्नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमाल्लोकानसृजत," "यतो वा इमानि भूतानि जायन्ते, तद्ब्रह्म," "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोऽसृजत," "स ईक्षांचक्रे स प्राणमसृजत" इत्यादिषु। तदनुगुणाश्च गुणाः "यस्सर्वज्ञस्सर्ववित्," "परास्य शक्ति र्विविधैव श्रूयते," "सत्यकामः सत्यसङ्कल्पः" इत्याद्या आम्नायन्ते। तत्र "साक्षी चेता केवलो निर्गुणश्चे"त्यादयो गुणनिषेधवादाः, "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्स" इत्यादिश्रुतहेयगुणनिषेधविषयाः च्छागपशुन्यायेन व्यपस्थापनीयाः। तमिममखिलहेयप्रत्यनीककल्याणगुणगणसागरं परमात्मानं, तस्यैवांशभूता जीवात्मानः, कर्मणा ज्ञानेन वा समाराध्याभ्युदयं निःश्रेयसं वाऽश्नुवते। "ज्ञात्वा तं मृत्युमत्येति", "नान्यः पन्था विमुक्तये", "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" ॥ इत्यादिदर्शनात्। न चेयतोपूर्वस्य महता विस्तरेण प्रतिपाद्यस्य जगत्कारणत्वादेरात्मन्यपवाद्यत्वमुपगन्तुं न्याय्यम्। येन तदारोपापवादाभ्यां, आत्मतत्वं लक्ष्यत इति विवक्ष्येत। तस्मात्केवलआत्मा वाङ्मनसाविषय इति मिथ्यादृष्टिरितीमां शङ्कामपवदितुं जगत्कारणत्वादेरविद्यामायोपाधिकतयाऽऽरोपितत्वम्। तत्र च श्रुतेरतात्पर्यादपवाद्यत्वं चोपक्षिपन्नाह –

श्वेतातपत्रमुपलक्षणमेव राज्ञो
नान्तर्गुणस्तव जगज्जनिहेतुता च ।
राज्याभिषेकमिव तत्र विभो ! निमित्तं
मायागुणव्यतिकरं परमामनन्ति ॥ ४२ ॥

राज्ञो राज्याधिकृतस्य श्वेतातपत्रमुपलक्षणमेव । अयमत्र विभागः । सजातीयविजातीय-व्यावृत्त्या वस्तुतत्त्वज्ञानप्रयोजनकं लक्षणम् । येनावगतेन प्रमाणावगमनीयवस्त्वसङ्कीर्णमवगम्यते । तत्खलु लक्षणं नाम, लक्ष्यते सूच्यते वस्तुतत्त्वमनेनेति व्युत्पत्तेः । तच्च द्विविधम् — स्वलक्षण-मुपलक्षणं चेति । यदाचक्षते स्वरूपलक्षणम् । तटस्थलक्षणमिति । तत्र लक्ष्यवित्तिवेद्यं लक्षणं स्वरूपलक्षणम् । तत् द्विविधम् । स्वात्मा, स्वधर्मश्चेति । यथा गोः स्वात्मा गोत्वं सास्नादिर्वा । सामान्यविशेषात्मानो हि भावाः । व्यावृत्तानुवृत्तप्रत्ययात् । सास्नादिसन्निवेशभेद एव हि गौर्नाम । यथा स्मर्यते "शिबिका दारुसङ्घातरचनास्थितिसंस्थितिः । अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया" ॥ इति । श्रूयते च — "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमित्यादि । यथा वा प्रकृष्टप्रकाशात्मनश्चन्द्रमसः स एव प्रकृष्टप्रकाशः स्वरूपलक्षणम् । यथा वा सत्तासंविदानन्दैक-रसस्यात्मनः सत्यज्ञानादि । ननु ज्ञातेन लक्षणेनाज्ञातं वस्तु लक्षणीयम् । प्रसिद्धेन खल्वप्रसिद्धं बोधनीयमिति न्यायात् । अतः स्वात्मैव लक्षणं लक्ष्यश्चेत्ययुक्तम् । ज्ञाताज्ञातत्वविरोधात् । सत्यमेवम् । किन्तु लक्ष्यात्मैव पृथगिव विज्ञातो लक्षणम् । स तद्द्वाराऽवगमनीयलक्ष्यात्मा पर्यवस्यतीति । यथा, प्रज्ञात एव प्रकृष्टप्रकाशश्चन्द्रात्मनाऽविज्ञातस्य लक्षणं प्रकृष्टप्रकाशश्चन्द्र इति, तद्द्वाराऽवगमनीयस्य लक्ष्यचन्द्रस्यात्मा पर्यवस्यति । यथा वा ज्ञानानन्दादयो लोके पृथगवगता एव विज्ञानमानन्दं ब्रह्मेति, तद्द्वाराऽवगमनीयस्य लक्ष्यब्रह्मण आत्मा पर्यवस्यतीति तत् स्वरूपलक्षण-मित्यविरोधः। स्वधर्मः खल्वपि यथा धेनोर्गोत्वे सति दानकर्मत्वं, यथा वेन्दीवरस्य नीलत्वे सत्युत्पलत्वं, यथा वा चेतनत्वमात्मनः । एतदालम्बनमेव न्यायिनां "असाधारणधर्मो लक्षणमि"ति वचनम् । गोगवयादि-साधारणनीलत्वादिविशेषणधर्मव्यावृत्त्यर्थमसाधारणेति विशेषणम् । यद्यपि लक्षणमप्यनेकव्यक्ति-साधारणमेव, तथापि स्वव्यावर्त्त्यरूपावच्छिन्नेतरमात्रव्यावृत्तत्वमसाधारणत्वमस्ति लक्षणधर्मस्य । न खलु चेतनत्वं स्वव्यावर्त्त्यरूपात्मत्वावच्छिन्नेतरानात्मसाधारणम् । नीलो गौरित्यादिविशेषणं तु स्वव्यावर्त्त्य-रूपगोत्वावच्छिन्नेतरगवयादिसाधारणमित्येष एव विशेषणलक्षणधर्मयोर्भेदः । स्वविशेष्यरूपेण सजातीय-व्यावर्तकं विशेषणम्, यथा नीलत्वमुत्पलस्य कैरवादिव्यावर्तकम् । स्वव्यावर्त्त्यरूपविजातीयव्यावर्तकं लक्षणम्, यथाऽवकाशत्वमाकाशस्येति वा भेदः । बोध्यसम्बन्धकं व्यावर्तकं विशेषणम्, बुद्धसम्बन्धकं व्यावर्तकं लक्षणमिति वा । लक्ष्यवित्त्यवेद्यं लक्षणं तटस्थलक्षणम् । तच्च द्विविधम् — उपाधिरुपलक्षणं चेति । तद्भेदो वेदान्तकल्पतरौ लक्षितः "यावत्कार्यमवस्थाय भेदहेतोरुपाधिता । कादाचित्कतया भेदधीहेतुरुपलक्षणम्" ॥ इति । कार्यान्वयी कार्यकालावस्थायी व्यावर्तक उपाधिः । यथेन्द्रियाणां गोलकं कर्णश्चक्षुरित्यादि । तादृशमेव कार्यकालावस्थानानियतमुपलक्षणमित्यर्थः । तच्च द्विविधम् स्वव्यावर्त्त्याश्रयं तदनाश्रयं च । यथा पृथिव्यागन्धो, यथा वा शाखाग्रं चन्द्रमसः । तत्र

चन्द्रस्य शाखाग्रमिव राज्ञः श्वेतातपत्रमुपलक्षणमेव। उपसामीप्ये न तु प्रकृतिरञ्जनादिवत्। लक्षणीय-संश्लेषेणलक्षणमुपलक्षणम्। जात्यवयवसन्निवेशादिवत्। स्वलक्षणत्वव्यवच्छेदार्थमेवकारः। तव परमात्मनः। जगज्जनिहेतुता च, अत्र जनिग्रहणेन जन्मस्थितिभङ्गमुपलक्ष्यते। हेतुता चेह निमित्तोपादानसाधारणी विवक्षिता। जगन्निमित्तोपादानत्वं हि ब्रह्मलक्षणमभिमतं, औपनिषदानाम्। "सोऽकामयत बहुस्यां प्रजायेयेति", "तदात्मानं स्वयमकुरुत", "तन्नामरूपाभ्यां व्याक्रियत", इत्यादिश्रुतिलिङ्गात्। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति **सौत्रन्यायाच्च**। तत्र जन्मादित्रितयव्यभिचरितकारणं तावदुपादानं भवति। यथा पृथिव्योषधीनाम्। निमित्तं हि धर्मादि सुखादेर्जन्येकहेतुर्भवति। राज्यादिश्च राज्यादेः स्थित्येकहेतुः। ज्ञानादि चाज्ञानदेर्नाशैकहेतुः। न च त्रितयहेतुः क्वचिन्निमित्तमुपलभ्यते। ननु कालः केवलनिमित्तं जन्मादिहेतुरुपलभ्यते। न। तत्तदुपाधिकालान्यत्वेनैकस्य त्रितयहेतुत्वाभावात्। यथा वसन्तो वनप्रसवहेतुः, ग्रीस्मः तद्विनाशहेतुरिति। नन्वेवं त्रितयहेतुरेकं ब्रह्मोपादानमेव स्यात् इति निमित्तान्यत्वं प्रसज्येत। न उपादानस्यैव चेतनतया तदनुकूलज्ञानवत्वेन कर्तृत्वोपपत्तौ, तदन्यनिमित्तकल्पने गौरवान्मानाभावाच्च। तस्मादिहोभयहेतुत्वविवक्षया जनिग्रहणं त्रितयोपलक्षणमिति युक्तम्। **चकार** उपलक्षणमिवेत्यनुकर्षणार्थः। तेन विम्बप्रतिविम्बरूपापत्त्या, राज्ञ इवात्मनः श्वेतातपत्रमिव जगज्जन्मादि-हेतुतोपलक्षणमित्युपमानोपमेयभावः सिद्धो भवति। अथ समानाधिकरणं व्यावर्तकं विशेषणं यथा नीलमुत्पलमिति। व्यधिकरणं व्यावर्तकं उपलक्षणं यथा जटाभिस्तापस इति विशेषणोपलक्षणभेदं केचिदिच्छन्ति। तत्र यथा जटोपलक्षणमपि तापसरूपान्त-र्भूतैव, एवं जगज्जन्मादिहेतुताऽपि स्यादात्मस्वरूपान्तर्गता इत्यत आह **नान्तर्गुण इति**। न ज्ञानानन्दादिवत्स्वरूपान्तर्भूतेत्यर्थः। **अथान्तर्गुण** एव कस्मान्न भवतीत्याशङ्क्य परोपाधिनि-बन्धनत्वादित्याह **राज्येत्यादिना**। राज्ञः श्वेतातपत्रयोगे निमित्तं, राज्ये स्वाम्यमात्यादिसप्ताङ्गलक्षणे मन्त्रिपुरोहितादिभिः क्रियमाणमभिषेकमिव। अत्र '**विभो**' इति सम्बोधनेन मायैव जगदुपादानं ईश्वरस्तु निमित्तमेवेति शङ्का निरस्यते। विश्वात्मना विविधो भवतीति विभुः। "विप्रशंभ्योड्वसं-ज्ञायामि"ति विपूर्वाद्भवतेः मितद्र्वादिड्डुप्रत्ययः। परमात्मन एव बहुभावश्रवणान्नैवमित्यभिप्रायः। **तत्र** तव जगज्जन्मादिहेतुतायोगे **निमित्तं मायाया गुणैः** रजस्सत्वतमोलक्षणैः **व्यतिकरं**, तमोगगनवदेकलोलीभावेन सम्बन्धं **परं** तमेव केवलमित्यर्थः। **आमनन्ति** किं कारणं ब्रह्मेति, ब्रह्मणो निर्विकारकेवलस्वभावस्य कारणत्वानुपपत्त्यनुशयेन विमर्शपूर्वकं, "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढामि"ति मायासम्बन्धनिबन्धनमेव हि तदुपादानमाम्नायते। पुराणेऽपि "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते"॥ इति पर्यनुयोगपूर्वकं "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या

भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठापावकस्य यथोष्णता"। इति। भावशक्तिशब्दितमायासम्बन्धनिबन्धनमेव ब्रह्मणः कारणत्वमुपपद्यते । न च परोपाधिकमपि जगत्कारणत्वमात्मनः स्वभावः, स्फटिकस्येव जपोपाधिकं लौहित्यमित्यभिप्रेत्य केवलपर्यायतया परमित्युक्तम् । पुराणेऽपि चौपाधिकधर्मो न स्वभाव इति दर्शितम्। "त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः। पत्न्याः पतिः पिता सूनोः कं त्वां भूप वदाम्यहम्" ॥ इति ॥ अत्र मायागुणव्यतिकरमिति गुणग्रहणेन "रजसा सर्गहेतुत्वं सत्वेन स्थितिहेतुता ॥ तमसाप्ययहेतुत्वं व्यवस्थैवं प्रदर्श्यते"॥ तथा च पुराणम्– जषन्रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः। ब्रह्मा भूत्वास्य जगतो विसृष्टौ सम्प्रवर्तते ॥ सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना। सत्वभाग्भगवान् विष्णुरप्रमेयपराक्रमः ॥ तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः । मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः ॥ इति ।

**अयमत्राशयः** — जगत्कारणत्वं तावद्ब्रह्मणो लक्षणमिष्टम्। "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्ब्रह्मेति"। "जन्माद्यस्य यत" इति श्रुतिसूत्रैककण्ठ्यात्। लक्षणं च नाम प्रज्ञातमेवाऽज्ञातस्य लक्ष्यस्य प्रज्ञापनम्। अन्यथा लक्ष्यस्येवाप्रज्ञातस्य लक्षणात्वायोगात्। स्वलक्षणलक्षणस्यापि रूपभेदेन प्रज्ञातत्वमुपपाद्यम्। शास्त्रं च प्रज्ञातविषयं प्रतिपादयत्प्रमाणम्। यथा सूत्रयति स्म **जैमिनिः** "अर्थेऽनुपलब्धे तत्प्रमाणम्" इति। आचक्षते च **नीतिविदः** – "अज्ञाते फलवत्यर्थे श्रुतेस्तात्पर्यमि"ति। ततश्च न जगत्कारणरूपं शास्त्रप्रतिपाद्यम्, प्रज्ञातत्वात्। अन्यथा लक्षणत्वायोगात् । किन्तु अनुमानादिसिद्धजगत्कारणरूपलक्षणमुखेन ब्रह्मात्मतत्वमेव । एतेन महता विस्तरेण शास्त्रप्रतिपाद्यस्यापवाद्यत्वमन्याय्यमिति शङ्काकलङ्कानवकाशः। न च वनतिलकन्यायेन लक्षणस्यापि लक्ष्यान्तर्भावः। "अपूर्वमनपरमि"-त्यादिनिषेधात्। अत एव विशेष विषेधशास्त्रसङ्कोचकारणाभावात् 'पशुना यजेते'त्यत्र च सामान्याव्यवस्थापत्त्या विशेषतात्पर्ये सति छागस्य वपाया – इत्यादिमन्त्रवर्णाद्विशेषोपसंहारादिह सामान्यतोशेषविशेषनिषेधप्रतिपत्तिचारितार्थ्यात् जगत्कारणत्वादिविशेषापवादेन निर्विशेषब्रह्मात्मतत्वमेव शास्त्रतात्पर्यविषयः इत्यतः सम्यग्दृष्टिरेवात्मा वाङ्मनसाविषयो ब्रह्मात्मतत्वमितीति ॥ ४३ ॥

**स्यादेतत्** । अस्त्वेवमात्मनो मायागुणसम्बन्ध निबन्धनमेव जगत्कारणत्वम् । तथापि तत्तदन्तर्गुण एव स्यात् तक्ष्णो वात्स्यादिसम्बन्धनिबन्धनमिव तष्टृत्वं, ज्ञातुर्वा देहेन्द्रियादिसम्बन्धनिबन्धनमिव ज्ञातृत्वम् । न तु तटस्थमेव, "तटस्थलक्ष्म स्याद्राज्ञः छत्रादि पृथगस्तिकम् । जगज्जन्मादिहेतुत्वं भावो न भवितृस्थितम्" ॥ युक्तं यद्राज्ञः श्वेतातपत्रं चन्द्रमसो वा शाखाग्रं तटस्थलक्षणमिति । पृथगेव लब्धात्मकत्वात् । जगद्धेतुत्वं तु भावो भवित्रेकाश्रयं न पृथगस्तिकमिति न तथा स्यात्। अथ मायाश्रयं जगद्धेतुत्वं, मायसम्बन्धादात्मन – उपलक्षणमिति

चेत्, स मायासम्बन्धो यद्यात्मान्तर्गुणो जगत्कारणतापि तथैव स्यात्। अथ न, प्रधानकारणवादि-सांख्यपक्षपात इत्याशङ्कां परिहर्तुं परमात्मन्यारोपिता मायैव जगदात्मना परिणमते, परिणममान-मायाधिष्ठानतया परमात्मा जगत्कारणमिति मतमाश्रित्याह —

अज्ञाततत्वमवलम्ब्य भवन्तमात्मन्
माया विवल्गति गुणैस्त्रिभिरुच्चनीचैः ।
कादम्बिनीव घनघर्मदशावसाने
छन्नातपं तपनपद्धतिबिम्बमृद्धा ॥ ४४ ॥

**निरीश्वरसांख्यास्तावदाहुः** — यथा धेन्वाः क्षीरं स्वयमेव वत्सार्थतया प्रस्नौति, तथा प्रधानं स्वयमेव पुरुषार्थतया प्रवर्तते। यदि स्यात्तस्य तावत्येव पुरुषाधिष्ठेयता, यत्तदर्था प्रवृत्तिरिति। **सेश्वरसांख्यास्तु** — यथा राष्ट्रं स्वभावादेव प्रवर्तमानं राजाज्ञानुविधायीति तदधिष्ठेयं, तथा प्रधानमपि स्वभावादेव प्रवर्तमानमीश्वरसङ्कल्पानुविधायीति, तदधिष्ठेयमित्याहुः। **तान्त्रिकास्तु** — यथाऽस्मदादिशरीरं शरीर्यधीनस्थितिप्रवृत्तिकतया तदधिष्ठेयं, तथा मायापि परमात्मनः शरीरत्वात्त-दधीनस्थितिप्रवृत्तिकतया परमात्माधिष्ठेयेत्याहुः। तेषां निरासायाह **अज्ञाततत्वमवलम्ब्य भवन्तमिति**। अज्ञातमज्ञानविषयीकृतम्, अज्ञानेनावृतं नास्ति न प्रकाशत इति व्यवहारानुगुण्यमापादितं तत्वं निष्केवलं याथात्म्यं यस्य तं, इदं विशेषणमारोपविषयत्वयोग्यतार्थम्। भवन्तं परमात्मानम्। **अवलम्ब्यावष्टभ्य**। तत्रारोपात्तेनैव लब्धात्मिका कार्यक्षमा च भूत्वेत्यर्थः। अत्रात्मन्निति सम्बोधनेन "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे"ति श्रुतिमुपस्थापयति। तत्र कथं मायोपादानस्य जगतः स आत्मा स्यात्? कथं च माया तदात्मिका स्यात्? यदि माया तादात्म्येनारोप्येत। ततश्च मायाया अपि सत्ताप्रद आत्मेति, तदारोपितत्वमेव सूचयति। एवं हि आत्मतत्वाज्ञानमूल-मायानिबन्धनसंसारानर्थसम्बन्धस्यात्मतत्वज्ञानादपबाधनेन पुरुषार्थ उपपद्यते। नान्यथेत्यभिप्रायः। मायादुर्निरूपहेतुस्वरूपकार्यभेदो विशदावभासो मृषार्थविशेषो मायेत्युच्यते। तादृशेन्द्रजालादौ मायाशब्दप्रयोगात्। आश्चर्यवाची मायाशब्द इति कश्चित्। तस्याप्याश्चर्यत्वमेव निरूप्यमाणं मृषाभावान्नातिरिच्यते। **तथाहि** – "आश्चर्यमनित्य" इति पाणिनिः। तत्र न तावदसदातनमात्र-मनित्यत्वम्। तादृशस्यापि श्वसोन्मेषादेरनाश्चर्यत्वात्। नापि सदैकरूपत्वाभावः। "उन्नतो वृक्ष आश्चर्यमि"ति वैयाकरणोदाहरणविरोधात्। अत एव नानावस्थितपरिणामित्वं, घटशरावाद्यनेक-परिणामिनो मृद्द्रव्यस्यानाश्चर्यत्वाच्च। नाप्यपूर्वदर्शनविषयत्वं, तादृशस्यापि सम्भाव्यत्वप्रतिसन्धाने-ऽनाश्चर्यत्वात् तस्मादसम्भाव्यत्वे सति अपूर्वदर्शनविषयत्वं तदिति वक्तव्यम्। तादृशं च मृषैव।

सत्यत्वे हेतुस्वरूपकार्यैः कथमपि सम्भावनीयत्वात्। उन्नतो वृक्ष आश्चर्यमिति च ईदृशमौन्नत्यमसम्भाव्यमदृष्टपूर्वं चेति मायागजादिसादृश्यादेव विवक्षितम्। वृक्षजातिभेदेषु चिरकालोपचयभूगुणादिभिस्तादृशौन्नत्यस्य सम्भाव्यत्वात्। शुक्तिरूप्यादौ तादृशेऽप्यनाश्चर्यत्वं पूर्वदृष्टत्वाभिमानादितिं। तस्मान्मृषार्थविशेष एव मायेत्युच्यते। यद्यपि चासुरास्त्रादौ परपीडाकरे ज्ञानान्यसाधननिवर्त्ये मायाशब्दः प्रयुज्यते "तेन मायासहस्रं यच्छम्बरस्याशुगामिना। बालस्य रक्षता देहमेकैकश्येनसूदितम्" ॥ इत्यादौ, तथापि स न वस्तुवाचीति शक्यमुपगन्तुम्। अतज्ज्ञबुद्ध्या तथात्वमनुरुध्यैव मृषार्थस्यापि साधनान्तरनिवर्त्यत्वव्यवहारदर्शनात्! यथा वक्तारो भवन्ति अन्धकारे बालेन दृष्टो वेतालो भयज्वरादिकरो, मन्त्रिणा मन्त्रबलेन निवर्तित इति। तत्वज्ञाननिवर्त्यात्तु मृषैव तत्। अत एव तज्ज्ञेषु माया न प्रभवन्तीति प्रवादो वृद्धानाम्। एवं च त्रिगुणात्मिकाया जगत्प्रकृतेर्मृषात्वे किमुपपत्त्यन्वेषणक्लेशेन, मायासमाख्यैव पर्याप्तेति, दर्शयितुमव्यक्ताव्याकृतादिशब्दान्तरेषु सत्स्वपि, मायाशब्दप्रयोगः। अतैकमेव मृषातत्वं, आवरणविक्षेपशक्तिभेदादज्ञानमिति मायेति च व्यपदिश्यते। अत एव "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते। योगी मायाममेयात्मा तस्मै विद्यात्मने नमः" ॥ इति मायाविद्यासामानाधिकरण्यं समञ्जसं भवति। अत एव च – "माया तवेयमज्ञातपरमार्थाऽतिमोहिनी। अनात्मन्यात्मविज्ञानं यया मूढोऽधिरोहति ॥ अस्वे स्वमिति भावोऽत्र यत्पुंसामुपजायते। संसारमातुर्मायायास्तवैतन्नाथ चेष्टितम्" ॥ इत्यादौ भ्रमहेतोरज्ञानस्य मायाशब्देन व्यपदेश उपपद्यते। अत एव च "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः। मायया ऽपहृतज्ञाना आसुरं भावमाश्रिताः" ॥ इत्यादौ तुल्यवज्ज्ञानावरणनिर्देशश्च निरपवादो भवति। एतेन स्वाश्रयव्यामोहकरमज्ञानं परव्यामोह करी मायेति तत्स्वरूपभेदशङ्का निरवकाशा। व्यामोहहेतुत्वमात्रस्यानन्यत्वादैन्द्रजालिकादेर्मायागजादिभिरव्यामोहस्तु तत्वज्ञानादेवेति व्यवस्थोपपत्तेर्न मायाज्ञानभेदसिद्धिरिति। एवं च स्वयमेव माया स्वारोपहेतुरिति, हेत्वन्तरानपेक्षया नानवस्थाशङ्केति। सैषा माया, **उच्चनीचैः** अन्योन्याभिभवेन विषमैरङ्गाङ्गिभूतैस्त्रिभिर्**गुणैः** रजस्सत्वतमोभिः, विविधं विश्वसर्गादिपरिणामेन **वल्गति**, उल्लसति। आवृत्यात्मानमविकृत्यैव माया स्वयं विक्रियत इति। अत्रानुरूपं दृष्टान्तमाह – **कादम्बिनीवेति**। **घना** निरन्तरा। **धर्मदशा** निदाघसमयः। **तदवसाने** समाप्तौ वर्षासु। इदं च समयभेदोपादानं कालभेदव्यवस्थयैव मायायाः स्वर्गादिपरिणाम इति सूचयति। **छन्नः** स्वेनैवावृतः, **आतपः** आदित्यादिप्रकाशो यस्य तम्। **तपनस्य सूर्यस्य पद्धतेः** सरणेराकाशस्य **बिम्बं** मण्डलमधिष्ठाय, आश्रयं कृत्वा, तदाश्रिताभूत्वा। **ऋद्धा** प्रवृद्धा कादम्बिनी मेघमालेवेति। यथा कादम्बिनी प्रकाशमानमाकाशमावृत्याप्रकाशं कृत्वा, तमेवाश्रित्य गिरिशिखरपुरगोपुरादिरूपेण विवल्गति, तथा माया सत्तानन्दप्रकाशात्मानमावृत्य, तमेवाधिष्ठाय, भूतभौतिकजगदात्मना परिणमते। तथाहि श्रुतिः – "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः",

इति स्मृतिश्च – "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" । इति । जडात्मकार्यस्य जडमेवोपादानं न्याय्यम्, उपादानोपादेयसालक्षण्यस्य लोकसिद्धत्वात् । ब्रह्म तु परिणममानमायाधिष्ठानतयैव जगत्कारणमुपदिश्यते । अत एव चान्त्यात्कार्यात्तदनुगतमायानुसिद्धतया सत्ताप्रदत्वेनानुगतस्वभावत्वादुपादानकारणं भवति । नियतपूर्वभावे सति कार्यानुगतत्वमेव हि परिणामितदधिष्ठानसाधारणमुपादानत्वम् । तस्मात्स्वावृतात्मदत्तसत्तास्फूर्तिकमायागतेव जगज्जन्मादिहेतुता दिश्यवस्तुदर्शनाय दिक्प्रदर्शनन्यायेन ब्रह्मात्मन उपलक्षणमेवोपन्यस्यते श्रुत्यादाविति ।

**इदमत्राकूतम्** – न कापिलानामिव जगत्प्रकृतिर्माया स्वतन्त्रैवेति युक्तम् । तस्याः स्वभावादेवानुपरतसमविषमपरिणामायाः साधारणत्वेनात्मनश्च व्यापितयाऽवर्जनीयसन्निधिकत्वाविशेषात् द्रष्टृदृश्यतालक्षणो भोक्तृभोग्यतासम्बन्धो दुर्वार इति, संसारानिर्मोक्षप्रसङ्गात् । नन्वात्मनः प्रकृतेरविवेकतः संसारः विवेकज्ञानान्निवर्तिष्यते । तथाहि – तैरवं सूत्रितम् "प्रकारान्तराभावादविवेकाद्बन्ध" इति । प्रकारान्तराभावश्चैवं सूत्रितः "न स्वभावतो बन्धस्य मोक्षसाधनोपदेशविधिः स्वभावनाशात् स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम्" बन्धस्य स्वभावनिबन्धनत्वे, यदि मोक्षसाधनविधिरर्थवान् तदा स्वभावनाशप्रसङ्गः । अथ स्वभावस्यानपायः मोक्षसाधनोपदेशविधेरननुष्ठानलक्षणमप्रामाण्यमित्यर्थः । न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् नावस्थातो देहधर्मत्वात् तस्या न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च । मुक्तानामपि बन्धप्रसङ्गोऽन्यधर्मत्वाविशेषादित्यर्थः । प्रकृतिनिबन्धनश्चेन्न तस्या अपि पारतन्त्र्यम् । प्रकृतेः साधारण्येनानतिप्रसङ्गाय कर्म पारतन्त्र्यं वाच्यम् । तत्र चोक्त एव दोष इत्यर्थः । "नाविद्यातोप्यवस्तुना बन्धायोगात्" इत्यादिविवेकज्ञानात्तन्निवृत्तिश्च सूत्रिता "नियतकरणात्तदुच्छित्तिर्ध्वान्तवत्" इति । अन्यत्र च "प्रतिनियतकारणं नाशार्थमस्य ध्वान्तवत्" इति । अत्रापि प्रतिनियमोऽन्वयव्यतिरेकाभ्यामित्यप्रकाशस्य प्रकाश इवान्वयव्यतिरेकाभ्यामविवेकस्य संसारहेतोर्विवेकः प्रतिनियतं नाशकारणमित्यर्थः । ततश्च, यस्येदं विवेकज्ञानं तं प्रति प्रकृतेश्चरितार्थत्वात् प्रसवोपरमः । तथा च सूत्रम् – "आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात्" इति । तत्कृते पुरुषविमोक्षार्थं विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य । "सूपकारवत्पाक" इति च । यथा पाचकः पाकं कृत्वा निवर्तते, एवं विवेकज्ञानं कृत्वा सर्गान्निवर्तत इत्यर्थः । तस्मादविवेकस्य कर्मणो वा सहकारिणो विरहाद्विवेकिनं प्रति निवृत्तप्रसवायां प्रकृतौ, कुतः संसारसातत्यप्रसङ्ग ? इति । उच्यते । यदि विवेकज्ञानाद्बन्धनिवृत्तिर्हन्त ! तस्य प्रकृतिधर्मत्वेन सर्वात्मसाधारण्यात् सर्वं प्रत्येवाप्रसवधर्मित्वे प्रकृतेः प्रवृत्तिशीलत्वाभ्युपगमव्याघातः । न खलु कस्यचिदात्मनो धर्मो विवेकज्ञानं, कूटस्थत्वव्याघातप्रसङ्गात् । तदपि तैरेव सूत्रितम् – "वाङ्मात्रं न तु तत्वं चित्तस्थितेः" इति ।

विवेकज्ञानमात्मसम्बन्धीति वाङ्मात्रं, न तु तात्विकः सम्बन्धः तस्य चित्तस्थितेः चित्तसन्निधानादात्मनः विवेकाभिमानस्य व्यवस्थायोगात् बन्धनिवृत्तिव्यवस्था च न स्यात्। अत एव प्रवृत्तिशीलत्वेऽपि प्रधानस्य, विवेकज्ञाने सति पुरुषदृश्यत्वलक्षणभोग्यत्वाभावात् पुरुषस्य तद्‌द्रष्टृत्वलक्षणभोक्तृत्वाभावात् अपवर्ग इति निरस्तम्। उभयोश्चैतन्यजडत्वानपायेन तदभावायोगात्। विवेकज्ञानादिसाधारण्ये व्यवस्थानुपपत्तेश्च। तस्माद्यदि प्रकृतिर्विवेकज्ञानेऽपि सति प्रवृत्तिशीलत्वात्प्रवर्तेत, यदि वा सहकारिविरहान्निवर्तेत बन्धमोक्षाव्यवस्थैवेति। अथेश्वरसङ्कल्पाद्व्यवस्था स्यात्। न। द्रष्टृदृश्यशक्तिसाधारण्ये सति तामनपेक्ष्येश्वरस्य सङ्कल्पे, प्राकाम्यविघातप्रसङ्गात्। न खलु 'उदकमुष्णं शिखिनं वा शिशिरं' सङ्कल्पयन्मोघसङ्कल्पो न भवेत्। तान्त्रिकाणां पुनरीश्वराधीनमायानिबन्धनसर्गप्रतिसर्गसन्तानाविच्छेदे सत्येव ईश्वरोपासनयाऽऽविर्भूतसत्यकामत्वादिगुणाष्टकस्य सङ्कल्पमात्रोपनतकामितपित्रादिलोकोपभोगसर्वलोककामचारादिलक्षणो मोक्षः, संसारभेद एवेत्यग्रे वक्ष्यते। तस्मात्सर्गादिसंसारानर्थहेतोर्मायायाः परमात्मन्यारोपितत्व एव तत्वज्ञानात्तन्निवृत्तौ पुरुषार्थसिद्धिः। तथा **भगवद्बादरायणप्रणीतं सूत्रम्** – "तदधीनत्वादर्थवत्" इति। अयमर्थः – "इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तं अव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः"॥ इत्यत्र, नाव्यक्तशब्देनानुमानिकं प्रधानमभिधीयते। तत्र हि सांख्यानामव्यक्तपदरूढिः पारिभाषिकी, वैयाकरणानमिव वृद्धिगुणादिरूढिः। न वेदार्थप्रतिपत्त्युपयोगिनी। अन्यथा वेदस्य पौरुषेयसंकेतोपजीवित्वे भारतादिवदपौरुषेयत्वव्याघातात्। न व्यक्तमव्यक्तमिति योगाश्रयेण च तदविशेषो विचेतव्यः। ततश्च "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ इन्द्रियाणि हयानाहुः विषयांस्तेषु गोचरान्" इत्यत्र संसारमोक्षगमनसाधनत्वेन, रथिरथादिरूपकविन्यस्तेषु, आत्मशरीरादिषु प्रकृतेषु, इन्द्रियादयः स्वशब्दोपात्ता इति परिशेषादव्यक्तपदेन रथरूपकविन्यस्तं शरीरमेव स्वाभिधानमपेक्षमाणमभिधीयते। कथं पुनः क्रमान्यत्वे सति रूपकविन्यस्तानामिन्द्रियादीनामिह ग्रहणमवगम्यते? येन परिशेषादन्योन्याकाङ्क्षया शरीरमव्यक्तपदग्राह्यं स्यात्। उच्यते। न हीदमिन्द्रियादीनां ज्ञेयत्वाय परत्ववचनं, तथाविधशब्दाभावात्। "इन्द्रियेभ्यः परं मनः मनसस्सत्वमुत्तमम्। सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति"॥ इति लिङ्गेन परपुरुषज्ञानायैव तत्परत्ववचनमित्यवगमाच्च। **तथा च सूत्रम्** "आध्यानाय प्रयोजनाभावात्" इति। आध्यानं निध्यानं, निर्वर्णनं दर्शनमित्यनर्थान्तरम्। अथवाऽऽध्यानमुत्कण्ठा, तेन दर्शनं लक्ष्यते, परपुरुषदर्शनायेन्द्रियादीनां परत्ववचनम्। न तु तेषामेव ज्ञानाय। प्रयोजनाभावात्। परमपुरुषे सर्वान्तरे बुद्ध्यवतारप्रयोजने सत्यपि परमप्रयोजनाभावादित्यर्थः। अतः प्रकृतापेक्षितसमर्पणपरत्वात्प्रकृतग्रहणमवगम्यते। कथं पुनस्तदपेक्षितम्?

कश्चिदाह मोक्षगमनसाधनत्वेन रथिरथादिरूपितेषु किं वशीकार्यतायां परमित्यपेक्षिते इदं वचनमिति। तदयुक्तम्। रूपकवाक्ये साधनत्वेनाप्रकृतस्य साध्यस्य परपुरुषस्यापि, इह परत्ववचनात्। यस्त्वविज्ञातवान्भवति अमनस्कस्सदाशुचिः" बुद्धिसारथिरहितोऽयुक्तमनःप्रग्रहोऽत एवावश्येन्द्रियहयो, "न स तत्पदमाप्नोति संसारं चाधिगच्छति"॥ "यस्तु विज्ञातवान्भवति समनस्कस्सदाशुचिः", उक्तविपरीतः "स तु तत्पदमाप्नोति, यस्माद्भूयो न जायते" इत्यन्वयव्यतिरेकवचनेन "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति" इति फलवचनेन च बुद्धिमनसोरेव प्राधान्येन वशीकार्यतायाः सिद्धित्वात् भूयस्तदपेक्षाऽनुदयात् प्रागुक्तलिङ्गेनेन्द्रियादिपरत्ववचनस्य, परपुरुषज्ञानप्रयोजनत्वावगमाच्च। कथं तर्हि यो वशीकृतमनोबुद्धीन्द्रियादिसाधनः सोऽध्वनस्त्रिविधस्य देवयानादिलक्षणस्य परमाप्नोति? "तद्विष्णोः परमं पदमि"त्युक्ते किं तद्विष्णोः परमं पदं, यदाप्त्वा "अनध्वगा अध्वसु पारयिष्णवो भवन्ती"त्यपेक्षिते न तत् बहिर्विचेतव्यम्। किं तर्हि? यान्यवशीकृतानि संसारगमनसाधनानि, वशीकृतानि तु मोक्षगमनसाधनान्युक्तानि। तेभ्य एव प्रकृतेभ्य इन्द्रियेभ्य उत्तरोत्तरपरेभ्यः परमः परः परमात्मैव यमेवेमं—"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्येतदर्थमिदं वचनमित्यतो न्याय्ये प्रकृतविषयत्वे परिशेषादव्यक्तमिति, रथरूपकविन्यस्तं शरीरमेव गृह्यत इति — युक्तमिति प्रतिपादिते, कथं तद्ग्रह्यक्तमव्यक्तशब्दार्हमित्याशङ्कायां इदं सूत्रितम् "सूक्ष्मं तु तदर्हत्वात्" इति। नात्र सूक्ष्मशरीरमव्यक्तशब्दार्हं गृह्यत इत्यर्थः। तस्येन्द्रियमनोबुद्धिसमष्ट्यात्मनो व्यासेन महत आत्मनोऽवरत्ववचनेन "महतः मरमव्यक्तम्" इति परत्वनिर्देशानर्हत्वात्। किन्तु "गोभिः श्रीणीत मत्सरमि"त्यादिवत् सूक्ष्मतमस्योपादानप्रकृत्यभेदोपचारेण सूक्ष्मं तदेव शरीरमव्यक्तशब्दार्हत्वात्तदव्यक्तमुच्यत इत्यर्थः। हन्तैवं! तदेवेदं प्रधानमव्यक्तमित्यापतितमिति, **'घट्टकुट्यां प्रभातमि'त्याशङ्क्य** समाधीयते — "तदधीनत्वात्तदर्थवदि"ति। ननु कथं तर्हि शरीरस्यात्मापेक्षया परत्वमित्याशङ्कायामिदमुच्यते। शरीराधीनत्वादात्मनो मोक्षगमनस्यार्थाधीनप्रवृत्तिकेभ्य इन्द्रियेभ्योऽर्थानामिव, शरीरस्य परत्वमिति। एवं हीदं प्रसक्तानुप्रसक्तविषयं सूत्रमापादितं स्यात्। शरीरस्याव्यक्तशब्दत्वं प्रसक्तं, प्रधाननिरासाय तदनुप्रसक्तं तस्य परत्वं, तदुपपादनपरत्वं चायुक्तं, साक्षात्प्रधाननिरासोपपादनपरत्वे सम्भवति। अत्र विषयवाक्ये प्रकृतः परः पुरुषः परमात्मा तत्पदेन परामृश्यते। कापिलानां हि स्वतन्त्रमेव प्रधानम्। पातञ्जलानामपि हैरण्यगर्भाणामपि स्वतन्त्रसत एव तस्य कार्यप्रवृत्तौ ईश्वरसङ्कल्पाधीनता। तान्त्रिकाणामपि प्रवृत्तिकार्ययोरेव तस्येश्वराधीनता। स्वतः सत्स्वरूपस्यैव तस्य परमात्मशरीरत्वोपगमात्। स्वरूपसत्तास्फूर्तिप्रवृत्तिकार्येषु सर्वेष्वेव तु तदधीनत्वं सूत्रितं विशेषवचनाभावात्। तच्च तत्रारोपितत्वे घटते। अनादेरनारोपितस्य स्वतः स्वरूपसतः अत्यन्ततदधीनत्वायोगात्। एवं च (कृत्वायत्तनधृतौ परत्ववचनं यच्च) तदव्यक्तमव्याकृतं मायाख्यं तदुभयमर्थवत् प्रयोजनवद्भवति।

कथम् ? इन्द्रियादेरुत्तरोत्तरपरत्ववचनं तावत् परमसूक्ष्मसर्वान्तरपरपुरुषप्रतिपत्त्युपयोगितयोपक्षेपणीयम्। अन्यथा, तद्वचनानर्थक्यात्। सूक्ष्मत्वमान्तरत्वं च कार्यापेक्षया कारणस्य युज्यते। अतस्तत्तदात्मलाभ-हेतुत्वेन तस्य तस्य परत्वमुपपादनीयम्। न हि स्वरूपसतः प्रवृत्तिमात्रहेतुत्वं सूक्ष्मत्वादिकमुपकर्तुं शक्नोति। स्थूलानां बाह्यानामेव शब्दादिविषयाणां, ततोऽपि स्थूलस्य शरीरस्येन्द्रियादिप्रवृत्ति-हेतुत्वदर्शनात्। कथं पुनरेवमिन्द्रियादिभ्यः परा अर्थादयः प्रकृता उच्येरन्? न हि रूपकवाक्ये प्रकृता विषयादयः, इन्द्रियादीनां कारणभूता इत्युच्यन्ते। अत्र हि परमात्मा पुरुषः सूक्ष्मतमः सर्वान्तरः प्रतिपाद्यतया विवक्षितो वाक्यार्थः, शेषस्तत्प्रतिपत्त्युपयोगितया पदार्थस्थानीयः। ततश्च "अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायेन विवक्षितवाक्यार्थसिद्ध्यानुगुण्येन गुणभूतपदार्थ-लक्षणाश्रयणौचित्यादर्थादिषु सर्वत्र तत्तत्सूक्ष्मावस्था, इन्द्रियादिकारणत्वयोग्या लक्षयिष्यन्ते। अत एव रूपकवाक्ये प्रकृतेष्वेवात्र स्वशब्दैरुपादीयमानेषु विवक्षितपरत्वं माभूदनुपपन्नमिति रूपकविन्यास-क्रममतिक्रम्यान्यः क्रमः आश्रियते। अन्यथा, यथाकथञ्चित्परत्वस्य यथा प्रकृतक्रमोपाश्रयणेऽपि सम्भवेन प्रकृतक्रमातिक्रमस्यानौचित्याद्रथरूपकविन्यस्तं शरीरं च तत्प्रकृतिवाचकाव्यक्तपदेन निर्दिशति। तच्च लिङ्गमर्थादावपि तस्य तस्य सूक्ष्मावस्था विवक्षितेत्येवं पूर्वपूर्वस्वरूपकारणत्वेनोत्तरोत्तरस्य परत्व-विवक्षायामपि रूपान्तरेण प्रवृत्तावपि तत्कारणतां स्फुटं दर्शयितुं प्रकृतप्रत्यभिज्ञाविघातायार्थादिशब्दैरेव तदुपादानं क्रियते। तथा चार्था मार्गरूपिताः स्वरूपेणेन्द्रियाणां हयरूपितानां प्रवृत्तिहेतवः। अर्थासन्निधौ तदप्रवृत्तेः। स्वप्रकृतिभूतभूतसूक्ष्मेण स्वरूपहेतव इति तदपेक्षया सूक्ष्मत्वमान्तरत्वं च परत्वं कारणाभेदोपचारादर्थानां उपपन्नम्। एवं प्रग्रहरूपितं मनः सङ्कल्पविकल्पात्मकं अर्थाना-मिन्द्रियप्रवर्तकत्वे हेतुः। मनोव्यासङ्गदशायां सन्निहितेष्वप्यर्थेषु इन्द्रियप्रवर्तनादृष्टेः। मनः सूक्ष्मावस्था तत्प्रकृतिस्तु शब्दादिविषयप्रकृतिभूतभूतसूक्ष्मस्वरूपहेतुरित्यतोऽर्थेभ्यः मनसः सूक्ष्मत्व-मान्तरत्वं च परत्वं, तथैव कारणाभेदोपचारादुपपन्नम्। एवमध्यवसायाभावे मनसः कुण्ठीभावात्, अध्यवसायात्मिका सारथिरूपिता बुद्धिः, मनसः प्रवृत्तिहेतुः। सूक्ष्मावस्था तु तस्याः प्रकृतिर्मनः प्रकृते स्वरूपहेतुरित्यतः पूर्ववदेव मनसो बुद्धेः सूक्ष्मत्वाद्युपपन्नम्। तथा रथिरूपितो महानात्मा जीवो भोक्ता, बुद्ध्यादीनामुपकरणानां प्रवृत्तौहेतुः। अत्र पदभाष्ये "महानात्मा हैरण्यगर्भबुद्धिः" इति व्याख्यातं श्रीभगवत्पादैः। ततश्च महानात्माऽहमिति बुद्धितादात्म्यमभिमन्यमानः भोक्ता। तत्समष्टिमयो हिरण्य-गर्भः। स हि जीवघनः श्रूयते – "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इत्यत्र। स च व्यष्टिजीवानां स्फुलिङ्गानामङ्गार इव हेतुः। ततस्तदभेदोपचारेण महात्मा स्वोपाधिव्यष्टिबुद्धेः स्वरूपहेतुरिति, ततः पर उपदिश्यते। तथा रथरूपितं शरीरं भोक्तुरात्मनः सर्वार्थ – एव हेतुः, तत्प्रकृतिरव्यक्तं पुनस्तद्धेतुसमष्टिबुद्धेरपि स्वरूपहेतुरिति 'महतः परमव्यक्तमि'त्युच्यते। एवमेव 'अव्यक्तात्पुरुषः परः' इत्यव्यक्तहेतुत्वेनैव परत्ववचनमिति न्याय्यम्। अन्यथा, "पुरुषान्न परं

किञ्चित्सा काष्ठा सा परा गतिः" इति परान्तरनिषेधनिगमनानुपपत्तेः। परमात्मनोऽपि जगत्सर्जनादि-प्रवृत्तिर्मायाधीनेति तस्या एव ततोऽपि परत्वसम्भवात्। तच्च हेतुत्वमात्मनोऽनादेरव्यक्तस्यारोपाधिष्ठानतया स्वरूपसत्वापादकत्वं, अन्यहेतुत्वादविशिष्टम्। तदिदं "ज्योतिरुपक्रमात्तु तथाह्यधीयत एके" इत्यपि सूत्रितम्। ज्योतिर्ब्रह्म तदुपक्रमात् तत्प्रधाना तदधीना 'अजामेकाम्' इत्यत्राजा प्रतिपत्तव्या तथाह्यधीयत एके मुख्याः। त एवाजामन्त्रमधीयानाः "देवात्मशक्तिं स्वगुणैर्निगूढां" इत्यत्र हि ज्योतिः प्रधानेति वक्तव्ये, तदुपक्रमेति वचनं, अनादेरपि मायाशक्तेः स्वरूपलाभेऽपि तद्धेतुकतामभिप्रैति। सा च तस्मिन्नारोपितत्वे नैवोपपादनीयेति यदत्र वक्तव्यं तदन्यत्र प्रपञ्चितम्। एवं च सत्येवाव्यक्तमर्थवद्भवति। कोऽसावर्थः? पुरुषस्य भोगापवर्गावेव। तदधीनत्वाभावे हि तस्य केवलमचेतनत्वेन, आत्मनश्चासङ्गाविकारत्वेन भोग्ये जगति रचनानुपपत्तेर्न भोगः सम्भवति। कार्यप्रवृत्तौ तदधीनत्वोपगमेन भोगसम्भवेऽपि स्वतः स्वरूपसत्वे तत्वज्ञानानिवर्त्यत्वान्नित्यमेव भोगापत्तेः, नापवर्गः सम्भवतीति। तस्मादात्मन्यारोपितसत्त्वैव माया जगद्रूपेण परिणमत इति, तदेव जगत्कारणत्वमात्मन उपलक्षणमिति सिद्धम् ॥ ४४ ॥

स्यादेतत्। यदि केवल एवात्मा मायापरिणामरूपविश्वसत्ताप्रतिलम्भकतयैव तदुपादानमिष्यते। तर्हि "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति सर्वज्ञत्वादिगुणविशिष्टस्य जगद्धेतुत्ववचनं पीड्येत। मायाविशिष्टमेव हि सर्वज्ञत्वादिगुणकमुपगम्यते। सम्भवति हि तस्य निरतिशयं सार्वज्ञ्यबीजं निरतिशयोत्कर्षशाली सत्वगुणः। अथ स्वभावादेव सार्वज्ञ्यं, तद्यदि नित्यं स्यात्, तन्निरूपकतया सर्वस्यैव सदातनत्वप्रसङ्गः। अथानित्यं, आत्मा विकारी स्यात् "उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्" इति न्यायादनित्यश्च स्यात्। विकारमात्रस्यानित्यत्वप्रयोजकत्वात्। विशिष्टस्य च परिणामितयैव उपादानत्वमुपपन्नमित्याशङ्क्य, सर्वज्ञहेतुवादान्यथासिद्ध्या परिहरति —

सर्वज्ञतादिकमुपादधदेव सर्व-
मात्मानमीश! लभते त्वयि नामरूपैः।
तत्सर्ववित्प्रकृतिकं जगदामनन्ति
भूतादिकालगमिव प्रभवाप्ययाद्यैः ॥ ४५ ॥

सर्वमिदं जगत्, अत्र निरुपपदं ईशेति सम्बोधनेनेदं सूचयति प्रागपि नामरूपविभागादविभक्तनामरूपमायामात्राधिष्ठानतयापीशानमात्रं सम्भवेदपि। सर्वज्ञतादिकं तु सर्वसापेक्षतया न

नामरूपविभागमन्तरा न संभवतीति। त्वयि परमात्मनि। सर्वज्ञता आदिर्यस्य सर्वज्ञतासर्वशक्ति-सर्वेशत्वादेस्तत्सर्वज्ञतादिकं तद्गुणसंविज्ञानो बहुव्रीहिः। सामान्ये नपुंसकम्। तदुपादधदेव स्वोपाधिकमासञ्जयदेव, यथा प्रकाश्यं नीलपीतादिकं सवित्रादिप्रकाशे स्वोपाधिकमेव स्वप्रकाशकत्व-मादधाति, यथा वा घटादिकमाकाशे, कर्णादिकं वा जलधारणसामर्थ्यं शब्दविज्ञानसामर्थ्यं वा स्वोपाधिकमेवादधाति, तद्वत्। ज्ञेयोपधानेन हि ज्ञानात्मनो ज्ञातृत्वमारोप्योपधानेन चाधिष्ठानतया तदात्मालंभनशक्तिमत्त्वं, तत्प्रवृत्त्यादिप्रयोजकत्वं च तदीश्वरत्वमिति। नामरूपैः देवमनुष्यादिलक्षणैः प्रकारैरात्मानं लभते, नामरूपविभागमापद्यते। प्रविभक्तनामरूपात्मकमुत्पद्यत इत्यर्थः। अत्रैव-कारेणात्मसर्वज्ञत्वादेर्जगदात्मलाभस्य च पौर्वापर्यं व्यावर्तयति यस्मादेवमुत्पद्यमानं जगदात्मानं सर्वज्ञतादिरूपमापादयदेवोत्पद्यते, तत्तस्माज्जगत्सर्ववित्प्रकृतिकमामनन्ति "यस्सर्वज्ञ" इत्याद्याम्नातारः। न तु प्रागेव सर्वज्ञ आत्मा जगत्प्रकृतिरिति। तदनुपपत्तेरुक्तत्वात्। मायाविशिष्टस्यापि प्राङ्नामरूप-परिणामात् सर्वाभावेन तन्निरूपणीयसर्वज्ञत्वाद्यनुपपत्तेः। अत्रानुरूपं दृष्टान्तमाह — भूतादीत्यादि। भूतः आदिर्येषां भूतभवद्भाविनां कालानां ते भूतादिकालाः। तान् यथायथं गच्छतीति भूतादि-कालगम्। गमेर्डप्रत्ययः। गाङो वाऽकप्रत्ययः। प्रभव उत्पत्तिः, अत्ययो नाशश्च, आद्यौ येषां प्रभवाप्ययस्थैर्याणां तैः, प्रभवाप्ययाद्यैः प्रकारैः, काले सम्पद्यमानं जगत्। तत्र भूतत्वादिकमादधदेव, सम्पद्यत इति भूतादिकालगं वदन्ति लौकिकाः। तद्वदिति। प्रभवादिपरिवर्तस्यानादित्वेनानिय-तत्वान्नात्र यथासंख्यत्वम्। न हि कालः स्वतो भूतो भवन् भावी वा। किन्तर्हि ? किञ्चिज्जगदुत्पन्नं वा विनष्टं वा, कालस्य स्वोपाधिकमेव भूतत्वमादधत् भूतकालगमुच्यते। एवं जनित्वा सत् कालस्य वर्तमानत्वमादधत् वर्तमानकालमुच्यते। एवं भूत्वा भाविकालस्य भविष्यत्तामादधत् तत्कालगमुच्यते। एवं जगत्स्वात्मलाभोपाधिकमेव सर्वज्ञत्वमादधत् सर्वज्ञ-प्रकृतिकमुच्यत इत्यभिप्रायः ॥ ४५ ॥

उपपादितमेव स्वोपाधिकसार्वज्ञ्याव्यभिचारितया विश्वस्य सर्वज्ञोपादानत्वम्। सुसदृशनि-दर्शनान्तरोदाहरणेन प्रपञ्चयन्नाह —

प्रत्यक्षमस्मदुदयन्ति सुखादिभावाः
तद्वेदनोपधितयाऽनुविदद्भ्य एव।
सर्वज्ञतोपधितयैवमिदं त्वदुद्य-
त्सर्वज्ञहेतुकमुशन्ति गिरीश! सन्तः ॥ ४६ ॥

**सुखदुःखरागद्वेषादयो भावाः** मानसवृत्तिभेदाः। **तद्वेदनोपाधितया,** तेषामेव सुखादिभावानां वेदने अवभासने उपाधितया, यथा हि भूमेरुद्भवन्त एवाङ्कुरादयस्तत्रत्यसौरालोकस्य, स्वावभासनरूपत्वे उपाधयः, तथा बुद्धिविज्ञानादिशब्दितात्मोपधेरहङ्कारादुद्यन्त एव सुखादिभावास्तदुपाधेयात्मस्वलक्षणवेदनस्य स्वावभासनरूपत्वे उपाधय इत्यभिप्रायः। अतस्तदुपाधितया**ऽनुविदद्भ्य एव,** सुखादिभावोदयमनु उपसृत्य विदद्भ्य एव। नास्ति प्रागेव सृज्यवस्तुज्ञानमिति दर्शयितुमनुशब्दः। न खलु सुखादयो भावा जनिस्थितिलयेषु कदाप्यविदितरूपाः **सन्तीत्येवकारः।** अस्मत् अस्मत्तः। सुखादिपरिणाम्यहङ्कारोपधेयमात्मानं निदर्शयितुमस्मद्ग्रहणोपादानम्। विवक्षितार्थे सर्वसम्प्रतिपत्तिसूचनाय बहुवचनोपादानम्। उदयन्ति जायन्ते। इगताविति भौवादिकः। तदिदं सर्वेषां नः प्रत्यक्षं यथाऽयं दृष्टान्तः एवं तव पर्वतो (सर्वज्ञतो) पधितयाऽनु विदत एव। **त्वत्** त्वत्तः। **उद्यदिदं जगत् सर्वज्ञहेतुकम्। सन्तो** ब्रह्मविदः। **उशन्ति** इच्छन्ति। न तु प्रागेव सर्वज्ञस्य सतो हेतुत्वमित्यर्थः। कथं तर्हि "यस्सर्वज्ञः सर्ववित्, तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इति? प्रागेव सिद्धवत्सर्वज्ञत्वादिश्रुतिरिति शङ्कानिरासायात्र **गिरीशेति सम्बोधनम्।** गिरि वाचि विषये ईशो गिरीशः "हलदन्तात्सप्तम्याः संज्ञायामि"त्यलुक्। योग्यताविमर्शसापेक्षतया शब्दस्योपपत्त्यनुरोधेनार्थो नियमयितव्यः। न चोत्पत्तेः प्रागभावेऽपि सर्वस्य परमात्मा सर्वविदिति युक्तम्। अतो नामरूपादौ जायमाने तेनैवोपाधिना यः सर्वज्ञः सर्वविद्भवति तस्मादिति योजयितव्यमित्यभिप्रायः॥ ४६॥

**अथापि** स्वाद्यात्माधिष्ठेयमायैव जगदात्मना परिणमत इति मतम्। तर्हि "तदात्मानं स्वयमकुरुत," "सोऽकामयत बहुस्यां प्रजायेयेति, स इदं सृष्ट्वा, तदनु प्रविश्य, सच्च त्यच्चाभवत्" इत्यादिश्रुतिविरोधः। अत्र तद्ब्रह्माऽऽत्मानं स्वयमकुरुत विश्वात्मना, न तु कुलालकुविन्दादिरिव मृत्तन्त्वादिकं घटपटाद्यात्मनेत्त्युपादानान्तरव्यावृत्तिः। **तथा च सूत्रम्** – "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति जगतः प्रकृतिरुपादानं चात्मा, न निमित्तमात्रम्। "येनाश्रुतं श्रुतं भवती"त्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इत्यादिदृष्टान्तस्य चानुपरोधात् अन्यथा प्रकृतेरन्यत्वे निमित्तब्रह्मविज्ञानेऽपि तद्विज्ञानायोगात् तदुपरोधः स्यादित्यर्थः। "स्वयमकुरुते"ति कर्त्रन्तरव्यावृत्तिः। अत एव सूत्रे निमित्तसमुच्चयार्थश्चः। अन्यथा निमित्तान्यत्वे प्रकृतिब्रह्मविज्ञानेऽपि तद्विज्ञानायोगात्, प्रतिज्ञाद्युपरोध एव। अत्र स्वयमिति काक्वाऽवधारणमुपक्षिप्यते। तेनोपकरणान्तरं कुलालादेरिव दण्डचक्रादि नात्मान्यदस्तीति सूचयति। **तथा च सूत्रम्** – "उपसंहार दर्शनान्नेति चेन्न क्षीरवद्धि" इति। तेन विना कार्यजननाशक्तस्य तदुपसंहारापेक्षा। स्वत एव शक्तस्य तु न तदपेक्षेति सूत्रार्थः। "सोऽकामयत, बहु स्यां प्रजायेयेति" इत्यभिधानपूर्वं "सच्च त्यच्चाभवदि"ति जगद्भावं

दर्शयति। न चानुपादानमनुपादेयरूपं भवति। तस्मद्ब्रह्मण एव स्वतो जगत्परिणामित्वमाश्रयणीयमित्याशङ्कामुदाहृतश्रुतिहृदयावेदनेन परिहरती —

आत्मानमेतदकृत स्वयमेव विश्वं
सच्चाभवत्त्यदिति च श्रुतिराह शम्भो!।
त्वद्भाववेधमखिलासु विकल्पनासु
कृत्स्नप्रसक्त्यवयवित्वकृतान्तभीता ॥ ४७ ॥

अत्र छन्दोनुरोधादधीतिक्रमविपर्यासेनापेक्षितोपक्षेपेण च श्रुतिरनुक्रान्ता "**तदात्मानं स्वयमकुरुत**"ति। सापेक्षं भवत्यात्मनः सिद्धत्वेन, तस्यैव कार्यत्वानुपपत्तेः। असिद्धत्वे वा "स्वयमकुरुते"त्यनुपपत्तेः। **अतस्तदात्मानं** किमकुरुतेत्यपेक्षायामेतद्यथायथं प्रत्यक्षादिप्रमाणोपस्थितं **विश्वमित्युपक्षिप्यते**। अथवा, "असद्वा इदमग्र आसीदि"ति प्रक्रमात् तदात्मान'मिति तदावमर्शात् असदेव जगत्कारणमित्याशङ्का माऽभूदिति, तत्पदस्थाने **एतत्पदं** प्रक्षिप्तम्। अपरोक्षसन्निहितात्माभिन्नं ब्रह्मेत्यर्थः। आत्मानं विश्वमकुरुत, विश्वात्मनाऽकार्षीदित्यर्थः। **स्वयमिति** काकुलभ्य — **एवकारो**ऽत्र पठितः इतिः श्रुतिप्रत्यभिज्ञानार्थः। **चः** तदैक्षत बहु स्यां प्रजायेयेत्यादिश्रुत्यन्तरसमुच्चयार्थः। श्रुतिरित्येकवचनेन सर्वासामेव श्रुतीनां ब्रह्मोपादानत्वप्रतिपादनैककण्ठ्यं सूचयति। शं सुखं भुवनं सत्ता, भूः भावे क्विप्। शं च भूश्च **शम्भु समाहारद्वन्द्वः**। एकवद्भावः स नपुंसकम्। ह्रस्वोनपुंसके प्रादिपदिकस्य, **तस्य सम्बुद्धिः**। ह्रस्वस्य गुणः। अथ स्वमोर्नपुंसकाल्लुकि सति कथं सम्बुद्धिनिमित्तो ह्रस्वस्य गुणस्स्यात्? न च प्रत्ययलोपे प्रत्ययलक्षणमङ्गकार्यम्। न 'लमताङ्गस्ये'ति तन्निषेधादिति। यद्येवं 'इकोचि विभक्ता'वि'त्यत्र किमर्थमचीति विशेषणम्? नपुंसकात्सम्बुद्धिलुकि विभक्तिपरत्वाभावेनैव नुं न प्राप्नोति। तेन ज्ञायते न लुमताङ्गस्येति प्रत्ययलक्षणकार्यनिषेधो न नित्य इति। ततः प्रत्ययलक्षणो नुम्, इको नपुंसकान्मा प्रापदिति युक्तमचीति विशेषणम्। ततश्चोपपन्नः प्रत्ययलक्षणो ह्रस्वस्य गुणः। **हेशम्भो**, सुखसत्तासमाहारात्मक! समाहारस्समुदयः। पदव्युत्पत्त्यपेक्षया सत्तासुखयोः पृथग्भावः। एकात्मतया सम्भवनात्समाहारः। तेन सत्तानन्दैकरस्यं परमात्मनो याथात्म्यमावेदितं भवति। न, खिलमवशेषो यासु **तास्वखिलासु**। विकल्प्यते निर्विकल्प आत्मा आभिरित्यव्यक्तादयो विशेषान्ता **विकल्पनाः** तासु। **त्वद्भाववेधं** तव ईश्वरस्य भावो याथात्म्यम्। तेन वेधः ताद्रूप्यमेव। यथा रसादियोगेन लोहेषु हेमभाववेधः। तमाह। अत्र विकल्पनासु परमात्मवेधे लौकिकविज्ञानसंवाददर्शनाभिप्रायेण शम्भो इति निरुक्तार्थकं सम्बोधनम्। परमात्मा हि सत्तानन्दप्रकाशैकरसः। "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इत्यादिसामानाधि-

करण्यश्रुतेः। विश्वं च तद्रूपानुविद्धमेव विकल्प्यते 'अस्ति भाति प्रियमि'ति। अत्र यदस्तीति सा स्वारूपसत्ताया विशेषावस्था, विलयेप्यनपायिनी। यया लब्धात्मकास्सन्तः विकल्पाः देशकालादि-सम्बन्धलक्षणसत्तां प्रतिपत्तुमीशते। यत्तु भातीति तत्, स्वरूपज्ञानं जडत्वात्प्रमाणवृत्तेः स्वरूप-विषयवस्त्ववभासित्वानुपपत्तेः। यदुभयावभासिज्ञानं तदात्मकमेव विश्वम्। पृथक्त्वे तदवभासा-योगात्। अत्र नित्योपलब्ध्यादिप्रसङ्गस्तु समाहित एव अयं च स्वरूपज्ञानाभेदेन विषयावभासः "अङ्गारवह्निरि"त्येत्यत्र प्रसङ्गादुपपादितः। यत्पुनः प्रियमिति स आनन्दः। तस्यैव साक्षात्प्रियत्वात्। तदिदमुक्तं रहस्यवेदिभिः – "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्" ॥ इति। यत्पुनः "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय पुनः प्रसादाय च जायते ॥ तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्। मनसः परिणामोऽयं सुखदुःखादिलक्षणः" ॥ इत्यावेदितं भगवता पराशरेण। तदिदं स्वरूपसुखात्मकत्वे सत्येव जगतो नामरूपकृतोपकारापकाराभिमानमूलकसुखदुःखादिवृत्तिविषयं व्याख्येयम्। तदिदमुक्तम्-'मनसः परिणामोऽयमि'ति। तदेवं मायापरिणामेष्वेव विश्वविकल्पेषु परमात्मस्वरूपवेधाभिप्रायैव 'तदात्मानमि'त्यादिश्रुतिः। न तु परमात्मनो विश्वरूपपरिणामाभिप्रायेत्यर्थः। कुत एवम्? "आत्मकृतेः परिणामात्" इति हि सूत्रम्। विश्वात्मना परिणामेनात्मनः करणश्रवणात् प्रकृतिः परमात्मेत्यर्थः। इत्यत्राह कृत्स्नेति हेतुगर्भं विशेषणम् यदि निरवयवः परमात्मा परिणमेत, कार्त्स्न्येन परिणमेतेति कृत्स्नप्रसक्तिः। ततश्च विकारावर्ती स न स्यादिति नास्य जिज्ञासोपदिश्येत। विकारात्मना ज्ञातत्वात्। "एतावानस्य महिमा, अतो ज्यायाँश्च पूरुषः, पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि" इत्यादिश्च विरुध्येत। अथैकदेशेन परिणमेत, अवयवित्वं स्यात्। ततश्च "निष्कलं निष्क्रियं शान्तं", "दिव्यो ह्यमूर्तः पुरुषः" इत्यादिनिरवयवत्वशब्दकोपः। इत्याभ्यां कृत्स्नप्रसक्ति अवयवित्वाभ्यां कृतः, विमृश्य साधितः अन्तो निर्णयः परमात्मा न जगद्रूपपरिणामीति सिद्धान्त इत्यर्थः। ततो भीता सती श्रुतिराहेति सम्बन्धः। ब्रह्मणो जगत्परिणामित्वे कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति न्यायविरोध इत्यभिप्रायः। नन्वयं दोषस्समाहितः। श्रुतेस्तु शब्दमूलत्वादिति। नायं दोषः श्रुतेः निरवयवत्वात्कृत्स्नपरिणामयोः। न चात्रातिशङ्कनीयं शब्दमूलत्वाद्ब्रह्मणः। स एव शब्दो यदि परमात्मानं निरवयवं, अकृत्स्नपरिणामं च ब्रूयात् कस्तं प्रतिकूलयेत्? उदितन्यायस्य शब्दैक-समधिगमनीयपरमात्माश्रयतयोपजीव्यविरोधेनात्मलाभानुपपत्तेः। यथा चातुर्मास्येष्टौ प्रथमजो वत्सो दक्षिणेति श्रुतमन्वाहार्यस्थानीयं वत्समुपजीव्य प्रवृत्तः पाकचोदकस्तद्विरोधान्नात्मानं लभते, यथा वा विधिशब्दैकमूलं धर्ममुपजीव्य प्रवृत्तो ज्योतिष्टोमो न स्वर्गसाधनं क्रियात्वादित्यादिन्यायः तद्वदिति नैवम्। शब्दमूलेप्यर्थे शब्दमूलन्यायविरोधस्य समाधेयत्वात्। अन्यथा, यथाश्रुतविरुद्धार्थप्रति-पत्त्यविघाते, सर्वत्रैव मीमांसानारम्भप्रसङ्गात्। तथा च शब्दैकसमाधिगमनियोऽर्थः कथमप्युपपाद्यः,

न तु दुरुपपत्त्यपवाद्य इत्येतावद्विवक्षितं "श्रुतेस्तु शब्दमूलत्वात्" इति। न तु शब्दमूलो विरुद्धोप्यर्थः प्रतिपत्तव्य इति। तस्मात् "आत्मकृतेरि"त्यादिसूत्रमपि स्वारोपितमायापरिणाम-विकल्पेषु तदधिष्ठानात्मभाववेधाभिप्रायमेव। तावतैव ताटस्थ्येन निमित्तमात्रं ब्रह्मेति पक्षप्रतिक्षेपसिद्धेः न पुनरात्मन एव विश्वपरिणामे कर्तृत्वाभिप्रायम्। प्रयोजनाभावात्, उदितन्यायविरोधाच्च। तत्र स्वातन्त्र्यव्यपदेशगतिस्तु वक्ष्यते ॥ ४७ ॥

**अथापि** स्यात्सत्यं शब्दमूलेप्यर्थेऽविरोधायोपपत्तिरनुसर्तव्या, तथापि स्वभाव एवात्मनो जगदुपादानत्वं स्यात्। एवं सति क्षीरस्येव दधिपरिणामे तु कृत्स्नप्रवृत्त्यादिदोषो, भावशक्ति-वैचित्र्येण परिहर्तव्यः। न तु तदर्थं मायापादोपसर्पणपरिश्रमः परिचेतव्यः। यथा श्रुतिः "परास्य शक्तिः विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति। भगवान्पराशरोऽपि "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते"॥ इति प्रश्ने, "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता"॥ इति शक्तिविशेषेणैव, ब्रह्मणो जगद्धेतुतां दर्शयति। न हि भावशक्तयस्तुल्यरूपा भवन्ति। येन सत्वादिगुणवान् परिमितः कामादिमान् कर्मवश्यः कर्ता दृष्ट इति तद्विलक्षणत्वाद्ब्रह्मणः कर्तृत्वं न स्यात्। तत्र यथा जलादावदृष्टशक्तिरग्नेरुष्णता, तथा समस्तवस्तुविसजातीयस्य ब्रह्मणोऽपि सर्गाद्या भावशक्तयो भवन्तीत्यर्थः। दृश्यते चाप्रच्युतस्वभावस्यैवा-वस्थान्तरपरिणामः। यथा लूतायास्तन्तुपरिणामः तन्तूनां वा पटपरिणामः। तथा ब्रह्मणोऽपि विश्वपरिणामः स्यादित्याशङ्कां परिहरन्नाह —

प्रत्यूढविश्वविकृतिः प्रकृतिश्च मूल-
मस्याऽखिलस्य जगतस्त्वमधीयमानः।
स्वेनात्मना शिव! परोपधिना च मन्ये
स्थेयः परस्परविवादगतश्रुतीनाम् ॥ ४५ ॥

**प्रत्यूढा** प्रतिक्षिप्ता, **विश्वा** सर्वा, परिणामलक्षणा परिस्पन्दलक्षणा च **विकृतिः** जन्मादयो वा विकारा **यस्मात् स तथाभूतस्त्वं अधीयसे** "निष्कलं निष्क्रियं शान्तं", "अज आत्मा महान्ध्रुवः" "न जायते म्रियते वा विपश्चित्" इत्यादौ। तथा, **अस्य** यथायथं प्रत्यक्षाद्युपस्थापनीयस्य, **अखिलस्या**नवशेषस्य। इदं विशेषणं आन्त्यादेव कार्याद्ब्रह्मोपादानत्वविवक्षयोपात्तम्। **जगतः** चराचरात्मकस्य **मूलं**, आदिभूता। इदं तु विशेषणमान्तरालिकतत्तत्प्रकृत्त्युपसङ्ग्रहविघातार्थम्।

आकाशादिभावापन्नं हि ब्रह्म वाय्वाद्युपादानमिष्यते। अत एव "सर्वं खल्विदं ब्रह्म तज्जला"-निति साक्षाद्ब्रह्मजत्वं, तज्ज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न विरुध्यते। **प्रकृतिः** प्रक्रियत इति विकारपरिणामी चाधीयसे "तन्नामरूपाभ्यामेव व्याक्रियत", "सोऽकामयत बहु स्यां प्रजायेय" इति। "सच्च त्यच्चाभवदि"त्यादौ, एवमधीयमानस्त्वम्। अत्र **शिवेति** सम्बोधनं प्रकृतिस्वभावत्वं वारयितुम्। **परस्परं विवादं** विरुद्धवादं **गतानां श्रुतीनां** निर्विकारत्व-प्रकृतित्वविषयाणाम्। 'स्वेनात्मना' उपाध्युपात्तमपि स्वरूपमात्मैवेति **स्वेनेति** विशेषणम्। **परोपाधिना** मायोपाधिना च। **स्थेयः** विवादपदनिर्णेता इति मन्ये। श्रुतिद्वयाविरोधाय मायो-पाधिकमेवात्मनो जगदुपादानत्वमाश्रयणीयमित्यभिप्रायः।

**इदमत्राकूतम्** – यदि तावदात्मैव स्वशक्त्या परिणमेत बीजशुक्लादिरिव जन्मादिक्रियामा-पद्येत। विकारित्वादनित्यश्च प्रसज्येत। परिणमते नित्यं चेत्येतदशक्यम्। तथा च स्मृतिः "यस्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्"?॥ इति। "यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्" इति च। अथाप्रच्युत-स्वभावेनावस्थातुं विश्वात्मना परिणन्तुं च, शक्तिरन्यादृशीपरमात्मन इति चेत्, विरुद्धेयमदृष्टचरी कल्पना। विक्रियते च स्वतो न विक्रियते चेति दुर्घटमेतत्। ननु दर्शितमत्र लूताद्युदाहरणम्। तन्न। नह्यत्यन्तमेव तन्त्वादिपरिणामे लूतादेरविक्रिया। विकारे सत्येव स्थूलदृशा तादवस्थ्या-वगमात्। लूतालालाया एव तन्तुपरिणामित्वाच्च। तन्तूनामपि पटरूपपरिणामावस्थयैव स्वरूपा-प्रच्युतिः परिणामदृशां तदप्रतीतेः। तदपवाददृशामपि नात्यन्तमेव पूर्वरूपाप्रच्यवः। उत वियुक्तेषु तन्तुषु स्वरूपावस्थितेभ्यस्तन्तुभ्यः स्वरूपविकारस्य विश्वजनीनत्वात्। अथ तर्हि शक्तिविक्षेप-एवात्मनो विकारपरिणामः। एवं तर्हि, तदा किमवस्थः परमात्मा स्यात्? भोक्तृशक्तिविक्षेपेण जीवात्मावस्थत्वे, भोग्यशक्तिविक्षेपेण स तदवस्थोऽपीति। कृत्स्नस्य परमात्मनो विकारमात्रोपयुक्तत्वात् स एव कृत्स्नप्रसक्तिदोषः। अविकृतांशसत्वे च स एव निरवयवत्वशब्दकोपः। अथ शक्तेरेव परिणामः, आत्मात्वविकृत एव तर्हि नभस इव तदवियुतनभस्वद्विकारेषूपादानत्वम्। आत्मनः शक्तिपरिणामेषु प्रहीणमेवेति, नायं वैदिकसमयस्स्यात्। "परास्य शक्तिर्विविधैव श्रूयते" इत्यादिना च सैव मायाशक्तिरुच्यते। या श्रूयते "देवात्मशक्तिं स्वगुणैर्निगूढामि"ति। सा हि विविधा। आवरणविक्षेपलक्षणनानाप्रकारा। स्वाभाविकी चात्मसत्तानुबन्धेन नैसर्गिकारोपत्वात्। ज्ञानबलक्रिया च, ज्ञानमात्मस्वलक्षणम् "सत्यं ज्ञान"मित्यादिश्रुतेः। तद्बलेन तदवष्टम्भेन क्रिया जगत्परिणामलक्षणा यस्यास्सा तथा। न तु परमात्मनः क्रियाहेतुरिति। पुराणेऽपि लौकिके कर्तरि दृष्टधर्मवैकल्यमात्रेणात्मनः कर्तृत्वाभावशङ्का युक्ता। अप्रयोजका-भावेनाप्रयोज्याभावशङ्का हि सकलशास्त्रज्ञस्यापि मैत्रेयस्येति। दुर्भणं सामर्थ्यम्, उपादानाद्यभिज्ञान

च कर्तृत्वेऽप्रयोजकम्। तस्मिन् सति, अन्यत्र दृष्टमात्रगुणादिभावाभावयोरनपेक्ष्यत्वात्। किं तर्हि ? अनेकात्मकस्य गुणवैषम्यनिबन्धनः सलक्षणः सर्गपरिणामः स्यात्। ब्रह्म च निर्गुणं एकरसमप्रमेयं स्वयंप्रकाशम्। नास्य विलक्षणो जगत्परिणामो युक्तः। तथा शरीरादिमानशुद्धः क्रियाफलरागादि-मलोपेतः कर्ता भवति। तद्धि तस्य सामर्थ्यम्। तद्विपरीतस्य च ब्रह्मणः कथं कर्तृत्वमभ्युपगम्यत इति पर्यनुयोगे, तामेव मायाशक्तिमुपाधाय समाधीयते 'शक्तय' इत्यादिना। एकापि मायाशक्तिः शक्यभावानन्त्यात् तन्निरूप्यत्वोपाधिना वा नानाकार्यहेतुतत्तद्भावमयत्वेन विभज्यमानत्वो-पाधिना वा शक्तय इति वाक्ये बहुत्वेन निर्दिश्यते सर्वभावानां सम्बन्धिन्यः शक्तयः यता न चिन्तयितुं शक्यन्ते, न च विज्ञातुम्। यथा वटधानायाः शाखार्पणफलादिचित्ररूपमहावट-जननशक्तिः, यथा वा शुक्लकणिकाया नखदन्तकेशादिचित्रकायपरिणामशक्तिः। एवं सर्वभावानामपि शक्तयोऽचिन्त्यज्ञानगोचराः। अतस्ताः सर्गादिहेतुभूता भावशक्तयो ब्रह्मण एव भवन्ति। स्वात्मना तथा स्वभावत्वे सत्येव समस्तभावसत्ताप्रदत्वेन तादात्म्यात् भावानां शक्तयो ब्रह्मण इत्युच्यते। अत्रानुगुणो दृष्टान्तः पावकस्य यथोष्णतेति। यथा दीपगतोष्णता तदुपादानस्य पावकस्य भवति, यथा वा स्पर्शगता दाहशक्तिरग्नेर्भवति तादात्म्यात्तद्वदित्येष विवक्षितोऽर्थः। न त्वत्र यतः सर्वभावानामेवाचिन्त्यज्ञानगोचराः शक्तयः, अतः पावकस्य जलादिविसजातीयस्य यथोष्णता शक्तिर्विलक्षणा, तथा समस्तवस्तुविसजातीयस्य ब्रह्मणोऽपि सर्गाद्याः शक्तयः विलक्षणाः सन्तीति विवक्षितम्। "ता भावशक्तय" इति शक्तयः सर्वभावानामित्युक्तार्थस्यैव प्रत्यभिज्ञानात्। भावः सत्ता तदनुबन्धिन्यः स्वाभाविक्यः शक्तयो भावशक्तय इति तु नेयार्थत्वादनादरणीयम्। तस्मान्माया-देरान्त्याद्धेतोः स्वस्वशक्त्यैव विकारपरिणामे, तदधिष्ठानमेवात्मा न तु परिणामीति सिद्धम् ॥ ४८ ॥

अथैवं मायाया एव जगद्रूपपरिणामोपगमेनाऽऽत्मनो जगदुपादानत्वमुपचरता, तदेवेदं सेश्वरसाङ्ख्यं पर्यायोक्त्या परिगृहीतं स्यात्। नह्यात्मनो विश्वसत्ताप्रदत्वमेव तदुपादानत्वम्। कालस्यापि स्वसम्बन्धलक्षणसत्ताप्रदत्वेनातिप्रसङ्गात्। न हि कालसम्बन्धादृते कस्याऽपि कार्यस्य लाभो नाम। अतः पूर्वोदाहृतश्रुत्याद्यञ्जस्यायात्मन एव जगद्रूपपरिणाम आश्रयणीय इति, यदि कश्चिन्मन्येत, तं प्रति द्विगुणरज्जुन्यायेन मायाविशिष्टस्य चिदचिदात्मकजगद्रूपपरिणामपक्षमाश्रित्याह—

आत्मैकतानमगजेव विलम्भयन्ती
शक्त्या कयाऽपि शिव! संवननेन माया।
तं त्वामसङ्गमपि सञ्जयति स्वभावैः
आपाद्यसे तदिह विश्वविकल्पभूमिः ॥ ४९ ॥

**माया** पूर्वोक्ता । **कयापि** कथञ्चिदप्यनिर्वाच्यया **शक्त्या** आवरणलक्षणया । सा हि प्रकाशात्मनि न सम्भवति, अथ च नास्त्यात्मा न प्रकाशत इति स्फुटमवभासत इत्यनिर्वाच्या ! तया हेतुना । **संवननेन** वशीकरणेन, स्वगोचरतापादनेन । अत्र **शिवेति** सम्बोधनेन, मायया यत्तद्भावमापाद्यमानस्यापि स्वरूपाप्रच्युतिं सूचयति । त्वामात्मैकतानं, आत्मन्येकतानं अनन्यवृत्तिं, स्वस्मिन्नेव परिसमाप्तस्वभावम् । स्वमहिमप्रतिष्ठमेव सन्तं । **विलम्भयन्ती** विप्रलब्धं कुर्वतीत्यर्थः । अथवा, एकतानस्येदमैकतानं शीलमात्मना स्वेन माययैव ऐकतानमैकात्म्यमिति यावत् । जाल्मस्य हि वनितैकतानस्य तन्मयत्वं तदैकात्म्यमिव भवति । तदिदमात्मैकतानं विशेषेण सूक्ष्मदृशां परीक्षकाणामपि, दुर्लक्षभेदगन्धतया, यथा प्रधानमेवेत्येके, परमात्मैवेत्यपरे, तथा लम्भयन्ती प्रापयन्ती, तं स्वैकरसीभूतम् । **त्वां** स्वमहिमावसितस्वभावतया-ऽसङ्गमपि । **स्वभावैः** स्वविलासैः विश्वविकल्पलक्षणैः **सञ्जयति** आसक्तं करोति अत्रानुगुणदृष्टान्त-माह **अगजेवेति** । यथा पार्वती कयापि परदुरूहया शक्त्या तपोमय्या सहजया वा, वशीकृत्यात्मारामं-मपि शिवं स्वैकशरीरतामापादयन्ती, स्वभावनीरागमपि स्वलीलाविशेषैः सञ्जयति, तद्वदियं मायेति । अत्र मायाविशिष्टस्याप्यात्मनो विश्वविकारिता न स्वरूपेण, मृदादेरिव शक्तिविशिष्टस्य घटादि-विकारिता । किं तर्हि ? मायामयत्वेनैवेति । तत्प्राधान्यव्यपदेशः स्वभावैरिति । एतेन "मायां तु प्रकृतिं विद्यात्" इत्यादिवादा व्याख्याताः । किमुक्तं भवति ? परमात्मा मायावृतस्वभावोऽसङ्गाविक्रियोऽपि मायैकात्म्येन तद्विकारानुलोम्यं भजत इति इति । यस्मादेवं, **तस्मात्** **इह** सर्गादिसंसारचक्रे मायाविशिष्टस्वरूपे वा । **विश्वविकल्पस्य** समस्तभूतभौतिकस्य **भूमिरुपादानम्** । यथा भूमिरोषधीनां तथाऽऽपाद्यसे माययैवेति ।

**अयमत्राशयः** — माया तावदर्थवत्त्वोपपत्त्या परमात्मन्यारोपितेति व्यवस्थापितम् । तत्राप्रच्युतस्वभावावस्थितोऽपि परमात्मा प्रज्ञाततया विषयत्वेन तदारोप्यैकात्म्येनारोपितरूप एव सम्पद्यसे । सोऽयमिदमर्थरूप्ययोरिवान्योन्याध्यास इति गीयते । आरोप्यविषयभावस्य परस्परानु-बन्धिरूपत्वात् । सोऽयं मायाविशिष्ट आत्मा सर्वज्ञः सर्वशक्तिस्तदवस्थो जगदात्मनाऽऽत्मानमकुरुते-त्युपपद्यते । तदवस्थस्य परिणामितयोपादानत्वं, अत एवात्मनः कार्यभवनानुकूलनैसर्गिकविशेषणतया माया 'देवात्मशक्तिमि'ति शक्तिशब्देनाभिलप्यते । अथ कथं मामायामात्मनि चासम्भवन् जगद्विकार-परिणामो, विशिष्टेऽपि सम्भवेत् ? न हि स्नेहो भस्मनि फलीकरणे चासम्भवन्नन्योन्यविशिष्टे सम्भाव्यते । व्यस्ततन्तो रज्जुशक्तौ सत्यामेव, समस्तस्य रज्जूपादानत्वं सम्भावयाम इति । उच्यते । पूगनागदलचूर्णानां पृथगसती मदशक्तिस्समुदाये दृश्यते, हरिद्रापङ्कचूर्णयोः पृथगसम्भवन्नपि रक्तिमपरिणामो विशिष्टे दृश्यते । एवमोषधीषु पृथगदृष्टशक्तिमूलाः परस्परयोगे कार्यभेदा

दृश्यन्ते। एवमिहापीति सन्तोष्टव्यम्। अत्र मायाविशिष्टस्य तदवस्थस्य कृत्स्नप्रसक्तावपि न दोषः। स्वरूपेण जिज्ञासोपदेशाविरोधात्। मायारोपविषयस्यैव तादात्म्येन स्वारोपेऽपि विषयत्वात्। मायाविशिष्टमर्यादया जगत्परिणामित्वेऽपि, तदुपहितमर्यादया तदभिज्ञस्य नियन्तृत्वोपपत्तिरिति।

**अत्र कश्चिद्ब्रूते** – मायाविशिष्टत्वं ब्रह्मणः स्वभावो नारोपः। तत्र प्रलीननामरूपविभागसूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्। तदेव प्रविभक्तनामरूपविभागस्थूलचिदचिद्वस्तुशरीरं कार्यमिति। तत्र वदामः – कारणं हि प्रागवस्थाहानेनावस्थान्तरपरिणामि कार्यमिति गीयते। तत्र विशेष्यब्रह्मणोऽपि कार्यरूपपरिणामित्वे कृत्स्नप्रसक्तिर्दुष्परिहरा। तच्छरीरभूतमायाया एव तद्रूपपरिणामित्वे निरवयवत्वशब्दकोपापरिहारः। ब्रह्मणस्तद्रूपापरिणामित्वे च परिणममानमायानुग्राहृतैव केवलमिति, तस्य जगदुपादानत्वमौपचारिकमेव स्यात्। अथ स्वांशतया मायाया दौवारिकमस्य जगदुपादानत्वमनौपचारिकम्। तर्हि ब्रह्मणः सकलहेयसम्बन्धोऽपि तथैव स्यादिति स्वसिद्धान्तविरोध इति। एतेनादित्यस्य रश्मिविक्षेप इव ब्रह्मणः शक्तिविक्षेप एव परिणाम इति, न कृत्स्नप्रसक्त्यादिदोष इति कस्यचिदुत्प्रेक्षा निरस्ता। ब्रह्मणः शक्तिर्हि मायैव। "देवात्मशक्तिं स्वगुणैर्निगूढामि"ति श्रुतेः। तस्या विक्षेपश्च विकारपरिणामापादना। ततश्च शक्तिः परिणामिनी। ब्रह्म तु केवलं तन्नियामकमिति, प्रच्यावितमुपादानताया इति। तस्मादारोपितमायाविशिष्टमर्यादं ब्रह्म तदवस्थं कृत्स्नपरिणाम्येवेतियुक्तमुत्पश्यामः। अत्रापि पक्षे जिज्ञास्यनिर्विशेषात्मनो जगत्कारणत्वमारोपितत्वादुपलक्षणमेवेति ॥ ४९ ॥

**स्यादेतत्**। यद्येवं मायाविशिष्टमर्याद आत्मा विश्वोपादानमुपगम्येत "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः", "आत्मा वा इदमेक एवाग्र आसीत्, स इमाल्लोँकानसृजत", इत्यादावात्मशब्दस्य विशिष्टविषयता स्यात्। सत्यम्। विशिष्टविषय एव विशिष्टैकस्वभावत्वादात्मन इति चेन्न, "आदित्यवर्णं तमसः परस्तात्", "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि"-"तस्मै मृदितकषायाय तमसः पारं दर्शयति", "अक्षरात्परतः परः" इत्यादौ तमोविद्याक्षरादिशब्दितमायोत्तीर्णस्वरूपानुवर्णनेन तन्मात्रविषयत्वोपपत्तेः। स एव च कथञ्चित्सर्वज्ञः सर्वशक्तिर्जगद्धेतुरिति युक्तम्। "मायां तु प्रकृतिं विद्यात्", "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः, सृजमानां सरूपा" इत्यादिमायोपादानत्ववादस्तु परमात्मशक्तितया तस्यास्तदुपादानत्वौपयिकत्वादौपचारिकाव्याख्येयाः। न चात्मन एव जगदुपादानत्ववादा औपचारिकाः स्युः, तस्यैव जगद्धेतुतया शास्त्रप्रतिपाद्यत्वात्। तस्मादात्मैव स्वशक्त्या, ओषधिपरिणामिनीव पृथिवी विश्वपरिणामीति

शास्त्रप्रामाण्यादनाशङ्कमुपगन्तव्यमित्याशङ्क्य, आत्मशब्दस्यानुपसृष्टस्य केवलात्मशक्तावपि, जगद्धेतुत्ववदेषु विशिष्टविषयतैव। आत्मा सुखीत्यादाविव बलादुपगन्तव्येत्यभिप्रेत्याह —

सर्वज्ञता तव सदाशिव! सर्वशक्तिः
प्राकाम्यमित्यविमिताखिलदोषगन्धाः।
गम्योपधागुणविकल्पविधा भवन्तं
हेतूभवन्तममनागुपबृंहयन्ति ॥ ५० ॥

**सर्वज्ञता** सर्वात्मना सर्वविषयं ज्ञानं, **सर्वशक्तिः** सर्वभवनानुकूला शक्तिः सहजं सामर्थ्यं, मणिमन्त्रादिभिर्यत्प्रतिबन्धादग्न्यादेर्दाहफलोपधानाभावः, तादृशी परमात्मनोऽपि विश्वभवनशक्तिः। **प्राकाम्यं,** प्रकृष्टोऽप्रतिहतः कामो यस्य स तथा। प्रकामस्य भावः प्राकाम्यम्। "गुणवचनब्राह्मणादिभ्यः कर्मणि चे"ति गुणवचनात् प्रकामशब्दात् भावे ष्यञ् प्रत्ययः। इच्छाविघात इति व्याचक्षते। **इतिशब्दः** प्रभृत्यर्थे। सत्यसङ्कल्पापहतपाप्मत्वादिसङ्ग्रहार्थः। इत्येवमादयो गुणविकल्पविधा इत्यन्वयः। **तेचाविमिताखिलदोषगन्धाः,** विचिता मिता ज्ञाता विमिताः। "प्रादयो गताद्यर्थे प्रथमये"ति समासः। न तथाऽविमिताः, पुरोभागिभिरपि विचित्याप्यविदिता इत्यर्थः। अखिलानामशेषाणां स्वान्तर्गतानां सहभाविनां च दोषाणाम्। ज्ञाने तावत्संशयत्वादयो दोषाः, शक्तौ कुण्ठतादयः, कामसङ्कल्पादौ मोघत्वादयः पाप्मादयश्च, तत्सहभासिनो दोषाः तेषांगन्धा लेशा यासु तास्तथा। यथा श्रुतिः – "यः सर्वज्ञः सर्ववित्" "परास्य शक्तिः विविधैव श्रूयते", "य आत्मापहतपाप्मे"ति प्रकृत्य, "सत्यकामः सत्यसङ्कल्पः" इत्याद्या। ते च **गम्योपधाः,** गम्या ऊहनीया **उपधा** छद्म **यासां तास्तथा।** स्वाभाविक्य इव भान्ति। वस्तुगत्या पुनरौपाधिक्य इत्यर्थः। अथवा, उपधत्त इत्युपधाः। दधातेर्विच् प्रत्ययः। गम्यस्तैरेव ज्ञानादिभिराक्षेप्य उपधा मायालक्षण आत्मोपाधिर्यासां स्वरूपलाभार्थतया सम्बन्धिताः। तथाहि – आत्मा तावज्ज्ञानात्मकः श्रूयते। "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्म इत्यादौ। ततश्च यत् ज्ञानं तन्न ज्ञानादिमत् यथा विषयज्ञानमिति व्याप्त्यनुगृहीतया, "अयमात्माऽनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एवे"ति ज्ञानैकरसत्वावधारणश्रुत्या "नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनं" इत्याद्यिज्ञातृत्वादिनिषेधश्रुत्या च, सर्वज्ञत्वादयो न स्वाभाविका उपगन्तुं शक्यन्ते, किन्त्वौपाधिका एवेति। इममेवार्थमत्र सदाशिवेति सम्बोधनेन सूचयति। तत्र **गुणविकल्पविधाः,** गुणाः प्रशंसाप्रयोजका धर्माः, यस्य येन प्रशंसा स हि तस्य गुणो नाम। यथा पशव्योयं देशो,

राजन्वानयं, नदीमातृकोऽयं निराबाधोऽयमिति। स्वभावविपरीताः कल्प्यन्त इति विकल्पाः। गुणा इति विकल्पाः गुणानां वा विकल्पाः गुणविकल्पा। अयमिति विशेषाः, तेषां विधाः प्रभेदा विविधविशेषा गुणा इत्यर्थः अत्र विधाग्रहणं, गुणानां भावाभावात्मकताभेदसूचनाय। दोषाभावस्याप्यत्र गुणत्वात्। **भवन्तं** परमात्मानं, **हेतूभवन्तं** सन्तं, न स्वरूपमेवेत्यर्थः। स्वभावादहेतुरेव मायैकात्मतया हेतुः सम्पद्यमानो भवतीति च्वेः प्रयोगः। **अमनाक्** अनल्पं बहुलम्। **उपबृंहयन्ति**, उप सामीप्येन हेतुशरीरतया बृंहयन्ति वर्धयन्ति, कार्याभावायोपचितं कुर्वन्ति। यथा बीजमम्बुसम्बन्धोपधिकविकारविशेषा अङ्कुरभावायोच्छूनयन्ति, तद्वत्। तथा च श्रुतिः – "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" इति। "यः सर्वज्ञः सर्ववित्" इत्याद्या चोदाहृता। यद्यपि ज्ञानकामादिर्निमित्तत्वे शक्तिरुपादानत्वे चापेक्ष्यते। यथा पटादौ कुविन्दतन्त्वादेः। न पाप्मादिदोषाभावोऽपि। कुविन्दादौ व्यभिचारात्। तथापि पाप्मादिदोषेण ज्ञानशक्त्याद्यपहतिप्रसङ्गेन व्यवस्थितदेशकालविविधविचित्रसुखदुःखादिभागी चराचरवर्गान्वितविश्वसर्गादिहेतुत्वमसम्भवीति, तद्धेतुत्वे दोषाभावोऽप्यपेक्ष्यत एवेत्यभिप्रायः। एतदभिप्रायगर्भमेवामनागिति विशेषणम्।

**एतदुक्तं भवति** — मायाविशिष्टस्यैव सर्वज्ञत्वादिगुणसमवाय इति तावत्सिद्धम्। ततश्च सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामेकार्थत्वे सत्युपसंहारोऽर्थभेदादिति गुणोपसंहारन्यायेनात्मन आकाश इत्यादौ सर्वज्ञत्वाद्युपसंहारे विशिष्टविषय एव तत्रात्मशब्द इति नाश्रुतिमात्रेण केवलात्मन एव विकारित्वादिदोषावहं कृत्स्नप्रसक्त्यादिना दुरुपपादं च विश्वपरिणामित्वमाश्रयणीयम्। विशिष्टविषयेऽपि शास्त्रप्रामाण्योपपत्तेः इति॥ ५०॥

**स्यादेतत्**। या तावद्व्याप्तिरुक्ता "यज्ज्ञानं तन्न ज्ञानादिमत्" इति सा, "यस्सर्वज्ञः", "ब्रह्मणा विपश्चिते"त्यादिश्रुत्या बाध्या। यथा "यज्ज्ञानं तन्न निराश्रयविषयं विषयज्ञानवदेव" इति व्याप्तिः "सत्यं ज्ञानमि"त्यादिश्रुत्या। या पुनरवधारणाश्रुतिः सा ज्ञानस्वरूपान्तर्गततद्विरोधिधर्मसङ्करव्यावृत्तिपरा न तु धर्मान्तरमात्रव्यावृत्तिपरा। "स यथा सैन्धवघनो नान्तरो न बाह्यः कृत्स्नो रसघन एव" इति दृष्टान्तविरोधात्। न खलु सैन्धवघने द्रव्यत्वशुक्लत्वादयोऽपि वारयितुं पार्यन्ते। तत्र प्रत्यक्षानुमतं द्रव्यत्वादिति चेदत्र शास्त्रानुमतं सर्वज्ञत्वादिति तुल्यम्। नान्तःप्रज्ञमित्यादिनिषेधश्रुतिश्चात्मनः स्वप्नजागराद्यवस्थानिषेधपरेत्यविप्रतिपन्नम्। "जागरितस्थानो बहिः प्रज्ञः स्वप्नस्थानो अन्तःप्रज्ञः" इत्यादिप्रक्रमात्। न तु नित्यसर्वज्ञत्वादिनिषेध – इत्यतो बाधकाभावादनौपाधिका एवात्मनः सर्वज्ञत्वादयः स्युरित्याशङ्क्य, तेषां स्वाभाविकत्वे बाधकमुपमर्दयन् परिहरति —

स्वेनैव सर्वविदये यदि सर्वशक्ति-
रापद्यसे किमशिवं शिव! जीवभावम् ।
सम्राट् स्वयं क इव काङ्क्षति सर्ववेदी
कारानिवेशितसुदुःखितचोरभावम् ॥ ४१ ॥

परमात्मैव जीवभावमापद्यते, न तत्वान्तरं ओवइत्यग्रे वक्ष्यते । तत्रैवं सति स्वभावसर्वज्ञादित्वे परमात्मनो, न तावदमतिपूर्वकं जीवभावापत्तिरुपपद्यत इत्याह **स्वेनैवेति**। अत्र सर्वज्ञात्वादेः स्वाभाविकत्वाघटनामुद्घाटयितुं "अये शिवे"ति सम्बोधनम् । त्वं स्वेनैव स्वभावेनैव, न तु परोपाधिना । यदि **सर्ववित्** सर्वज्ञः **सर्वशक्तिश्च,** तर्हि **अशिवं** शोकमोहादिबहुदोषैरमङ्गलम् । **जीवभावं** जीवत्वं **किमापद्यसे** आगच्छसि प्राप्नोषि? सर्वज्ञस्यामतिपूर्वकं तत्प्राप्तिरनुपपन्नैव । कथञ्चित्प्राप्तावपि, सर्वशक्तेः सद्य एव परिहारोपपत्तेः। तदनुवृत्तिरनुपपन्नतरैवेत्यभिप्रायः। मतिपूर्वकं तु जीवभावापत्तिः स्वभावसर्वज्ञस्यायुक्तेति दृष्टान्तेनाह **सम्राडिति सर्ववेदी,** आत्मनो हिताहितादि सर्वं वेदितुं शीलमस्यस्तीति सर्ववेदी। **सम्राडिति** सर्वशक्त्युपक्षेपः। "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इति हि नामानुशासनम् । **क इवेति,** इवकारो वाक्यालङ्कारे । **कारा,** दण्ड्यनिरोधावसथः ! तत्र **निवेशितः** सुदुःखितः **यश्चोरः, तद्भावं स्वयं काङ्क्षति,** न कश्चिन्मन्दोऽपि इत्यर्थः। एवं परमात्माऽपि बहुदोषाकारशरीरसङ्कटनिवेशितसुदुःखितजीवभावमभिकाङ्क्षितुं नार्हतीत्याभिप्रायः। **अत्र** निवेशितेति णिच् **प्रयोगेण,** शरीरेन्द्रियादियोगादौ परमेश्वरायत्तत्वमनुमन्यते । स्वरूपेण तु परमात्मैव, जीवेशजगद्विभागमापद्यते । विश्वपरिणामेन च मायाविशिष्टमर्याद एव परमात्मा सर्वज्ञः सर्वशक्तिश्च सम्पद्यत – इति, जडजीवात्मकप्रपञ्चस्य जन्मस्थितिप्रवृत्यादिषु तदधीनत्वानतिक्रम इति, युक्तम् **ननु** मायाविशिष्टस्य विश्वहेतोरेव जीवभावोऽनुज्ञायते । **यथा वार्तिके** "तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् । परः कारणतामेति भावनाज्ञानकर्मभिः" ॥ इति । **उच्यते** । नात्र मायाविशिष्टस्य क्षेत्रक्षेत्रज्ञकारणत्वविवक्षाऽवगन्तुं शक्यते । कृतहानादिप्रसङ्गेन जीवात्मनः स्वरूपेण कार्यत्वानुपपत्तेः । किन्त्वनादिनैवाविद्यामायारोपेण जीवादिभावनैवारोप्यमाणः परमात्मैवानभिभूतचिद्रूपारोपितजीवविभागस्वरूपसत्ताप्रदत्वेन चित्प्रधानस्तत्कारणमित्युपचर्यते । अन्यत्र तु विशिष्टपरिणामेऽपि जाड्याधिक्यान्मायैव प्रधानम् । तदानुलोम्येनानुगतिमात्रमात्मन इति तमःप्रधानः तत्कारणमियुच्यते । इति । कथं तर्हि 'अनेन जीवेनात्मनाऽनुप्रविश्ये'ति कारणात्मनो जीवभाववचनं न

कथञ्चित्कारणारोपाधिष्ठानस्वरूपापेक्षयैवात्मनेतिवचनं व्याचक्ष्महे । मतिपूर्वममतिपूर्वं वा सर्वज्ञसर्वशक्तेर्जीवभावानुपपत्तेरुक्तत्वात् । तस्मादात्मनोऽनौपाधिकसर्वज्ञादित्वे जीवभावबाधेनानुगृहीता "यज्ज्ञानं तन्न ज्ञानादिमत्" इति व्याप्तिरबाधनीया, सर्वज्ञत्वादिश्रुतेरौपाधिकत्वेऽपि सावकाशत्वात् । स्वरूपज्ञानमेव विषयानुषङ्गेण विषयज्ञानं सत् परोपाधिनैव साश्रयविषयमिव भवति । अन्यथा विषयज्ञानस्यात्मान्यत्वे विषयभानमात्मनो न स्यादित्युक्तम् । अतः सत्यं ज्ञानमित्यादिश्रुत्या "यज्ज्ञानं तन्न निराश्रयविषयं" इति व्याप्तिः बाध्यैवेति नासौ दृष्टान्तः । ज्ञानैकरसत्वावधरणोदाहरणे च, स यथा सैन्धवघनोऽन्तर्बहिरिति विभागमनपेक्ष्य "कृत्स्नो रसघन एवे"ति यथा लोकसिद्धं तदैकरस्यमाद्रियते न वास्तवम् । न च लौकिकास्तत्र द्रव्यत्वशुक्लत्वादिधर्मभेदं विजानन्ति शुक्लोऽयमिति निरूढाभेदाभिमानात् । यथा लोकसिद्धनिदर्शनेन च वास्तवं ज्ञानैकरस्यमात्मनो धर्ममात्रभेदापवारणेनावधार्यत इति युक्तम् । नान्तःप्रज्ञमित्यादिनिषेधश्रुतिर्यद्यपि जागराद्यवस्थानिषेधपरा तथापि शब्दसामर्थ्यात् ज्ञानाज्ञानधर्मनिषेधोऽपि सिद्ध्यन्न निवार्यते । अत एवादृश्यमव्यवहार्यमिति सकलधर्मनिषेधेन "एकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इत्युपसंह्रियते । तस्मादौपाधिका एव परमात्मनः सर्वज्ञत्वादय इति, यः सर्वज्ञः इत्यादिहेतुवादानुरोधादन्यत्र केवलात्मशब्दोपादानेऽपि मायोपधिविशिष्ट एव प्रतिपत्तव्य इति ॥ ५१ ॥

एवं तावदात्माधिष्ठेयमायैव विश्वरूपविकारिणि "तत्सत्तानुप्रदानेन त्वात्मोपादानतावचः । आत्मा मायाविशिष्टो वा सार्वज्ञ्यादिगुणान्वितः ॥ विश्वरूपविकारीति पक्षद्वयमुदीरितम्" ॥

**अथापि स्यात्** । अस्तु मायोपाधिनिबन्धनत्वादात्मनो जगदुपादानत्वमुपलक्षणम् । तन्निमित्तत्वं तु कार्यानुकूलज्ञानेच्छादिमत्वलक्षणं कर्तृत्वं स्वलक्षणं स्यात् । तच्च श्रूयते — "स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत, तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत, सोऽकामयत बहु स्यां प्रजायेयेति, स तपः तप्त्वा, इदं सर्वमसृजत" इत्यादौ, इत्याशङ्क्य मायाविशिष्टात्मोपादानत्वपक्षेण, तस्यापि मायोपाधिनिबन्धनत्वमुपपादयन् परिहरति —

काहङ्कृतिस्तव किमीक्षणमीश ! कश्च
कामो निरस्तनिखिलोपधिविक्रियस्य ।
सर्गादिसङ्करममुष्य विशङ्कमानाः
स्वाभाविकं तदुपगन्तुममी बिभीमः ॥ ५२ ॥

आत्मनः कामेक्षणादयः स्वाभाविकाश्चेत्, किं नित्या अनित्या वा ? न तावन्नित्याः, आत्मनः कामादयः सम्भवन्तीत्याह — **काहङ्कृतिरित्यादिना** । अहमभिमानेक्षणकामादयो-ऽन्तःकरणविशिष्टस्यैवात्मनो दृश्यन्ते । ईषदुद्रिक्तसत्वगुणमायावृत्तिभेदो ऽन्तःकरणम् । यन्महत्तत्त्वमिति सांख्यैराख्यायते । तत्खलु मनोऽहङ्कारबुद्धिवृत्तिकं क्वचित् "कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इत्यादौ मनश्शब्देनाभिधीयते । क्वचिच्च "शोकहर्षभयक्रोधलोभमोहस्पृहादयः । अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः ॥" इत्यादावहङ्कारशब्देन निगद्यते । क्वचित् "स धीस्स्वप्नो भूत्वेमं लोकमतिक्रामति", "विज्ञानं यज्ञं तनुते" इत्यादौ बुद्धिपर्यायधीविज्ञानशब्दाभ्यामभिलप्यते । एवं सति निरस्ताः "साक्षी चेता केवलो निर्गुणश्च", "निष्कलं निष्क्रियं शान्तं", "अज आत्मा महान्ध्रुवः" इत्यादिना निषिद्धाः, निखिला अहङ्कारवदान्तरा देहेन्द्रियादिवद्बाह्याश्चोपधय ईक्षणकामादिधर्मोपसञ्जनहेतवः, जन्मादयोविक्रियाश्च, यस्य तस्य तत्र परमात्मनः । **का ऽहंकृतिः** कोऽहम्मानः । **किमीक्षणं** कादाचित्ककार्यालोचनात्मकम् । **कश्च कामः** सिसृक्षालक्षणः । **चकारेण** कामहेतुः सङ्कल्पः समुच्चीयते । इदमित्थं करणीयमिति सङ्कल्पः च । क इति सर्वत्राऽऽक्षेपः । न किञ्चिदपीत्यर्थः । अनित्याश्च स्वाभाविकाश्चात्मनः कामेक्षणादय इति न शक्यं वदितुम् । विकारित्वे ऽनित्यत्वादिप्रसङ्गादित्यभिप्रायः । **अत्र शेति** सम्बोधनेनात्मनो जगत्कर्तृत्वापह्नवे शास्त्राप्रामाण्यप्रसङ्ग इति शङ्कां परिहरति । न तदत्यन्तमेवापह्नुमहे किन्तु स्वाभाविकमित्यभिप्रायः । अथ स्वाभाविका नित्याश्च कामादयः परमात्मनस्स्युः, न विकारित्वादिदोषा इत्यत आह सर्गादीति । नित्यत्वे तदेवेक्षणं कार्यस्य प्रभवे प्रलये च, स एव कामः सिसृक्षा सञ्जिहीर्षा च इत्यमुष्य जगतः सर्गकाले संहारश्च संहारकाले सर्गश्चेति सर्गादिसङ्करः प्रसज्येत । तमिमं **सर्गादिसङ्करं** विशेषेण **शङ्कमानाः** । शङ्काया दुष्परिहरत्वं **विशब्देन** सूचयति । न खलु तावत्सर्गादिनैव सिसृक्षादिव्यवस्था । अन्योन्याश्रयात् । न च प्राणिकर्माशयोद्बोधेन कादाचित्कतदुद्बोधस्य, ईश्वरसिसृक्षाद्यधीनत्वस्यावश्यवाच्यत्वेनान्योन्याश्रयापरिहारात् । न च कालेन तस्य स्वतो विशेषाभावे सर्गादिना सिसृक्षादिना वाऽवच्छेदो वाच्यः । तत्र यदि सिसृक्षादिनैवावच्छेदः, सिसृक्षाकाले सिसृक्षेति दुर्व्यवस्थमेतत् । अथ सर्गादिनाऽवच्छेदः, सिसृक्षया सर्गः, सर्गेण कालभेदः, कालभेदे सिसृक्षेति चक्रकापत्त्या न व्यवस्थासिद्धिरित्यभिप्रायः । **अमी** वयं प्रमाणन्यायशरणाः । तत् कामेक्षणादिकम् । यद्यपि पृथगेवाहङ्कृत्यादयः प्रकृताः, तथापि "नपुंसकमनपुंसके नैकवच्चान्यतरस्याम्" इति तदिति व्यपदेशः । **स्वाभाविकं**, आत्मसत्तामात्रानुबन्धि निरुपाधिकमुपगन्तुं **बिभीमः** । हैतुकास्तु प्रमाणन्यायविरोधादबिभ्यतः काममुपगच्छन्तु । न तेऽनुवर्तनीयाः प्रामाणिकैरित्यभिप्रायः । अथ मायोपाधिकत्वेऽपि कथं सर्गादिव्यवस्थाऽऽस्थेया ? । विशिष्टस्यात्मनो

विकारिणः कामेक्षणादिकादाचित्कत्वादिति चेत्, तत्र तदुपपद्यते। यदा सर्गगोचरमीक्षणं सङ्कल्पः कामो वा तदा सर्गः। यदा संहारगोचरमीक्षणादि तदा संहार इति। इयं पुनरव्यवस्था प्राप्नोति यदा सर्गायेक्षणादि, तदैव संहाराय किं न स्यादिति ततः स एव सर्गादिसङ्करः प्राप्तः। न च सर्गादिकालव्यवस्थया तदीक्षणादिव्यवस्था युक्ता। सर्गादिव्यवस्थासिद्धेः प्राक् तत्कालव्यवस्थाया एवासिद्धेरिति। उच्यते। अनादिस्तावदयं सर्गादेरैश्वरेक्षणादेश्च कार्यकारणभावः। तत्तदुपाधिको यथासिद्ध एव कालसंख्यानियमोऽपि तथैवेश्वरस्यावगतः। इयति काले सर्ग इयति काले संहार इति। तथैव च वासनयानुगत ईश्वर इयति काले संहरिष्यामीति सर्गकाल एव सङ्कल्पयति। ततस्तत्काले संहारप्रत्युपस्थितौ सञ्जिहीर्षापावर्तते। सत्यसङ्कल्पत्वात्। ततः संहरति, संहारकाले च पुनरियति काले स्रक्ष्यामीति सङ्कल्पयति। ततस्तत्काले सर्गप्रत्युपस्थितौ सिसृक्षोपावर्तते। ततः सृजति। यथाऽद्यत्वे सुषुप्सुः इयति काले प्रतिबुध्याध्येष्य इति सङ्कल्पयंस्तत्काले तथैव प्रतिबुध्याऽधीते तद्वदीश्वरोपीति। तस्मान्मायोपाधि-निबन्धनमेव परमात्मनोऽहङ्कारकामेक्षणादीति युक्तमुत्पश्यामः अत्र यद्यपि मायापरिणामाहङ्कारोपाधिक एवाहमाभिमानः मनोधर्मश्च कामादयः आम्नायन्ते, तथापि कार्ये दृष्टा शक्तिः कारणेऽपि, यथा प्रदीपादौ दाहशक्तिः। तत्कारणे दहनेपीत्यतोऽहमभिमानादिशक्तिरन्तःकरणोपादाने मायायामपि स्यादिति तदुपाधिकोऽपीश्वरस्याहंकारेक्षणकामादिरविरुद्धः। तस्मादात्मनोऽपि निमित्तत्वमपि मायोपाधि-निबन्धनत्वादुपलक्षणमेवेति ॥ ५२ ॥

एवं मायाविशिष्टस्यात्मनो विश्वपरिणामितया तदुपादानत्वे, तत्रसम्भवदहङ्कृतीक्षण-कामादिमत्वं कार्यानुकूलमुपेत्य निमित्तत्वमौपाधिकमुपपादितम्। तत्रेयमाशङ्का जायते। मायारोपेण तद्विशिष्ट आत्मा विश्वपरिणामी यदि परमात्मनोऽन्यः, न तस्य जगदुपादानत्वमिति वरं माययैवोपादानमात्मा पुनरुदासीन एवेति। किं विशिष्टोपादानत्ववादेन ? अनन्यत्वे माया च परमात्मा चेति विशिष्टस्य विश्वपरिणामित्वे परमात्मनोऽपि विकाराद्यापत्तिः। अथ मायांशेन विकारपरिणामः तदारोपाधिष्ठानतया परमात्मन्यालिप्यते। आरोपिताहिभीषण-त्वादिकमपि तदधिष्ठानरज्जावित्युच्येत। हन्त तर्हि परिणममानमायाधिष्ठानत्वमेवात्मनो विश्वोपादान-त्वमुक्तं स्यात् अयमेव तु विश्वसत्ताप्रदत्वे कालादात्मनो विशेषः। यदारोप्यमायापरिणामस्य स्वात्मैव तदधिष्ठानं, आत्मा मायाधिष्ठानसम्बन्धिमात्रं तु काल इति, तस्य स्वसम्बन्धलक्षणसत्ता-प्रदत्वेनोपादानत्वप्रसङ्गायोगात्। तथा चाहङ्कारेक्षणकामादिवृत्तिभेदासम्भवे कथं कार्यानुकूलज्ञानेच्छादि-मत्वलक्षणं जगन्निमित्तत्वमित्याशंक्य, अनादिप्रवृत्तवासनावशेन स्वभावादेव नियतकालसर्गादिपरिणाम-प्रवृत्तमायां प्रति साक्षित्वमेव तदधिष्ठानमात्मनः कार्यानुकूलमीक्षणं कामः सङ्कल्पश्चेत्युपपादनीय-मित्यभिप्रेत्य परिहरति —

अव्याकृतप्रकृतदर्शनतेश ! या ते
कामेक्षणादिगदिता निगमेषु सैव ।
जायेय बह्वहमकामयतैक्षतेति
तुल्यक्रमं तदुभयं हि समामनन्ति ॥ ५३ ॥

हे ईश, ते तव स्वतः स्वात्मावसितप्रकाशस्वभावस्य । या **अव्याकृतप्रकृतदर्शनता,** सर्गपरिणामात्प्राक् नामरूपाभ्यां न व्याकृतं नाविर्भूतमव्याकृतमव्यक्तमक्षरम् । प्रकृतिर्मायेत्यनर्थान्तरम् । स्वारोपितततदेकात्मतया तु ब्रह्माव्याकृतमुच्यते । "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादौ अव्याकृतमिति प्रकृतं प्रस्तुतम् । सर्गलक्षणविसदृशपरिणामाय प्रतिसर्गलक्षणसदृशपरिणामाय वा प्रारब्धविक्रियं साक्षादात्मसन्निहितं वा । तस्य दर्शनता तद्विषयज्ञानता, तत्साक्षितेति यावत् । प्रकाशस्वभावस्य ह्यात्मनः स्वतः स्वावसितस्वभावस्यापि सौरादिप्रकाशस्येव सन्निहितविषयप्रकाशता तदुपाधिकैव भवति । सैव दृश्यभूता व्याकृतापादितभेदतया परमात्मधर्म – इव भवन्ती, **निगमेषु** अभ्युदयनिश्रेयससाधनस्य नियमेन गमकेषु वेदेषु । "स ईक्षत लोकान्नु सृजा इति, तदैक्षत बहुस्यां प्रजायेयेति, स ईक्षाञ्चक्रे सोऽकामयत बहु स्यां प्रजायेये"त्यादिषु **कामेक्षणादित्वेन गदिता,** काम ईक्षणं सङ्कल्प इत्यादिरूपेण गदिता । न तु लौकिककर्तुरिव पृथग्वृत्तिभेदा – इत्यर्थः । **अथ** शब्दभेदेऽर्थभेदोऽवगम्यते । यजति, ददाति, जुहोतीत्यादौ । तथा च **पारमर्षं सूत्रं** "शब्दान्तरे कर्मभेद" इति । तत्कथमकामयत ऐक्षतेत्यैकार्थ्यमुपगम्यत इत्यत आह **जायेयेत्यादि** । सोऽकामायत बहु स्यां प्रजायेयेति, तदैक्षत बहु स्यामिति श्रुतिद्वयमर्थतोऽनुक्रान्तं, **अहं बहु जायेयेत्यकामयत, अहं बहु जायेयेत्यैक्षतेति । तुल्यक्रमं,** तुल्यः समानः क्रमः स्थानं सर्गपरिणामाव्यवहितकालत्वलक्षणं बहुभवनप्रजननलक्षणः प्रकारो वा यस्य तत्तथा । **तदुभयं** काम ईक्षणं चेति यत्प्रकृतं तदुभयमित्येकत्वेऽपि शब्दभेदोपाधिकभेदमालम्ब्य व्यपदेशः । **समामनन्ति** समाम्नातारः । समित्यैकार्थ्योपलम्भनसामर्थ्यमिहाम्नानस्य सम्यक्त्वं सूचयति । हिशब्दो हेतौ । यस्मात्तदुभयं **तुल्यक्रममामनन्ति** तस्मात् सैवकामेक्षणादिगदितेति योजना ।

**अयमाशयः** — शब्दभेदमात्रं तावदर्थभेदेऽतन्त्रम् । एकस्यैव द्योदिवादिनानाशब्दत्वदर्शनेन व्यभिचारात् । ईक्षणकामशब्दौ लोके भिन्नार्थौ विदिताविति चेत्, अन्यत्रार्थभेदावगमेप्यैकार्थ्यं प्रकृते स्यात् । दृश्यते हि नाकशब्दः स्वर्गार्थः पुष्करशब्दः पद्मार्थ इत्यन्यत्रार्थभेदेऽपि

तयोर्व्यामैकार्थ्यं, अतो यजत्यादिषु बाधकाभावे शब्दभेदोऽर्थभेदप्रयोजकः। प्रकृते पुनरैक्षताकामयतासृजतेति समभिव्याहारावगतमीक्षणस्य कामस्य च सर्गसाक्षात्कारणत्वं पीडयेतेति बाधकमस्तीति, शब्दभेदोऽर्थभेदाप्रयोजकः। न च श्रुतिविघाताय कामश्रुतावीक्षणमीक्षणश्रुतौ काम इत्युपसंहर्तव्यम्। हेत्वभावेन गौरवकरत्वात्। तस्मात्परिणममानमायासाक्षितैवात्मनः कामेक्षणादिमत्ता। तदेव तस्य विश्वनिमित्तत्वमिति ॥ ५६ ॥

स्यादेतत्। सत्यमेवं, यद्यैक्षतासृजतेति समभिव्याहारेण स्वर्गादिसाक्षात्करणत्वमीक्षणस्यावगम्येत, तदा स्वरूपभेदे कामेक्षणयोर्यौगपद्यासम्भवादवगतसाक्षात्करणत्वनिर्वाहायात्मनि कामेक्षणादिभेदो निह्नूयेत। न त्वेतदस्ति। खादति हसति जाल्म इत्यहेतुकार्यसमभिव्याहारस्य बहुशो दर्शनात्। लोकदृष्ट्या तु योग्यसमभिव्याहारेण तत्कल्पनीयम्। लोके च कर्ता कुलालादिरिदमस्य साधनमितीक्षित्वाऽनेनेदमित्थं करणीयमिति सङ्कल्प्य, क्रियासमिति कामयित्वा विरचनाविधां बुध्वा, वाऽऽलिख्य करोतीति, तस्येक्षणादेरानुपूर्व्यं दृष्टम्। एवमलौकिके कर्तुरीश्वरस्यापि स्यादित्यनुमिमीमहे। ततश्च तदैक्षतेत्यादावश्रुतमपि सङ्कल्पकामादिकं, अन्यत्र श्रुतमनन्तरानुपूर्वीकमुपसंहर्तव्यम्। बाधकाभावात्। यथादृष्टानुगमे गौरवस्यादोषत्वात्। एवं यत्र "सोऽकामयत स तपोऽतप्यत" इत्यादौ कामः कर्तव्यविधालोचनं चोक्तम्। यत्र च "तपसा चीयते ब्रह्मेत्यादौ कार्यविधालोचनमात्रमुक्तं तत्र तत्र च पूर्वानुपूर्वीकं कामसङ्कल्पादिकं यथायथमुपसंहर्तव्यम्। न तु प्रसिद्धार्थभेदसाधनं युक्तमित्याशङ्क्य, नैवं बहुभवनप्रजननविषयोपनिबन्धनेनाहेतुकार्यसमभिव्याहारवैलक्षण्यादैक्षतासृजतेति समभिव्याहारेण लोकदृष्टिनिरपेक्षमीक्षणस्य सर्गसाक्षात्कारणत्वावगमसम्भवेन, कामाद्युपसंहारे श्रुतबाध एवेति सुवचत्वेऽपि, ईश्वरस्य सृष्टावीक्षणादिक्रमाभ्युपगमे बाधकान्तरमुपदर्शयन् परिहरति —

सङ्कल्पकामकरणीयसमीक्षणादि-
सर्गक्रमं किल तवाऽपि शिवोपयन्तः।
सङ्कल्पमात्रसमसिद्ध्यनुभावमन्ये
त्वत्सेविनामपि विदन्ति न वेदगीतम् ॥ ५७ ॥

अत्र चेलाजिनकुशोत्तरमासनमितिवत् सङ्कल्पकामकरणीयसमीक्षणादिः सर्ग उच्यते। ततश्च करणीयसमीक्षणं सर्गस्यादिः, तस्य कामः, तस्य सङ्कल्प इत्यानुपूर्व्येण, सङ्कल्पकामकरणीयसमीक्षणानि आदयः यस्य सर्गस्य स तथेत्यर्थः। अत्रेक्षणादित्वस्यानिराकरणीयत्वादननुक्रमणम्। तादृशः सर्गः इत्येवंक्रमम्। लौकिकस्येव तवापि परमेश्वरस्यापीत्यपिशब्दो गर्हायाम्। अत्र हेतुं शिवेति सम्बोधनेन सूचयति वशयतीति हि शिव उच्यते। निसर्गादेव सर्ववशिनः सर्गादौ,

ईक्षणमात्रेण सिद्ध्यति कामसङ्कल्पादिपरिकरापेक्षाभ्युपगमोऽनुचित इत्यर्थः । तथापि, तत्र **सङ्कल्पादिक्रममुपयन्तः** श्रुतिवाक्यतात्पर्यमनपेक्ष्य पदव्युत्पत्तिमात्रपरितोषिणस्तथैवायमिति यथाश्रुतपदार्थमात्रग्रहाग्रहिणोऽन्ये उत्तानमतयः पृथग्जनसाधारणा इत्यर्थः । **त्वां** "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यंतद्वाव विजिज्ञासितव्यमि"त्युक्तप्रकारेण, **सेवितुमुपासितुं शीलं येषां**, तेषां त्वत्सेविनाम् । "सुप्यजातौ णिनिस्ताच्छील्ये" – इति णिनिप्रत्ययः । तेनाप्रायणानुष्ठेयत्वमुपासनायाः सूच्यते । त्वत्सेविनामपीत्यपिशब्देन, किं पुनस्तदनुग्राहकस्य परमेश्वरस्येति किंपुनर्न्यायं सूचयति ! **वेदगीतं,** "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिश्रुतिप्रतिपादितम् । सङ्कल्पमात्रेण लीलयापि कृतेन कामकरणीयालोचनादिव्यावृत्त्यर्थं **मात्रग्रहणम्** । समस्य सर्वस्य । सिद्धिलक्षणोऽनुभावो महिमा । तं न विदन्ति । यदि विद्युः, यत्सेविनामपि सङ्कल्पमात्रेण सर्वसिद्धिः तस्य परमेश्वरस्य कथं सर्गादौ कामाद्यपेक्षां ब्रूयुः । लौकिकदृष्ट्या तदपेक्षानुमाने, तथैवोपकरणान्तरापेक्षाप्यनुमीयेतेति ईश्वरत्वमेव व्याहन्येतेत्यभिप्रायः । तस्मात्सर्गादिप्रवृत्तशक्तिकमायावेक्षणमेव परमात्मनः कामसङ्कल्पादि सर्वमिति, न निमित्तत्वानुपपत्तिः । तत्र तत्र श्रुतावैक्षताकामयतेत्यादिपृथग्व्यपदेशस्तु लौकिकबुद्धिभावितबोध्यबुद्धिसौकर्यायेत्यनवद्यम् ॥ ५४ ॥

**अथापि स्यात्**, मा भूदिश्वरस्य कर्तृत्वे कामादिकमपेक्षणीयम्, साधनादिगोचरमीक्षणमपि । यस्य साधनचक्रं साध्यसिद्ध्यानुकूल्यमापादयति, स कर्ता स्यात् । परमात्मनश्च स्वरूपभूतं ज्ञानं, सौरादिप्रकाशवत् यथा सन्निहितविषयावभासमात्रमित्यनादिवासनावशादेव यथातथाप्रसक्तपरिणामशक्त्युद्बोधावस्थमायोपाधिनैव, तदीक्षणं सम्पद्यमानं न मायां विश्वपरिणामशक्त्युद्बोधादिलक्षणं सर्गादिकार्यानुकूल्यमापादयति स्वयमेव तदुपाधिकत्वादित्यतः सैव तस्य निमित्तत्वानुपपत्तिः इत्याशङ्क्य, सत्यं, यथासन्निहित मायोपाधिकमेव तदीक्षणं, तथापि सा तदीक्षणं प्राप्यैव सर्गादिकार्याय पर्याप्नोति । अन्यथा तदीक्षणाभावे ज्ञानैकसत्ताकसर्वावस्थायास्तस्याः स्वरूपसत्ताया एव दौर्लभ्यात् । अतो मायासन्निधिनैव परमात्मा तदुपाधिकमेव तदीक्षणमापद्यमानोऽर्थादपि कार्यानुकूलज्ञानवत्त्वान्निमित्तमुपचर्यते इत्यभिप्रेत्य परिहरति —

**शक्त्या स्वयैव विषयव्यतिषङ्गभाजा-**
**मुद्दीपने विषयबन्दमिवेन्द्रियाणाम् ।**
**वैषम्यवृत्तिषु विकारजुषां गुणानां**
**स त्वं निमित्तमसि सन्निधिनैव शम्भो !** ॥ ५५ ॥

**स्वया** स्वीययैव सहजयैव सहकारिमेलनातिरिक्ता नवस्तुशक्तिरिति मतनिरासाय स्वयेति विशेषणम् । अवश्यं हि कार्यानुकूला वस्तुशक्तिराश्रयणीया । अन्यथा दण्डचक्रादिकारणचक्रं कुतो न व्योम घटीकुर्यादित्यभिप्रायः । दाडिमीबीजादौ लाक्षारसावसेकाद्याधेयापि रक्तफल-कार्यानुकूलशक्तिः सहज शक्त्यवष्टम्भनीयैवेति, तत्प्राधान्यविवक्षया स्वयैवेत्येवकारः। **शक्त्या** सामर्थ्येन कार्यानुकूलापृथक्सिद्धातीन्द्रियधर्मविशेषेण । **विषयेषु** शब्दादिषु, **व्यतिषङ्गं** जतुकाष्ठवत् संश्लेषलक्षणं विकारं **भजन्तीति** विषयव्यतिषङ्गभाञ्जि । **तेषामिन्द्रियाणां** मनःश्रोत्रादीनाम् । **उद्दीपने** स्वभावावस्थितस्य तदवस्थाप्रच्युत्त्या कार्यानुकूलव्यापारापादनमुद्दीपनम् । यथाऽङ्गारवह्नेरसंस्पृष्टेपरिधृत-तृणतूलादिदाहानुमेयार्चिरुद्गम उद्दीपनं तद्वत् । तस्मिन्विषये, **विषयाणां** शब्दादीनां **बृन्दमिव,** सर्वविषयसन्निधौ युगपत्सर्वेन्द्रियदीप्तिः सम्भवति । चित्रज्ञानदर्शनात् । पश्चावधानादौ क्रमिकत्वे मानाभावादित्यभिप्रेत्य बृन्दग्रहणम् । यथा शब्दादिर्विषयः स्वशक्त्यैव विषयग्रहणे विक्रियमाणाना-मिन्द्रियाणां, स्वयमविकुर्वाणः तदनुलोमभावलक्षणेन सन्निधिनैव विकारापत्तिनिमित्तं भवति, एवं स्वयैव शक्त्या गुणानां रजःप्रभृतीनां **वैषम्येण** गुणसाम्यावस्था जगतः प्रलयः । तत्प्रहाण्या उद्भवाभिभवलक्षणेन **वृत्तिषु** विशेषावस्थासु सतीषु, **विकारान्** सर्गादिपरिणामान् **जुषन्त – इति विकारजुषः** । तादृशां सताम् । गुणमय्या मायाया विश्वपरिणामिन्याः सत्या इत्यर्थः । परिणममान-मायाधिष्ठानतयोपादानभूतः **स त्वं,** सन्निधिनैव विषयतानुलोम्यमात्रेण **निमित्तमसि** । न तु कुलालादिवत् । ज्ञानेच्छाकृतिभिर्व्याप्रियमाणतया इत्येवकारार्थः । तथा च **भगवान् पराशरः** "यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते । मनसो नोपकर्तृत्वात्तथाऽसौ पुरुषोत्तमः" ॥ इति । शं स्वात्मसुखं भुङ्क्तेऽनुभवतीति शम्भुः । मितद्रवादित्वात्सुप्रत्ययः । तस्य सम्बुद्धिः शम्भो इति तेन निर्व्यापारस्वभावत्वमवद्योतयति । निर्व्यापारस्यैव सुखभोगदर्शनात् कर्तृत्वं हि व्यापारवत्वं दुःखमेवेति ।

**इदमत्रानुसन्धेयम्** – स्वभावो नियतिः काल ईश्वरश्चेति सर्वकार्येषु कारणानि । स्वभावो नाम सहजा कार्यशक्तिः, यदभावादुप्ताः शिलाशकलादयो महीजलादिषु सत्स्वपि न प्ररोहन्ति । यद्भावाच्च शालिबीजादयः प्ररोहन्ति । तामेतां प्रागभाव इति परिभाषन्ते न्यायिनः । नियतिः, कर्म; यदभावे सुरनरतिर्यगादिविचित्रकार्यव्यवस्थानुपपत्तिः । यथा श्रुतिः – पुण्यः पुण्येन कर्मणा भवति पापः पापेनेत्यादिः । तथा कालः यतो नवपुराणत्वादिव्यवहारः । यदभावादुप्ता एव शालिबीजादयो न पच्यन्ते । न हि वसन्ताभावे हैमन्ते पुष्प्यन्ति तरवः । ईश्वरश्च विपश्चित् तदसम्भेदेन सर्वप्रवृत्तिप्रयोजकः देहेन्द्रियादिप्रवृत्तिप्रयोजक इव जीवः । तत्र स्वभावो वस्तुशक्तिरेव प्रधानं कारणम् । पराणि तु तदनुकूलतामात्रेणानुग्राहकाणि । कर्माणि हि

तावदुद्बुद्धानि कार्याय प्रभवन्ति । तदुद्बोधश्च कार्याभिमुखशक्तिकवस्तूपहितकालभेदकृत एव । कालस्य च तदुपाधिकभेदस्यैव तदनुकूलत्वम् । स्वतो विशेषाभावात् स्वभावाधीनपुष्पोद्गमोपाधिनैव हि पुष्पमासो वसन्त उच्यते ईश्वरश्च तदुपाधिकतज्ज्ञान एवेष्ट इति । तथा च परमात्मानमधिकृत्य **पुराणं** – "निमित्तमात्र एवासौ सृज्यतां सर्गकर्मणि । प्रधानकारिणीभूता यतो वै सृज्यशक्तयः ॥ निमित्तमात्रं मुक्त्वा तु नान्यत्किञ्चिदपेक्ष्यते । नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम्" ॥ इति । अत्र निमित्तमात्रमिति नोपादानत्वं व्यवच्छिद्यते । आत्मविज्ञाने सर्वविज्ञानाद्युपरोधप्रसङ्गात् । किं तर्हि ? कुलालादिवत् व्याप्रियमाणत्वम् । ततश्च प्राणिचेष्टासु स्वशक्त्यैव भवन्तीषु सवितेव स्वयमव्याप्रियमाण एव परमात्मा सन्निधिमात्रेण निमित्तमित्यभिप्रायः ॥ ५५ ॥

एतदेव परमात्मनः सन्निधिमात्रकारित्वमुपपादयन् "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्यः तदात्मानमकुरुत" इत्यादौ कर्तृत्वनिर्देशस्य "कालः कर्ता विकर्ता च संहर्ता चापराजितः" इत्यादिनिर्देशवदन्यथासिद्धिमाह —

कालस्य वाथ नभसो नगसम्भवादौ
का हेतुता विगतविक्रियसन्निधानात् ।
तन्मात्रमेव तव शङ्कर ! हेतुभाव-
मालम्बते निगममौलिषु हेतुवादः ॥ ५६ ॥

**कालस्तावत्सर्वकार्यनिमित्तमित्युपपादितम् । नभश्च नगसम्भवादौ** वृक्षाङ्कुरवृद्ध्यादौ हेतुः । आवृते तदसम्भवात् । तयोः तत्र **विगतविक्रियात्** व्यापारशून्यात् । **सन्निधानात्** तदुपधेय-रूपभेदेन तदनुलोमावस्थानात् । **अन्या का हेतुता ?** निर्व्यापारसन्निधिमात्रमेव हि तयोस्तत्र निमित्तत्वम् । न खलु महीसलिलतेजोमरुतामवयवोपचयनस्नेहनतत्परिपचनसमीकरणादिव्यापार इव कश्चिदस्ति तरुसम्भवादौ कालाकाशयोर्व्यापारः । अथवेत्यनादरणेन भोग्यपरिणामे भोक्तुरपि तादृशमेव निमित्तत्वमिति, उदाहरणान्तरमुपक्षिपति । विवक्षितार्थसम्प्रत्ययाय च बहूदाहरणादरः । **तन्मात्रं** तत्प्रमाणम् तत्तुल्यमेव । तव परमात्मनो **हेतुभावं** विश्वकर्तृत्वम् । **निगममौलिषु** वेदान्तेषु । **हेतुवादः** कर्तेतिवादः । आलम्बते विषयीकरोति । नत्वधिकं कुलालादेरिव कामसङ्कल्पादिपूर्वकव्यापारवत्वमित्येवकारार्थः । अत्र **शङ्करेति** सम्बोधनेन "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति", "विज्ञानमानन्दं ब्रह्म", "राति दातुर्परायणम्", "स वा एष महानज आत्मान्नादो वसुदानः" इत्यादिश्रुतं

कर्मफलदातृत्वं च स्वशक्त्यै भूतान्तःकरणादौ कर्त्रनुबन्धिकर्मफलभूतदेहसुखादिपरिणामिनि तदुपहित-तदनुकूलज्ञानवत्त्वमात्रमेव। न तु राजादेरिव सेवकचेतनार्पणनियोगादिरात्मनः कश्चिद्व्यापार इति सूचयति। तथा च भगवान् पराशरः — "सन्निधानाद्यथाकाशकालाद्याः कारणं तरोः। तथैवापरिणामेन विश्वस्य भगवान्हरिः॥" इति। अपरिणामेनाव्यापारेणेत्यर्थः॥ ५६॥

एवं विश्वपरिणामिमायासन्निधिनैव तदुपधेयज्ञानवत्त्वमात्रं विश्वकर्तृत्वमात्मनो हेतुवादालम्बनमिति कल्पना नास्मदेकोपज्ञं, किं तर्हि? श्रुतिरेव तथाऽनुजानातीति श्रौतेनैव निदर्शनेनाह —

स्वप्नग्यथैव रथरथ्यपथिप्रभेदान्
प्राचीनसंस्कृतिसमुत्कलितावभासान्।
पश्यन्परं सृजति नाम तथेश! विश्वं
मायामयं त्वमवयन् सृजतीतिवादः॥ ५७॥

**स्वप्नक्** निद्राणः 'स्वपितृषोर्नजिङ्'ति नजिङ् प्रत्ययः। **प्राचीनाभिः** जागरानुभवैः प्रकृतावाहिताभिः। जन्मशतव्यवहिता अपि संस्काराः स्वप्नावभासहेतव इति प्राचीनग्रहणम्। **संस्कृतिभिः** संस्कारैर्वासनाभिः। स्वाप्नभोगप्रदकर्मणा सह निद्रयैवोद्बुद्धाभिः। **समुत्कलिताः** सम्यक् जागर इव स्फुटव्यवहारयोग्यतया उद्भाविताः। अवभासन्त इत्यवभासा नामरूपभेदा येषां तान्। स्वाप्ननामरूपभेदानामवभासापेक्षया पृथक्सत्त्वाभावात् अवभासपदोपादानम्। **रथरथ्यपथिप्रभेदान्**, रथाः स्यन्दनाः रथ्या रथवाहा अश्वाः पन्थानो मार्गाः इति प्रभेदान्। एवंप्रकाराणां वेशन्तादीनामन्येषां ग्रहणार्थं प्रभेदपदोपादानम्। पश्यन् **परं पश्यन्केवलम्**। न तु कुर्वन्। रथाद्युचितोपकरणदेशकालाद्यसम्भवात्। अन्तरेव हि स्वप्नदर्शनम्। "एष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति श्रुतेः। "बहिष्कुलायादमृतश्चरित्वा" इति च जाग्रद्देहाभिमानाभावमात्रपरम्। अन्यथा तुण्डीरे शयानः स्वप्ने काश्मीरं गतस्तत्रैव प्रतिबुद्धो न शयानदेशस्स्यात्। तदानीमुपरतकरणस्य जीवस्य निमेषेण रथादिनिर्माणसामर्थ्यायोगाच्च। सतोऽपि सत्यसङ्कल्पादेरस्य तदाऽनाविर्भावाच्च। **सृजति नाम। नामेति** "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजति" इत्यादिश्रुतिप्रसिद्धिमनुसारयति। रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजति" इत्यादिश्रुतिप्रसिद्धिमनुसारयति। ईश्वर एव स्वप्ने रथादीन् सृजत इत्युच्यते। नन्वत एव केवलं पश्यति जीवे, सृजतिवादानुपपत्तेः।

अत एव 'स हि कर्ते'ति हेतुवचनमपि सङ्गच्छते। यतो विश्वस्य जगतः कर्ता, अतः स्वप्नस्यापीति शङ्कां निराकर्तुं यथैवेत्येवकारः नैवं, जीवविषयपूर्वापरसन्दर्भसन्दंशात्। पूर्वसन्दर्भे तावत् "सयत्र स्वपितीत्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती"ति, स्वप्नजं प्रकृत्य हय्चेतदाम्नायते "न तत्र रथा" इत्यादि। परत्र च "स्वप्नेन शरीरमभि-प्रहत्यासुप्तः सुप्तानभिचकाशीति स्वप्नान्त – उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनी"त्यादिना, तस्यैव प्रपञ्चनात्। अकस्मादन्तराले ईश्वरविषयत्वकल्पनायोगात्। स्वप्नस्यावभासमात्रशरीरतया तदुपधेयज्ञानवत्वमात्रमेव सृजतिवादालम्बनमाश्रीयताम्। तथा च लिङ्गं यानि ह्येव जाग्रत्पश्यति तानि सुप्तः" इति। जाग्रद्वासनामयत्वात्तानीत्युच्यते ईश्वरेण स्वप्नेऽपूर्वरथादिसर्गे तानीत्यत्यन्त-विप्रकृष्टार्थमापद्येत। यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यत इति स्पष्टमेव स्वप्नस्याविद्यकत्वं दर्शयति। तर्हि कुत एवं विषमा सृष्टिः? स्वप्ने निद्रा अविद्या वा साधारणं कारणं न वैषम्यहेतुः इत्येवमाकाङ्क्षायामिदमुच्यते 'स हि कर्ता कर्मणामि'ति। स्वप्ने भोगस्यापि कर्मफलत्वात्, कर्मायत्तं स्वाप्नसृष्टिवैषम्यमित्यभिप्रायः। प्रत्युतात्रेश्वरविवक्षायामेव स हि कर्तेति हेतुवचनमनर्थकं स्यात्। श्रौते तस्य विश्वकर्तृत्वे स्वप्नकर्तृत्वे वा हेत्वपेक्षायोगात्। तस्मान्निद्रोद्भूतवासनामयस्वप्नरथादिसृज्यो-पधेयज्ञानवत्वमात्रं कर्तृत्वमालम्ब्य, जीव एव तत्र सृजत इत्युच्यत इति युक्तमुत्पश्यामः। यथायं दृष्टान्तः तथा ईशेत्यत्र सम्बोधनेन, ईशानमपि वस्तुशक्तिमूलकेशितव्यप्रवृत्युपधेयज्ञानवत्वमेवेति दर्शयति। पूर्वसर्गकृतसंस्कारसमुत्कलितावभासं मायामयं मायापरिणामरूपं विश्वं जगत् अवयन् जानन्निति साधारणम्। न तु किञ्चिद्व्याप्रियमाण इत्यर्थः। त्वं सृजसीति कृत्वाऽयं वदः, "इदँ सर्वमसृजत यदिदं किञ्च" इत्यादिः। परिणममानमायासाक्षित्वमेव परमात्मनः स्रष्टृत्वं, सृजतिवादालम्बनं नान्यदित्यभिप्रायः।

**अयं भावः** – अवश्यं कार्योपधेयज्ञानवत्वमेव कर्तृत्वमित्युपेत्यम्। तथाहि—न तावत् ज्ञानेच्छाद्वेषयत्नसुखाद्युदये तद्विषययत्नादय उपपद्यन्ते वा। यत्नाद्युदयेऽपि यत्नादिभावे-ऽनवस्थानात्। ते चात्मकर्तृका व्यपदिश्यन्ते। जानातीच्छति द्वेष्टि यतते सुखायते दुःखायत इत्यादिव्यपदेशस्य पचति भुङ्क्त इत्यादिव्यपदेशतुल्यतया, तत्र धातूपात्तक्रियाकर्तृत्वप्रत्ययस्य बलवद्बाधकाभावे गौणत्वभ्रान्तत्वकल्पनायोगात्। अथ "मत्तः स्मृतिर्ज्ञानमपोहनं च", "सुखं दुःखं भावोऽभावो भयं चाऽभयमेव च। अहिंसा समता तुष्टिस्तपोदानं यशोऽयशः॥ भवन्ति भावा भूतानां मत्त एव पृथग्विधाः"। इत्यादीश्वरकर्तृत्वसरणमस्ति बाधकमिति चेत्, न, द्विकर्तृकत्वेऽपि तदुपपत्तेः। मत्त एवेत्यवधारणस्य च यथाऽहं जीवस्य हेतुकर्ता न तथा ममेत्येवंपरत्वसम्भवात्।

मत्त एव, न नु स्वत एवेति निरङ्कुशस्वातन्त्र्यव्यावृत्तिपरत्वसम्भवाद्वा। वस्तुतस्तु यद्विज्ञानमयस्यैव सुखाद्युपधेयतदनुदर्शनात्मकं कर्तृत्वं तत्परमात्मन एवाभेदादित्येवम्परमवधारणं स्यादित्यविरोधः। तत्रैवं सति पचत्यादौ कृतिमत्वमधिकं प्रतीयते। सम्भवात्। जानात्यादौ तु तदसम्भवात् तदुपधेयज्ञानवत्वमेवेति विशेषः। न तु कृतावेवाख्यातव्युत्पत्तिः। जानात्यादौ बहुव्यपदेशविरोधात्। अथ किं करोति देवदत्तः। पचति। किं करोति? पठतीत्यादौ, करोतिसामानाधिकरण्यादाख्यातस्य भावनोत्साहादिशब्दितकृतिवाचित्वमेवावधार्यत इति चेत् न। किं करोति देवदत्तः? स्वपिति। किं करोति? पश्यति। किं करोति? यतत इत्यादिदर्शनात्। करोतेरपि कृत्यर्थत्वानियमात्। यथा पादौ कुरु प्रसारयेति गम्यते। समीपे कुरु, स्थापयेति गम्यते। उदरमन्तरं कुरुते, जानातीति गम्यते। तत्रैवं सति बहुप्रयोगविरोधात्। न कृत्यर्थता युक्ताऽऽख्यातस्य। हन्तैवं रथो गच्छति, अनो वहति, स्थाली पचति इत्यादिव्यपदेशागौणत्वाय, कार्योपधेयकिञ्चिद्विशेषवत्वमेव कर्तृत्वमुपगम्येत, उपगम्यतां नाम। निष्क्रियस्यैव परमात्मनः कार्योपधेयज्ञानवत्वमेव कर्तृत्वमिति विवक्षितार्थसिद्ध्यविघातात्। परन्तु, कार्यानुकूल-किञ्चिद्विशेष इत्यनिर्धारितविशेषव्युपत्त्ययोगात् करणादिसाधारण्येनातिप्रसङ्गाच्च, बहुप्रयोगानुगतं कार्यानुकूलज्ञानवत्वमेव कर्तृत्वमाख्यातार्थ इति नियच्छामः। तेन रथो गच्छतीत्यादौ गौण एव कर्तृत्वादिव्यवहार इति युक्तमुत्पश्यामः॥ ५७॥

**स्थितं तावदज्ञातं ब्रह्म** परिणममानमायाधिष्ठानतया जगदुपादानं तदुपधेयज्ञानवत्वे न च निमित्तमिति। तत्र च कादम्बिनीवेति निदर्शनसामर्थ्येन मायाज्ञानाभेद उपक्षिप्त उपपादितः। तत्रेदमाशङ्क्यते, नैकमेव तत्वं मायाज्ञानशब्दमिति युक्तम्। अन्यायश्चानेकशब्दत्वमिति न्यायात्। अपि च न तस्यैव स्वप्रकाशात्मनोऽज्ञानमिति युक्तम्। स्वप्रकाशत्वविरोधादेव। नाप्यन्यस्य तदति-रिक्तचेतनाभावात्। अज्ञानोपाधिकतया जीवस्य तदसिद्धौ तदभावेन जीवस्यात्माज्ञानमित्यनुपपत्तेरितीमां शङ्कां मायाज्ञानशब्दप्रवृत्तिनिमित्तभेदोपक्षेपेण विषयाश्रयव्यवस्थादर्शनेन च परिहरन्नाह —

यत्सत्तया समनुयन् प्रकृतिर्जगत्याः

यद्वा निमित्तमसि चेतनयाऽनुपश्यन्।

विश्वावभासदृशिशक्तिमयीमविद्यां

जीवस्य तामहमवैमि तवेश! मायाम् ॥ ५८॥

**यदित्यव्ययं** ययेत्यर्थे। **जगत्याः** विश्वस्य। **सत्तया** आत्मत्वेन। **समनुयन्** अभेदेनानुगच्छन्। **प्रकृतिरू**पादानमसि। यदनुगत्या कार्यमात्मानं लभते, तत्खलु तस्योपादानं

नाम। यथा मृद्घटादेः। यद्वा, यया वा एकस्या एव रूपभेदाभिप्रायेण द्विर्यत्पदम्। **वाशब्दश्चार्थे**। **निमित्तं चासीति** सम्बध्यते। तेन तत्त्वैकत्वसिद्धिः। **चेतनया** तदुपधेयस्वरूपचैतन्येन। **अनुपश्यन्** कार्यपरिणाममनुलक्ष्य पश्यन्। निमित्तमसि कार्योपधेयतदनुकूलज्ञानवत्त्वमेव निमित्तत्वमित्युपपादितम्। आत्मनो **विश्वात्मनाऽवभासे शक्तिरावरणात्मिका**ऽज्ञातसतत्वं हि विपरीतमवभासते। विश्वस्य दृशौ ज्ञाने च शक्तिः, विश्वपरिणामविक्षेपात्मिका, **तन्मयीं** तत्प्रधानम्। तां तत्तच्छक्तिप्राधान्येनाविद्यामायाशब्दाभिधेयत्वमिति दर्शयितुं मयड्ग्रहणम्। जीवस्य सम्बन्धित्वेनाविद्यां, **तवेश्वरस्य** सम्बन्धित्वेन **मायामहमवैमि**। अत्रानुगुणं सम्बोधनमीशेति, "मायिनं तु महेश्वरमि"ति हि श्रुतिः।

**एतदुक्तं भवति** – प्रवृत्तिनिमित्तभेदासम्भवे परमेकस्यानेकशब्दत्वकल्पनमन्याय्यमिति ज्योतिर्ज्योतिष्टोमादिशब्दभेदादर्थभेद इष्यते। प्रकृते पुनरन्यथा सतोऽन्यथावभासित्वलक्षणोपादानत्वप्रयोजकावरणशक्त्याऽविद्येत्युच्यते। कार्योपधेयतदनुकूलज्ञानवत्वलक्षणनिमित्तत्वप्रयोजकविक्षेपकशक्त्या मायेत्युच्यत इति, प्रवृत्तिनिमित्तभेदवादेकस्यैव मायाविद्येत्यनेकशब्दत्वमविरुद्धम्। सा चाऽविद्यात्मिका जीवस्य भवति। तदुपाधिकस्यैव "परमात्मानं न जानामी"त्यनुभवात् "ज्ञाज्ञौ द्वावीशानीशौ" इत्यज्ञत्वश्रुतेः। यथा वै तदुपपद्यते, तथाऽनन्तरमेव विभावयिष्यत इति ॥ ५८ ॥

**एवं** तावन्मायात्मनोः समप्राधान्येन मायाप्राधान्येन च परमात्मनो जगद्धेतुत्वप्रकारभेद उपवर्णितः। श्रुतौ च "यथोर्णनाभिः सृजते गृह्णते च", "यथा पृथिव्यामोषधयस्संभवन्ति," "यथा सतः पुरुषात्केशलोमानि तथाक्षरात् सम्भवन्तीह विश्वम्" इति निदर्शनत्रयेण, त्रेधा परमात्मनो विश्वहेतुत्वप्रकारभेदः सूचितः। तत्र जगदुपादानत्वं मायाप्राधान्यविवक्षया ऊर्णनाभिनिदर्शनं तन्तुपरिणामे हि तच्छरीरप्राधान्यं गम्यते। निमित्तत्वे पुनः चेतनप्राधान्यादूर्णनाभिः सृजत इति स्वातन्त्र्यव्यपदेशः। मायात्मोभयप्राधान्यविवक्षया पुरुषनिदर्शनम्। तत्र हि सतो जीवत इति विशेषणात्तादात्म्येन विशिष्टस्य पुरुषस्य केशलोमादिहेतुत्वं गम्यते। तत्र च निमित्तत्वोपादानत्वयोरविशेषात्साधारण्येन पञ्चमीनिर्देशः। ब्रह्मप्राधान्यविवक्षया पृथिवीनिदर्शनम्। ओषधयो हि पृथिवीमय्यो दृश्यन्ते। यथा पृथिव्यां तदवस्थायामेव तदुपश्लेषेणौषधीसम्भवः। बीजादेरिवाङ्कुरसम्भवे स्वरूपप्रच्युतिः। तथाऽविकृते कूटस्थे परमात्मनि विश्वसम्भव इति तात्पर्येण सप्तमीनिर्देशः। तत्रावशिष्टं स्वप्राधान्येन परमात्मनो जगद्धेतुत्वे प्रकारभेदमुपवर्णयितुं विवर्तवादमिदानीं प्रस्तौति —

त्वं नाथ! निह्नुतविकारकथाकलङ्कः
प्रत्ना च वागननृतव्रतनित्ययत्ना ।
तर्कोऽनवस्थितविकल्पविषोऽप्युदर्क-
स्तद्धेतुतत्वमविदा त्वयि तिष्ठते नः ॥ ५९ ॥

यद्य"प्यात्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत, सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजते"त्यादौ केवलमात्मोपक्रममेव सर्गं आम्नायते । तथापि न स एव विश्वपरिणामीति शक्यमुपगन्तुम् । "निष्कलं निष्क्रियं शान्तं", "अज आत्मा महान् ध्रुवः" "कूटस्थमचलं ध्रुवम्" इत्यादिस्वरूपविधिपरशास्त्रविरोधादित्यभिप्रेत्य तावदाह — **त्वमित्यादि** । नाथ्यतेऽनन्यशेषतया इष्यत इति **नाथः**, आनन्दैकरस आत्मा । "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मे"ति हि श्रुतिः । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति च । **तस्य सम्बुद्धिः हे नाथेति** । अनेन विश्वहेतुस्वभाव एव चेत् परमात्मा स्यात् परमप्रेमास्पदप्रत्यगेकात्मा न स्यात् । वक्ष्यते च । तदैकात्म्यमित्यहेतुस्वभावत्वोपपत्तिं सूचयति "त्वं परमात्मा **निह्नुतो** निष्कलं" इत्यादिना । निषिद्धो **विकाराणां** परिस्पन्दपरिमाणादीनां **कथयापि कलङ्को** लाञ्छनं **यस्य स तथाभूतोऽसि** । नास्त्येव तावद्रेखोपरेखादिभिरैन्दुकस्य लेख्यलाञ्छनक्रियेव तव विकारलाञ्छनक्रिया । प्राचीमुखस्य नवचन्दनबिन्दुरिन्दुः इत्यादिवत् । तत्कथापि नास्तीति सूचयितुं कथाग्रहणम् । हेतुवादास्तु ब्रह्मणः स्वरूपप्रतिपत्त्यर्थत्वात् स्वरूपकथैवे-त्यभिप्रायः । अथहेतुवादोऽपि ब्रह्मणः स्वरूपविधिपर एवास्ताम् । तर्हि परस्परविरोधादप्रमाणं स्यात्, नैतद्युक्तमित्याह । **प्रत्ना**, पुराणी । अनादिनिधना **वाक् च** । **न अनृतमननृतं** सत्यं यथार्थवचनम् । तदेव **व्रतं** नियतानुष्ठेयं कर्म, तत्र **नित्यो** नियतो **यत्नो यस्याः सा** तथा । अस्ति त्रयीविदां यो नियतं तत्प्रामाण्यसाधने नित्यो यत्नस्तं तस्यामाधायाभिधीयते 'अननृतव्रत-नित्ययत्ने'ति । न तु विरुद्धार्थतया अप्रामाण्यमनुमन्यत इति चकारार्थः एवं तदुभयोपपत्तये तदनुकूलस्तर्क ऊह्यतामित्यत आह **तर्क इत्यादि** । अविकर्तुमात्मानं विकर्तुं चास्ति परमात्मनः शक्तिविशेष इत्यूहनमेकस्तर्कः, विशिष्टस्यात्मनः मायांशेन विकारः स्वात्मनाऽविकार इत्यूहनमपरस्तर्कः । एवमन्योऽपि तर्क ऊहनीयः । अवस्थिताः कयाचिदुपपत्त्या कुण्ठिता अवसन्नप्रवृत्तयो दूषणासमर्था न भवन्तीत्य**नवस्थिताः**, दूषणसमर्थाएवेत्यर्थः । **विकल्पाः** । कथमत्यन्तादृष्टा तादृशी परमात्मनो विरुद्धा शक्तिः कल्प्यते ? कल्पनाया निदर्शनसापेक्षत्वात् । न च तथा विकाराविकार-शक्तिरस्ति परमात्मन इति क्वचिच्छ्रूयते । कथं च मायाया एव परिणामित्वे परमात्मनो

जगदुपादानत्वम्। मायाद्वारा तस्य तथात्वे मायीयहेयसम्बन्धोऽपि तथा किं न स्यादित्यादिप्रकाराः। **त एव विषोर्मय एव** तर्कयतो व्यथाहेतव – **उदर्क** उत्तरं फलं यस्य स, तथास्ति परमात्मनो हेतुस्वभावत्वे योऽपि कोऽपि तर्को दूष्य एवेत्यभिप्रायः। का तर्हि व्यवस्था? यदि हेतुत्वमहेतुत्वं च परस्परविरुद्धं, परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्याय इत्यत आह तदित्यादि। तत् तस्मात्। उभयाविरोधायैवमवस्थापयामः। त्वयि अविकृतस्वभावे परमात्मनि विषये विदेः सम्पदादि क्विप्, न वित् अवित्। **अविदा** त्वद्विषयया ऽविद्यया। हेतुरिति तत्वं हेतुतत्वम्। हेतोः हेतुत्वं वा। **त्वयि तिष्ठत** इति सम्बध्यते। हेतुत्वमित्येव वक्तव्ये हेतोरिति पृथग्ग्रहणं, "परमात्मा न स्वतो हेतुरि"ति दर्शयति। यथा शुक्तौ रजतस्य रजतत्वमिति, शुक्तिररजतमिति गमयति तद्वत्। न हि पृथक्सतोऽन्यस्य हेतोर्हेतुत्वमात्मनीति दर्शयितव्यम् आत्मनोऽन्यस्य विश्वहेतोरवैदिकत्वात्। अथवा, हेतोः प्राक् सर्गकल्पितस्यात्मन एव हेतुत्वमात्मनि, तदनन्तरसर्गे कल्प्यत इति हेतुत्वकल्पनाया अनादित्वं दर्शयितुं हेतोर्हेतुत्वमित्युक्तम्। त्वयि अविकृतस्वभावे परमात्मनि। नः अस्मभ्यम्। "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सम्प्रदाने चतुर्थी। तिष्ठते स्वात्मानं प्रकाशयति। "प्रकाशनस्थेयाख्ययोश्च" इति तिष्ठतेरात्मनेपदम्। अनेन तस्य वेदवेद्यत्वं व्यावर्त्यते। अविद्ययैव त्वयि विश्वहेतुत्वं विकल्प्यते। न तु वेदेन विधीयते। येन तद्विधायिना वेदेन निर्विकारविधिश्रुतिरुपरुध्येत। तदनुवादेन तु हेतुवादी वेदस्त्वामुपलक्षयति, यो भीषणश्चोरः स स्थाणुरित्यादिवत्। यस्सर्वज्ञः सर्ववित्, जगज्जन्मादिकारणं तद्ब्रह्मेतीत्यभिप्रायः।

**अयमत्राशयः** — यदि परिणममानमायाधिष्ठानतया परमात्मनो मायापरिणामरूपविश्वसत्ताप्रदत्वेन तदुपादानताऽभ्युपगम्यते, तर्हि तस्यावश्यं परमात्मन्यारोप उपजीव्यः। तथा च वरं वियदादेर्विश्वस्यैव साक्षादात्मन्यारोप उपगम्यतां, अलं मायापरिणामत्वोपगमेन। माया पुनरात्मस्वरूपावरणेन तदारोपोपाय एवास्तु अत एव ब्रह्मणो जगत्प्रकृतित्वोपायत्वात् "मायां तु प्रकृतिं विद्यात्" इत्युपचारः। यथा जीवस्य भोक्तृत्वोपायत्वात् "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति सत्वमित्युपचारः, तद्वत्। न तु प्रकृतिरेव माया। आत्मन एव सर्वत्र जगत्कारणत्वगतिसामान्यात्। तत्पुनरिदं जगत्कारणत्वं, आरोपितत्वादात्मनउपलक्षणमेव। चोरत्वादिकमिव स्थाणुत्वादेरिति ॥ ५९ ॥

अविद्यया विश्वहेतुत्वं त्वयि स्वरूपं दर्शयति इत्युक्तम्। तत्किं लब्धात्मकमलब्धात्मकं वा? तथाऽन्त्येऽहिलोमादिवदसतः स्वरूपप्रकाशनायोगः। आद्ये पुनरविद्या यद्यात्मनो विश्वहेतुत्वस्वरूपे निमित्तं, तर्हि तदेवात्मनो विश्वपरिणामित्वमापतितम्। अथ स्वगतस्यैव विश्वहेतुत्वस्यात्मन्यारोपे निमित्तमविद्येत्युच्येत, तर्हि स एव परिणममानमायाधिष्ठानतावादः प्राप्त इत्याशङ्क्य गगनस्य तलमलादि प्रतिभास इव, आत्मन एव विश्वहेतुत्वप्रतिभासे निमित्तमविद्या। तद्धेतुत्वस्वरूपं तु

प्रतिभासैकशरीरमिति नासत्वदिविकल्पावकाशः । इत्यभिप्रेत्य सोपपत्तिकमात्मनो विश्वहेतुत्वस्य भ्रमसिद्धत्वमाह —

कालेन पल्लवति पुष्प्यति वा रसालो
नाकालतो जनिलयक्रमहेतुभावः ।
कालातिपातिमहिमेश ! महीयमानः
त्वं विश्वहेतुरिति विभ्रमतः किमन्यत् ॥ ६० ॥

लोके तावद्रसालश्चूतवृक्षः अन्येन कालेन पल्लवति अन्येन कालेन पुष्प्यति, अन्येन च फलतीत्युदाहरणान्तरसूचनार्थो वाशब्दः । न खलु यथा स्वकालमनपेक्ष्य सकृदेव पल्लवादिसम्भवो दृष्टः । दोहलयोगेनाङ्कोलतैलाक्तबीजादेराशुफलिनोऽपि पल्लवपुष्पादिक्रमदर्शनात् । एवं परमात्माऽपि यदि विश्वसर्गादिपरिणामी स्यात् स्वयं तत्तत्कालोपहित एव जनयति विश्वम् । लालयति वेति वाच्यः । न पुनरकालतस्तत्तत्कालमनपेक्ष्य तस्य विश्वजनिलययोः क्रमेण हेतुभाव उपपद्यते । न खलु यदैव जनिस्तदैव तस्य लय इत्युपपन्नम् । विरोधात् । ततः किमित्यत आह कालेत्यादि । कालं नवपुराणत्वादिव्यवहारासाधारणहेतुं, तत्वभेदमतिपतितुमतिक्रमितुं शीलं यस्य स तादृशो महिमा महत्वं स्वभावो यस्य स तथा कालानवच्छेद्यस्वभाव इत्यर्थः । महीयमानः पूज्यमानः । "यस्मादर्वाक् संवत्सरोहोभिः परिवर्तते", "अन्यत्र भूताच्च भव्याच्च" इत्यादिश्रुतिषु शस्यमानः । अत्रेशेति सम्बोधनेन "ज्ञः कालकालः" इत्यादिश्रुत्या कालस्यापीशिता न कालावच्छेद्य इति सूचयति । त्वं परमात्मा विश्वहेतुरित्येतत् । विभ्रमतः किमन्यत् ? न किञ्चिदपि । भ्रान्तरूपमेव परमात्मनो विश्वहेतुत्वमित्यर्थः ॥ ६० ॥

अथ यदिदं तावदुदितं परमात्मस्वरूपविधिपरनिर्विकारत्वकालातीतत्वश्रुतिसामर्थ्येन विश्वहेतुत्वं भ्रमसिद्धमेवेति तदुपपत्तिविरुद्धम् । तथाहि — न तावज्जीवस्यायमात्मनो विश्वहेतुत्वभ्रमः, प्रविश्वभ्रमादकरणकलेबरतया शक्तिमात्रावस्थितस्य तदसामर्थ्यात् । नापीश्वरस्य सर्वज्ञस्य भ्रमायोगादित्याशङ्कामनुवादपूर्वकं परिहरति —

जीवो न विभ्रमितुमर्हति नेश्वरो वा
सादिभ्रमे कुमतितर्कविधैवमेषा ।
सन्तायते परशिव ! त्वयि विभ्रमोऽयं
वृत्त्या च शक्तिपरिशेषतया च जैवः ॥ ६१ ॥

**जीवः** प्राणानां धारयिता प्रमाता एष्टा द्वेष्टा कर्ता भोक्ता च। स न परमात्मानं विश्वहेतुभावरूषिततया **विशेषेण भ्रमितुं** अतं तद्भावेन ज्ञातुं **नार्हति**, उक्तहेतोरेव। अत्र विश्वविभ्रमात्प्रागपि जीवस्य ज्ञानभ्रमसम्भवमभिप्रेत्य विशब्दोपादानम्। **ईश्वरो वा न विभ्रमितुमर्हति।** अत्रेश्वरस्य करणकलेबरनिरपेक्षमेव ज्ञानमिति, तस्य तद्भ्रमसम्भावनायां वाशब्दः। सर्वज्ञत्वात्तु तन्निषेधः। **एवंप्रकारा, एषा कुमतितर्कविधा** कुत्सिता भ्रमस्य सादित्वानादित्वकृतविशेषविवेकशून्या **मतिर्यस्य तस्य,** तर्कविधा ऊहप्रकारः। **सादिभ्रमे**स्याज्जगद्धेतुताभ्रमस्त्वनादिरिति। नायं तर्कस्तत्र क्रमत इत्यभिप्रेत्याह **सन्तायत** इत्यादि। यस्य ज्ञानं ध्यानादिकमपि शिवं, स परशिवः। **हे परशिवेति** सम्बोधनेन विश्वहेतुत्वविभ्रमनिबन्धनगुणदोषासंस्पर्शं दर्शयति। **त्वयि** विषये अयं प्रकृतो विश्वहेतुत्वालम्बनो, जीवस्याऽयं जैवः। **नैश्वरः।** अनेन कस्याऽयं भ्रम इति न विकल्पावकाश इत्यभिप्रायः। **विभ्रमः, वृत्त्या च** वियदादिविशेषावस्थालम्बनेन, **शक्तिः** विश्वविभ्रमवासनामयी अविद्या। परिशिष्यत इति **परिशेषः।** यस्य विषयतया तस्य भावः तत्ता, **तया।** अविद्यामात्रालम्बनतयेत्यर्थः। अत्राविच्छिन्नसन्तानोपपत्तये एकस्यैव भ्रमस्य शक्तिवृत्तिलक्षणावस्थाद्वयसमुच्चयार्थ **एकश्चकारः।** भ्रमरूपावच्छेद्यसत्तात्मना तस्य तदुभयावस्थत्वोपपादनार्थोंऽपरश्चकारः। सन्तायते, सम्यगविच्छेदेन तायते अनादिकालादनुवर्तते। तत्र च भ्रमेन जीवस्य करणकलेबराद्यपेक्षेति भावः।

अथ कथं भ्रमस्य सादित्वानादित्वव्यवस्था? वियदादिभ्रमोऽपि हि वृत्त्यवस्थस्सादिरेव। शक्तिवृत्तिभ्यां पुनः शुक्तिरजतरज्जुसर्पादिभ्रमोप्यनादिरेव। तस्याऽपि बाधोदयादन्यत्र वृत्तिविलये शक्तिपरिशेषताया दुरपह्नवत्वात्। अन्यथा भूयस्तद्भ्रमोदयानुपपत्तेः। तत्रैवं सति यद्येकत्र भ्रमे जीवस्य करणकलेबरापेक्षा, परत्राऽपि तथैव स्यात्। विशेषाभावादिति चेत्, उच्यते। प्रमाणमूलको भ्रमस्सादिः, अन्योऽनादिरिति व्यवस्था स्यात्। यद्वा, नियतविषयानियतारोप्यकः सादिः, अन्योऽनादिः। एवं सति स्वप्नभ्रमोऽपि सादिस्संगृहीतो भवति। न खल्वात्मनि नियतविषये यथापूर्वस्वप्नारोपस्तथा परत्रापीति नियमः। वियदादिभ्रमस्त्वात्मनि नियतारोप्यक एव। तदनियमे मानाऽभावात्। "धाता यथापूर्वमकल्पयदि"ति च श्रुतिः। अथवा, स्वसमानविषयप्रमाहितसंस्कारमूलो भ्रमस्सादिः। वियदादिभ्रमस्तु न तथा। सति प्रमातर्यबाधितविषयत्वेन, प्रमात्वस्य विषयतत्त्वज्ञानबाध्यत्वेन, भ्रमत्वस्य वा पूर्वोत्तरयोस्समानत्वात्। अथवा, अविद्यातिरिक्तदोषमूलको भ्रमस्सादिः। वियदादिभ्रमस्तु परमात्मविषयजीवाविद्यामूलक एव। अविद्या खल्वात्मसत्तानुबन्धेन स्वात्मानं लभमाना विषयाश्रयविभागमादधानैव लभते। यदाश्रया च सा स जीवः सा च स्वाश्रयेण जीवेन नाज्ञातसती न वा प्रकाशस्वभावाऽऽत्मनि वस्तुसती। किं तर्हि? सौरालोक उलूकादेः तम इवारोप एव। ततश्च यदिदमनादिर्जैवभ्रमसिद्धाज्ञानविषयत्वमात्मनस्सैव तस्य विश्वात्मतावभासशक्तिः।

विश्वहेतुता नाम सेयमेव जैवस्य विश्वहेतुताभ्रमस्य शक्त्यात्मनावस्थानम्। ततो वियदादिविश्व रूपेणावभास एव तस्य वृत्त्यावस्थानमिति शक्तिवृत्तिभ्यां अनादितया सन्तायमाने जीवस्यात्मनि जगद्धेतुताभ्रमेन उक्तकुमतितर्कावकाश इति सिद्धम् ॥ ६१ ॥

**एवमुपपत्ति** विरोधसमाधानेन निर्विकारत्वादिश्रुत्यनुरोधादात्मनो विश्वहेतुत्वं जैवभ्रमसिद्धमित्युपपादितम् । अधुना वियदादिविश्वावभासभ्रमत्वानुरोधादपि तदुपपादनीयं । तद्भ्रमत्वं च वाचारम्भणशास्त्रसिद्धम् । तत्खलु विकारानृतत्वेन कारणस्वरूपसत्यत्वप्रतिपादनपरमित्यन्यत्र प्रपञ्चितम्। तदुपबृंहणं पुराणमपि तद्भ्रमत्वं प्रतिपादयति । अतोऽवश्यं विश्वहेतुत्वमात्मनो जैवभ्रमसिद्धमाश्रयणीयमित्यभिप्रेत्य "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते" इत्यादिवराहचतुःश्लोक्यन्तर्गतं, "ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ॥" इति श्लोकमर्थतोऽनुक्रामति —

ज्ञानस्वरूपमखिलं जगदेतदीश!
त्वादात्म्यतः कुमतयः परमर्थरूपम् ।
पश्यन्ति मोहगहने नियतं भ्रमन्त-
इत्याह शक्तितनयः परवित्पुराणे ॥ ६२ ॥

**अत्राखिलमेतज्जगदित्यनूद्य ज्ञानस्वरूपमिति** विधीयते । ज्ञानमेव स्वरूपं यस्य । न पुनर्नभो नभस्वान् देवो मनुष्य – इत्यादियथादृष्टं तत्तथेति। कथं ज्ञेयस्य ज्ञानस्वरूपत्वमित्याशङ्क्य तत्र हेतुरुच्यते **त्वादात्म्यत इति**। त्वं, "सत्यं ज्ञानमनन्तं ब्रह्म", "प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्" इत्यादौ श्रुतो ज्ञानात्मकः परमात्मैव। आत्मा यस्य तत् त्वदात्म। **त्वदात्मनो भावस्त्वादात्म्यम्**। 'गुणवचने'त्यादिनास्य ष्यञ् प्रत्ययः । तस्मात्त्वदात्मकत्वादित्यर्थः । न खलु परमात्मदर्शने जगदिति किञ्चिद्विधेयं निषेध्यं वाऽस्ति । अतो ज्ञानात्मक आत्मैव एतदित्यभिप्रायः यथा श्रुतिः — "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति। एतदात्मकमिदं सर्वमित्युक्ते माभूदात्मात्मीयत्वभ्रम इति। आत्ममात्रपरिशेषो य ऐतदात्म्यमिदं सर्वमिति भावसामानाधिकरण्यनिर्देशः । तदुपपादयितुं 'तत्सत्यं स आत्मेति'। अत्र कश्चित् नायं श्लोकः परविषयः युष्मच्छब्दादर्शनात्। ततश्च ज्ञानस्वरूपमखिलं जगज्जीवलक्षणमित्यनूद्य अर्थस्वरूपं देवमनुष्यादिरूपं **पश्यन्तो भ्राम्यन्त इत्युच्यत** इति वदति। तन्निरासायात्र हे ईशेति सम्बोधनम्। "यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव।

भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः" ॥ इति पूर्वश्लोके "ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर" ॥ इत्युत्तरश्लोके च परविषये सति अकस्मादस्य जीवविषयत्वायोगात्। अन्यथा प्रकृतिपुरुषविवेक एव नास्ति, कुतस्त्वद्दर्शनमिति परस्तुतिव्यवधानप्रसङ्गाच्च। उक्तविधया परविषय एवायमपि श्लोक इत्यभिप्रायः। हन्तैवं! पुनरुक्तिदोषप्रसङ्ग इति चेदुच्यते – यदेतद्दृश्यते मूर्तं तज्ज्ञानात्मकत्वदालम्बनभ्रान्तिज्ञानेन जगद्रूपं पश्यन्तीत्युक्ते कथं जगद्रूपदर्शनं भ्रमः? जगद्रूपभ्रमे वा को दोषः? इत्याशङ्कायामतद्रूपे तद्रूपदर्शनत्वात् भ्रमः, तद्भ्रमे चानर्थ इत्यनेन श्लोकेन अभिधीयत इत्यतो न पुनरुक्तिरित्यभिप्रेत्याह 'कुमतय' इत्यादि। "इदं सर्वं यदयमात्मे"त्यादिसामानाधिकरण्यात् ज्ञानात्मकमेव जगत् कुमतयः परं अविद्यापिहिततत्वदर्शना एवार्थरूपं भूरम्बुतेजः देवो मनुष्य इत्यादिज्ञेयात्मकं पश्यन्ति। अत्र परंशब्देन यत्तत्वदर्शिनामपि परेणात्मीयतया जगद्रूपदर्शनं अभ्रम इत्युच्येत तन्निषेधति – "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादिश्रुतिविरोधान्नैवमित्यभिप्रायः। अर्थरूपदर्शने दोषमाह मोहगहन इत्यादिना। अह ममाभिमानलक्षणा अविद्या मोहः स एव गहनमिव गहनं, तत्प्रविष्टानां सदध्वविभ्रंशवशात्, तस्मिन् नियतं नित्यं भ्रमन्तः भ्रमिष्यन्तः अर्थरूपभ्रमस्य च निरुक्तमोहगहनभ्रमणस्य च कार्यकारणभावेऽपि दुर्लक्षव्यवहितया, वर्तमानसामीप्ये वर्तमानवद्व्यपदेशः। अत एव पुराणेऽपि पश्यन्तो भ्राम्यन्त इति तुल्यकालवद्व्यपदेशः। इति **शब्देन** उक्तार्थविषयमुदाहृतश्लोकमवमृशति। **शक्तितनयः** पाराशरः, तस्य देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानिति पुलस्त्यवरप्रदानानुसारणाय **परविदिति** विशेषणम्। तच्च तद्वचनस्यानतिक्रमणीयत्वाय पुराण आहेति **पुराणग्रहणं** "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदोमामयं प्रतरेदि"ति ॥ इति स्मृतिदर्शनादनेन वचनेन जगत्कारणश्रुतेर्भ्रमसिद्धविपयत्वनिर्णयो युक्त इति सूचयति। अत्र ज्ञानस्वरूपमिति प्रतीकेन "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम्" ॥ इति नमस्कारसप्तश्लोक्यन्तर्गतश्लोकमप्यनुसारयति। अर्थस्य पारम्यं स्वावधिभूतार्थान्तरशून्यत्वम्। यस्य तु तादृशमर्थान्तरं यथारोप्यस्य विषयः, यथा वा विकारस्य परिणामी सोऽपरमार्थः तद्वैपरीत्येन परमार्थतो अत्यन्तनिर्मलं – संशयविपर्ययादयो ज्ञानस्य मलाः – तेभ्यो निर्गतं निर्मलम्। आर्षमपि ज्ञानं तथेत्यन्तविशेषणम्। असम्यग्ज्ञानपूर्वकत्वं तस्यापि मल इति तद्व्यावृत्तिः तेन ज्ञातृज्ञेयानुषङ्गादिव्यावर्तनेन निर्विशेषमुपलक्षयति। तादृशं ज्ञानस्य स्वरूपमिति वस्तुगतिरुक्ता। ज्ञातृज्ञेयानुषङ्गादिनिश्शेषमलदूरपारं नित्यं सिद्धं ज्ञानमेव परमार्थ इत्यर्थः तं तथाभूतमेव सन्तं परमार्थशब्दापेक्षया पुँल्लिङ्गनिर्देशः। अत्र एवकारेण भ्रमादन्यथाभावेऽपि स्वरूपाप्रच्युतिं दर्शयति। कारणान्तरं वा व्यावर्तयति। भ्रान्तिदर्शनतः

अतस्मिंस्तदारोपरूपेण भ्रमज्ञानेन तु स्वयं परिणामेनेत्यर्थः । अर्थानामव्ययमाणानामव्यक्तादीनां स्वरूपेण यथादृश्यपृथग्रूपेण स्थितं विष्णुं प्रणम्य कथयामि यथापृष्टं दक्षाद्यैरिति पुराणेऽन्वयः। अत्र भ्रान्तिदर्शनतोऽर्थस्वरूपेणस्थितमिति वस्तुविशेषणात् ज्ञानात्मन एव परमात्मनोऽविद्ययाऽर्थात्मना अन्यथाभावः नत्वन्योपादेयस्यार्थस्यात्मन्यारोपमात्रमिति दर्शयति । अत्रैवमात्मनो जगत्कारणत्वस्य भ्रमसिद्धत्वकण्ठोक्त्या परत्रापि अखिलं जगज्ज्ञानस्वरूपमिति जगद्रूपबाधेन ज्ञानात्मकत्वाभिधानात् अबुद्धयोऽर्थस्वरूपं पश्यन्त — इति जगतो जगद्रूपदर्शनस्य भ्रमत्वाभिधानाच्च । अर्थाज्ज्ञानात्मन एव परमात्मनो जगत्कारणत्वं भ्रमसिद्धमित्युक्तं भवति । अत्र परोत्प्रेक्षितप्रमेयस्य यथानपेक्ष्यत्वं **तथा प्रपञ्चितं सिद्धान्तसिद्धाञ्जने** । तत्रैवावधेयमिति ॥ ६२ ॥

अथ यद्येवमनादिजीवभ्रमसिद्धाविद्याविषयतया तदीयवियदाद्यारोपाधिष्ठानतैव परमात्मनो जगत्कारणत्वमिति, तज्जीवभ्रमसिद्धमित्युच्येत, कथं तर्हि तस्य "सोऽकामयत, असृजत, तदैक्षता-सृजते"ति कामेक्षणादिपूर्वकमेव जगत्स्रष्टृत्ववाद इत्याशङ्क्य तदन्यथासिद्ध्या परिहरति —

कामेक्षणादिकथनं तव विश्वसृष्टौ
सन्दृष्टचेतनदृशा सदृशोपचारः ।
सर्वप्रपञ्चसमवायितया निदाने
मैवं त्वयीश ! जनि चेतनतापवादः ॥ ६३ ॥

"मातापितृसहस्रेभ्योऽप्यभ्यर्हिततमा श्रुतिः । बोधयन्ती परं श्रेयो बोध्यबुध्यनुरोधिनी" ॥ जीवश्च स्वभ्रमसिद्धमेव जगल्लौकिककार्यनिदर्शनेन सोपादानं सकर्तृकं च मन्यते । तं च यत्तदुपादानं यश्च स कर्ता स त्वं परमात्मेति प्रतिपादयितुं प्रवृत्तायाः — श्रुतेः, **विश्वसृष्टौ**, निमित्ते । **तव** परमात्मनः । सोऽकामयतेत्यादौ **कामेक्षणादिकथनं, सन्दृष्टचेतनदृशा** — सम्यगसन्देहविपर्ययं दृष्टः, घटादिसृष्टौ कामादिमत्वेन बोध्येनाधिगतः । चेतनः लौकिककर्ता । कुलालादिः । तादृशा तन्निदर्शनेन । अथवा, उक्तविधया सन्दृष्टश्चेतनः, येन बोध्येन स तथा । तस्य दृशा तद्बुध्य-नुरोधेनेत्यर्थः । सदृशोपचारः, सदृशः कर्तुरनुरूपः "आकारसदृशप्रज्ञः" इत्यादावनुरूपेऽपि सदृशव्यवहारादुपचारः । आरोपमात्रो निर्देशइत्यर्थः । एवं हि तद्भावितबोध्यबुद्धिमारोहेत् । न तु वस्तुनिर्देशः । परमात्मनः कामेक्षणाद्यनुपपत्तेः हिताहिताप्तिहानिसाधनविषयो हि कामः । न च परमात्मनो हितमहितं वाऽस्ति । ईक्षणं च तस्य नेक्षणीयभावे सम्भवति । न च विश्वसंस्कारमयी मायैवेक्षणीयाऽस्तीति शङ्क्यम् । अविद्यैव सेति तस्या अपि

परमात्मनि जैवारोपरूपत्वेन सर्वत्रैवारोपे विषयकौटस्थ्यात्। अधिष्ठानात्मनश्चैतन्यादारोपितेऽपि स्यादीक्षणमिति चेन्न, चेतनेऽपि मनुष्ये तिरश्चि वा देवताद्यारोपे तस्य तदप्रत्ययादिति दिक्। तस्मात्परमात्मनः कामेक्षणादिकथनमुपचार इत्युपपन्नम्। प्रयोजनान्तरमिदमन्यदीयारेपानुरोधेन वेदस्योच्यते यदि, कामेक्षणादिपूर्वकं परमात्मनो जगत्स्रष्टृत्वं नोच्येत। बोध्यस्यान्यदुपादानमस्य जगतोऽचेतनं अन्यस्स्रष्टा तटस्थश्चेतनः इति भेदभ्रमस्स्यात्। तस्य लोकदृष्ट्या तथाभावितबुद्धित्वात् समाऽभूदिति तदुपचार इत्यभिप्रेत्याह **सर्वेत्यादि** एवमात्मनः कामेक्षणाद्युपचारमाश्रित्योपदेशे। **सर्वस्य प्रपञ्चस्य समवायः**, स अभेदेन विषयतादात्म्येन अवधृतः। अतो यः आत्मालाभः सोऽस्याऽस्तीति सर्वप्रपञ्चसमवायी। अथवा, सर्वस्मिन् प्रपञ्चे समवैति तदात्मतयाऽनुगच्छतीति तथा। सत्तानुविद्धं हि सर्वं जगदवभासते।तत्तया हेतुना। **निदाने** आदिकारणे। अत्र आन्त्यादारोपादात्मैवाधिष्ठानमिति दर्शयितुं सर्वग्रहणम्। आदिकारणवाचि निदानशब्दोपादानादान्तरालिककारणानुमत्या आरोपेऽप्याकाशादिकार्यक्रमानुमतिः सूच्यते। यथा रज्जौ तावदहन्यारोपाः, तमपेक्ष्य पुनरुत्कृणत्वारोपः, तमपेक्ष्य तत्रैव भीषणत्वाद्यारोपः एवमत्रापि तथाऽनादिप्रवृत्तभ्रमसंस्कारवशादाकाशादिक्रमारोपस्स्यादपीत्यभिप्रायः। **त्वयि** परमात्मनीति। परमार्थतः जगन्निदानं परमात्मेति सिद्धे चेतनतापवादशङ्काऽयोगात्। **चेतनतापवादः**, जडमेव प्रधानं जगदुपादानं **नात्मेत्येवंरूपो मा जनि** न जायते। जनेर्माङि लुङि दीपजनेत्यादिना च्लेश्चिणि। "तदैक्षत बहुस्यां प्रजायेयेति", सोऽकामयत बहुस्यां प्रजायेयेति", तथैव "प्रजन्य ब्रह्मभवच्च यद्वस्तु सत्य"मित्युपदिष्टजगन्निमित्तोपादानभेदभ्रमव्यावृत्त्या बोध्यस्य सर्वात्मा परमात्मोपदिष्टो भवतीति तात्पर्यार्थः।

अथ कामेक्षणाद्युपचारः प्रधानस्यैव किं न स्यात्? कुतो जगन्निदाने चेतनतानपवादः? इत्याशङ्कानिरासार्थमत्र ईशेति सम्बोधनम्। ईशनमीक्षणं कामो वा। लोके नाचेतनस्य दृष्टमिति चेतनात्मन्येव तदारोपकल्पनमुचितम्। न च चेतनत्वमारोप्य तत्रैवेक्षणाद्यरोपः स्यादिति शंक्यम्। सत एव चेतनात्मनस्तदारोपसम्भवे कल्पनागौरवादित्यभिप्रायः ॥ ६३ ॥

एवं तावज्जैवारोपाधिष्ठानतया जगदुपादानस्य कामेक्षणादिकथनं अचेतनव्यावृत्तिप्रतिपत्तिपरमित्युक्तम्। तदयुक्तम्। अन्यदुच्यते, अन्यत् प्रतिपद्यत इति हि विप्रतिषिद्धं न खल्विदं, "गच्छ गच्छसि चेत्कान्ते"त्यादिवत् ध्वनिप्रधानं काव्यं। अपौरुषेये तु वेदे यथावचनमर्थप्रतिपत्तिर्युक्ता। न विधौ परश्शब्दार्थ इति हि नीतिविदः। यदि तदैक्षतेत्यादिना विश्वहेतोरीक्षणादिप्रतिपत्तावर्थादचेतनत्वव्युदासः प्रतिपद्येत, प्रतिपाद्यतां नाम न तु स एव तस्य विवक्षितोऽर्थः। शब्दवृत्तिविरोधात्। अतो विश्वहेतुत्वारोपपक्षे तदैक्षतासृजतेत्याद्यनुपपत्तिरेवेत्याशङ्कामार्षवचननिदर्शनेन परिहरन्नुक्तमेवार्थं उपपादयति —

सीतापतिव्रतमिवातिगुणं हनूमान्
माहात्म्यवर्णनिकयैव दशाननस्य ।
ईश ! प्रधान ; न ; जगज्जनिहेतुभावं
कामेक्षणादिकथया तव वक्ति वेदः ॥ ६४ ॥

रामायणे तावदाख्यायते — "कथं दृष्टा त्वया सीता कथं वा तत्र वर्तते । तस्यां वा स कथंवृत्तः क्रूरकर्मा निशाचरः ॥ यथार्थं तत्र वक्तव्यो गतैरस्माभिराप्तवान् । रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः" ॥ इति सीतापातिव्रत्यस्खलितशङ्कया पृच्छतो जाम्बवत्प्रमुखान्वली-मुखान् प्रति हनूमान् दशाननस्य, महात्मनो भावः कर्म वा माहात्म्यं तस्य वर्णनैव वर्णनिका प्रशंसा तया । "सर्वथाऽतिप्रवृद्धोऽसौ रावणो राक्षसाधिपः । यस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ नियतस्समुदाचारो भक्तिर्भर्तरि चोत्तमा । यन्न हन्ति दशग्रीवं स महात्मा दशाननः" ॥ इत्यादिकयैव । अतिगुणं, अतिः पूजायां पूजितो गुणो यस्मिन् तदतिगुणम् । यथा इन्द्राण्याः नहुषे "अन्वेषितस्सुशोको मे यदि न ज्ञायते विभो ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते" ॥ इति सोपधो व्यभिचारः । यथा वा दमयन्त्यां ऋतुपर्णे — "ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षति । आस्थास्यति पुनर्भैमी दमयन्तीस्वयंवरम्" ॥ इति सव्याजो व्यभिचारः । तथा नात्र कलङ्कगन्धोपीत्यतिगुणमिति विशेषणम् । ननु "सा तु संवत्सरं कालं मामयाचत भामिनी । प्रतीक्षमाणा भर्तारं राममायतलोचना ॥ तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम्" । इति । रावणवाक्येन सीताया अपि छलव्यभिचारो गम्यते । नैवम् । "सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् । प्रत्युवाच ततस्सीतां भयसन्दर्शनं वचः ॥ शृणु मैथिलि मद्वाक्यं मासा द्वादश भामिनि । प्रतीक्षिष्ये" इति विशेषः । "कालेनानेन नाभ्येषि यदि मां चारुहासिनि ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः" ॥ इति दर्शनात् । परुषवादिन्यास्सीतायाः भयदर्शनहेतोः स्वेनैवोक्तं संवत्सरावधिकरणमवधीरणादप्रत्याख्यातं सीतया । तदवधीरणं च "सा तथोक्ता तु वैदेही विर्भया शोककर्शिता । तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत" इति रावणप्रतिभाषणे तृणान्तरायप्रक्रमलिङ्गादवगम्यते । अतोऽनादरादप्रत्याख्यातमात्रेण सीताया अनुमतत्वभ्रान्त्या कामपारवश्येन तद्याचितवदनुवादात् । न खलु क्वचिदपि तथा सीतायाचितवचनं दृश्यते । इत्यतो युक्तमतिगुणविशेषणम् सीतायाः पत्यौ व्रतं, अव्यभिचरितं तदेकपरत्वं वक्ति ! न तु साक्षात् । सीतापातिव्रत्यशैथिल्यशङ्का तावदत्यन्तानुचिता जाम्बवतः । तत्प्रतिषेधेन सीतापातिव्रत्यवचने च तच्छैथिल्यप्रसङ्गोप्यात्मनो दुरिताय स्यादित्युद्वेगात् रावणमाहात्म्योक्ति-व्याजेनैव तद्वचनमुचितमित्येवकाराभिप्रायः । एवं हनुमानिव वेदः, अत्र ईशेति

परमात्मनि जैवारोपरूपत्वेन सर्वत्रैवारोपे विषयकौटस्थ्यात् । अधिष्ठानात्मनश्चैतन्यादारोपितेऽपि स्यादीक्षणमिति चेन्न, चेतनेऽपि मनुष्ये तिरश्चि वा देवताद्यारोपे तस्य तदप्रत्ययादिति दिक् । तस्मात्परमात्मनः कामेक्षणादिकथनमुपचार इत्युपपन्नम् । प्रयोजनान्तरमिदमन्यदीयारोपानुरोधेन वेदस्योच्यते यदि, कामेक्षणादिपूर्वकं परमात्मनो जगत्स्रष्टृत्वं नोच्येत । बोध्यस्यान्यदुपादानमस्य जगतोऽचेतनं अन्यस्स्रष्टा तटस्थश्चेतनः इति भेदभ्रमस्स्यात् । तस्य लोकदृष्ट्या तथाभावितबुद्धित्वात् समाऽभूदिति तदुपचार इत्यभिप्रेत्याह **सर्वेत्यादि** एवमात्मनः कामेक्षणाद्युपचारमाश्रित्योपदेशे । **सर्वस्य प्रपञ्चस्य समवायः**, स अभेदेन विषयतादात्म्येन अवधृतः । अतो यः आत्मालाभः सोऽस्याऽस्तीति सर्वप्रपञ्चसमवायी । अथवा, सर्वस्मिन् प्रपञ्चे समवैति तदात्मतयाऽनुगच्छतीति तथा । सत्तानुविद्धं हि सर्वं जगदवभासते ।तत्तया हेतुना । **निदाने** आदिकारणे । अत्र आन्त्यादारोपादात्मैवाधिष्ठानमिति दर्शयितुं सर्वग्रहणम् । आदिकारणवाचि निदानशब्दोपादानादान्तरालिककारणानुमत्या आरोपेऽप्याकाशादिकार्यक्रमानुमतिः सूच्यते । यथा रज्जौ तावदहृचारोपाः, तमपेक्ष्य पुनरुरूणत्वारोपः, तमपेक्ष्य तत्रैव भीषणत्वाद्यारोपः एवमत्रापि तथाऽनादिप्रवृत्तभ्रमसंस्कारवशादाकाशादिक्रमारोपस्स्यादपीत्यभिप्रायः । **त्वयि** परमात्मनीति । परमार्थतः जगन्निदानं परमात्मेति सिद्धे चेतनतापवादशङ्काऽयोगात् । **चेतनतापवादः**, जडमेव प्रधानं जगदुपादानं **नात्मेत्येवंरूपो मा जनि** न जायते । जनेर्माङि लुङि दीपजनेत्यादिना च्लेश्चिणि । "तदैक्षत बहुस्यां प्रजायेयेति", सोऽकामयत बहुस्यां प्रजायेयेति", तथैव "प्रजन्य बह्वभवच्च यद्वस्तु सत्व"मित्युपदिष्टजगन्निमित्तोपादानभेदभ्रमव्यावृत्त्या बोध्यस्य सर्वात्मा परमात्मोपदिष्टो भवतीति तात्पर्यार्थः ।

अथ कामेक्षणाद्युपचारः प्रधानस्यैव किं न स्यात् ? कुतो जगन्निदाने चेतनतानपवादः ? इत्याशङ्कानिरासार्थमत्र ईशेति सम्बोधनम् । ईशनमीक्षणं कामो वा । लोके नाचेतनस्य दृष्टमिति चेतनात्मन्येव तदारोपकल्पनमुचितम् । न च चेतनत्वमारोप्य तत्रैवेक्षणाद्यरोपः स्यादिति शंक्यम् । सत एव चेतनात्मनस्तदारोपसम्भवे कल्पनागौरवादित्यभिप्रायः ॥ ६३ ॥

एवं तावज्जैवारोपाधिष्ठानतया जगदुपादानस्य कामेक्षणादिकथनं अचेतनव्यावृत्तिप्रतिपत्तिपरमित्युक्तम् । तदयुक्तम् । अन्यदुच्यते, अन्यत् प्रतिपद्यत इति हि विप्रतिषिद्धं न खल्विदं, "गच्छ गच्छसि चेत्कान्ते"त्यादिवत् ध्वनिप्रधानं काव्यं । अपौरुषेये तु वेदे यथावचनमर्थप्रतिपत्तिर्युक्ता । न विधौ परश्शब्दार्थ इति हि नीतिविदः । यदि तदैक्षतेत्यादिना विश्वहेतोरीक्षणादिप्रतिपत्तावर्थादचेतनत्वव्युदासः प्रतिपद्येत, प्रतिपाद्यतां नाम न तु स एव तस्य विवक्षितोऽर्थः । शब्दवृत्तिविरोधात् । अतो विश्वहेतुत्वारोपपक्षे तदैक्षतासृजतेत्याद्यनुपपत्तिरेवेत्याशङ्कामार्षवचननिदर्शनेन परिहरन्नुक्तमेवार्थं उपपादयति —

सीतापतिव्रतमिवातिगुणं हनूमान्
माहात्म्यवर्णनिकयैव दशाननस्य ।
ईश ! प्रधान ; न ; जगज्जनिहेतुभावं
कामेक्षणादिकथया तव वक्ति वेदः ॥ ६४ ॥

रामायणे तावदाख्यायते — "कथं दृष्टा त्वया सीता कथं वा तत्र वर्तते । तस्यां वा स कथंवृत्तः क्रूरकर्मा निशाचरः ॥ यथार्थं तत्र वक्तव्यो गतैरस्माभिराप्तवान् । रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः" ॥ इति सीतापातिव्रत्यस्खलितशङ्कया पृच्छतो जाम्बवत्प्रमुखान्वलीमुखान् प्रति **हनूमान् दशाननस्य**, महात्मनो भावः कर्म वा **माहात्म्यं** तस्य वर्णनैव **वर्णनिका** प्रशंसा **तया** । "सर्वथाऽतिप्रवृद्धोऽसौ रावणो राक्षसाधिपः । यस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ नियतस्समुदाचारो भक्तिर्भर्तरि चोत्तमा । यन्न हन्ति दशग्रीवं स महात्मा दशाननः" ॥ इत्यादिकयैव । **अतिगुणं**, अतिः पूजायां पूजितो गुणो यस्मिन् तदतिगुणम् । यथा इन्द्राण्याः नहुषे "अन्वेषितस्सुशोको मे यदि न ज्ञायते विभो ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते" ॥ इति सोपधो व्यभिचारः । यथा वा दमयन्त्यां ऋतुपर्णे — "ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षति । आस्थास्यति पुनर्भैमी दमयन्तीस्वयंवरम्" ॥ इति सव्याजो व्यभिचारः । तथा नात्र कलङ्कगन्धोपीत्यतिगुणमिति विशेषणम् । ननु "सा तु संवत्सरं कालं मामयाचत भामिनी । प्रतीक्षमाणा भर्तारं राममायतलोचना ॥ तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम्" । इति । रावणवाक्येन सीताया अपि छलव्यभिचारो गम्यते । नैवम् । "सीताया वचनं श्रुत्वा परुषं रोमहर्षणम् । प्रत्युवाच ततस्सीतां भयसन्दर्शनं वचः ॥ शृणु मैथिलि मद्वाक्यं मासा द्वादश भामिनि । प्रतीक्षिष्ये" इति विशेषः । "कालेनानेन नाभ्येषि यदि मां चारुहासिनि ततस्त्वां प्रातराशार्थं सूदाश्छेत्स्यन्ति लेशशः" ॥ इति दर्शनात् । परुषवादिन्यास्सीतायाः भयदर्शनहेतोः स्वेनैवोक्तं संवत्सरावधिकरणमवधीरणादप्रत्याख्यातं सीतया । तदवधीरणं च "सा तथोक्ता तु वैदेही विर्भया शोककर्शिता । तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत" इति रावणप्रतिभाषणे तृणान्तरायप्रक्रमलिङ्गादवगम्यते । अतोऽनादरादप्रत्याख्यातमात्रेण सीताया अनुमतत्वभ्रान्त्या कामपारवश्येन तद्याचितवदनुवादात् । न खलु कुत्रचिदपि तथा सीतायाचितवचनं दृश्यते । इत्यतो युक्तमतिगुणविशेषणम् **सीतायाः पत्यौ व्रतं**, अव्यभिचरितं तदेकपरत्वं **वक्ति** ! न तु साक्षात् । सीतापातिव्रत्यशैथिल्यशङ्का तावदत्यन्तानुचिता जाम्बवतः । तत्प्रतिषेधेन सीतापातिव्रत्यवचने च तच्छैथिल्यप्रसङ्गोप्यात्मनो दुरिताय स्यादित्युद्वेगात् रावणमाहात्म्योक्तिव्याजेनैव तद्वचनमुचितमित्येवकाराभिप्रायः । एवं हनुमानिव वेदः, अत्र **ईशेति**

स्वानुगतकार्यप्रवृत्त्यनुकूलत्वमात्रं – ईशनं इष्यते तेन नास्तीश्वरः। अचेतनानुगतं तु कार्यं स्वयमेव प्रवर्तेत इति शङ्कमानान् प्रतियोगित्वेन सम्भावयति। तान् प्रति, 'तत्र' जैवारोपरूपविश्वात्मलाभ-हेतुभूतस्य **कामेक्षणादिकथया प्रधानस्य न जगज्जनिहेतुभावस्तथा** तम्। 'अमानोनाः प्रतिषेध' इति निषेधार्थकनसमासोऽयम् गतिकर्मीकृतनैकनीवृतेत्यादिवत्। जगज्जन्मादिहेतुत्वाभाव-मित्यर्थः। नात्र प्रधानसत्वमुपेत्य तस्य जगज्जन्मादि हेतुत्वाभावमात्रं अवबोध्यते। भेदपरिमाणादिना तस्य विश्वहेतुत्वेनैवानुमानात्। किं तर्हि ? कामेक्षणादिकथया जगज्जन्मादिहेतोरजडत्वावगमात् – अर्थात् अचेतं तदेव परिसंख्यायत इत्यभिप्रायः। अत्रापि साक्षात्तन्निषेध्ये तत्प्रसक्तिः शङ्क्येतेति कामेक्षणादिकथयेत्युक्तम्। **तथा च सूत्रं** "ईक्षते-र्नाऽशब्दमि"ति। अत्र ईक्षणादित्यर्थलिङ्गमनिर्दिश्य ईक्षतेरिति धातुग्रहणेन शब्दलिङ्गनिर्देशात् तदर्थविवक्षानाग्रहं दर्शयति। यत्रापि "कामाच्च नानुमानापेक्षा" इत्यादावर्थलिङ्गनिर्देश इव तत्रापि शब्दलिङ्गविवक्षैव गमयितव्या। यथा जैमिनिदर्शने "त्वष्टारं तूपलक्षयेत् पाना"दिति पानशब्दविवक्षा गम्यते। न खलु देवता सोमं पिबत्येव, देवताभ्युपगमवादेऽपि। "न ह वै देवा अश्नन्ति, न पिबन्ती"त्यादिदर्शनात्। देवतानभ्युपगमवादे तु न तराम्। अतस्त्वष्टृ सोमं पिब स्वाहेति पानशब्दमपेक्ष्यैव सिद्धवत् व्यपदेशमात्रम्। पानादिति। अत एव लिङ्गविशेषनिर्देशादनैन्द्राणाममन्त्रत्वमित्यधिकरणे "मन्द्राभिभूतिः केतुर्यज्ञानामि"त्यादिभक्षमन्त्रं 'इन्द्र-पीतस्ये'ति निर्देशात् अनैन्द्रभक्षणेन प्राप्नोतीति शब्दलिङ्गमेवावलम्ब्य पूर्वपक्षः क्रियते। न च तत्रार्थविवक्षा सम्भवति इन्द्रेण सोमस्य पीतत्वाभावात्। तथा च तत्सिद्धान्तसूत्रे सर्वेषां चैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हीत्यत्र भक्त्या अपीतः पीत – इत्युच्यत इत्यर्थविवक्षा दर्शिता। अत एव च वैशेषिकादेरिवास्माकमागमार्थतत्वनिर्णयस्य केवलहेतुनिबन्धन-त्वानिष्टेरर्थसदसद्भावावनपेक्ष्य प्रायेण शब्दलिङ्गमेव शास्त्रे निबध्यमानं दृश्यते। **यथा** – "गौणश्चेन्नात्मशब्दात्", "विकारशब्दान्नेति चेन्न", "अन्तस्तद्धर्मोपदेशात्", "ज्योतिश्चरणाभि-धानात्", "सर्वत्र प्रसिद्धोपदेशात्", अन्तर्याम्यधिदैवादिषु "तद्धर्मव्यपदेशात्", "द्युभ्वाद्यायतन स्वशब्दादि"त्यादि। यद्येवं सति, तत्र तत्रार्थलिङ्गमुपनिबध्यमानं "दहर उत्तरेभ्यः" इत्यादावनुप-पत्तिकलङ्कितं न भवति। तत्र सोऽपि केवलमनुमन्यते, शब्दमूलन्यायादेव शाब्दार्थतत्वनिर्णयोपपत्तेः। तदेवं स्वार्थसत्वमनपेक्ष्य कामेक्षणादिकथया वेदो विश्वहेतोरचेतनत्वव्यावृत्तिमेवावगमयति।

**अयमत्राशयः** — लौकिकस्यापि काव्यस्य स्वार्थासम्भव एवार्थान्तरपरत्वकल्पनेहेतुः। परन्तु तत्र तदसम्भवे कवेरेव तदविवक्षाहेतुरपेक्ष्यते। तथा च वेदोऽपि यस्य शब्दस्य विरोधफलाभावादिभिस्स्वार्थासम्भवः। यथाऽध्यात्मप्रकरणे "द्वा सुपर्णा" –

"अजामेका"मित्यादेः पक्षिविशेषच्छागादिलक्षणस्वार्थासम्भवः । तस्य कथञ्चिदात्मभूतप्रकृत्यादिपरत्वं कल्प्यते । यथा वा "स प्रजापतिरात्मनो वपामुदखिदत्," "सोऽरोदीत्" इत्यादेस्तुपरपशुयागरजतदक्षिणादिस्तुतिनिन्दापरत्वं कल्प्यते । विधेरपि "क्वचिदधर्मन्तर्वेद्यर्धं बहिर्वेदियूपमिनुयादि"त्यादेर्वाक्यभेदादिदोषेण स्वार्थासम्भवे देशविशेषाद्यर्थान्तरपरत्वमुपगम्यते तथा तदैक्षतेत्यादेरपि उक्तरीत्या स्वार्थासम्भवे विश्वहेतोरजडत्वप्रतिपत्तिपरत्वमेवोपगन्तुं न्याय्यमिति ॥ ६४ ॥

**अथाऽपि स्यात्**, यद्येवमीक्षणादिपूर्वकमीशस्य विश्वहेतुत्वमनपेक्ष्यम् । जैवारोप एव तु विश्वमित्युपगम्येत तर्हि कथं "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः, आकाशाद्वायुरित्यादिकार्यक्रमश्रुतिरुपपादनीया ? नह्यारोपे क्रमनियम उपपद्यते । क्वचित्तु रज्जुसर्पाद्यारोपक्रमे हेतुताग्राहकप्रमाणमस्ति नियामकम् । सर्पो हि स्यादुत्फणः उत्फणश्च भीषण इत्यादिदर्शनात् । न चात्र तथा कश्चित् । अतः श्रुतेरन्यो नियमहेतुरस्ति । अत एव श्रुतेः कार्यक्रमनियमावगमे चापूर्वार्थत्वेन तस्या आरोपविषयत्वायोगः । न च तथाऽनादिभ्रमसंस्कारवशादाकाशादिक्रमारोपनियमः मूलप्रमाणाभावेनान्धपरम्परायमाणानादिभ्रमकल्पनायोगात् । तस्मात्कार्यक्रमश्रुतेरर्थवत्वायानुपचरितकामेक्षणादिमानेव परमात्मा विश्वहेतुराश्रयणीय इत्याशङ्कायामुक्तोपपत्तिकोदाहृतस्मृतिबलेनात्मन्याकाशादिप्रपञ्चस्यारोपरूपत्वे सिद्धे तत्क्रमनियमहेतुगवेषणायां, तथाऽनादिभ्रममूल संस्कार एवौचित्यादाक्षिप्यत इति नान्धपरम्परातुल्यत्वम् । अवकाशे वायुः, सम्बाधे वायोरप्रसरे निश्वासनिरोधात् । निर्मथने च वायुनैवाग्निरुद्भवति । उद्भूतेन च तेजसा निदाघे घर्मोदकमुपजायते । सामुद्रं घनोदकं वा घनकठिनतामापद्यते इति दर्शनादाकाशादेरुत्तरोत्तरस्य हेतुत्वसंप्रत्ययेनाश्वासोपपत्तेः । तद्विषया चेयं श्रुतिरारोपक्रमानियमादेव काकतालीयविषया वा ज्ञानपूर्वकत्वनियतक्रमकार्यहेतुभावोपचारेण विश्वहेतोर्जडत्वनिरासपरैवेत्यभिप्रेत्याह —

स्वप्नो यथाऽऽत्मनि तथा विविधः प्रपञ्चः
प्रादुर्भवत्यनियतक्रमकालमेव ।
कालक्रमादि तव शङ्कर ! विश्वसर्गे
कामेक्षणादिमदिशा जडतानिरासः ॥ ६५ ॥

**स्वप्न इति** निद्रोद्भूतवासनामया अर्था लक्ष्यन्ते । स यथा, **निद्राणः आत्मनि अनियतक्रमकालमेव,** नियतो व्यवस्थितः क्रमः आनन्तर्यलक्षणो यस्य स कालस्तथा । तदभावो यथा भवति तथा प्रादुर्भवति । स्वप्ने हि पुत्रपौत्रनप्तृजन्मन्यक्रमो यौगपद्यं दृश्यते ।

व्युत्क्रमश्च । फलपुष्पादिप्ररोहे फलात्पुष्पं, पुष्पात्पल्लवं, पल्लवाच्छाखा, शाखायास्स्कन्धः, स्कन्धान्मूलमिति । युगपदेक एव हस्ती वस्तः तरुः सरिद्गिरिरिति जायते । आरोपरूपत्वात् । तथा परमात्मनि विविधः स्थिरत्रसादिरूपेण नानाप्रकारः प्रपञ्चः, भूतभौतिकात्मकं विश्वम् । अनियतक्रमकालमेव प्रादुर्भवतीत्यनुमिमीमहे । अत एव श्रूयते – "इदँ सर्वमसृजत, यदिदं किञ्च", "तथाऽक्षरात्सम्भवतीह विश्वं" इत्यादिषु, अन्यथाक्रमश्च, "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणोन्मनस्सत्यं लोकाः कर्मसु चामृतम्" ॥ इत्यादिषु । क्वचित्तु, **विश्वसर्गे । कालक्रमादि,** कालक्रमः आकाशादिपौर्वापर्यम् । **आदिशब्देन** स्वातन्त्र्यं गृह्यते । "आकाशाद्वायुः, तत्तेजोऽसृजत"इत्यादौ कथ्यमानम् । अत्र **हे शङ्करेति** सम्बोधनेन कर्मफलदातृत्वमपि श्रूयमाणं **कामेक्षणादि** – समानयोगक्षेममिति सूचयति । **तवेति,** वस्तुतः जगदुपादानभूतस्य । **कामेक्षणादिमदिशा,** अन्नादिमशब्देन कार्यविधालोचनात्मकं तपो गृह्यते । कामेक्षणादिमस्य दिशा, तद्रीत्या । **जडतानिरासः,** यथा कामादि कथ्यमानं जगदुपादानस्य जाड्यनिरासप्रयोजकं तथेदमपीत्यर्थः । तद्वा, कामेक्षणादिमदिशा तन्मार्गेण तदुन्नयनद्वारा जडतानिरासः, उचितकालक्रमेण सर्गः, तत्र स्वातन्त्र्यं च प्रेक्षापूर्वकारिणो हि दृश्यते इति सर्गक्रमादिश्रवणे तद्धेतोः प्रेक्षादिकमुपस्थाप्यते । प्रागुक्तरीत्या तदनुपपत्तौ जाड्यनिरासप्रयोजनकं तत्पर्यवस्यति । न तु सर्गक्रमादिकमेव प्रतिपत्तव्यम् विश्वहेतुत्वेनोपलक्ष्य ब्रह्मात्मतत्वप्रतिपादनपरे वेदान्ते तत्प्रतिपादनप्रयोजनाभावादित्यभिप्रायः ॥ ६५ ॥

एवं प्रपञ्चस्य जैवारोपरूपत्वात्तदुपादानस्य यथाश्रुतसर्गक्रमाद्यनुमतमपीक्षणादिकथनमन्यार्थं, न तु विवक्षितस्वार्थमिति प्रतिपादितम् । तथाविधश्रुतिलिङ्गदर्शनादपि विश्वहेतोरीक्षणादिकमविवक्षितमेवेत्यभिप्रेत्याह —

आर्द्रैधवह्निभवधूमनिदर्शनेन

सर्वस्य देव ! तव निश्वसितत्ववाचा ।

अर्थाऽवबोधनिरपेक्षमिव श्रुतीना-

मीक्षाऽनपेक्षमुदयं जगतस्त्वदेमः ॥ ६६ ॥

वाजसनेयिनस्समामनन्ति — "यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदस्सामवेद" इत्यादि प्रकृत्य सर्वाणि भूयान्यस्यैवैतानि सर्वाणि निश्वसितानीति । अत्र **आर्द्रैधाग्नेरभ्याहितादिति** जीवाविद्याविषयतया परमात्मने

विश्वोपादानत्वयोग्यता निर्दिश्यते। ननु धूमस्याग्निर्निमित्तम्। पृथक्सत्त्वदर्शनात्। न खलूपादानात्पृथक्सत्त्वमुपादेयस्य सम्भवति। पञ्चमी तु न "जनिकर्तुः प्रकृति"रिति। किं तर्हि "ध्रुवमपायेऽपादानमि"ति भविष्यतीति। नैवम्। आप्यावयवानुगतोऽग्निरेव हि धूमो नाम। अत एव तत्रोष्म लभ्यते। अत एव च सन्ततोच्छ्रित एव धूमे क्वचिदाप्यावयवक्षये ज्वालोपलभ्यते। तस्मादपृथक्सत्त्वादग्निरुपादानं धूमस्येति। अग्नेर्धूमा इति प्रकाशाप्रकाशरूपत्वेन विलक्षणयोरप्युपादानोपादेयताविरोधो निर्दिश्यते। "पृथग्धूमा व्युच्चरन्ती"ति कार्यस्वातन्त्र्यव्यपदेशेन विश्वोदयस्याप्रेक्षामूलत्वं निर्दिश्यते। न हि पाकाद्यर्थमभ्याहितादग्नेर्धूमसम्भवः। कस्यचित्प्रेक्षामूल इति अस्यैव निश्वसितानीति च विश्वोदयस्याप्रेक्षामूलत्वमेव निर्दिश्यते। न खलु परमात्मनो निश्वसितान्येव भूतभौतिकानि। अप्राणो हि सः। किन्तु निश्वसितवन्निश्वसितानीत्युच्यते। अत्र किं साधर्म्यम्? अप्रेक्षामूलत्वमेव। निश्वसिता हि निद्राणस्यापि भवतीति। न पुनरीषद्यत्नसाध्यत्वम्। निद्राणस्य तत्र यत्नलेशस्याप्यभावात्। एवं सति निश्वसितेऽकर्तृत्वं यथा तदनुकूलस्थितिमात्रं तथा विश्वकर्तृत्वमपि परमात्मन – इति सूचयितुं अस्य निश्वसितानीति सम्बन्धमात्रव्यपदेशः। वेदसहपाठाच्च। अवश्यं च वेदानामपौरुषेयत्वायार्थावबोधनिरपेक्षमेव परमात्मन उदय एषितव्यः। एवमेव विश्वस्याप्युपकरणोपयोगादिप्रेक्षानपेक्षमुदय इति श्रुतेर्विवक्षितोऽर्थ इति मन्यामहे। तदिदं सर्वमभिप्रेत्याह आर्द्रेत्यादि। आर्द्रैधेषु अश्वत्थसमित्सु। अभ्याहितो वह्निः तथा तस्माद्भवतीति आर्द्रैधवह्निभवः। तादृशधूमनिदर्शनेन सर्वस्य शब्दार्थरूपस्य क्रियाकारकफलात्मकस्य भूतभौतिकस्य विश्वस्य। तव निश्वसितत्ववाचा, तव जीवाविदितसतत्वस्य परमात्मनो अस्यैव निश्वसितानीतिवचनेन च ईक्षायामपेक्षाभावो यथा भवति तथा। जगतः, त्वत् त्वत्तः। उदयं एमः, जानीमः, इति सम्बन्धः। अत्रानुरूपं सम्बोधनं देवेति। दीव्यति स्वमहिम्नि, द्योतते केवलम्। न तु चिकीर्षितं किञ्चिदीक्षत इति। अग्नेरिति निदर्शनापेक्षया परमात्मनो विश्वोपादानत्वसिद्धिमभिप्रेत्य त्वदिति निर्देशः। अत्र दृष्टान्तमाह-अर्थावबोधनिरपेक्षं श्रुतीनामुदयमिवेति। यद्यप्युदयहेतुनाऽत्रापि ज्ञानानपेक्षत्वं गमनीयं तथाप्यपौरुषेयत्वाय वेदस्यार्थावबोधनिरपेक्षोदयत्वमन्यतोऽपि सिद्धमिति, युक्तं दृष्टान्तयितुमित्यभिप्रायः। तदेवमविवक्षितासिद्धस्यैव कामेक्षणादेः कुलालादिनिदर्शनेन विश्वकर्तारमनुमिमानस्य बोध्यस्यारोपमालम्ब्य प्रवृत्ताः कामेक्षणादिवादाः अन्यपरा एवेति स्थितम् ॥ ६६ ॥

स्यादेतत्। न तावन्निर्विषयारोपमात्रालम्बन एव कामेक्षणादिवादः। "सोऽकामयत, तदैक्षते"त्यादिवस्तुवादस्वरसत्वात्। अथाप्यारोप्यकामाद्यालम्बनस्स्यात्। एवमपि तर्हि पौरुषेयो वेदस्स्यात्। पुरुषबुद्धिहर्च्यारोप इति शङ्कां परिहरन्नाह —

वर्णाश्रमायुरभिमानमयीमविद्या-
मालम्बते सदिव चेतनचोदनायाम् ।
एवं त्वयीशनविकल्पमयीमविद्या-
मालम्ब्य बोधयति चेतनमीश्वरं त्वाम् ॥ ६७ ॥

अस्ति तावद्वर्णाश्रयो विधिः, "ब्राह्मणो यजेते"त्यादिः । निषेधश्च "मद्यं ब्राह्मणो वर्जयेदि"त्यादिः । अस्ति चाश्रमाश्रयः । "ब्रह्मचार्यधीयीत," "न ब्रह्मचार्यवकिरेदि"त्यादिः । अस्ति चायुराश्रयः, "जातपुत्रः कृष्णकेशोऽग्नीनादधीत," "न जीर्णोऽपथ्यमश्नीयादि"त्यादिः । वर्णायुराश्रयश्च – "अष्टवर्षं ब्राह्मणमुपनयीते"त्यादिः । वर्णाश्रमाश्रयश्च – पालाशोदण्डो ब्राह्मणस्येत्यादिः । एवंप्रकारा सर्वाऽपि चेतनाचेतनचोदनायां, चेतनस्य प्रवर्तनायामुपलक्षणमेतत् निवर्तनायां च । अथवा, निषेध्याभावविषया प्रवर्तनैव निषेधार्थ इति मते नेदमुक्तम् । यद्वा, विधिनिषेधवचनवाचिना चोदनाशब्देन प्रवर्तनानिवर्तने लक्ष्येते । अत्र देहातिरिक्तः पारलौकिकः आत्मैव विधिनिषेधयोः अधिक्रियत इति चेतनग्रहणम् । तच्च तस्मिन्वर्णाश्रमाद्यभाविकत्वसूचनाय, वर्णः ब्राह्मणत्वादिः आश्रमः ब्रह्मचार्यादिः, आयुरष्टवर्षादिः तद्विषयोऽभिमानः । चेतनस्य ब्राह्मणोऽहमि त्याद्यहंमतिः, तन्मयीं तदात्मिकां, अविद्यां, अतस्मिंस्तद्बुद्धिलक्षणां वर्णाद्यारोपमित्यर्थः । सदिव, सदित्यव्ययम् । तथ्यार्थे आरोपितमेव वर्णादिकं सदिव कृत्वा । आलम्बते अधिकारि विशेषणसमर्पणायोप-जीवतीत्यर्थः । यथैषा कर्मचोदना, एवं त्वयि परमात्मनि केवले । ईशनस्य, ईक्षणसङ्कल्पादिपूर्वकनि-यन्तृत्वलक्षणस्य । विकल्पः विशेषेण कल्पनं वस्तुस्वभावमनपेक्ष्य स्वयमध्याहारः । स चायं सुदृढः फलसिद्धयेऽपि स्यात् । प्रतिमादाविव विष्णुत्वविकल्प इति सूचयितुं विशब्दोपादानम् । तन्मयी-मविद्यां, जगत्सेश्वरम्, अस्वाधीनसदसत्प्रवृत्तिकत्वात्, दासदारुयन्त्रादिवत् इत्याद्यनादिजैवभ्रमसंस्कार-हेतुकारोपमित्यर्थः । आलम्ब्य, आश्रित्य उपजीव्य । त्वां, केवलज्ञानसत्तामात्रमेव । चेतनं, ज्ञातारं । ईश्वरं, नियन्तारं च । बोधयति, एष सर्वज्ञ एष सर्वेश्वर एषान्तर्यामीत्यादिः ।

इदमत्राकूतम् — वर्णो नाम ब्राह्मणत्वादिर्देहभेदानुगतो गोत्वादिरिव जातिभेदः । आश्रमो नाम गुरुकुलदारसङ्ग्रहादिनियमो देहानुविद्ध एव । आयुर्देहस्यैव कालपरिच्छेदः । एवमवस्थाभेदोऽपि योज्यः । "गामयावी स्यात्, तस्मा एतामिष्टिं निर्वपेत्, मृत्योर्बिभीयात्, स प्राजापत्यां शतकृष्णलां निर्वपे"दित्यादिश्रुतो देहधर्म एवेत्यविवादम् । देहातिरिक्तश्च चेतन आत्मा कर्मणां कर्ता पारलौकिकतत्फलस्य भोक्ता चेति सकलवैदिकसम्प्रतिपन्नम् । तदुभयसामानाधि-

करण्येन च, "ब्राह्मणो यजेते"त्यादिविधिनिषेधनिर्देशा दृश्यन्ते। ते च बोध्यपुरुषारोपालम्बना एवेत्यवश्यमुपगन्तव्यम्। न चैतावता तेषां पौरुषेयत्वम्। किं कारणम्? अनादिसिद्धपरकीयारोपविषयत्वात्। परकीयारोपमनपेक्ष्याऽपि क्वचिदचेतने चेतनवद्व्यपदेशा दृश्यन्ते। "ओषधे त्रायस्वैनं स्वधिते, मैनं हिंसीरि"त्यादयः। तत्र वेदविवक्षैव तादृशीत्यवश्यमुपेत्यम्। एवं परमात्मन्यपि विश्वकारणे लोकदृष्टनिदर्शनमूलानादिभ्रमसंस्कारहेतुकं जैवमेव कामेक्षणादिमानस्य कर्ता नियन्ता चेत्यारोपमपेक्ष्य वा अनादिसिद्धतथारूपस्वविवक्षयैव वा कामेक्षणादिवादाः ईश्वरत्वादिवादाश्च प्रवृत्ता इति न वेदस्य पौरुषेयत्वापत्तिरिति।

अत्र कश्चित्सौगतसङ्गतमतिः सर्वत्रैवानुगतसमान्यात्मतामपह्नुवानो वक्ति न ब्राह्मणत्वादयो जातिभेदाः, ते हि न संस्थानभेदाभिव्यंग्याः। करचरणादिसंस्थानभेदस्य सर्ववर्णसाधारणत्वात्। नापि विशिष्टमातापितृजन्यत्वाभिव्यंग्याः ब्राह्मणोमुखबाहूरुपज्जेषु ऋश्यशृङ्गविश्वामित्रवीतहव्यादिषु च तदभावेऽपि ब्राह्मणत्वाद्यधिगमात्। अपि च ब्राह्मणत्वादिर्न मनुष्यत्वादिव्यापकजातिः, न व्याप्यजातिः। "ब्रह्म बृहस्पतिः ब्रह्माग्निः क्षत्रमिन्द्रः मरुतो वै देवानां विशः" इत्यादिषु देवानामपि तद्दर्शनात्। किन्त्वदृष्टविशेषा एव ब्राह्मणत्वादय इति अत्रोच्यते। अदृष्टविशेषस्यातीन्द्रियतया "ब्राह्मणो यजेते"त्यादौ अधिकाराप्रतिपत्तिप्रसङ्गः। अथ कथञ्चिज्ज्ञायेत, तज्ज्ञापकं यत् क्वचिद्ब्रह्ममुखजत्वादि, क्वचिद्विशिष्टयोनिजत्वं, क्वचिदन्यदिति तदेवास्तु ब्राह्मणत्वादि। अदृष्टविशेषस्याप्यननुगमाविशेषात्। अपि चायमदृष्टविशेष आधेयः सहजो वा स्यात्। आद्ये, "जायमानो वै ब्राह्मणः त्रिभि ऋणवा जायते", "अष्टवर्षं ब्राह्मणमुपनयीते"त्यादिविरोधः। सहजत्वे, विश्वामित्रत्वादेर्ब्राह्मणत्वाद्यनुपपत्तिः। क्वचित् सहजं, क्वचिदाधेयमिति चेत् तर्हि विवेक्तव्यं किंप्रयुक्तं सहजं, किंप्रयुक्तमाधेयमिति?। तत्रापि नैकं सुलभं प्रयोजकम्। तत्रैवं सति ब्राह्मणत्वादिजातिव्यञ्जकमेवाननुगतमस्तु। अत एव "विद्या तपश्च योनिश्चेत्येतद्ब्राह्मणकारणम्! विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः"॥ इति जात्या ब्राह्मण इत्युच्यते। नन्वाधेये सहजे चादृष्टविशेषविद्यातपश्चयोनिश्चेतिप्रयोजकभेद उच्यते। न। जातिब्राह्मण — एव सः, न सद्ब्राह्मण इति निन्दापरत्वेन पूर्वस्य प्रशंसामात्रपरत्वात्। अन्यथा प्रयोजकान्तराभावे प्रयोजकान्तरनिबन्धनब्राह्मणत्वस्य सिद्धत्वेन तद्वचनानर्थ्यात्। ते च ब्राह्मणत्वादयो मनुष्यत्वव्याप्यजातय एव। ब्राह्मणत्वाद्यधिगमे लोके देवमनुष्यत्वादिसंशयाभावात् लोकव्यवहारश्च नः प्रमाणमर्थनिर्णये। यत्तु "ब्रह्म बृहस्पतिरि"त्याद्यर्थवादोदाहरणं तद्ब्राह्मणादिकर्मपौरोहित्याद्याश्रयणात् ब्राह्मणाद्यनुग्रहणाद्वा गौणमेव। यथा श्रूयते "आग्नेयो वै ब्राह्मणो देवतया ऐन्द्रो राजन्यः मारुतो वैश्य" इत्यादि। अन्यथाऽत्रैव ब्राह्मणादिशब्दवृत्तिसंकोचकल्पनागौरवप्रसङ्गात्। अग्न्यादेरपि ब्राह्मणादित्वेन तस्यैवाग्नेयत्वाद्यसंभवात्। अथ यद्येवं ब्राह्मणत्वादयो जातिभेदा एव, कथं तर्हि

विश्वामित्रवीतहव्यादेरागन्तुकं ब्राह्मणत्वं ? कथं च "योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥" इत्यन्तराले शूद्रत्वगतिवचनम् ? कथं च "ब्राह्मण्यादेव हीयत" – इति प्रतिषिद्धकारिणस्तद्धानिवचनम् ? न हि जातिरागमापायवती भवति, गोत्वादावदर्शनादिति । उच्यते – तेन तेन हेतुविशेषेण नन्दिनहुषादेरिव विश्वामित्रादेरपि जात्यन्तरावच्छेद्यदेहान्तरपरिणाम एवेष्यते । यथाहुर्योगाः – "जात्यन्तरपरिणामः प्रकृत्या पूरादि"ति । अतो न सत्यामेव व्यक्तौ जात्यागमापायानुपपत्तिशङ्काऽवकाशः । अथ कथमेवं सति को ब्राह्मण इति नहुषप्रश्ने "सत्यं दानं क्षमा शीलमानृशंस्यं दमोऽघृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः" ॥ इति युधिष्ठिरेण लक्षिते शूद्रे चैतद्दृश्यते, ब्राह्मणे चैतन्न दृश्यत इति तल्लक्षणत्वायोगे शङ्किते, "शूद्रे चेद्दृश्यते लक्ष्म द्विजे चैतन्न दृश्यते । न वै शूद्रो भवेच्छूद्रः ब्राह्मणो नैव ब्राह्मणः" ॥ इति जातिमनपेक्ष्य ब्राह्मणत्वनिर्धारणम् । उच्यते — न तत्र जातेरनपेक्षैव विवक्षिता शूद्रे चेद्दृश्यते ब्राह्मणे च न दृश्यत इति निर्देशनिरालम्बनत्वायोगात् । किन्तु योनिबीजाऽव्यवस्थानात् संस्थानादिसाधारण्याच्च । दुर्ज्ञाना जातिरिति लक्षणतः सद्ब्राह्मणो ज्ञातव्य इत्युच्यते । तथा च तेनैव दर्शितम् – "जातिरत्र महासर्प मनुष्यत्वे महामते सङ्करात्सर्ववर्णानां दुष्परीक्षेति मे मतिः" ॥ इति तथा च लिङ्गं नैतदब्राह्मणो विवक्तुमर्हति । "न सत्यादगा" इति । "न सत्यादगा" इति जाबालं प्रति गौतमवचनम् । अब्राह्मणस्य हि असत्यादि भवति यथाऽऽह मनुः – अनृतं चातिवादश्च पैशुन्यमतिलोभता । निकृतिश्चाभिमानश्च जन्मतश्शूद्रमाविशत्" ॥ इति । त्वं तु न सत्यादगाः, अतो ब्राह्मण एवासीत्यभिप्रायः । तथा च सत्यादिभावे शूद्रो न शूद्रः, ब्राह्मणवत्प्रशस्य इत्यर्थः । तदभावे ब्राह्मणो न ब्राह्मणः, अब्राह्मणवदप्रशस्य इत्यर्थः । "विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः" इति हि दर्शितम् । अथैवं शूद्रः शूद्रत्वेनाभिमन्यमानः सत्यादिभावे न शूद्रः किन्तु ब्राह्मण एव । तथा ब्राह्मणो ब्राह्मणत्वेनाभिमन्यमानः सत्याद्यभावे न ब्राह्मणः, किन्तु शूद्र एवेत्यर्थविवक्षा किं न स्यात् ? अनुवादे निषेधे वा व्यवधारणकल्पनाविशेषाभावात् । नरादियोनौ वानरादेरिव, शूद्रादियोनौ ब्राह्मणादिजन्मविरोधाच्च । परन्तु योनिबीजादिनिबन्धनात्तत्तदभिमानादेव संस्कार्यत्वार्त्विजीनत्वतदभावादिव्यवस्था स्यात् । पश्चात्तल्लक्षणज्ञस्य कथञ्चिद्ब्राम्हणत्वाभिमानेऽपि योनिबीजादिनिबन्धनविपरीताभिमानस्य प्रबलतया तदनादर एव । अत एव सत्यादिसर्वगुणोपेतस्यापि विदुरस्य योनिनिबन्धनशूद्रत्वाभिमानप्राबल्यात् अध्यात्मविद्योपदेशानधिकारः स्वयमेव दर्शितः । "शूद्रयोनावहं जातोऽन्यद्वक्तुमुत्सहे" । इति । नैवं निरालम्बनब्राम्हणत्वायोगात् । न च योनिबीजादिसम्बन्धभेद एव तदालम्बनं अनुगताभिमानस्याननुगततदालम्बनत्वायोगात् । जातिभेदानाश्रयेण च योनिबीजादिव्यवस्थाया एव दुरधिगमत्वाच्च । तथा च यत्त्र योनिबीजादिनिबन्धनं किञ्चिदालम्बनं, तदेव

ब्राह्मणत्वादिकमस्तीति नाऽनुवादे लक्षणकल्पना युक्ता। किन्तु निषेध एव। धृष्टद्युम्नादेश्च क्षत्रियजातिपित्रादिकर्मवशेन योनिबीजादिसम्बन्धाभावेऽपि जातिभेदाद्यवच्छेद्यदेहपरिणाम उपगम्यते। कथं पुनरेवं ब्राह्मणत्वादेर्जातित्वे ब्राह्मण्यादेव हीयते, जातिभ्रंशकरं हि तदित्याद्युच्यते? सुरापानाद्ब्राह्मणो जात्युचित विहितकर्मणो हीयत इत्यर्थः। अन्यथा, ब्राह्मणत्वादेरदृष्टविशेषत्वे तत्प्रायश्चित्तेन ब्राह्मणत्वादिहानिकरदुरितनिवृत्तिः पुनस्तददृष्टविशेषोपजनश्चेति फलद्वयकल्पनागौरवप्रसङ्गात्। जाति-भ्रंशकरमिति च प्रकीर्णकपापभेदसंज्ञामात्रम्। अथवा जात्युचितकर्मभ्रंशकरमित्येवार्थः। अन्यथा उक्तदोषादेव तत्सिद्धं ब्राह्मणत्वादयो देहभेदानुगता जातिभेदा एवेति। अथाप्यदृष्टविशेषा एव स्युः। तथाऽपि ते देहभेदसमवायिन एव। वैधेयानामपि देहभेद एव ब्राह्मणत्वादिव्यवहारात्। आयुरादयश्च देहभेदा एवेत्यविवादम्।

**अथापि स्यात्।** न भ्रमो न देहधर्मा ब्राह्मणत्वादय इति, तथापि न तेषामात्मन्यारोपः। नीलत्वादेरिवोत्पलादौ। नीलमुत्पलं, अहं ब्राह्मणः इत्यादिसामानाधिकरण्यप्रत्ययस्याविशेषात्। साक्षात्परम्परौदासीन्येन सम्बन्धसामान्यप्रत्ययस्य बाधकाभावे भ्रान्तित्वायोगात्। दृश्यते च "वेद्यां हवींष्यासादयती"ति सम्बन्धसामान्यप्रत्ययः। तद्विषयं च "ब्राह्मणो यजेते"त्यादिनारोप-विषयमिति चेन्न, सम्बन्धप्रत्ययस्य साक्षात्सम्बन्धविषयताया औत्सर्गिकत्वात्। अन्यथा, "औदुम्बरीं स्पृष्ट्वोद्गायती"त्यदेरपि कारकसम्बन्धविषयत्वोक्तगतिसम्भवेन सर्ववेष्टनस्मृतिरप्रमाणं न स्यात्। विरोधाभावात्। "वेद्यां हवींष्यासादयती"त्यादौ च बर्हिषि हवींष्यासादयतीत्याद्यवगतबर्हिरन्तर्भा-व्यैव हविर्वेदिसम्बन्धप्रत्ययोपगमाच्च सम्बन्धसामान्यप्रत्यय उदाहरणम्। नीलमुत्पलमित्यादावपि गुणसम्बन्धप्रत्यय एव गुणगुण्यभेदभ्रममूलो गुणगतजातिरूपभेदारोप एव वा 'रक्तः पट' इत्यादिवत् गुणगुण्यपृथक्सिद्ध्या तु व्यवहार एव केवलं प्रतायते। तस्मात्सम्बन्धसामान्यप्रत्यय उदाहरणम्। अपि चैवं भ्रमोच्छेदापत्तिः, इदं रजतमित्यादौ सर्वत्रैव साक्षात्परम्परौदासीन्येन सम्बन्धसामान्यविषयत्वसम्भवात्। तस्य चाबाधात्। तथा च "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।" "तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम्"॥ इत्यादिस्मृतिविरोधः। देवोऽहं, मनुष्योऽहमित्याद्यर्थ-स्वरूपदर्शनस्य देवत्वादेरात्मनि सम्बन्धसामान्यालम्बनत्वे भ्रमत्वायोगात्। वस्तुतस्सात्मके देहे देवाद्याकारमात्रदर्शनं भ्रम इति चेन्न, वृक्षादौ पार्थिवत्वाद्याकारान्तराग्रहणेन वृक्षत्वादिग्रहणवदाकारान्तरा-ग्रहणेनाकारान्तरग्रहणस्य सर्वत्र भ्रमत्वायोगात्। शुक्त्यादौ तु शुक्तित्वाद्यग्रहणमूलमेव रजतत्वा-द्याकारदर्शनमिति तस्य भ्रमत्वं युक्तम्। न चेह सात्मकत्वाद्यज्ञानमूलमेव देवाद्याकारदर्शनं, तज्ज्ञान-सहभावित्वोपगमात्। सात्मकत्वाभावावगाहि देवादिदर्शनं तु नास्त्येव। प्राक्तत्वज्ञानात् प्रतियोग्य-प्रसिद्धेरित्यादि **प्रपञ्चितमन्यत्र**। तस्मादारोपालम्बना एव "ब्राह्मणो यजेते"त्यादिचोदना इति

सिद्धम् तदेतदाह श्रुतिः – "नैव स्त्री न पुमानेष नैव चायं नपुंसकः । यद्यच्छरीरमादत्ते अहं स्त्री पुमानि"त्यादितादात्म्यमभिमन्यते । तेन तेन स चोद्यत इति । एवमपि नाप्रमाणं कर्मचोदनाः, यथासिद्धवर्णाद्यारोपालम्बनेन विधितात्पर्यात् । तथा ब्रह्मचोदनापि यथासिद्धकामेक्षणादिमदीश्वरत्वाद्यारोपालम्बनेन ब्रह्मतत्वप्रतिपादनपरत्वात् नाप्रमाणमिति सिद्धम् ॥ ६७ ॥

**स्यादेतत्** । यद्युभयरूपमपि विश्वहेतुत्वं अविद्यानिबन्धनमात्मन्यारोप एव । तस्य कामेक्षणादिवादाः विश्वस्य सर्गक्रमादिवादाश्चाविवक्षितस्वार्था अन्यार्था एवेति मतम् किमर्थं तर्हि, "न विलक्षणत्वात्", जगदात्मोपादानकं? अस्य तथात्वं च विलक्षणत्वं, शब्दात्, "विज्ञानं चाविज्ञानं चे"त्यादेरवगम्यते । इत्याशङ्क्य **समाधीयते?** "दृश्यते तु ।" उपादानुपादेययोर्विलक्षणत्वं गोमयवृश्चिकमक्षिकाकृम्यादिषु दृश्यते च, सत्तादिना सलक्षणत्वमिति आरोपे सालक्षण्यवैलक्षण्ययोरप्रयोजकत्वात् । गगनादौ नीलिमाद्यारोपे तदनपेक्षणात् । तथा "इतरव्यपदेशात्" इतरात्मना तत्वमसीत्यादिव्यपदेशाद्यदि ईश्वरस्य जगत्स्रष्टृत्वं तज्जीवस्यैवेति हिताकरणादिदोषप्रसक्तिः । हिताकरणमहितकरणं च न स्यात् । सर्वमात्महितमेव कुर्यादिति शङ्का । "अधिकं तु" शरीराद्यत्सर्वज्ञादिलक्षणं सोऽन्वेष्टव्य इत्यादिभेदनिर्देशात् तस्यैव जगत्स्रष्टृत्वम् । स चेश्वरो हितमहितं वा जीवस्य कर्मपेक्षया सृजतीति **समाधीयते** । तच्चानर्थकम् । आरोपे स्वप्नादिवदस्वतन्त्रतया हिताकरणादेरदोषत्वात् । यथा घटादिकार्ये दण्डचक्रादिसहकारि हेतूनामुपसंहारदर्शनात् कुलालादेः, परमात्मनस्तदभावादहेतुत्वमिति **शङ्का** "क्षीरवद्धी"ति **समाधीयते** । दध्यादिकार्ये क्षीरमिवानपेक्ष्य बाह्यसहकारिकारणसंहारं, स्वशक्त्यैव परमात्मा हेतुरिति । तदप्यनर्थकं, स्वप्नवदेवारोपे बाह्यसहकारिकरणानपेक्षणात् । एवमन्यदपि शास्त्रे कारणत्वोपपादनं सर्गक्रमोपपादनं चारोपत्वेऽनपेक्ष्यं स्यात् भ्रमस्योपपत्तिनिरपेक्षत्वात् । न खलु खण्डितस्य स्वहस्तविन्यस्तस्य स्वमस्तकस्य स्वयमालोकनभ्रमस्य काचिदुपपत्तिरस्तीत्याशङ्कां परिहरन् आरोपालम्बनेन तथ्यवदीक्षणादिवादस्य प्रयोजनान्तरमुपक्षिपन्नाह —

आलम्ब्य जैवमिममीश्वरताविकल्पं
ज्ञानक्रियामयमिहोभयहेतुभावम् ।
इच्छन्ति तत्वमिव ते पदवेदनाय
स्यादित्युपासनविधौ परमेश ! शेषः ॥ ६८ ॥

**अत्रेममिति** विशेषणमुदीरितलौकिकनिदर्शनमूलानादिभ्रमसंस्कारहेतुकतामिश्वरत्वाद्यारोपस्यानुस्मारयति । तेन सांख्यादीनां जगतो निरीश्वरत्वाद्यारोपात्तदालम्बनोऽपि वेदवादस्स्यात् । अन्यथा,

सेश्वरत्वाद्यारोपालम्बनोऽपि न स्यादित्याशङ्का न भवति। अनादेर्वेदस्य सादिनिरीश्वरत्वाद्यारोपालम्बत्वानुपपत्तेः। "कथमसतस्सज्जायेत?" इत्याद्यसद्वादनिरासोऽपि, न वादिपरिकल्पितासत्वारोपालम्बनः। किं तर्हि "असदेवेदमग्र आसीदि"त्यादिशाखान्तरदर्शनात् तन्मूलतद्याथार्थ्यविभ्रममनादिसिद्धमेवालम्बते इत्यभिप्रायः। जैवं, जीवाश्रयम्। ईश्वरताविकल्पं, परमात्मनि ज्ञानकामसङ्कल्पादिपूर्वकनियन्तृत्वाद्यारोपम्। उपलक्षणमिदम्। कार्यात्मभावित्वलक्षणोपादानत्वारोपं च। आलम्ब्य, आश्रित्य। बोध्यबुद्धिमनुरुद्ध्येत्यर्थः। ते, तव ईश्वरस्य। पद्यते गम्यते इति पदं, शेयं निष्केवलस्वरूपम्। तस्य वेदनाय, अवबोधनाय। तदर्थयोगे चतुर्थी। तादर्थ्येन यः श्रुतः, "यतो वा इमानि भूतानि जायन्ते" "तदैक्षत बहु स्यां प्रजायेये"त्यादौ। न खलु हेतुस्वरूपबोधनायैव। श्रुतौ तदुपादानं तद्बोधस्यान्यथासिद्धत्वात्। किन्तु तदुपलक्षणीयवस्तुस्वरूपबोधनायैवेत्यभिप्रायः। तं, ज्ञानक्रियामयम्। इह, जगति विषये। उभयहेतुभावं, उभयो हेतुः कर्ता उपादानं च। तत्र ज्ञानमयः कर्तृभावः। कार्यानुकूलज्ञानवत्त्वमेव हि कर्तृत्वमित्युपपादितम्। क्रियामयः उपादानभावः। कार्यात्मना भवितृत्वं ह्युपादानत्वम्। तमिमं आरोपाश्रयमेव। हेतुभावं, तत्त्वमिव, न तु तत्त्वमेवेति सूचयितुमिवशब्दः। इच्छन्ति, प्रसक्तचोद्यनिरसनेन तदुपपादयन्तः शास्त्रकाराः। किमर्थमतत्वं तत्वमिवेच्छन्तीत्यत आह स्यादितीत्यादि। परमा ईशा यस्य सः परमेशः। अखिलचेतनाचेतनवर्गनिखिलव्याप्तिव्याप्तिः ईशायाः पारम्यम्। "एष सर्वस्य वशी सर्वस्येशान" इति हि श्रूयते। हे परमेश, अनेन "य एषान्तरादित्ये हिरण्मयः पुरुषो" इत्यादौ परागर्वागशेषलोकेश्वरः परमात्मैव विषयः, न कतिपयलोकेश्वर आदित्यादिदेवतात्मैवेति सूचयति। ते पदवेदनाय, उपासनाविधावित्यत्रापि सम्बद्ध्यते। यद्यप्युपासनाविधयः केचिदभ्युदयार्थाः, "मनो ब्रह्मेत्युपासीते"त्यादयः। केचित्कर्मसमृद्ध्यर्थाः "य एषोऽन्तरादित्ये हिरण्मयः पुरुष" इत्याद्याः। केचित्क्रममुक्त्यर्थाः, "सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त–उपासीत", "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः। तस्मिन्यदन्तस्तदन्वेष्टव्यम्। तद्वाव विधिजिज्ञासितव्यमि"त्याद्याः। न क्वचिदपि परमात्मपदवेदनार्था उपासनाविधयः श्रूयन्ते। "अहं ब्रह्मास्मी"त्यप्रतिपद्यमानानामात्मांतरात्मतया तदहंग्रहोपासनमेव। सति सुकृते चित्तैकाग्र्ये च विकल्पापोहेन तत्ववेदनं सम्पद्यते। ब्रह्मलोके वा तत्ववेदनाय कल्पते इत्येव तदुपासनाविधिः। तथा च लिङ्गम्– "स सामभिरुन्नीयते ब्रह्मलोकमि"ति प्रकृत्य "स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षत" इति। अभ्युदयादिफलोपासनाविधयस्तु प्रासङ्गिका एवेत्यभिप्रायः। एवमीश्वरपदवेदनार्थोपासनाविधौ, शेषः अपेक्षितविषयभावेनाङ्गं स्यादिति। इतिशब्दो मनसि करणप्रकारार्थः। इति मनसिकृत्येच्छन्तीत्यन्वयः॥

**अयमभिप्रायः** — अद्वितीयात्मतत्वज्ञानं पुरुषार्थतया शास्त्रे विवक्षितम्। तच्चात्मनि विश्वहेतुत्वाध्यारोपापवादापेक्षं। अन्यथा, ज्ञानादिस्वरूपं ब्रह्मेत्येव वस्तुतत्वप्रतिपादने

विश्वहेतोरुभयविधस्यानुमितस्यातिरेकबुद्धौ सत्यामद्वितीयात्मतत्त्वावगमानुपपत्तिः। न चान्यमीश्वरं मन्वानस्य मनागपि भयापगमस्संभवति। "तत्त्वेव भयं विदुषो मन्वानस्य" इति हि श्रूयते। "अथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ती"ति च। अतो यत्तदनुमितं विश्वकारणं तद्ब्रह्म, स आत्मेति बोध्यबुद्धिमनुरुध्यैवोपलक्षिते स यदि कुशलमतिः तदा ऐतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मेति, तदपवादेन तत्त्वमसीत्यवबोध्यते। ततश्च अहमेवेदं सर्वोऽस्मि, यन्मदन्यं नास्ति, कस्मान्नु बिभेमि इत्यभयं प्रतिष्ठां प्राप्तो भवति। अथ मन्दमतिः तथा तद्बुद्ध्यनुरोधेन तदपवादमनपेक्ष्य तदेव विश्वहेतुत्वं तत्त्वमिवावस्थाप्य तदुपासने चोद्यते। ततो विशुद्धबुद्धिः आत्मतत्त्वमवभोत्स्यत इति। तथा च वेदान्तकल्पतरौ भगवदमलानन्दपादैरुदितम् – "निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्"॥ इति।

तदस्यां दशायामुपासनाविधौ शेषतयाऽपेक्षितस्य तत्त्ववदुपपादनीयस्य विश्वहेतुत्वस्य शास्त्रकाराणां युक्तमुपपत्त्योपपादनं, नैतावता तस्य जैवारोपरूपत्वापवाद इति॥ ६८॥

**स्यादेतत्**, यद्यारोपितमेवेश्वरत्वादिकमुपासनाविधिशेषत्वेनोपजीव्यते तर्हि जीवेऽपि तदारोपितमुपजीवितुं शक्यम्। ततश्च "स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपस्सत्यकामः सत्यसङ्कल्प" इत्यादि '**शाण्डिल्यविद्यायां**' विवक्षितगुणानामनुपपत्तेस्तु न शरीर इति यन्निषिध्यते, तथा, "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच, तदभयममृतमेतद्ब्रह्मे"ति। तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनि एव गच्छत्येतं संयद्वाम" – इत्याद्युपकोशलविद्यायामक्षिण्यनवस्थितेरसंभवाच्चामृतत्वाभयत्वाभयत्वादिना वेतरो जीव इति यन्निषिद्ध्यते, तथा "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्य"मित्यादि 'दहरविद्यायां' अथ "य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य"त्यादौ सम्प्रसादशब्देन सुषुप्तावस्थजीववाचिना इतरपरामर्शात् सजीवो दहर इति चेन्न, असम्भवात्। "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सः पिपासः सत्यकामस्सत्यसङ्कल्प" इत्यादि गुणानामिति यन्निषिद्ध्यते तदेतत्सर्वमेव न स्यादित्याद्याशङ्कां परिहरन्नाह —

सर्वज्ञताद्युपधिहेतुमयं भवन्त-
माश्रित्य ते समनुकृष्य परं च भावम्।
नानाफलानि गिरिश! त्वदुपासनानि
सत्त्वाशयानुविधिना विदधाति वेदः॥ ६९॥

अत्र **सर्वज्ञतादीत्यादिशब्देन** सर्वशक्तितागृह्यते स उपाधिर्यस्य **हेतोः तन्मयं** तद्रूपं कार्यानुकूलज्ञानवत्वं कर्तृत्वं कार्यात्मभावनानुकूलशक्तिमत्वं चोपादानत्वमितिह्युक्तं यथा लोकनिदर्शनं तथाऽनादिजैवारोपसिद्धं **भवन्तं ईश्वरं आश्रित्य। वेदः त्वदुपासनानि विदधातीन्वयः।** न तूपासनाविषयकर्तव्यतामपि बोधयतीत्यर्थः। तेन जीव एवेश्वरत्वाद्यारोपणेणोपासनाविधिविषयः स्यादिति तन्निरसनानुपपत्तिरिति निरस्तम्। दहराद्युपासनाविधयस्तावदनादिजैवारोपसिद्धमेव बोध्यबोधनुरोधेन ब्रह्मात्मतत्वप्रतिपत्त्युपायतयोपलक्षणीकृतमात्मनो विश्वहेतुत्वमाश्रित्य प्रवर्तन्ते, दर्शपूर्णमासाद्यर्थमिवा-प्रणयनादिकमाश्रित्य गोदोहनादिविधयः। न तु "वाचं धेनुमुपासीत", "मनो ब्रह्मेत्युपासीत" इत्यादिवद्विधेयमेव विषयमाश्रित्य। विषयकर्तव्यतायामुपासनाविधाने च विधिव्यापारगौरवप्रसङ्गात्। सिद्धिरूपोपादाने तु, "राजानमुपासीत", "गुरुं उपासीते"त्यादिवत्तदुपासनाविधान एव विधिव्यापार इति लाघवं भवति।

**ननु** चरुकरम्भादिहोमविधौ चर्वादिकार्यतेव ईश्वरत्वाद्युपासनाविधौ विषयकार्यताऽर्थापत्तिगम्येति न विधिव्यापारगौरवमिति चेत्तथापि सिद्धविषयोपादेयमेव तदुपपत्तावर्थापत्तिपरीक्षायां न विषय-कर्तव्यतापत्तिः। नन्वे"ष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वे"त्यादौ विधिवशादेव विषयकर्तव्यता वच्या। तथा सत्यकामत्वादावपि स्यात्। न, अगतिका हि सङ्गतिः। सम्भवत्सिद्धविषये तदनुपपत्तिः। अथापि कश्चिदुन्मत्तः स्वात्मानं सत्यसङ्कल्पादिगुणमीश्वरमभिमन्येत, तद्विषयमुपासना-विधानं स्यात्। प्रागेव सिद्धत्वेन विषयकर्तव्यतायां विधिव्यापारगौरवाद्यप्रसङ्गादिति चेत्, **मैवम्।** अनादेर्वेदस्य साद्यारोपालम्बनत्वायोगादेव। अतो जीवनिरसनमारोपालम्बनत्वेऽप्युपासनाविधिषूप-पन्नम्। इतोऽपि जीवनिरसनं उपासनाविधिषु युक्तमित्याह 'ते', तव परमेश्वरस्य। परं ईश्वरत्वाद्युत्तीर्णं भावं अपसिद्धाशेषानन्दबोधैकरस्यलक्षणं, तत्वस्वरूपं च। "अस्थूलमनणु", "विज्ञानमानन्दं ब्रह्मे"त्यादि स्वरूपपरविधिशास्त्रसिद्धम्। समनुक्रुष्य, सम्यक् सर्वत्राव्यभिचारेण, "प्राणो ब्रह्म", "कं ब्रह्म खं ब्रह्मे"त्यादौ साक्षादर्थतोऽन्यत्र चोपसंगृह्य। अस्यापि पूर्ववदन्वयः। अन्यथा, गुणिस्वरूपहानेन गुणाध्यानविधानानुपपत्तेः। तथा च सूत्रितम् - "आनन्दादयःप्रधानस्ये"ति। उपास्यब्रह्मणः स्वरूपभूता आनन्दादयः सर्वत्र ब्रह्मविद्यासूपसंग्राह्या इत्यर्थः। एवं च जीवस्वरूपस्या-तथात्वात् तन्निरसनं ब्रह्मोपासनविधिषु युक्तमित्यभिप्रायः अथवा, यद्युपासनाविधिषु विधिव्यापार-गौरवादिप्रसङ्गात् विषयविधेयता परिहर्तव्या। तर्हि बालयक्षादिबुद्धिवद्विकल्पज्ञानमयमेवोपासनं विधीयताम्। यदाचक्षते **सांख्याः** - "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति। एवं विधिव्यापारगौरवादि न भविष्यतीत्यत आह **ते परं भावम्।** ज्ञानानन्दादिलक्षणं याथात्म्यं च **समनुक्रुष्येति।** तथा च सत्यकामः सत्यसङ्कल्प एवादौ कामादयो यस्य स च ते

चालम्बनमिति विकल्पमात्रत्वायोगाद्वस्तुविषयत्वारोपविषयत्वं वा वाच्यम्। तत्रेश्वरत्वादिवस्तुत्वनिरासादारोपितविषयत्वपरिशेषे साध्यारोपविषयत्वे विधिव्यापारगौरवादिदोषात् सिद्धारोपविषयत्वमेव युक्तम्। अत्र ते परं भावमिति विशेषणेन स्युरप्युपासनाविधयः सिद्धारोपविषया एव तथापि तस्यैवारोपस्य विषयविशेषापरिचयादभावे जीवे वा तदारोपानुशये ब्रह्मैवोपासनाविधिविषय इति व्यवस्थानुपपत्तिरिति शङ्का निरवकाशा। जीवे तावत् व्यतिरेकविज्ञानसंस्कारादीश्वरत्वाद्यारोपशङ्कैव न भवति। अभावस्यापि न वस्तुत्वारोपस्संभवति। अभावविषयत्वे तस्य तादात्म्येन सत्त्वाभासायोगात्। ननु दुःखाद्यभावे सुखत्वाद्यारोपो दृष्टः न, वस्तुन एव कस्यचिदवस्थाभेदस्याभावत्वोपगमात्। तस्य च प्रतियोग्याद्यप्रतीतावभावत्वानवभासे सुखत्वाद्यारोपाविरोधात्। अभावानवभासे च निर्विषयारोपायोगः। तथा च यस्मिन्नीश्वरत्वाद्यारोपः तस्यैवानन्दादिलक्षणस्य तत्त्वस्योपासनाविधिषु वस्तुवदीश्वरत्वादिविनियोगे समनुकर्षणीयत्वात् ब्रह्मविषयत्वव्यवस्थैवेति।

अथ यद्येवमारोपितेश्वरभावमेव ब्रह्मोपासनालम्बनमिष्यते तर्हि तद्विधयो विफला एव प्रसज्येरन्। न खलु कर्मैव फलदं भवति, अचेतनत्वात् क्षणिकत्वाच्च। न च स्वभावादपूर्वद्वारसत्वाच्चाविरोधः। तत्कल्पनाहेत्वभावात्। ननु कर्मणां फलसाधनत्वविधिरेवास्ति तद्धेतुः। न, तत्साधनप्रकाशान्तरदर्शनात्। "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इत्यादिश्रुतेरग्निवाय्वादिरूपेण तत्तत्कर्माराधितस्य परमेश्वरस्यैव "वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयती"-त्यादिफलदत्वश्रवणात्। "लभते च ततः कामान् मयैव विहितान्हितानि"त्यादिस्मरणाच्च। तथा च सूत्रितम् — "फलमत उपपत्तेः" इत्यादि। स चेदीश्वर आरोपमात्रसिद्धः आरोपिताग्नेरिव तस्योपासनाफलाय न स्यादित्यत आह **नानाफलानीति**। अभ्युदयादीनि नानाविधानि फलानि येषां तानि। तथा "मृच्छकृद्दारुपुत्रादेरिहारोपितदैवतात्। इष्टार्थप्रापणं दृष्टं वृक्षयक्षादितो भयम्॥ स्वाप्निकादंगनासङ्गाज्जागरानुगतं सुखम्। ईक्षितं च तरक्ष्वादेर्जागरानुगतं भयम्॥ भावनागरुडादाहितुण्डिकाद्विषखण्डनम्। शङ्काविषादितो दृष्टो मृत्युर्मृदुलचेतसाम्॥ मैत्रमारोपितादक्षराशियोगात्प्रयुज्यते। एवमारोपितादीशात्फललाभोऽनुमन्यताम्॥" इत्यभिप्रायः। तथाचाग्निहोत्रादिकर्माणि तदाराधनीयदेवतादेयफलानि स्वहिताहिताप्तिहानीच्छापूर्वकपरतन्त्रचेतनकर्मत्वात् राजसेवादिवदित्याद्यनुमानमूलानादिभ्रमसंस्कारहेतुकजैत्रारोपव्यपाश्रया ईशफलदत्वादिवादाः परमात्मतत्वोपलक्षणार्था एव। किन्तु तदेव फलदत्वं तत्वमिव कर्मादिविध्युपयोगादुपपद्यते, "फलमत उपपत्तेरि"त्यादिनेति न सङ्कटं किञ्चित्। एवं **नानाफलानि त्वदुपासनानि**, तत्रेश्वरस्य प्रतीकाहंग्रहादिरूपप्रत्ययावृत्तिलक्षणानि ध्यानानि **वेदो विदधाति**। अत्र गिरौ शेत इति गिरिशः। **हे गिरिशेति** सम्बोधनेन गिर्यरण्यसम्बन्धप्रसङ्गात् "तपः श्रद्धे येह्युपवसन्त्यरण्ये शान्ता विद्वांसो

भैक्षचर्यं चरन्त" इत्यादिशास्त्रादरण्यनित्यस्य परिव्राजोऽपि स्यादहङ्ग्रहोपासनाधिकार इति स्मारयति। तेन सति कर्माधिकारे कर्मसमुच्चितमुपासनमसति तु केवलमिति द्वैधमावेदितं भवति। अथ किमर्थमेवं नानाफलान्युपासनानि विदधाति? ननु कस्मादेकमेवाहंग्रहोपासनं तत्त्ववेदनाय क्रममुक्तिफलमेव न विदधातीत्यत आह 'सत्त्वाशयानुविधिनेति'। सत्त्वानां प्राणिनां आशयस्याभिप्रायस्यानुविधिनाऽनुविधानेन अनुरोधेन निश्रेयसकथामाधिकारकेऽपि शास्त्रे फलकामा — अपि ब्रह्मोपासनप्रवर्तनेन कथमनुगृह्येरन्निति तदाशयमनुरुध्य काम्योपासनाविधयः प्रासङ्गिका एवेत्यभिप्रायः। तदेवमुपासनाविधिशेषतया परमात्मन्यविद्यया जीवारोपितमेव विश्वहेतुत्वमन्यद्वा तत्त्ववदुपपाद्यते। नैतावता तस्य वस्तुत्वमिति स्थितम् ॥ ६०॥

एवं तावदात्मनो भेदाभेदादिभिरनिर्वचनीयजडस्वभावामात्मन्यारोपितामविद्यामायामुपेत्य, तन्निबन्धनः परमात्मनि विश्वहेतुत्वारोपः। तस्य चोभयी गतिः स्वयं प्रकाशात्मनः स्वत एव स्वरूपावभासप्रसक्तौ तदारोपितानाद्यविद्यावरणात्तत्प्रतिबन्धे तद्विषयरूषिताविद्यावभासप्राप्तौ यदि पूर्वानुभवमूलभ्रमहेतुसंस्कारानुद्बोधः। तदा तथैव तदवभासो भवति अथ तदुद्बोधो तदा सैवाविद्या स्वानुगतात्मसत्तालम्बनविपरीताकारावभासा भवति। तदवस्था चासौ विक्षेपशक्तियोगान्मायेत्युच्यते। सेयं परमात्मनः परिणममानमायाधिष्ठानतया विश्वहेतुत्वारोपगतिरेका। अत्र पक्षे विश्वोत्पत्त्यनुकूलमीक्षणादिकमविद्याविषयं तदुपाधिकमेव परमात्मनः सम्भवतीति तदैक्षतेत्यादिकर्तृत्वादिवादाः, "मायां तु प्रकृतिं" इत्यादिवादाश्च समञ्जसा भवन्ति। "तदात्मानं स्वयमकुरुत", "तन्नामरूपाभ्यामेव व्याक्रियते"त्यादिवादास्त्वनाञ्जसा भवन्ति। उक्तविधयैवात्मनस्स्वरूपावभासप्रतिबन्धेऽविद्याविषयतयैव तदवभासप्राप्तौ पूर्वानुभवमूलभ्रमहेतुसंस्कारोद्बोधे, तयैवाऽविद्यया निमित्तेन स एव विपरीताकारोऽवभासते। उद्बुद्धभ्रमहेतुसंस्कारा चेयं मायेत्युच्यते। सेयमात्मनि साक्षादेव विश्वहेतुत्वाऽऽरोपगतिरपरा। अत्र पक्षेत्वात्मजगद्भाववादा आञ्जसाः, ईक्षणादिवादास्त्वनाञ्जसा इति उभय्यपि हेतुत्वारोपगतिः सम्प्रदायपदव्याप्रतिपादिता।

**सम्प्रति** स्वरूपविपरीताकारज्ञानवासनैवाविद्याऽतिरिक्ता, विद्यापक्षेऽपि, तस्या अवस्थापेक्षणीयत्वात्। सा च पूर्वपूर्वविपरीताकारज्ञानमेव। न हि लोकेऽपि शुक्त्यादिस्वरूपविपरीतरजतादिज्ञानातदज्ञानमतिरिच्यते। मानाभावात्। तस्यैव भूतस्य भवतो वा प्रसक्तप्रतिबद्धशुक्त्यादिज्ञानापेक्षया तदज्ञानत्वेन प्रतिभासोपपत्तेः। अपि च यावत्सत्त्वंप्रकाशमानं अज्ञानं न ज्ञानादतिरेकमर्हति। ज्ञानत्वमेव हि तत्रौत्सर्गिकं प्रयोजकम्। अन्यथा, तस्य ज्ञानाधीनप्रकशत्वे व्योमादिघटज्ञातसत्त्वमपि प्रसज्येत। सुखदुःखादिकं च चन्दनकण्टकस्पर्शाद्युपधेयं ज्ञानमेव। अथवा, सुखादिवृत्त्यो

ज्ञानात्म्यतादात्म्येनैवोदयन्त इति नौत्सर्गिकन्यायबाधः। तर्हि अज्ञानमपि ज्ञानतादात्म्येनैवारोपितत्वात्। यावत्सत्वं प्रकाशाव्यभिचारीति चेत् तथात्वेऽपि देहादीनां प्रकाशव्यभिचारात्। अपिचारोपि हि नाम भ्रमः। स च विषयत्वाज्ज्ञानाधीनः। तच्च भ्रमाधीनसत्ताकमिति परस्पराश्रयता। अथाऽज्ञानारोपयोरनादित्वाददोष इति चेत् तर्ह्यात्मस्वरूपज्ञानमेवाज्ञानारोप इति वक्तव्यम्। तच्च दुरुपपादम्। यदि स्वरूपज्ञानं न तदज्ञानारोपः। अथाज्ञानारोपः न स्वरूपज्ञानं अज्ञानज्ञानमेव हि तदिति तदारोपत्वासिद्धेः। अथ शास्त्रप्रामाण्यादात्मस्वरूपज्ञानमेव तदज्ञानावभासित्वादज्ञानारोप इति चेत् तर्हि तदेव स्वरूपज्ञानं विपरीतरूपावभासितया स्वरूपानवभासित्वादात्माज्ञानमस्तु। अथ तदेव विपरीतरूपमवभासमानं यद्यनादि तदेव जडरूपमज्ञानं। अथ सादि, कथं तर्हि प्रागेव स्वरूपतत्वज्ञाने भ्रमोपपत्तिरिति।

**उच्यते**। विपरीतरूपावभासप्रवाहस्यानिदंप्रथमतयाऽऽत्मस्वरूपाज्ञानस्यानादित्वेनोत्तरोत्तर-भ्रमोपपत्तिरिति। तस्मात्पूर्वपूर्वविपरीताकारावभासरूपा भ्रमवासनैव सर्वत्राविद्या नाम। सैव चाव्या-कृतादिशब्दवाच्या, न तु तदतिरिक्तेति **सिद्धान्तरहस्यम्**। "ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ज्ञानात्मकमिदं सर्वं न ज्ञानाद्विद्यते परम्॥ विद्याऽविद्ये च मैत्रेय ज्ञानमेवोपधारय।" इति **भगवत्पराशरसम्मतिमाश्रित्याह** —

**या दृक् सदाशिव! तव स्वदृशिस्वभावा**
**सा विश्वदृश्यदृशि वासनया विवृत्ता।**
**अव्याकृतप्रकृतिरक्षरमम्बरं वा**
**मायातमस्स्वमहिमावरणादविद्या ॥ ७० ॥**

अत्र हे **सदाशिवेति** सम्बोधनेन यज्ज्ञानं तज्ज्ञातृज्ञेयोपरागकलुषम्। विषयज्ञानवत्, तदभावे चाभावीति न ज्ञानस्वरूप आत्मेति शङ्कां वारयति। ज्ञेयाद्युपरागसदसत्वयोरविकृतप्रशान्तैक-स्वभाव इत्यर्थः। "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिश्रुतिबाधितविषयमनुमानम्। अन्यथा अज्ञानस्वभावत्वे सत्यात्मनो विषयप्रकाशानुपपत्तिः। तस्माद्विषयज्ञानमप्यात्मैवेत्यभिप्रायः। **स्वदृशिस्वभावा,** स्वश्चासौ दृशिश्च स्वदृशिः, स्वप्रकाशः। यथा चक्षुरादिना विषयस्य प्रकाश आधीयते न तथा ज्ञानस्येति स्वपदोपादानम्। अनेनाज्ञेयत्वमुक्तं भवति। तत्प्रपञ्चितं प्रागेव। स एव स्वभावो यस्यास्सा तथा। अनेन "यद्वैतं न पश्यति, पश्यन् वै तन्न पश्यति।" न हि द्रष्टुर्दृष्टेर्विपरिलोपो

विद्यते। अविनाशित्वादित्यादि सिद्धम्। ज्ञेयाद्यनपेक्षसत्वं सूचयति। स्वभावस्य परानपेक्षत्वात्। **तत्र या दृक्,** परमात्मनो यत्स्वरूपभूतं ज्ञानमिति प्रसिद्धवन्निर्देशाद्धि "ज्ञानमानन्दं ब्रह्मे" त्यादिप्रमाणसिद्धिं सूचयति। **सा** दृक्स्वरूपज्ञानमेव। **विश्वदृश्यदृशि,** वासनया, विश्वं वियदादिप्रपञ्चः, विश्वमिति दृश्यं विश्वदृश्यम्। अथवा विश्वं सर्वं च तत् दृश्यं चेति तथा। दृश्यमिति दृग्विषयत्वव्यपदेशः। तथा भ्रमप्रतिभासापेक्षया दृगेव हि स्वयमेव विश्वरूपावभासोपगम्यते। तस्य दृशिरवभासः तल्लक्षणया **वासनया**। परस्तादपि विश्वरूपावभासबीजभूतसंस्कारात्मना, **विवृत्ता** स्वरूपावभासविपरीता भूता सती। **अव्याकृतं,** प्राक्तनव्याकृतनामरूपात्मकविश्वरूपावभासतोपशमे पश्चात्तनव्याकरिष्यमाणनामरूपावभासताप्रागवस्थात्मकम्। "तद्धेदं तर्ह्यव्याकृतमासीदि" ति निर्दिष्टम्। विश्वावभासितया प्रक्रियत इति **प्रकृतिः**। "मायां तु प्रकृतिं विद्यादि" त्युक्ता, विश्वरूपविकारावभासितां अश्नुत **इत्यक्षरम्**। "अक्षरात्परतः पर" इत्युक्तम्। **अम्बरं,** अम्बरपर्याय आकाशः, विश्वावकाशत्वात्। "आकाश – एव तदोतं च प्रोतं चे"त्युक्तम्। नामरूपलक्षणव्यक्तिशून्यतया "महतः परमव्यक्तमि"त्युक्ताव्यक्तत्वसङ्ग्रहाय **वा शब्दः। माया,** दुर्निरूपस्वरूपत्वात्। "इन्द्रो मायाभिः पुरुरूप ईयत"–इत्युक्ता। **तमः,** "तम आसीत्तमसा निगूढमग्रे प्रकेतमि"त्युक्तम्। तत्र तमश्शब्दप्रवृत्तिप्रयोजकमावरणलक्षणगुणयोगमाह स्वमहिमावरणात्। **स्व एव** दृशिलक्षण **आत्मैव, महिमा**। "एष नित्यो महिमा ब्राह्मणस्ये"त्युक्तः। भ्रमलक्षणः **तस्यावरणात्**, नास्ति, न प्रकाशत इति व्यवहारप्रयोजकत्वादित्यर्थः। अन्धकारो हि वस्तुनो नास्ति, न प्रकाशत इति व्यवहारं प्रयुङ्क्ते तद्वत् **अविद्या,** वस्तुस्वरूपावधारणलक्षणविद्याविरुद्धा। "अविद्यायामन्तरे वर्तमाना" इत्युक्ता। न तु स्वरूपदृशोऽतिरिक्तमव्याकृतादिशब्दवाच्यं, अतिरेके मानाभावादित्यभिप्रायः। जडोपादानं जडं भवितुमर्हति। उपादानोपादेयसालक्षण्यनियमादित्ययं न्यायो हि "न विलक्षणत्वादि" त्यधिकरणे निरस्तः। तत्र "दृश्यतेस्त्वि"ति विलक्षणोपादानोपादेयत्वगोमयवृश्चिकादिनिदर्शनम्। भ्रमनिबन्धना चैतन्यादिप्रतिभासापेक्षया, न तु वस्तुवैलक्षण्यमुपेत्य। अत एव "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यधिकरणे कारणब्रह्मानन्यत्वं कार्यस्योपपादितम्। तत्र हि "पटवच्चे" ति सूत्रे सङ्कुचितविस्तृतपटन्यायेन कारणानन्यत्वं पटस्योदीरितम्। "ऐतदात्म्यमिदं सर्वं" इत्याद्या च श्रुतिः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि" त्यादिनिदर्शनेन "तत्सत्यं स आत्मे" ति कारणस्वरूपसत्यत्वावधारणेन विकारमृषात्वविवक्षा च भ्रमप्रतिभासोपदर्शितरूपभेदापेक्षयैव। तथारूपभेदप्रतिभासता च स्वरूपज्ञानस्यैव पूर्वपूर्वतदवभासतालक्षणभ्रमवासनयैव भविष्यतीति न तदर्थमपि जडोपादानकल्पनेति ॥ ७० ॥

**स्यादेतत्**। आत्मस्वरूपज्ञानमेव विपरीतावभासवासनात्मनाभूतमविद्येत्युक्तम्। तदयुक्तम् अनिर्मोक्षप्रसङ्गात्। न खल्वात्मनि विपरीतरूपावभासेन वस्तुसंस्कारात्माज्ञानसंस्कारात्मना वा वासना धीयते।

असङ्गाविक्रियस्वभावविरोधात् । नापि स्वरूपज्ञानस्य विश्वरूपावभासतैव वासना, तस्याः कादाचित्कत्वेन तदभावदशायामात्मस्वरूपतत्वावभासे सत्यविद्यानुपपत्या मोक्षशास्त्रानपेक्षा प्रसङ्गात् । अतः प्राप्तविपरीतरूपावभासं स्वरूपज्ञानमेव वासनेति वक्तव्यम् । सैव चेदविद्या तस्यास्तत्वज्ञानाबाधनीयत्वादनिर्मोक्षः प्राप्त इत्याशङ्कां परिहरन्नेकस्या एव मायाविद्यारूपभेदप्रयोजकं दर्शयति —

या ते पराक्त्वदृशिता तदपोहरूप-
निर्भासितावधिरनादितयानुयाता ।
सा केवलात्मदृशितावरणादविद्या
सा नाथ ! विश्वपरिवर्तनया च माया ॥ ७१ ॥

या ते, तव स्वदृशिस्वभावस्यैव परमात्मनः **पराक्त्वदृशिता,** पराक्त्वेनावभासिता जडाविद्यापरिणामनिरासेन परागर्थान्तराभावादात्मन एव पराग्रूपावभासितेति दर्शयितुं 'त्वं' प्रत्ययोपादानम् । जडाविद्यापरिणामपक्षेऽपि स्वरूपज्ञानतादात्म्यारोपेणैव तदवभासत इति । येति प्रसिद्धवन्निर्देशः । यदुक्तं तस्याः कादाचित्कतया तदभावदशायां तत्वावभासादविद्यानुपपत्तिरित्यादि । तत्र पूर्वावधौ तत्त्वावभासानुपपत्तिः, तदभावादेवेत्यत आह **अनादितया** । प्रवाहरूपेण तज्जातीयकिञ्चिदशून्यपूर्वकालतया, **अनुयाता** अनुगता । अथ विश्वरूपावभासिता न तैलधारावदनुगता । सर्गप्रलयवादविरोधात् । तरङ्गपङ्क्तिवदितिचेत्तर्हि तदभावदशायामन्तराले तत्वावभाससम्भवादनादित्वानुगत्यनुपपत्तिरिति चेन्न, प्राप्तविपरीतावभासस्वरूपज्ञानमविद्याकोटिरेवेति तदनुगत्युपपत्तेरिति भावः । तर्हि तदनुच्छेदादनिर्मोक्षप्रसङ्ग इत्यत आह तदपोहेत्यादि । **तस्याः** पराक्त्वदृशितायाः, **अपोहः,** "अथात आदेशो नेति नेति", तद्वा, "एतदक्षरं गार्ग्यस्थूलमनणु अशब्दमस्पर्शं यत्तदद्रेश्यमग्राह्यं", "अन्यदेव तद्विदितात्", "नान्तः प्रज्ञं न बहिः प्रज्ञं नेह नानास्ति किञ्चन", "तत्वमसी"त्यादिशास्त्रीयो निषेधः । तद्रूपेण **निर्भासिता,** विश्वरूपावभासतो निष्क्रम्य भासमानता । शास्त्रजनितज्ञानस्य निषेधाकारतया तद्रूपनिर्भासिता, न तु पूर्वभ्रमसंस्कारमूलतया । तेन सा पराग्रूपावभासलक्षणाऽपि स्वरूपतत्वावभासावसायितया विद्येत्युच्यते । सा **अवधिः,** समाप्तिः प्रवाहोच्छेदो **यस्यास्सा तथा** । सर्वत्र भ्रमस्यारोपितनिषेधविकल्पाऽवभासे सत्येव वस्तुतत्त्वावभासो विरोधी, न तु व्यासङ्गादिना विपरीतरूपावभासोपरमे तदवभासः, नानात्मके वस्तुनि कादाचित्ककिंचिद्रूपानवभासेन वस्तुस्वरूपवभासेऽपि पुनः कालान्तरे तद्रूपावभासादविच्छेददर्शनात् । यथा वृक्षे प्लक्षादिस्वरूपतत्वावभासे पार्थिवत्वादिरूपान्तरावभासः । ननु नेदं रजतमिति निषेधरूपावभासे सत्येव शुक्तितत्वावभासेऽपि कालान्तरे तत्रैव पुना रजतरूपावभासो दृश्यते । तत्र कुतो

निषेधरूपावभासेऽपि परमात्मनि विश्वरूपावभास इति लक्षणभ्रमप्रवाहोच्छेद इति। न तत्र शुक्तिस्वरूपतत्त्वावभासस्य तदेकवृत्तिनियतावभासत्वाभावेन व्यक्त्यन्तरसांकर्यज्ञानाभिभूतरजतनिषेधावभाससंस्कारतया पुनर्भ्रमानुच्छेदेऽपि ज्ञानात्मस्वरूपतत्वावभासस्य तदेकस्वरूपनियतावभासतया विश्वरूपनिषेधावभासलक्षणसंस्कारानभिभवेन पुनर्भ्रमाप्रसङ्गात्। तदवधिरेवात्मनि विपरीतरूपावभासलक्षणा भ्रमवासनेति तत्प्रवाहोच्छेदोपपत्तेः, नानिर्मोक्षो, न वा मोक्षशास्त्रानपेक्षेत्यभिप्रायः। सा पुनरियमेकैव कथमविद्या मायाचेत्यत आह सा केवलेत्यादि। केवलस्य, ज्ञातृज्ञेयादिविकल्पशून्यस्य। आत्मनः, स्वस्य दृशिर्दर्शनं अवभासः यस्यास्स्वरूपदृशेः। सा तथा, तस्या भावस्तत्ता तस्याः केवलात्मदृशितायाः। आवरणात् प्रतिबन्धात् केवलात्मस्वरूपानस्तित्वादिव्यवहारप्रयोजकत्वादित्यर्थः। अविद्या उदितविद्याविरोधित्वात्। यथा भाष्यकृतः, "तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते। तद्विवेकेन च वस्तुस्वरूपावधारणंविद्यामाहुरि"ति। सा नाथ विश्वपरिवर्तनया, नाथति ईष्टे इति नाथः ईश्वरः। विश्वमिति चिदचिदात्मकः प्रपञ्च उच्यते। तदीशजीवजगद्रूपस्य परिवर्तनया सर्गसंहारक्रमेण पर्यावृत्तिप्रयोजकतया उत्तरोत्तरविश्वरूपावभासलक्षणभ्रमहेतुत्वेनेत्यर्थः। नाथेति सम्बोधनं वा। समासे सम्बोधने वा नाथग्रहणेनाविद्यामायासम्बन्धिभेदमुपक्षिपति। स चानन्तरमेव स्पष्टीकरिष्यते। माया चासंभावनीयविचित्रावभासशक्तिर्हि मायेत्युच्यते। मायाविद्यास्वरूपा। भेदाय पुनस्तच्छब्दोपादानम्। विपरीतरूपावभासा स्वरूपदृशिरेवोपाधिभेदादविद्या माया च नतिरिक्तेत्यभिप्रायः ॥ ७१ ॥

नन्वविद्या स्वाश्रयव्यामोहहेतुः। यस्याज्ञानं भ्रमः तस्येति दर्शनात्। परव्यामोहहेतुर्माया। ऐन्द्रजालिकमायया प्रेक्षकव्यामोहदर्शनात्। तत्कथं तस्यैवैकस्यात्मनः सैवैका अविद्या मायेत्युच्यत इति आशङ्क्य सैव जीवेश्वरभेदकल्पनामयी तत्तत्सम्बन्धितयैव तथा पृथग्व्यपदिश्यत इत्यभिप्रेत्याह –

स्वेनैव विश्वदृशिता तव तायते या
नाऽसौ कदापि तदहंदृशिताविहीना।
तज्जीवतास्थितिमपेक्ष्य वदन्त्यविद्यां
तामीशतास्थितिमपेक्ष्य महेश! मायाम् ॥ ७२ ॥

आत्मनस्तावद्द्विरूपा विश्वरूपावभासता, ताटस्थ्येन तादात्म्येन च। यथा देहोऽयमिति, मनुष्योऽहमिति च। तत्र या तव परमात्मनः, स्वेनैव स्वात्मनैव ताटस्थ्येन, न तु तादात्म्येन।

विश्वदृशिता, तायते सन्तन्यते। "तायसन्तान पालनयोरि"ति पठ्यते। **असौ** विश्वदृशिता, **कदापि तस्मिन्** विश्वे **अहंदृशितया** अहमितितादात्म्यावभासेन **विहीना न भवति**। सर्वदैव तादात्म्यदृशितया अनुगतैव भवति। यदान्यथापि विकारभाव इव दृश्यते। यथा शिलादिभावः पृथिव्याः, नखकेशादिभावो वा शरीरस्य। तदापि पृथिवी शरीरैकात्मना तदहंदृशिताव्यभिचाराय **कदापीत्युक्तम्**। अस्ति च पृथिव्याद्यहंदृशिता, तदभिमानिदेवतोपगमात्। "मृदब्रवीत्, आपोऽब्रुवन्, यं पृथिवी न वेद यमापो न विदुरि"त्यादिलिङ्गात्। सर्वत्रैव देहादिवदुभयदृशिता तदभिमानिदेवतोपगमात् अनुमानाच्चेत्यभिप्रायः। तदित्यव्ययं तयेत्यर्थे। तया विश्वाहंदृशितया हेतुना जीवतास्थितिं जीवभावव्यवस्थाम्। **अपेक्ष्य** तां विश्वदृशिताम्। **अविद्यां वदन्ति**। "अविद्यायामन्तरे वर्तमाना" इत्यादिश्रुतिविदः। विश्वाहंदृशितैव जीवभावोपाधिरिति। तद्रूपां विश्वदृशितां तत्सम्बन्धितयाऽविद्यां वदन्ति। तस्य स्वरूपज्ञानावरणात् परतोऽपि तस्य तद्भ्रमबीजत्वाच्चेत्यभिप्रायः तदिति पदमनुषञ्जनीयम्। तया, स्वेनैवाहंभावेन विश्वदृशितया। ईशतास्थितिं, ईश्वरभावव्यवस्थाम्। **अपेक्ष्य, तामेव विश्वदृशितां मायां वदन्ति**। "इन्द्रो मायाभिः पुरुरूप ईयते," "मायां तु प्रकृतिं विद्यादि"त्यादिश्रुतिविदः। अतादात्म्येन विश्वदृशितैवेश्वरत्वोपाधिरिति तद्रूपां विश्वदृशितामेव मायां वदन्ति। जीवस्य विस्मयनीयविश्वभ्रमहेतुत्वादित्यभिप्रायः। अत्र **महेशेति** सम्बोधनेन "मायिनं तु महेश्वरमि"त्यादिश्रुतिरेवोपपन्नार्थेति सूचयति ॥ ७२ ॥

**अथ** यद्येवमात्मन्यनादिरामोक्षादखण्डदण्डायमाना जडशक्तिरविद्या माया विश्वरूपविवर्तिनी नाभ्युपगम्येत, आत्मस्वरूपज्ञानमेव तु विश्वदृश्यरूपावभासमविद्या मायानामोपगम्यते। तर्हि स एवाऽयं साकारज्ञानवाद इति बाह्यार्थापलापः प्राप्तः। तत्र "नाभाव उपलब्धेः" इति न्यायविरोधः। एवं हि विज्ञानवादी मन्यते। केवलमनुभवात्मना जायमानं विज्ञानं न विना नीलाद्याकारं नीलज्ञानं पीतज्ञानमिति प्रतिविषयव्यवस्थां लभते। एवमवश्याङ्गीकार्ये विषयाकारे विज्ञाने न फलं बाह्यार्थकल्पनया नीलाद्याकारवैचित्र्यं च। विज्ञानस्यानादिवासनावैचित्र्यादेव स्वप्नादिप्रत्ययवैचित्र्यवत्। तस्मादभावो बाह्यार्थस्येति। तत्रेदमुच्यते। नाभावो बाह्यार्थस्य, उपलब्धेः। यथा विज्ञानं उपलब्धिबलादेवास्तीत्युपगम्यते तथैव विज्ञानार्थभेदोऽप्युपलब्धिबलादेवोपगम्यताम्। ज्ञानस्यान्तरार्थस्य च बहिरवभासात्। उपगम्यते च बहिरवभासोऽर्थस्य परेण यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति वदता। स्वप्नादिवैधर्म्याच्च। न जागरे नीलाद्याकारवैचित्र्यं वासनामात्रनिबन्धनम्। अन्यथा स्वप्नविज्ञानं बाध्यं, जागरविज्ञानं बाधकमिति व्यवस्था न स्यात्। तस्मादस्ति बाह्यार्थः। अन्यथा कदाप्यर्थानुपलब्ध्या तद्वासनाया अप्यसंभवादिति। सोऽयं न्यायस्वरूपज्ञानस्यैव, विश्वदृश्यावभासत्वोपगमे विरुध्येता **इतीमां शङ्कां** परिहरन्नाह —

माणिक्यमौक्तिकमणिप्रथनप्रकाशः
तत्तद्गुणप्रथनतां स्वयमप्युपैति ।
प्राचीनविश्वदृशिवासनयैवमेव
त्वं विश्वरूपदृशितामिति देव मन्ये ॥ ७३ ॥

**माणिक्यं** पद्मरागं, **मौक्तिकमणिं** च **प्रथयतीति**, तथा **प्रकाशः** तत्प्रभैव सौरालोको वा, **स्वयमपि**, यथा माणिक्यादिरक्तादिगुणाकारः प्रथते तथा स्वयमपीत्यपिशब्दः। **तत्तद्गुणप्रथनतां** तस्य तस्य माणिक्यादे रक्तशुक्लादिर्गुणो यस्य स तथा तत्तद्गुण इति प्रथनतां रक्ताद्याकारप्रकाशतामित्यर्थः। **उपैति**, उप सामीप्येन प्रकाश्याद्यथा विवेको न भवति तथा एति प्राप्नोतीत्यारोपात्, न वस्तुतः। शुक्लभास्वरैकस्वभावत्वात्। अत्रोपोपसर्गग्रहणात्, प्रकाश्यस्य स्वाकारस्य च विविच्य ग्रहः स्यादिति शङ्का निरस्यते। प्रकाश्यरूषितावभासत्वात् प्रकाश्यस्य न विविच्याकारद्वयावभास इत्यभिप्रायः। यथाऽयं दृष्टान्तः एवमेवात्र स्वरूपज्ञानं प्रकाश्याकारावभासं भवितुमर्हति। प्रकाशत्वात्, सम्प्रतिपन्नसौरालोकादिवदित्यनुमाने विवक्षिते, **दृष्टान्तासम्प्रतिपत्त्यभावमेवकारेणाभिज्ञापयति।** अत्र **देवेति** सम्बोधनेन प्रकाशत्वहेतोः पक्षधर्मतां दर्शयति। दीव्यति द्योतत इति हि देव उच्यते। **त्वं** अविकृतचिदेकस्वभावः **विश्वरूपदृशितां** विश्वाकारावभासतां उपैषीति पुरुषविपरिणामेनानुषङ्गः। **इति** एवं **मन्ये** उपपत्त्या प्रत्येमि।

ननु सौरादिप्रकाशस्य प्रकाश्योपाधिका तदाकारप्रकाशता। आत्मस्वरूपप्रकाशस्य तु प्रकाश्यन्तराभावात् कथं विश्वाकारावभासता स्यादित्याशङ्कानिरासायाह प्राचीनेति। **प्राचीना**, पुरातनी **विश्वदृशिरेव**। विश्वाकारावभास एव **वासना**। तया प्राप्तविश्वाकारावभासं स्वरूपज्ञानमेव वासनेत्युपपादितम्। अतस्तत्कालप्रकाश्यन्तराभावेऽपि प्राचीनदृग्विषयतारोपितविश्वमेवोत्तरतदाकारप्रकाशतोपाधिस्स्यादित्याशयः।

**इदमत्राकूतम्** – सम्प्रतिपन्ना तावत्प्रकाशस्य प्रकाश्याकारावभासता। यथा सौरादिप्रकाशो रक्तमवभासयत् रक्तो, नीलं नीलो, वृत्तं वृत्तो, वक्रं वक्रोऽवभासते। एवं स्वरूपदृशेरपि दृश्याकारावभासता स्यात्। न चैतावता ज्ञानसाकारता नित्यनिर्विशेषे सत्येव स्वरूपज्ञाने दृश्यदृशिभावस्यारोपमात्रत्वात्। तत्र कस्यचित्प्रकाशस्य प्रकाश्याकारावभासतारोपे तत्कालवस्तु तत्प्रकाश्य-

मुपाधिः। कस्यचित्तु तदाकारावभासतारोपे प्राचीनतदारोप एव हेतुः। भीरुकस्य नैशे तमसि निर्वस्तुक – निशाचरारोपपरम्परासम्प्रतिपत्तेः। वेदब्राह्यस्य तु नीलाद्याकारमेव ज्ञानमुपजायते। पृथुबुध्नोदराकार इव घटादिः। तत्र नीलाद्याकारस्य ज्ञानस्वरूपतुल्यसत्त्वेन स्वेनैव दृश्यतापत्तौ स्वात्मनि वृत्तिविरोधः। "छिद्यदैव च्छिद्यते नेह पाक एव न पच्यते। स्वांशेन ज्ञानमप्येवं न ज्ञेयमिति निश्चयः" ॥ यथा चाहुः — "अङ्गुल्यग्रं स्वमात्मानं नात्मना स्प्रष्टुमर्हति। स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति" इति। अस्माकं तु स्वरूपज्ञानं स्वत एव भासमानं अविद्ययाऽन्यथा भासत इति स्वस्य स्वविषयत्वानुपगमादविरोधः। अथापि बाह्यार्थापलापः प्राप्तः। आम्नायमुपालभस्व। "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते। अन्तरस्मिन्निमे लोकाः अन्तर्विश्वमिदं जगत्" ॥ इतिह्याम्नायने। किं कुर्मो वयमाम्नायमरण्यनुसारिणः। किन्तु तस्मिन् विश्वदृश्यदृशितालक्षणे जीवजगदीश्वरभेदारोपे सति मातृमानमेयव्यवहारभूमौ मानाधीनबुद्धेरेव साकारतया दृश्यदृशिभावावभास इति नास्ति बहिरर्थः। "सहोपलम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्यते इन्दाविवाऽद्वये" ॥ इति वदन्तं प्रति इदमुच्यते "नाभाव उपलब्धेः" बहिस्सदुपलभ्यमानार्थाकारैव बुद्धिरवभासते, न तु बुद्धिरेव साकारोपजायते। प्रकाश्योऽर्थः, प्रकाशिका बुद्धिरित्यनाकाराया एव। तस्यास्स्वरूपोपलब्धेः। यथाहुः – "निराकारामेव बुद्धिमनुमिमीमहे" इति। "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति च। यद्यपि प्रमाणज्ञानस्यापि प्रकाशकत्वात् प्रकाश्याकारावभासता युक्ता सौरालोकादिवदेव तथापि तत्र तदाकारसमर्पकतया विषयवस्त्वपि चावश्यमुपगन्तव्यम्। अन्यथा प्राग्ज्ञानोत्पत्तेर्निर्विषयप्रमाणप्रवृत्त्ययोगेन तस्यैवानुत्पत्तिप्रसङ्गात्। प्रमाणप्रवृत्त्यधीना च तदुत्पत्तिः। चक्षुरादिव्यापारे सति नीलादिज्ञानं, तदभावे तदभाव इत्यन्वयव्यतिरेकदर्शनात्। न चैवं नीलाद्याकारद्वयावभासप्रसङ्गः। ज्ञानस्य विषयरूषितावभासतया सौरालोकस्येव तदाकारभेदाग्रहेण तदेकत्वाभिमानोपपत्तेः। वस्तुतस्तु न प्रमाणजन्या बुद्धिप्रवृत्तिः। प्रमेयप्रकाशः। किं तर्हि स्वरूपज्ञानमेव। किन्तु पृथगहंदृशितया परिच्छिन्नसत्वाभिमानिनो जीवस्य सतः स्वरूपज्ञानोपार्जिकैव। सा ततश्च प्रमाणाधीनबुद्धिवृत्त्यवभासं स्वरूपज्ञानमेव तदनुषक्तविषयावभासमपि। यथाहुः – "अन्तरपरोक्षताया न विषयस्थापरोक्षता भिद्यत" इति। अन्यथा करणव्यापारफलवैयधिकरण्यप्रसङ्गात्। न हि परशुव्यापारः कुदरे खदिरे द्वैधीभाव इति संभवति। अतः प्रमाणजननीयबुद्धिवृत्तेः स्वतोनिराकारतावादः अप्रकाशकत्वादेव, अतस्तदपेक्षया न बाह्यार्थाभावः। उपलब्धेरिति विज्ञानवादी निरस्यते, अत एव च "वैधर्म्याच्च न स्वप्नादिवत्" इत्युच्यते, स्वप्ने करणोपरमात्। प्रमाणप्रवृत्त्यभावेन स्वरूपज्ञानस्यैव वासनामात्रेण विषयाकारावभासत्वोपगमात्। "तमेतमतिगम्भीरं न्यायदर्शिविदर्शितम्। अन्धः पन्थानमागन्तुमनागन्तुमशक्नुवन् ॥ मत्तांत्तानमतिः

कश्चित्परपारुष्यपण्डितः । विज्ञानवादी साम्यं नो वितथं परिजल्पति ॥ तमहमनुशोचामि महापापतमोहतम् । तद्धर्मये ऽनुवर्तन्ते तांस्तु शोचामि दुर्धियः" ॥ अथ यदि तेषु महतामनुकम्पा, तर्हि त एवमनुकम्पनीयाः । अस्तिकर्म अस्ति विपाक इति सुगतो धर्माधर्मफलं जातिमाह । "पुण्यः पुण्येन कर्मणा भवति, पापः पापेने" त्याद्या च श्रुतिः । "अहिंसा परमो धर्म" इति सुगतः । "अहिंसन् सर्वभूतानी" त्याद्या च श्रुतिः । "पृथिवी किंसन्निश्रया, अप्संनिश्रया, आपः किंसन्निश्रयास्तेजस्संनिश्रया" इत्यादि सुगतः । "यदिदमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्च वायौ गार्गी" त्याद्या च श्रुतिः । यथायथं गन्धरसादिपरमाणुसङ्घात एव पृथिव्यादिरिति वैभाषिकः । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्य । यद्विज्ञातमित्वाभूदित्येता-सामेव देवतानां समास" इत्याद्या च श्रुतिः । विज्ञानमात्मा तदन्तस्स्थमेव सर्वमिति योगाचारः । "विज्ञानमानन्दं ब्रह्म, अन्तरस्मिन्निमे लोका इत्याद्या च श्रुतिः । निष्प्रपञ्चं निरञ्जनं शून्यं तत्वं, तत्र सर्वं मायाकल्पितमिति माध्यमिकः । प्रपञ्चोपशमः शिवोऽद्वैत आत्मैव, अथात आदेशो नेति नेति, स एष नेनि नेत्यात्मा, असङ्गोह्ययं पुरुषः, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादि प्रकृत्य "एवं सोम्य स आदेशो भवतीति, यत्र हि द्वैतमिव भवति यत्र वान्यदिव स्यात्" इत्याद्या च श्रुतिः । अहङ्कारममकारसंज्ञा अविद्या, तन्मूलस्संसार इति सुगतः । "अविद्यायामन्तरे वर्तमाना" इत्यारभ्य "पुनः पुनर्वश, मापद्यते मे" इत्याद्या च श्रुतिः साचाविद्या स्मृतौ विवृता । "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः । अविद्यातरुसम्भूतिबीजमेतद्द्विधा स्थितम्" ॥ इत्यादि । तत्रैवं सति सुगतवचनस्य उच्छास्त्रस्यैव यादृच्छिकश्रुतिच्छायानुपातमात्रेण तत्सामान्यभिया महाजनपरम्परागत-श्रुतिसमयहाने श्रुतिप्रामाण्यस्यैव हानापत्तेर्म्लेच्छताप्रसङ्गात् । यस्मिन्कस्मिंश्चिदभ्युपगमे येन केनापि सामान्यमपरिहार्यमिति सवभ्युिपगमत्यागप्रसङ्गाच्च । परमनास्तिकता । आहारनिद्रादि-स्यापारस्य च श्वचण्डालादिसाम्यापादकत्वात् । तत्त्यागे जीवनमेव दुर्लभं पुरुषपशूनामित्यतो गुरुसम्प्रदायमनुविदधानैर्यथोपदिष्ट एव वेदार्थः प्रतिपत्तव्य इति । तदेवं त्रैविद्यवृद्धपरम्परापरिक्षुण्णं वेदघण्टापथमपहाय गुरुसम्प्रदायहीनतया कापथमाश्रिताः कतिपये वैधेयवैधवेयाः वैदिकमहापुरुषपरुष-भाषणपाण्डित्येनैव शास्त्रपाण्डित्यमात्मनः प्रख्यापयन्तः ख्यातिलाभपूज्यास्त एव प्रत्यक्षाद्यनुरोधेन श्रुत्यर्थकदर्थनया पामरडिम्भान् प्रलम्भयन्तः परीक्षकापशदा विद्वद्भिरुपेक्षणीयाः इति ॥ ७३ ॥

**इदं तावदवस्थितं** ।विश्वरूपविपरीताकारदर्शितैवात्मनोऽविद्या माया, तन्निबन्धना च प्रतिभासत एव विश्वरूपता विश्वोपादानत्वमिति । अर्थतश्च तादात्म्यताटस्थ्याभ्यां तत्प्रतिभासतैव

जीवेश्वरभाव इत्यपि सूचितम्। तत्रैव आशङ्का भवति – कथमेवं सति ईश्वरो विश्वस्य कर्ताऽभिधीयते ? "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इत्यादिषु विश्वकल्पनतुल्यकालत्वेन पूर्वकालत्वाभावादिति। तामिमामाशङ्कां परिहरन्नीश्वरो विश्वस्य कर्तेत्येव न शास्त्रस्य विवक्षितोऽर्थः। किन्तु निषिद्धाशेषविशेषात्मतत्वज्ञानं पुरुषार्थ इति। तत्स्वरूपमेव। तदुपलक्षणं तु विश्वकर्तृत्वं यादृशं तादृशमेव क्वचिदात्मतत्वप्रतिपादनाय, क्वचिदुपासनाविधानाय चोपन्यस्यस्ते। तस्य तु निरालम्बनत्वायोगात् तदालम्बनमेव समर्पणीयम्। तच्चेशस्य पूर्वभावित्वाभावेऽपि सम्भवतीत्यभिप्रेत्याह —

दृश्यात्मभावदृशितैव हि जीवभावो
दृश्यस्य तत्तदनुदर्शनमेव जन्म।
दृग्दृश्यकल्पनमनादि सजीवमेव-
मीशानुनिष्पदनमीश! निमित्तमाहुः ॥ ७४ ॥

अत्रेशनिमित्तवादगतिमुपपादयितुं वस्तुगतिं तावदाह – **दृश्येत्यादिना**। **दृश्यस्यात्मभावेन तादात्म्येन** दृशिर्दर्शनं यस्य, तस्य भावो **दृश्यात्मभावदृशिता**। तादात्म्येन दृश्यावभासितेत्यर्थः। सैव **जीवभाव** आत्मनः, न तु जीव इति पृथगात्मकं तत्वान्तरमित्येवकाराभिप्रायः। हिः प्रसिद्धौ प्रसिद्धं ह्येतत् परमात्मैव स्वसृष्टमनुप्रविष्टो जीवो नामेति। "स एष इह प्रविष्ट आनखाग्रेभ्यः प्राणन्नेव प्राणो नाम भवति तदनु प्रविश्य सच्च त्यच्चाभवत्" इत्यादिषु अनुप्रवेशेन व्यालादेरिव बिलादौ निलयनं, मण्डूकादेरिव गण्डशिलादौ परिणामः न कलानिधेरिव जलादौ प्रतिबिम्बः। तस्यैव विश्वाकारावभासित्वादपरिणामित्वादव्यवधानाच्च। किन्तु तादात्म्यावभास एव। शास्त्रे "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे"त्युपमोपादानेनात्मनो निर्विशेषचिदेकरसस्वभावस्यापारमार्थिकाविशेषाश्चन्द्रचलनादिवदित्यु- "दिते अम्बुवदग्रहणात्तु न तथात्वम्"। चन्द्रादिव्यवहिततत्प्रतिबिम्बोपाध्यम्बुवदात्मव्यवहितोपाधेरग्रहणान्न चन्द्रादितुल्यत्वमिति चन्द्रादिप्रतिबिम्बदृष्टान्तायोगमाशङ्क्य, "वृद्धिह्रासभक्त्वमन्तर्भावादुभयसामाञ्जस्यादेवमि"ति प्रतिबिम्बभावमनपेक्ष्य उपाध्येकलोलीभावादेव तद्धर्मभाक्त्वं जलचन्द्रादिवदभिधीयते। यथा ह्ययमित्यादौ एवं सति विवक्षितांशेन दृष्टान्तदार्ष्टान्तिकोभयसामञ्जस्यादिति प्रतिपाद्यते इत्यभिप्रायः। एवं जीववस्तुगतिरुक्ता। जगद्वस्तुगतिमाह "तत्तदनुदर्शनम्"।

**तत्तदिति** वीप्सा। अनुदर्शनविशेषणं, न खलु युगपदेव विश्वावभासताऽऽत्मनः हेतुहेतुमत्तयैव, भूतभौतिकादिपूर्वपूर्वभ्रमवासनाऽविद्यायास्तथैवोत्तरोत्तरभ्रमबीजत्वात्। अतोऽनुक्रमेण भूतभौतिकद्दशिता वीप्सया विशेष्यते। **तत्तदिति**। तेनाऽऽत्मन आकाश आकाशाद्वायुरित्यादि जनिक्रमवदालम्बनं समर्पितं भवति। तदेव दृश्यस्य जन्म। **दृश्यस्येति** प्रतिभासापेक्षया, न तु पूर्वकालं कुलालादेरिव जननीयविषयं दर्शनम्। तन्निबन्धनं च घटादेरिव दृश्यवस्तुनो जन्मेत्येवकारार्थः। एवं सति फलितमाह — एवम्। ऐवं एवंप्रकारम्। इदंप्रथमत्वे हेत्वभावेन दृश्यकल्पनानुपपत्तेरनादि इति विशेषणम्। जीवस्याऽपि दृश्यकल्पनानुनिष्पादिस्वरूपतया **सजीवमित्यप्राधान्येन** निर्देशः। **दृग्दृश्यकल्पनं** दृशो ज्ञानैकरसस्य परमात्मनो, दृश्यकल्पनं दृश्यात्मनावभासनम्। ईशानुनिष्पादनम्। दृश्यकल्पनमनु निष्पद्यतेऽभिव्यक्तिमापद्यत इत्यनुनिष्पदनः। पद्यतेः कर्तरि ल्युट्। **ईशोऽनुनिष्पदनो यस्मिन् तत्तथा**। अतादात्म्येन विश्वद्दशितैव हि परमात्मन ईश्वरत्वम्। अत एव पूर्वसिद्ध इवेश्वरो भवति। प्रतिभासतोऽपि जायमानतादात्म्याभावात्। ततः किं? यत एवं अत **ईशनिमित्तमाहुः**। ईशो निमित्तं यस्य सजीवस्य जगतः तत्तथाऽऽहुः — "कर्तारमि"त्याद्याः श्रुतयः। "य आत्मानमन्तरो यमयति एष ह्येव साधु कर्म कारयति तमि"त्याद्याश्च। तावतैव तदालम्बनेन, तात्पर्यतो लिलक्षयिषितस्वरूपोपलक्षणोपपत्तेः। न तु वस्तु सदीशकर्तृकत्वमित्यभिप्रायः॥ ७४॥

अथ यद्येकमीश्वरो विश्वकल्पनानुनिष्पादी तर्हि स्वर्वादिरिव यूपाद्यनुनिष्पादियूपादेरेष विश्वकल्पनाया नियामको न स्यादितीश्वरत्वहानिः। तथा च "स एष सर्वस्य वशी सर्वस्येशान एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल — एष सेतुर्विधरण एषो लोकानामसम्भेदाये"त्यादीश्वरवादा-निर्विषयास्स्युरित्याशङ्क्य तदनुनिष्पादिन एव तन्नियामकत्वं निदर्शनान्तरेण सम्भावयन् परिहरति —

भानूदयोपधिक एव हि दिग्विभागः
प्राची नियच्छती तमेव दिशा विशुद्धा।
एवं विशुद्धदृशिरेव सुधांशुमौले!
विश्वोदयोपधिरमुं परमेश्वरस्त्वम् ॥ ७५॥

**दिशां विभागः** प्राच्यादिलक्षणः। **भानूदयोपधिक — एव**, न स्वत इत्येकारार्थः। एकयैव परोपाधिकल्पितभेदया सर्वव्यवहारोपपत्तौ स्वतस्तद्भेदकल्पने मानाभावात्। "चतस्रो दिशः पञ्चदश" इत्याद्यर्थवादस्य च यथासिद्धानुवादत्वेन तद्भेदाविधायित्वादित्यभिप्रायः। अत्र

लोकप्रसिद्धं सूचयितुं हिशब्दः । प्रसिद्धं हीदं लोके यत्राऽऽदित्य उदेति सा प्राचीति पुराणे च — "उदयास्तमयाभ्यां च स्मृते पूर्वापरे दिशौ" इति । अथ स्वभावविभक्ता एव दिशः कस्मान्न भवन्ति ? न भानूदयोपाधिका इति युक्तम् । पूर्वादिदिक्षु सर्वास्वेव भानूदयश्रवणात् । यथा मधुविद्यायां, "स यावदादित्यः पुरस्तादुदेता, पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता, स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता, स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता स यावदादित्य उत्तर उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेता अर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येते"ति इत्यत आह दिशा विशुद्धेति । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां" इत्यतो दिशेति निर्देशः । तथाचोदाहृतम् "यथा वाचा निशा दिशे"ति । विशुद्धिरत्र स्वतः प्राच्यादिभेदवैधुर्यं । अयं भावः — ता यदि स्वभावविभक्तादिशो व्यापिन्यः, किमत्राभिज्ञानमियमेषा प्राची इयमेषाऽर्वाचीति । अभिज्ञानाभावे च तद्व्यवहारानुपपत्तिः । अथाव्यापिन्यः तत्रापि किमभिज्ञानमियमेषा प्राची, इयमेषाऽवाचीति । तत्राऽभिज्ञानं सुमेरुरिति चेत् तर्हि तत एषा दिग्दक्षिणैवेति भारतवर्षे प्राच्यादिविभागाभावे तदाश्रयसकललौकिकवैदिकव्यवहारविलोपप्रसङ्गः ।

अथ तत्रापि किञ्चन काञ्चनशैलस्थानं परिकल्प्य तदवधि प्राच्यादिकल्पनामूलो व्यवहार इति चेत् न, "सर्वेषां द्वीपवर्षाणां मेरुरुत्तरतो यतः" इति भद्राश्वकेतुमालादीनामप्युत्तरे मेरुरिति दर्शनात् । तदवधि पूर्वादिदिग्व्यवस्थाया एवासिद्धेः । ननु न भानूदयोऽपि तदभिज्ञानम् । दक्षिणादिष्वपि दर्शनादित्युक्तम् । सत्यमुक्तम् । तदर्थावधारणार्थमेव यत्र भानुरुदेति प्राची, यत्रास्तमेति सा प्रतिची, तत्पार्श्वे च दक्षिणोत्तरे इति व्यवस्थाऽवश्यास्थेया । तथा च पुराणं — "उदयास्थमयाभ्यां च स्मृते पूर्वापरे दिशौ" इति । ततश्च बोध्यापेक्षया दक्षिणाद्यादिष्टाऽपि यत्र येषां भानूदयः सा तेषां प्राच्येव । एतदुक्तं भवति — पुराणे तावदिदमुच्यते मानसोत्तरशैले, "वस्वोकसारा शक्रस्य याम्या संयमनी पुरी । पुरी सुखा जलेशस्य सोमस्य च विभावरी" । भानुश्च सुमेरुं प्रादक्षिण्येन परिक्रममाणः "शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् । विकोणौ द्वौ विकोणस्थस्त्रीन्कोणान्द्वेव पुरे तथा" ॥ यदा भानुश्शक्रपुरदिशि मध्येऽहनि तिष्ठति तदा संयमिनीदिग्गतानां दृश्यमान उदितो भवति सा तेषां प्राची । विभावरीदिग्गतनामदृश्यमानोऽस्तमितो भवति सा तेषां प्रतीची । तदा विभावरीशक्रान्तराललक्षणविकोणदिग्गतानामर्धाष्टम-

घटिकाशेषमहर्भवति । याम्याशक्रान्तरालगतानामर्धाष्टमघटिकातीतमहर्भवति । एवं शक्रपुरे तिष्ठतो भानोः पुरत्रयकोणद्वयसंस्पर्शः । यदा पुनश्शक्रयाम्यविकोणदिशि मध्येऽहनि तिष्ठति तदा याम्यवरुणान्तरालगतानामुदितो भवति, सौम्यशक्रान्तरालगतानामस्तमितः तदा शक्रगतानामर्धाष्टम-घटिकाशेषमहर्भवति । याम्यगतानामर्धाष्टमघटिकातीतमहर्भवति । एवं कोणत्रय - पुरद्वयसंस्पर्शः । एवं सर्वत्र पुरत्रयकोणद्वयकोणत्रयपुरद्वयसंस्पर्शो योज्यः। "उदयास्तमये चैव सर्वकालं तु सम्मुखे। दिशा-स्वशेषासु तथा मैत्रेय विदिशासु च"॥ यथा यमदिश्यानां – शक्रदिश्युदयः वरुणदिश्यस्तमयः, यथा वा यमशक्रदिगन्तरालगतानां सोमशक्रदिगन्तरालदिश्युदयः, यमवरुणान्तरालदिश्यस्तमयः । एवमन्यत्रा-प्युदयास्तमयसंमुखत्वं योज्यम् । तदिदमेव वेदेऽपि वेद्यते – "पुरस्तादुदेता पश्चादस्तमेता, दक्षिणत उदेतोत्तरतोऽस्तमेते"त्यादौ । पुराणस्य वेदोपबृंहणतया तेन तदर्थनिर्णयोपपत्तेः द्विस्तावत्, द्विस्तावदिति नादित्यगतिकालापेक्षं द्वैगुण्यमुच्यते तर्हि षष्ट्यैव घटिकाभिरुदयास्तमयदर्शनविरोधात् । "दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः । सर्वद्वीपेषु मैत्रेय निशार्धस्य च सम्मुखे" इति च पुराणं यथा यदा शक्रपुरे मध्याह्नः तदा वारुणेऽर्धरात्रः, यदा वा शक्रयमकोणे मध्यमहः तदा वरुणसोमविकोणेऽर्धरात्रः । एवमन्यत्रापीति । किमपेक्षं तर्हि, द्वैगुण्यं उदयास्तमय-पर्यावृत्तिकालापेक्षम् । रवेरुदयास्तमयौ हि दर्शनादर्शने एव, न घटादेरिवावस्थाभेदः तथा च **पुराणम्** — "यैर्यत्र दृश्यते भास्वान् स तेषामुदयस्स्मृतः । तिरोभावं च यत्रैति तत्रैवास्तमयो रवेः । नैवास्तमयमर्कस्य नोदयस्सर्वदा सतः॥ उदयास्तमयाख्यं हि दर्शनादर्शनं रवेः" ॥ इति । तथा च संयमिन्यपेक्षया सुखायाश्चिरस्थायित्वं गम्यते । ततोऽपि विभावर्याः, ततोऽपि वस्वोकसारायाः । तथात्वे हि सति क्रमेण सुखादिदिश्यानां रविदर्शनादर्शन-लक्षणोदयास्तमयावृत्तिकालोत्तरोत्तरद्वैगुण्यं सिद्ध्यति । तावन्तं तावन्तं कालं मधुविद्यानिष्ठो वस्वादी-नामाधिपत्यादि पर्येतीति श्रुत्यर्थः । न चैवं वस्वोकसारादय एव दिग्व्यवस्थाहेतव इति शक्यशङ्कं तद्वासानामेव प्राच्यादिव्यवहाराभावप्रसङ्गादिति । तस्मात्सूक्तम् – 'भानूदयोपधिक एव दिग्विभाग' इति । 'दिशा विशुद्धेति' च । अथवा सर्व एवायमेवकाराभिप्रेतार्थः । एवं भानूदयोपधिक एव दिग्विभागः । अथ च 'तमेव' स्वयं यदधीनात्मलाभात्तमेवादित्योदयं प्राची नियच्छति, "प्राच्यामुदेति सविते"ति । ननु पूर्वोदयोपाधिका सा उत्तरोदयं नियच्छेदिति शङ्कानिरासाय एवकारः । भूतादिकालभेद इवोपाध्युपधेययोरेव प्राच्यादिदिशाभेदेऽपि परस्पर-नियामकत्वोपपत्तावतिरिक्तोपाध्याश्रयणस्यानवस्थामात्रफलत्वात् । पूर्वोदयोपाध्यपाये तदुपधेय प्राच्याद्यनुवृत्त्ययोगाच्चेत्यभिप्रायः । ननु पूर्वोदयसंस्कारस्तत्र भविष्यति, तदुपाधिका च प्राचीपरमुदयं नियंस्यति, तत्संस्कारोपाधिका च तत्परंपरेत्यत आह दिशा विशुद्धेति । तत्रैवादित्यास्तमयोपाधिना प्रतीची न भानूदयं संस्कारकलुषा दिक् प्राची भवितुमर्हति । तत्रैवादित्यास्तमयोपाधिना प्रतीची

भावाभ्युपगमात्। अतो विशुद्धैव दिक् प्रस्तुतोदयाद्युपाधिना प्राच्यादिरूपा तमेव नियच्छती-त्यभिप्रायः। तदधीनसद्भावस्य तन्नियामकत्वे दिङ्मात्रमिदमुदाहरणम्। सर्वत्रैव विशेषणविशेष्यादौ समानैषा गतिरित्यभिप्रेत्य अत्र **सुधांशुमौल** इति सम्बोधनम्। सुधामया अंशवो यस्य सः सुधांशुर्मौलौ यस्य स तथा। "गवादिभ्यः परवचनमि"ति सप्तम्याः परनिपातः। सुधारूपांशवो वा सुधांशुचिह्नमौलिर्वा। न वस्तुमात्रस्यान्यपदार्थस्य विशेषणं, अव्यापित्वात्। अन्यथा वस्तुमात्रे विशेषणान्तरासम्बन्धप्रसङ्गात्। विशेष्ये स्वव्याप्त्या विशेषणान्तरसम्बन्धविरोधी खलु धर्मो विशेषणं नाम भवति, यथोत्पले नीलः। अन्यथा यजति ददाति जुहोतिषु आख्यातार्थभावनाभेदो न स्यात्। एकस्यामेव भावनायां यागदानादिनानाविशेषसम्बन्धाविरोधात्। विशिष्टभेदश्च **भगवता जैमिनिना** सूत्रितः। "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्" इति। किं तर्हि? तद्विशेषणव्यावृत्तरूपस्य विशेष्यस्यैव चन्द्रस्य शिवस्य वेति। चन्द्र एव सुधांशुः शिव एव च सुधांशुमौलिरिति, तदेव विशेष्यं विशेषणमात्मनि नियच्छतीत्यवगम्यते। न चान्यतो व्यावृत्ताधिगतं विशेष्यं अन्यद्विशेषणं नियच्छतीति युक्तम्। अनवस्थादिदोषापातात्। अपि चापूर्वमन्यतो व्यावृत्तानधिगतमपि स्वर्गादि "यन्न दुःखेन संभिन्नमि"त्यादिलक्षणेनैव विशेषणेन व्यावृत्तमव-गमनीयम्। अन्यथा प्रागेव व्यावृत्तावगते लक्षणवैफल्यात्। इतरव्यावृत्त्यवगमो हि लक्षणफलमिष्यते न्यायिभिः। एवमन्यत्रापि यथायोगं तदधीनसद्भावस्यैव तन्नियामकत्वमूहनीयमित्यभिप्रायः। एवं यथाऽयं दृष्टान्तः तथा विशुद्धदृशिरेव जीवजगदीशादिविकल्परहितदृक्स्वभाव एव। न तु जगदादिरूपविभक्तस्वभावः। "एकमेवाऽद्वितीयमि"त्यादिविरोधात्। इत्येवकाराभिप्रायः। त्वं परमात्मा, **विश्वोदयो** विश्वात्मदृशितालक्षण **उपधिरुपाधिः** ईश्वरताविभागप्रयोजको **यस्य स तथा**। अत एव **परमेश्वरस्त्वं** जीवस्यापि देहादीश्वरत्वमस्तीति तद्व्यावृत्त्यर्थं परमेति विशेषणम्। ऐश्वर्यस्य नियमनस्य पारम्यं अखिलविषयव्यापितैव। अमुं विश्वोदयं नियच्छसीति विपरिणामेनानुषङ्गः। उदयग्रहणं प्रतिभासाभिप्रायम्। न हि विश्वस्य प्रतिभासादृते स्वरूपविकारोदयो नाम संभवति। परमात्मनो परिणा-मित्वात्। **ननु** तदनुनिष्पादिनस्तन्नियामकत्वमयुक्तम्। यूपाद्यनुनिष्पादिन इव स्वर्वादेरित्युक्तं, **दुरुक्तम्**। तद्वैषम्यात्। यूपकरणे तस्य यश्शकलः परापतति स हि स्वरुर्नाम। स खल्वनुपयुक्तविपन्नोऽपि न स्वार्थेन यूपकरणं प्रयोजयति। तदभावेऽपि यूपसिद्धेरविघातात् विश्वदृशितालक्षणायां पुनर्विश्व-कल्पनायामतादात्म्येन तद्दृशिमानेवेश्वर इति तदभावे न विश्वरूपस्थितिप्रवृत्त्यादिसिद्धिः। तस्य सर्वस्यापि तद्दृशिमात्रत्वात्। अतस्स नियन्ता विश्वस्येति तद्विपथा एव सर्वज्ञशित्वादिवादास्स्युरिति श्लिष्टम् ॥ ७५ ॥

अथापि स्यात् ईश्वरस्य विश्वकल्पनानुनिष्पादितया तत्समसमयत्वे "तदैक्षत असृजते"त्यादीक्षण-सर्गक्रमवादा निर्विषयाः प्राप्ता इतीमामाशङ्कां परिहरन्नाह —

प्रागीक्षणीयविधुरः स्वदृशेरधीश!
यद्वीक्षणं तव स एव तु विश्वसर्गः।
सोऽवैक्षताऽसृजत विश्वमिति श्रुतीना-
मुक्तिक्रमः परमयत्ननिवेदनाय ॥ ७६ ॥

प्राग्विश्वदर्शितालक्षणाया विश्वकल्पनायाः पूर्वं, ईक्षणीयेन विषयेण, विधुरः विरहितः। स्वात्मभूता दृशिर्यस्य स तथा। आत्मस्वरूपज्ञानमेव ह्यव्याकृतमिष्यते। अतिरिक्तमायानिराकरणात्। न च स्वविषयमीक्षणमात्मनः संभवति, स्ववृत्तिविरोधात्। न च कार्यालोचनात्मकमपीक्षणं सम्भवति, स्वरूपज्ञानस्यासम्बद्धविषयावभासत्वानुपपत्तेः। अथ कल्पनयैव विश्वविषयमालोचनमुच्येत, सैव कल्पना विश्वसर्ग इति प्रागीक्षणीयाभाव इत्यभिप्रायः। तस्य तत्र परमात्मनः, यद्वीक्षणं विश्वरूपावभासितालक्षणम्। स एव। विश्वसर्गापेक्षया स इति पुँल्लिङ्गनिर्देशः। "सर्वनामान्युद्देश्यविधेययोरेकत्वमापादयन्ति, यथायथं तत्तल्लिङ्गभाञ्जि भवन्ति"। यथा "शैत्यं हि यत्सा प्रकृतिर्जलस्ये"ति कालिदासः। न तु सर्गहेतुरीक्षणमुपादानविषयम्। उपादेयालोचनात्मकं वा किञ्चिदस्तीत्येवकाराभिप्रायः। पुरुषयत्नाधीने कार्यजनने परं तदालोचनाद्यपेक्षा, न तु तदधीन इति विशेषसूचनार्थस्तुशब्दः। "जीवोऽपीष्टे, ततोऽधिकमीष्टेत्यधीशः"। तस्य सम्बुद्धिरधीशेति। सजीवस्यास्य जगत ईशनमीशस्येयदेव यत्नेन हेतुस्वरूपकार्यैरनतिवर्तनीयत्वं, तच्चोपपादितं स्वर्वादिवैलक्षण्यप्रतिपादनेन तत्र पूर्वकालसत्त्वमनपेक्षणीयम्। तदीक्षणस्येत्यत्र तत्सम्बोधनेन दर्शयति। कथं तर्हि ईक्षणसर्गयोः क्रमवाद इत्यत्र आह स इत्यादि। "स ईक्षत, स इमाल्लोकानसृजत" इति श्रुतेरिदमर्थतोऽनुक्रमणम्। आरोपे क्रमानियमसूचनाय विश्वमिति सामान्यग्रहणम्। इति शब्दः तदर्थश्रुतिस्वरूपप्रत्युपस्थापनार्थः। स परमात्मा अवैक्षत विश्वमसृजत इत्येतदर्थिकानां श्रुतीनामुक्तिक्रमः, परं, ईक्षणसर्गोक्तिक्रम एव सकृदुक्त्यसम्भवात्। न त्वीक्षणसर्गोक्तिक्रम इत्यर्थः। अथवा श्रुतीनां परमात्मविषयाणां सोऽवैक्षत, विश्वमसृजतेत्युक्तिमः परमित्यन्वयः। न च शब्दभेदादर्थभेदः यागदानादिवत्। पाठक्रमाच्च तत्क्रमः प्रयाजादिवदिति युक्तम्। आनन्दानन्दमयज्योतिर्ज्योतिष्टोमादिपर्यायेषु व्यभिचारात्। प्रकृते चार्थभेदानुपपत्त्या तत्क्रमाप्रमित्सायां पाठक्रमस्य काम्येष्टिकाण्ड इवाध्ययनादृष्टार्थत्वादित्यभिप्रायः। अथ यदि सर्गेक्षणाभेदः किमर्थं पुनरिदमुक्तिद्वयं, एकैवोक्तिः कस्मान्न भवतीत्यत आह अयत्ननिवेदनायेति। अवश्यं तावत् उक्तिद्वयं, अन्यथा ऐक्षतेत्येवोक्तौ सर्गप्रत्यय एव न स्यात्। लोके हि नेक्षणमेव सर्ग इति असृजतेत्येवोक्तौ ईक्षणादेराक्षेपात् प्रत्ययस्स्यात्। किन्तु प्रयत्नचेष्टादेरप्याक्षेपात् स्यात्। ततश्चेश्वरस्यापि

लौकिकवद्बाह्योपकरणापेक्षया कर्तृत्वं स्यात् । ततश्च तस्य प्रागेव सत्वे "सदेव सोम्येदमग्र आसीदि" त्याद्यवधारणविरोधः । तदसत्वे तत्सम्पत्त्युपकरणान्तरापेक्षायां तस्यापि प्राक् सत्वासत्वयो-रुक्तदोषानवस्थाप्राप्तिः । **अतोऽयत्ननिवेदनाय,** ऐक्षतासृजतेति द्वयमुच्यते । तेन परमात्मन ईक्षणमेव विश्वस्य सर्गः नान्य इति यत्नाभावेन कल्पनैव विश्वमिति निवेदितं भवति इति ॥ ७६ ॥

एवमात्मातिरिक्तानिर्वचनीयमायावादिनः केचित् परमात्मनो माययैव सर्वज्ञत्वादिकमुपपादयन्तः परिणममानमायाधिष्ठानतया वा तद्विशिष्टपरिणामेन वा विश्वहेतुत्वमिच्छन्ति ।

**अन्ये तु** सैव मायाऽविद्या स्वप्रकाशाऽऽत्मनस्स्वत एव स्वरूपतत्वावभासप्रसक्तौ तत्प्रतिबन्धेनात्मानं न जानामीत्येव स्वयमवभास्यप्राप्तौ प्राचीनभ्रमसंस्कारोद्बोधात्तस्यैवात्मनो विपरीताकारावभासा सम्पद्यत इत्यविद्यानिबन्धनमेव परमात्मनो विश्वहेतुत्वमाचक्षते । अपरे पुनरात्मस्वरूपज्ञानस्य विपरीताकारावभासितैवाऽविद्या, तदुपशमे च प्राप्तविपरीताकारावभासं स्वरूपज्ञानमेव शास्त्रा-त्तन्निषेधाकारावभासितायाः प्रागुक्ताविद्यासंस्कार इति, तदनु प्रवृत्तेरुत्तरं विपरीताकारावभासितालक्षण-विश्वहेतुत्वनिबन्धनमिति । परमात्मनि हेतुत्वारोपे पक्षभेदा उपन्यस्ताः । तत्र तेषां परस्परविप्रतिषेधात् तद्विषयत्वे कारणवादिश्रुतीनामेवमप्रामाण्यमेवापादितं स्यात् । अतो यथाप्रतिपादितो वस्तुभूत एव कारणात्माऽवधारयितव्यः । एवं सति ज्ञानकामादिहेतुगुणवादिन्यः कार्यक्रमादिवादिन्यः च श्रुतयः कार्यकारणश्रुतिविप्रतिषेधसमाधानपरन्यायनिबन्धनानि भगवद्बादरायणसूत्राणि चाभूते भूतवदुपचरित-विषयाण्यन्यार्थपराणि न कल्पयिष्यन्त इत्याशङ्क्य न तावत्पक्षभेदानां परस्परविप्रतिषेधः, प्रतिपाद्य-भेदेन व्यवस्थोपपत्तेः । प्रतिपत्तारो हि मन्दमध्यमोत्तमप्रज्ञास्तया तया प्रक्रियया ब्रह्मतत्वं प्रतिपाद्यन्ते । तत्र तदव्यवस्था न दोषगन्धमावहति । **उक्तं चाचार्यैः** — "यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता" ॥ इति । श्रुतेरपि प्रतिपिपाद-यिषितपरमात्मलक्षणमात्रतया हेतुवादाव्यवस्थैव दृश्यते । यथा क्वचिदा"त्मन आकाशस्संभूत" — इत्यादावाकाशादिभूतहेतुवादः, क्वचि"त्तत्तेजोऽसृजते"त्यादौ तेज आदिहेतुवादः, क्वचित् "स इमाल्लोकानसृजते"त्यादौ भौतिकहेतुवादः, क्वचि"दिदं सर्वमसृजते"त्यादावक्रमविश्वहेतुवादः इत्याद्याः । न च सर्वोऽयं हेतुवादः, क्रमहेतुवादानुरोधेन व्यवस्थापनीयः । प्रयोजनाभावात् । विश्वहेतुत्वमात्रेणैव तदुपलक्षणीयब्रह्मप्रतिपादनसम्भवात् । सूत्रकृता तु "तेजोऽतस्तथाह्याह", "विपर्ययेण तु क्रमोऽत उपपद्यते", चेत्यादौ सर्गलयक्रमो व्यावस्थाप्यते । विश्वहेतुत्वं विवक्षितमिव कृत्वा मन्दमतीनां परमात्मोपासनाविधिषूपयोक्ष्यत — इति । अतो हेतुवादानां लक्षणीयपरमात्मस्वरूपप्रतिपादनार्थतयाऽन्यार्थपरत्वे स्थिते हेतुरूपतात्पर्याभावाद्यथातथा विषयोपहरणं अनुमतमेवेति नाप्रामाण्यशङ्कावकाश इत्यभिप्रेत्याह —

आनन्त्यमद्वितयतामभवाय शुद्धा-
मेकात्मतामनुशिशासिषति श्रुतिर्नः ।
आत्मंस्त्वैतदनुरूपमतत्परैषा
हेतुं भवन्तमनुवक्तु यथा तथा वा ॥ ७७ ॥

ब्रह्मात्मसाक्षात्कारस्तावदपवर्गहेतुरनुश्रूयते – "निचाय्य तं मृत्युमुखात्प्रमुच्यते", "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर" इत्यादौ। तदर्थश्चाय-मागमान्तेष्वात्मतत्त्वोपदेश इति वस्तुस्थितिः। तत्रैवं सति श्रुतिः अभवाय, भवः संसारः जननमरणप्रवाहाविच्छेदलक्षणः तदभवाय, स्वरूपप्रतिष्ठालक्षणाय कैवल्याय। हेआत्मन्, तव, स्वलक्षणभूतमानन्त्यादिकं। नः अस्मान्। शासेर्द्विकर्मकर्तृकत्वात् "सत्यं ज्ञानमनन्तं ब्रह्म", "नेह नानाऽस्ति किञ्चन", "एको देवस्सर्वभूतेषु गूढ" इत्यादिना। अनुशिशासिषेति, मोक्षहेतुसाक्षात्कारेच्छाम्। अनुशासितुमिच्छति। इच्छाग्रहणं तात्पर्यसूचनाय। तात्पर्येणानु-शास्तीत्यर्थः। नास्त्यन्तः परिच्छेदो यस्य सोऽनन्तः। तस्य भाव आनन्त्यम्। अत्रापि लिङ्गविपरिणामेन शुद्धमिति विशेषणं। अन्तनिषेधेनापि गुणेन परिच्छेदवारणाय। न चैवमन्तव-त्वनिषेधस्यापि निषेधेऽन्तवत्वापत्तिः। युगपदेव कृत्स्ननिषेधात्। तदिदमानन्त्यमभावायावश्य-मनुशासितव्यम्। अन्यथान्तवत्वेनाल्पत्वेनाल्पे सुखमस्तीति तत्स्वरूपप्रतिष्ठानपुरुषार्थस्स्यात्। "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति च गुणार्थवाद एव स्यादिति। अत्र आत्मन्निति सम्बोधनेन, "सत्यं ज्ञानमनन्तं ब्रह्म", "यो वेद निहितं गुहायामि"त्युक्तस्य, "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यात्मशब्दात्तस्य, च प्रत्यगात्मवृत्ति-त्वात् ब्रह्मैव विश्वानुप्रवेशेन जीवभावेनैव गुहानिहित उच्यत – इति सूचितं भवति। तेन न कारणात्मपर एवागमः। तथा सति तस्य कार्यानुप्रवेशिनो जीवभावस्य नियतत्वात् अपवर्गानुपपत्त्या मोक्षशास्त्रानर्थक्यं स्यादिति फलति यद्यपि "द्वा सुपर्णासयुजा सखाया समानं वृक्षं परिषस्वजाते", गुहाचरन्नाम महत्पदमत्रै तत्समर्पितमित्यादिदर्शनादीशभावेनापि गुहानिहितस्स्यात्, तथापि जीवभावानु-षङ्गेणैवाहमिति लिङ्गतादात्म्येन स्वयमवभासिता जिवत्वम्। इदमिति ताटस्थ्येन तदैव लिङ्गावभासिता ईश्वरत्वमिति हि वक्ष्यते। अन्यथा कारणात्मन एव कार्यभावापत्त्या सबाह्याभ्यन्तरस्य गुहानिहितत्व-वादायोगादित्यभिप्रायः। अद्वितयतां द्वयवयवं वस्तु द्वितयम्। तस्य भावः द्वितयता। न द्वितयता-ऽद्वितयता। तां द्वितीयाभावमित्यर्थः। अत्र शुद्धमिति विशेषणं नीलादिवदपृथक्सिद्ध्या द्वितीयसत्ववारणाय "नेह नानास्ती"ति परमात्मनि द्वितीयस्वरूपस्यैव निषेधात्। न चेह प्रपञ्चे

किञ्चन नाना नास्ति । किन्त्वपृथक्सिद्धमस्तीत्यभयार्थता युक्ता । वाक्यवृत्तिगौरवात् । नाना नास्तीति विशिष्य निषेधादर्थादपृथक्सिद्धमस्तीति गम्यत इति चेत्तथापि स्वतो नानात्वेन प्रपञ्चस्य परस्परमपृथक्सिद्ध्यनुपपत्त्या परमात्मन इत्यध्याहारगौरवं स्यात् । अतो नाना किंचनेति यथा-प्रतीतानुवादेन कृत्स्नद्वितीयस्वरूपनिषेध एवेत्यभिप्रायः । सा चावश्यमनुशासितव्या । अन्यथा "द्वितीयाद्वै भयं भवती"ति सद्वितीयात्मलाभो न पुरुषार्थस्स्यात् । अथ "सोऽभयं गतो भवति", न "बिभेति कुतश्चने"त्यादयोऽपि गुणवादा एव स्युरिति । अत्रात्मन्निति सम्बोधनेन जीवात्मनस्स्वरूपं परमात्मैवेति तस्याऽनिषेध्यत्वं सूचयति । तेन यदि जीवोऽपि निषिध्येत पुरुषार्थिनोऽभावाद्नर्थकं शास्त्रं स्यात् । अथ न निषिध्येत न शुद्धमद्वितीयत्वमिति शङ्कानवकाश इत्यभिप्रायः । **एकात्मतां,** निषिद्धसजातीयादिभेदस्वरूपताम् । अत्र **शुद्धामिति** विशेषणं विशिष्टः परमात्मा एक एवेत्यभ्युपगमवारणाय । "आत्मैवेदं सर्वं" "तत्वमसी"त्यादि-सामानाधिकरण्यस्य, "एकमेवाद्वितीयमि"त्यादेश्च सर्वभेदनिषेधेन स्वरूपाभेदपरत्वात् । अथैवं शुद्धैकात्म्येऽर्थभेदाभावात् तत्वमसीत्यादिसामानाधिकरण्यानुपपत्तिरित्यत्र वक्ष्यामः । सा चावश्यमनुशासितव्या । अन्यथा, "योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न सवेदे"त्यविद्यानुवृत्तेरपवर्गायोगः । "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थि विकिरतीह सोम्ये"त्यादयश्च गुणवादा एव स्युरिति । अत्रात्मन्निति सम्बोधनेन, "अनेन जीवेनात्मनानुप्रविश्य, ऐतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मा" इत्यादिश्रुत्युपपत्तिं सूचयति । जीवस्यान्यत्वे आत्मनेति विशेषणानुपपत्तिः । विश्वस्यान्यत्वे ऐतदात्म्यमिदं सर्वं, कथमन्यदन्यात्मकं तत्सत्यं स आत्मा आरोपितमितरत्स्वतो नानात्मकं मायामरीच्युदकादिवदित्या-शयानुपपत्तिरित्यभिप्रायः । एवं यथोदितकारणोत्तीर्णस्वरूपप्रतिपादन एव तात्पर्यमागमस्य, न तु कारणरूपप्रतिपादन – इत्यनुशिशासिषति श्रुतिरिति सन्प्रत्ययाभिप्रायः स्थितः । अथैवं बहुप्रपञ्चेन कारणरूपप्रतिपादनमनर्थकं स्यादिति चेत्तत्र किं प्रयोजनमेवानुयुयुक्षितं, उत, श्रुतेस्तत्परत्वमेव व्यवतिष्ठापयिषितम् ? आद्य आह **एतदनुरूपमिति** । एतस्य प्रतिपिपादयिषितानन्त्यादे-रनुगुणमिति विधेयविशेषणम् द्वितीय आह **अतत्परेति** । तत्कारणरूपं परं प्रतिपाद्यतया यस्या न भवति साऽतत्परा । अथवा अतद्धेतुस्वरूपं प्रतिपाद्यतया परं यस्यास्साऽतत्परा । एषाऽऽनन्त्यादिविषया श्रुतिः । भवन्तं परमात्मानम् । तदनुरूपं **हेतुं, यथा तथा वा** उक्तविधास्वन्यतमया विद्यया **अनुवक्तु** अनुमानगम्यं अनुवदत्विति सम्बन्धः । परमात्मनो विश्वहेतुत्वोपपादनं हि तदानन्त्यादिप्रतिपादनानुगुणम् । अन्यथा विश्वस्यानात्मतया दृश्यतया कार्यतया वा सहेतुकत्वानुमाने तस्यान्यहेतुकत्वे सति आत्मनो वस्तुपरिच्छेदेनानङ्कुशानन्त्यानुपपत्तिः । तथात्मन्यनारोपितत्वेन विश्वस्य सहेतोः तत्र निषेधेऽपि परत्रसत्त्वानपवादनद्वितीयत्वानुपपत्तिः ।

तथा स्वयं नामरूपाभ्यामव्याकृतत्वात्तदनुप्रवेशेन तादात्म्याभिमानेन जीवभावाभावे सति जीवपृथग्भावादैकात्म्यानुपपत्तिरिति । एवं निर्विशेषैकात्मतत्वप्रतिपत्त्यर्थतया हेतुत्वप्रतिपादनेऽपि श्रुतिरतत्परैव । योह्यपूर्वार्थोऽपि अन्यार्थवादः । यथा "जर्तिलयवाग्वा जुहुयात्, गवीधुकयवाग्वा वे" त्यादि "रजक्षीरेण जुहोती" ति विध्यर्थः । यथा वा "संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्" इत्यादिः "चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्नि" ति विध्यर्थः । सोऽपि न तत्परः । किं पुनर्मानान्तरगमनीयार्थोऽन्यार्थश्चाऽऽत्मनो विश्वहेतुत्ववादः । अत एवातात्पर्यविषयतया स विश्वहेतुभावो यादृशतादृशोऽपि तद्वादविषयो निरूप्यमाणो न विरुद्ध्यत इति यथा तथैवेत्युक्तम् । अत एव च तत्र श्रुतेरतात्पर्यादेवमेवायमिति व्यवस्थायामस्माकं अनादर इति "अनादरे' लोट् प्रयोग इति ॥ ७७ ॥

**स्यादेतत्**, न तावदन्यार्थवादत्वादस्वार्थपरत्वं, दर्शाद्यर्थवादत्वेऽपि प्रयाजादिविधेः स्वार्थपरत्वोपगमात् । सिद्धार्थस्य सत इति विशेषणेऽपि ज्योतिष्टोमादिविध्यर्थवादस्य "यन्न दुःखेन सम्भिन्नमि" त्यादेरपिफलपरत्वोपगमात् । पृथगर्थतात्पर्याभावः साध्य इत्यपि न, "असम्लेत्यापि गिरती"ति प्राशितृभक्षणविध्यर्थवादस्य "पूषा प्राशयदत्तोरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको ही त्या"देः पृथग्यागविधितात्पर्योपगमात् । ज्योतिष्टोमेत्युपसत्तविध्यर्थवादस्य द्वादशाहीनस्येत्यस्य द्वादशाहे द्वादशोपसत्ताविधिपरत्वोपगमात् । प्रेताग्निहोत्रेऽधस्तात् समिद्धारणविध्यर्थवादस्य उपरि हि देवेभ्यो धारयतीत्यस्य स्वार्थविधिपरत्वोपगमाच्च । एवमादेरपूर्वार्थत्वं तु तात्पर्यकारणम्, विश्वहेतुवादस्यापि समानम् । यद्यपि हेतुस्वरूपसत्तामात्रमनुमानादधिगन्तुं शक्यम्, नत्वयमसाविति विशेषः । सामान्योपाधावेव व्याप्त्यवधारणात् । अतो विश्वहेतुः परमात्मेति शास्त्रैकसमधिगमनीयम् । अत एव भाष्ये "कार्यमात्रं तु गृह्यमाणं किं ब्रह्मणा सम्बद्धं, अन्येन केनचिद्वा सम्बद्धमिति न शक्यं निश्चेतु" मिति कारणमात्रसिद्धिमानुमानिकीं उपेत्य ब्रह्मकारणत्वमभिप्रेतमिति गम्यते । तज्ज्ञानाच्च सर्वलोककामावाप्तिफलमुपपद्यते । "य आत्माऽपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स एतांश्च सर्वान् लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमन्विष्य विजानाती" त्यादिषु "अज्ञाते फलवत्यर्थे श्रुतेस्तात्पर्यमिष्यते । तस्मात्तात्पर्यमेवास्या विश्वहेतौ परात्मनि" ॥ जर्तिलादिवादानां पुनरर्थस्याज्ञातत्वेऽपि तत्क्रियया फलानधिगमात् "अनाहुतिर्वै जर्तिलाश्चे" त्यादिनिन्दादर्शनाच्च । विध्यन्तरैकवाक्यतया तदर्थैकान्तित्वाद्युक्तमतत्परत्वमिति वैषम्यमाशङ्क्य वेदस्य विश्वहेतुतात्पर्ये दोषं दर्शयन् परिहरति सर्वज्ञेत्यादिना । तत्र किमेवं स्वार्थपरत्वेन विश्वहेतुवादस्य परमात्मस्वरूपविध्येकवाक्यत्वेन तत्प्रतिपत्तिपरत्वमेव निराचिकीर्षितं ? उत तदुपेत्यैव स्वार्थपरत्वमपि केवलं प्रतितिष्ठापयिषितं ? । आद्येऽपि किं अहेतुकार्यपरमात्मस्वरूपविधिमुपेत्यैव विश्वहेतुवादस्य तदेकवाक्यत्वाभावेन

पार्थगर्थमपेक्ष्य तत्परत्वनिरासः ? उत स एव नास्तीति ? । अत्राद्यकल्पद्वयसाधारणं दोषं दर्शयन्नाह —

सर्वज्ञतादिमयकारणरूपमेव
त्वां वेदवेद्यमविदो यदि सङ्गिरेरन् ।
ते विश्रुतं निखिलविष्टपहेतुभावं
लक्ष्मैव ते वृषभकेतन निह्नुवीरन् ॥ ७८ ॥

अत्र **सर्वज्ञतादीत्यादिशब्देन** सर्वशक्तिता गृह्यते । कामसङ्कल्पादिस्तु परमात्मनो ज्ञानान्नातिरिच्यते । "स खल्वप्राणो ह्यमनाश्शुभ्र" इति तस्य मनोधर्मकामादिवृत्त्यसम्भवात् **तन्मयं** तद्रूपं, ताद्रूप्ये मयट् । चिन्मयमित्यादिवत् । **कारणरूपं** कार्यानुकूलज्ञानवत्वम् कर्तृत्वं, स्वरूपमेव च सत् ज्ञानम् । परोपधानापादितधर्मभेदं धर्मवदुपचर्यते । कार्यभावशक्तिमत्वमुपादानत्वं । सा च शक्तिरविद्याविषयतैवेति हि स्थितम् । अनेन सर्वज्ञादिरूपं लक्ष्यम् । तस्य कारणरूपं लक्षणमिति भेदाभावेन व्यवस्थानुपपत्तेः शुद्धस्वरूपमेव तेन लक्षणीयमास्थेयमिति सूचयति, न तु कारणोत्तीर्णरूपम् । न वा तच्छेषमित्येवकारार्थः । **त्वां वेदवेद्यं**, वेदनतात्पर्यतः प्रतिपाद्यम् **न विदन्त्यविदः**, विदेः क्विप् । अज्ञातं लक्ष्यं ज्ञातं लक्षणमिति विभागमजानन्तः **यदि सङ्गिरेरन्**, 'समः प्रतिज्ञाने' इति गिरतेरात्मनेपदम् । **ते** केवलं प्रतिज्ञाशूरा मूढाः । **विश्रुतं**, सकलवैदिकलोकप्रसिद्धम् । **निखिलानां**, निरवशेषाणां; **विष्टपानां** लोकानां, "स इमाँल्लोकानसृजतांभोमरीचिर्मरमाप" इत्युदितानाम् । उपलक्षणं चेदम् । **अखिलभूतभौतिकानां, हेतुभावं** । अत्र **निखिलग्रहणं** परमात्मनो न वियदादिपरम्परया विश्वहेतुत्वं पितामहस्येव पुत्रपौत्रादिपरम्परया, "इदं सर्वमसृजत, यदिदं किञ्च" त्यविशेषश्रुतेरिति सूचयति । ते **लक्ष्मैव**, निरुक्तविश्वहेतुत्वलक्षणं तव लक्षणमेव **निह्नुवीरन्**, निरस्येयुः । अत्रैवकारेण लक्षणनिह्नवे कुतो लक्ष्यस्वरूपं प्रतिपद्येरन्निति तत्स्वरूपनिह्नवस्तेषां प्राप्तः । शास्त्रमपि हि लक्षणमुखेनैव तत्स्वरूपं प्रतिपादयतीति सूचयति अत्र वृषभः केतनं चिह्नं यस्य तस्य, **वृषभकेतनेति** सम्बोधनेन लीलापरिगृहीतदिव्यमङ्गलविग्रहोऽपिश्रीसर्वमङ्गलापतिः परमेश्वरो लक्षणेनैव बोधनीयः, किमुत पुनस्सकलमानान्तरपथातिवर्ती केवलस्वरूपः । लक्षणेन सम्भावितस्य हि अपूर्वार्थस्य प्रमाणेन प्रतिपादनसम्भवः । "सम्भावितः प्रतिज्ञायां पक्षस्साध्येत हेतुना" इति न्यायात् । अन्यथा कथमपि बुध्यनारूढेऽर्थे व्युत्पत्त्यसंभवेन शब्दप्रमाणाप्रवृत्तेरित्युक्तमेवैवकारार्थमुक्तं भवति ।

अयं भावः — "यतो वा इमानि भूतानि जायन्ते", "जन्माद्यस्य यतः" इति श्रुतिसूत्रैक-कण्ठ्येन परमात्मा जिज्ञास्यो विश्वहेतुत्वेन लक्षणीय इति तावत्सम्प्रतिपन्नम्। तत्र यदि कश्चिदपि परमात्मनो हेतुकार्योत्तीर्णस्वरूपविधिवादोऽभ्युपगम्येत तर्हि तत्रैव वेदतात्पर्यपर्यवसानान्न विश्वहेतुवादस्य पार्थगर्थ्यं युक्तम्। तदर्थलक्ष्यलक्षणभावेन तदेकवाक्यतापादकश्रुतिसूत्रविरोधात्। अन्यथा, तदर्थ-लक्ष्यलक्षणभावानुपपत्तेः। यच्छब्दगुणकं तद्वियत्, विपुला पृथिवीत्यादिवत्। अथ स एव नाभ्युपगम्येत तथापि तस्यैकस्यैव लक्ष्यलक्षणभावानुपपत्त्या श्रुत्यादिविरोध एव ज्ञातं लक्षणमज्ञातं लक्ष्यमिति तस्यैव तदैव ज्ञाताज्ञातत्वायोगात्। अथ ज्ञातमेव विश्वहेतुरूपं, विश्वस्य कार्यत्वेन सहेतुकत्वानुमानात्। तेन च लक्षणेन सोऽयमसाविति तत्सम्बन्धेनाज्ञातः परमात्मा लक्ष्यत इति चेन्न, अज्ञातसम्बन्धस्य लक्षणत्वायोगेन तत्सम्बन्धमवबोध्यते, न पुनस्तत्सम्बन्धिस्वरूपबोधने यदिदं ब्रह्म तज्जगद्धेतुः, यज्जगद्धेतुः तद्ब्रह्मेति लक्षणवाक्यावृत्तिप्रसङ्गात्। अथ धूमसम्बन्ध-बोधनेनैव पर्वतादावग्निमत्त्वमिव, लक्षणसम्बन्धबोधने नैव लक्ष्यस्वरूपमर्थादेवावबोध्यते, न वाक्यावृत्ति-प्रसङ्ग इति चेत्, युक्तं तत्र यत्र धूमस्तत्राऽग्निरिति सम्बन्धिद्वयनिरूप्यसम्बन्धनियमस्य प्रागेव विदितत्वेन धूमसम्बन्धबोधनेनैव पर्वतादावग्निमत्त्वप्रतिपत्तिरिति लक्षणस्य पुनस्स्वांशेनैव सम्बन्धज्ञाना-दज्ञातप्रतिसम्बन्धिस्वरूपं तेन लक्षणेनावश्यं बोधनीयम्। ततश्चास्येदं रूपमिति लक्षणसम्बन्धस्यापि बोधनीयत्वे वाक्याऽऽवृत्तिदोषोऽपरिहार्य एव स्यात्। अथ "सदेव सोम्य इदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म, तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत"इत्यादौ प्रसिद्धसम्बन्धं ब्रह्म कारणत्वं सर्वज्ञसत्यसङ्कल्पादिरूपस्य परमात्मनः तत्र प्रतीतेः। तदिह ब्रह्मलक्षणाय यत इत्यादिनाऽनूद्यत इति चेत्किं तर्हि तेन लक्षणीयं स्वरूपमवशिष्यते। सर्वज्ञादिकारणरूप-मवगतमेवेति न लक्षणीयम्। निरतिशयबृहत्त्वरूपं लक्षणीयमिति चेत् स्वरूपतां निरतिशयबृहत्त्वं सर्वात्मत्वं, गुणतस्तु सर्वज्ञत्वादिकमेव। तच्च कारणवाक्यसामर्थ्यादेवावगतम्। यत्र प्रसिद्धं कारणत्वमिह लक्षणमनूद्यत इत्युच्यते। कारणत्वोपयोगीनि सर्वज्ञत्वादीनि जिज्ञास्यत्वोपयोगीनि ज्ञानानन्दत्वादीनीति वदता त्वयैव सर्वज्ञत्वादीनां करणत्वादिनान्तरीयकत्वोपगमात् सत्यज्ञानादिरूपं तदिह लक्षणीयमिति चेन्न हि तस्य कारणत्वं विशेषणम् मायाविशिष्टस्यैव कारणत्वोपगमात्। उपलक्षणमिति चेन्न, अप्रतीतसम्बन्धस्योपलक्षणत्वानुपपत्तेः। तत्सम्बन्धप्रतीतौ च पुनरुपलक्षण-वैयर्थ्यात्। अथ यथा यत्र सारसः स देवदत्तस्य केदार इति सामान्याधिगतसम्बन्धः सारसः स देवदत्तकेदारमुपलक्षयति, यथा वा यत्र शाखाग्रं तत्र चन्द्र इति सामान्यतोऽधिगतचन्द्रदेशार्ज-वसम्बन्धं शाखाग्रं तद्देशं चन्द्रमुपलक्षयति तथा ब्रह्मशब्दार्थबृहत्त्वसामान्याधिगतसम्बन्धं कारणत्वं निरतिशयबृहत्सत्यज्ञानादिरूपं ब्रह्मोपलक्षयतीति चेत्, उच्यते। दृष्टान्ते तावत् केदारस्य सामान्यतो देवदत्तसम्बन्धो धीस्थः। अन्यथा तद्विशेषजिज्ञासानुपपत्तेः। सारससम्बन्धश्च प्रत्यक्षः।

ततस्तेन केदारस्वरूपविशेष एवाज्ञात उपलक्ष्यते। तथा चन्द्रस्य सामान्यतः प्रतीच्यादिदेशसम्बन्धो धीस्थः। अन्यथा कुत्र चन्द्र इति देशविशेषजिज्ञासानुपपत्तेः। शाखादेशार्जवसम्बन्धश्च प्रत्यक्षः। ततस्तेन सोऽयमसाविति चन्द्रदेशविशेष एवाज्ञात उपलक्ष्यते। यद्यपि शन्द्रस्वरूपमेव जिज्ञास्यते कश्चन्द्र इति तथाप्यस्मिन्ज्योतिर्मण्डलेऽन्यतमश्चन्द्र इति सामान्यतोऽधिगतस्य शाखाग्रार्जव-सम्बन्धेनाधिगतेन तत्स्वरूपविशेष एवाज्ञात उपलक्ष्यते इति युक्तम्। इह पुनस्सदैकरूपज्ञानानन्दादि-रूपप्रतिपत्तिं न यत्कारणं तद्ब्रह्मेति लक्षणतः तस्यापि यच्छब्दानुवाद्यत्वानुपगमात् जिज्ञास्यत्वोपयोगी शोधकवाक्यार्थश्च यच्छब्दे गर्भित इति हि "श्रुतप्रकाशिकाया" मुक्तम्। सत्यं ज्ञानमित्यादि-शब्दप्रतिपाद्ये च तत्र जगत्कारणत्वलक्षणोपादानमनर्थकम्। अथ ब्रह्म जिज्ञास्यमित्युक्ते "अग्निस्सर्वा देवताः न किरिन्द्र त्वदुत्तरः सोमः पवते जनितामतीनां जनिता दिवो जनिता पृथिव्याः जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोरि" त्यादावग्न्यादेरपि बृहत्त्वश्रवणा "दधीहि भगवो ब्रह्मे" ति जिज्ञास्यं ब्रह्म बुभुत्समानस्य तद्व्यावृत्त्या निरतिशयबृहद्रूपं तदुपलक्ष्यत इति चेन्न, सर्वज्ञत्वादिरूपस्य निरतिशयबृहत्वस्य उपलक्षणकारणरूपान्तर्गतत्वेनोक्तोत्तरत्वात् "ब्रह्मविदाप्नोति परमि"ति जिज्ञास्यं ब्रह्म प्रतिज्ञाय, "सत्यं ज्ञानमनन्तं ब्रह्म", "आत्मन आकाशस्सम्भूत" — इत्यादिप्रतिपादनादेवाग्न्यादि-व्यावृत्तिप्रतिपत्तिसिद्धेश्च। अग्नीन्द्रादीनामिव बृहत्त्वप्रतिपादनस्यान्यपरत्वशङ्कानिरासेन तत्परत्वं तत्त्वपरलक्षणमुखेन ज्ञाप्यत इति चेन्न, अग्न्यादिबृहत्वप्रतिपादनं हि परस्परविरोधेन कर्मविधिशेषतया चातत्परमवगम्यते। जिज्ञास्यब्रह्मबृहत्वप्रतिपादनस्य पुनरुपक्रमादिभिरेव तत्परत्वावगमे लक्षणोपादानस्य कृतकत्वात्। अन्यथा तस्यापि अतत्परत्वशङ्कानपवादात्। तस्मादन्यसिद्धमेव विश्वकारणत्वमभवाय वेदनीयस्याव्यावृत्ताननुगतसर्वविधपरिच्छेदविरोधिभावमात्रस्य निरतिशयबृहतो निरुपसर्गब्रह्मश्रुत्यवगमि-तस्य शास्त्रैकप्रतिपादनीयस्य सम्भावनायैव मानान्तरसिद्धमेव विश्वकारणत्वमुपलक्षणमुपादीयते। यत्तद्विविधविश्वकारणं तद्ब्रह्मेति हि लक्षिते कारणकार्यानन्यतया निमित्तान्तराभावेन च तादृश-निरतिशयबृहद्वस्तु सम्भावितं भवति। सम्भावितस्य च तस्येदं स्वरूपं शास्त्रेण प्रतिपाद्यते। "अस्थूलमनण्वह्रस्वमशब्दमस्पर्शं," "स एष नेति नेत्यात्मा," "प्रपञ्चोपशमश्शिवः", "अद्वैत आत्मैव", "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि। तस्यैव च वस्तुतत्वस्य यथा सम्भावना-हेतुर्विश्वहेतुत्वं तथोपपाद्यते केवलं, "सोऽकामयत बहु स्यां प्रजायेयेति, तदैक्षत बहुस्यां प्रजायेय, तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिना। न तु प्रतिपाद्यते। उक्तविधयैव तल्लक्षणत्वश्रुतिसूत्र-विरोधादेव। अथ तवापि कथमहेतोरात्मनो हेतुरूपं लक्षणं स्यात्? न हि सम्भवति पृथिवीत्वं लक्षणमपृथिव्या — इति विरुद्धमिदं नः प्रतिभाति, यद्विश्वकारणं तद्ब्रह्म, तच्च निर्विशेषमिति। यथा यच्छब्दगुणकं तदाकाशं, तच्च मूर्तद्रव्याभाव इति, तद्वत् उच्यते। कथञ्चित्सम्बन्धमात्रेण सम्बन्धिनोर्लक्षणं स्यात्। शाखाग्रमिव चन्द्रमसः, चोरत्वमिव वा स्थाणोरिति। कारणरूपस्य

सत्तासम्बन्धोऽधिगत एव। सैव च नो सामान्यविशेषात्माभावैकरसाकारणतया ज्ञानादिना च जडानृतादिविरोधिस्वभावेन लक्ष्यते इत्युपपन्नं, उपपादितं चैतदधस्तात्। अन्यत्र तु सम्बन्धाभावाद-लक्षणमिति विशेष इति ॥ ७८ ॥

अथ माभूदहेतुकार्यपरमात्मस्वरूपविधिः मा च भूत्तदुपलक्षणं विश्वहेतुत्वम्। हेतुस्वभावस्यैव तु परमात्मनः स्वरूपलक्षणं स्यात् ज्ञानानन्दादिवत् यथा ज्ञानादयो यथा लोकविदिता एव, "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दं ब्रह्मे"त्यादि सामानाधिकरण्यादात्मानं जडादिविरोधिज्ञानादि-स्वभावमुपस्थापयन्ति तथा कार्यानुकूलज्ञानादिमत्त्वलक्षणं हेतुरूपमवगतम्। स विश्वहेतुः परमात्मेति सामानाधिकरण्यादहेतुव्यावृत्तहेतुस्वभावमेव परमात्मानमुपस्थापयतीति युक्तम्। विश्वहेतुतात्पर्यमागम-स्येत्याद्यद्वितीयकल्पोज्जीवनमाशङ्क्य तत्रासाधारणं दोषं दर्शयन्परिहरति —

ये हेतुमेव परमास्थिषत स्वतस्त्वां
ते हैतुकं त्वदवबोधमुपेयमानाः।
शम्भो! तवौपनिषदत्वमनुश्रवैक-
संवेद्यताविरुदमुन्मथितुं यतन्ते ॥ ७९ ॥

ये, केचिदवैदिकाः स्वतः, स्वभावेन परं, हेतुकार्येभ्यः तमोविशिष्टो हि परमात्मा विश्वहेतु-रुपगम्यते। स्वरूपेण च स तमसः परस्तादाम्नायते। "अक्षरात्परतः परः", "आदित्यवर्णं तमसः परस्तात्", "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमार" इत्यादौ। अतो विश्वरूपहेतुकार्यरूपोत्तीर्णस्वभावमेव। **त्वां, परमात्मानं, हेतुमेव**। अहेतुस्वभावत्वं व्यावर्तयितु-मेवकारः। **आस्थिषत**, 'आङ्स्स्थः प्रतिज्ञाने' इत्यात्मनेपदम्। प्रत्यज्ञासिषुः न तूपपादयितुं शक्ताः। आत्मनः परिणामाद्यनुपपत्तेरुक्तत्वादित्यभिप्रायः। **ते**, तन्त्रिणः। **त्वदवबोधं, हैतुकमानुमानिकमुपेयमानाः**, उपगच्छन्तः। 'ई गतावि'ति दिवादिषु पठ्यते। सिद्धान्तयन्त इत्यर्थः। हेतुस्वभावमेव परमात्मानं प्रतिजानानामानुमानिक एव स प्राप्नोतीत्यभिप्रायः। शं सुखं भावयतीति शम्भुः। "एष ह्येवानन्दयाती"ति श्रुतेः। हे **शम्भो**, अनेन निरुपाधिकसुहृत्त्वं सूचितम्। **तवौपनिषदत्वं**, "तं त्वौपनिषदं पुरुषं पृच्छामी"ति श्रुतिविश्रुतं। **उन्मथितुं**, नाशयितुं यतन्त इत्यन्वयः। अत्र शम्भो इति सम्बोधनेन निरुपाधिकमुपकुर्वतः कियदप्यपकुर्वन्' 'कृतघ्ने नास्ति निष्कृतिरि'ति निन्दितः कृतघ्न इव परमानन्दैकरसस्य परमात्मन औपनिषदत्वविरोधि-हेतुस्वभावत्वं वदन्तः परिहरणीया विद्वद्भिरिति सूचयति। नन्वानुमानिकस्याप्यौपनिषद-

त्वमविरुद्धम् । एकस्य मानद्वयगम्यत्वाविरोधात् । द्रव्यस्यैकस्य चाक्षुषत्वस्पर्शनत्वदर्शनात् । दहनादेरेकस्यानुमानप्रत्यक्षगम्यत्वदर्शनाच्च इत्याशङ्क्याह **अनुश्रवेत्यादि** । अध्यापकोपदेशमनुश्रूयते न तु केनचिदपूर्वो विरचित इत्यनुश्रवः वेदः । 'ऋदोरप्' इत्यप्प्रत्ययः । एकशब्दः केवलपर्यायः । अनुश्रवेण केवलं, वेदेनैव । या **संवेद्यता सैव विरुदं** अनितरसाधारणविजयलक्षणमित्यौपनिषदत्वरूपमुक्तम् ।

**एतदुक्तं भवति** — परमात्मा तावदौपनिषद इति व्यपदिश्यते । स यद्युपनिषत्स्वेवाधिगन्तव्यः तदैष व्यपदेशः समञ्जसो भवति । असाधारण्येन हि व्यपदेशा भवन्ति । यथा वैयाकरणस्तार्किक इति । ननु डित्थडिवित्थयोर्माता डित्थमातेति व्यपदिश्यते डिवित्थमातेति वा । न, तत्रापि मातुः स्नेहमन्यद्वा पुत्रमहत्वादि किञ्चिदसाधारण्यनिबन्धनमपेक्ष्यैव तथा व्यपदेशात् । अथवा, स यादृच्छिकोऽपि स्यात् । औपनिषदव्यपदेशः पुनरसाधारण्यनिबन्धन एव "नाऽवेदविन्मनुते तं बृहन्तम्" इत्यन्यत्र दर्शनात् । ततश्चौपनिषदत्वविशेषणादात्मनो मानान्तरगम्यत्वनिषेधेन हैतुकहेतुरूपोत्तीर्णमेव परमात्मस्वरूपमाश्रयणीयम् । अन्यथा, हेतुस्वभावत्वे तस्यौपनिषदत्वमुपनिषत्प्रतिपाद्यत्वमेव न स्यात् । अनुमानादेव तत्प्रतिपत्त्युपपत्तेः । न च त्वक्चक्षुरादिगम्यत्वमिवैकस्यात्मनोऽपि मानद्वयगम्यत्वं स्यादिति शङ्क्यम् । रूपेण चाक्षुषं स्पर्शेन त्वाचमिति विषयभेदात् । दहनादिश्च येन रूपेणानुमानिकः न तेनैव रूपेण प्रत्यक्षः । प्रत्यक्षस्य विशेषविषयत्वात् । हेतुरूपं पुनरात्मनो यावदनुमानगम्यं तावदेव शब्दगम्यमपि । न हि सर्वज्ञत्वादिमयस्य हेतुरूपस्य पक्षधर्मताबलेनानुमानाद्व्युत्पत्ति बलेन शब्दाद्वा अवगमो विशिष्यते । आस्तां वा प्रत्यक्षादि यथा तथा वा सिद्धमसिद्धं वा स्वविषयं बोधयतीति । "आलस्यमभिमानो वा व्रीडा वा प्रभुतैव वा । न जानीमो यदाम्नायो नान्यगम्यमुदीक्षते" ॥ न खलु यो योऽर्थो वेदशब्दान्वयमात्रादवगम्यते स स वेदस्य प्रतिपादनीयोऽर्थः । तस्यान्यतस्सिद्धानुवादत्वात् । यथा "य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजत" इत्यादेः । नन्वस्य विद्वद्वाक्यस्य पौर्णमास्यादिसंज्ञककर्मान्तरविधिपरत्वे द्रव्यदेवतालक्षणरूपालाभाद्"दाग्नेयोऽष्टाकपालोऽमावास्यां च पौर्णमास्यां चाच्युतो भवती"त्याद्यवगतपौर्णमास्यादिकालसम्बन्धनिमित्तेन प्रकृताग्नेयादिविषयत्वावश्यंभावेन समानविषयमानान्तरोपजीवनप्रवृत्तत्वात् । स्यादप्यनुवादता, न त्वनुमाननिरपेक्षप्रवृत्तस्य ब्रह्मकारणवादस्य । अन्यथा तदनुमानस्यैव कार्यत्वादेः सिद्धसाधनता किं न स्यात् । किमेवं सति "अग्निर्हिमस्य भेषजमि"त्यादिकमपि अननुवाद एवास्तु, को दोषः ? किन्तु ज्ञाततदर्थस्य तदनपेक्षैव मानान्तरसंवादेन तदर्थदार्ढ्यं वेति । नैवं, एवं हि सति "गावस्सत्रमासत, वनस्पतयस्सत्रमासते"त्यादिमानान्तरविरुद्धार्थोऽपि तत्प्रतिपादनीयस्स्यात् । स्वप्रवृत्तौ तन्निरपेक्षत्वाविशेषात् । न "खल्विमा एव गाव इमा एव च वनस्पतय"स्तद्विषयाय एतेऽस्मदादिप्रत्यक्षाः ये न प्रागेव विरुद्धमानप्रवृत्त्या तदर्थो न प्रतिपाद्येत, अन्य एव ते भविष्यन्ति ।

दृष्टनिदर्शनेन तु विपरीतानुमानस्य सम्भवमात्रं न पूर्वभाविलनियमः। यदि च सम्भवमात्रेण तद्विरुद्धार्थो न प्रतिपाद्यः। तर्हि तथैव च सम्भवमात्रेण मानान्तरगम्यार्थोऽपीति ब्रह्मकारणत्ववादोऽनुवाद एव। अत एव "दध्नाजुहोती"त्यादौ द्रव्यसंबन्ध एव प्रतिपाद्यः न होमकार्यता। तस्या अन्यतस्सिद्धिसम्भवात्। न खल्वि"दमग्निहोत्रं जुहोती"ति विध्युपजीवनप्रवृत्तिकं, "दध्ना जुहोती"ति निरपेक्षमेव विशिष्टविधिसम्भवात्। तदन्यसिद्धिसम्भवमात्रेण तु तदनुवादत्वमिष्यते। अत एव च "यज्ञा यज्ञीयेन स्तुवीते"त्यत्र ऐरं कृत्वोद्गेयमिति विधित एव गिरा पदनिषेधस्यार्थिकत्वसम्भावनया न गिरा गिरेति ब्रूयादित्यनुवाद उपेयते। न खलु वाचनिकप्रतिपत्तेः प्रागार्थिकप्रतिपत्तिः। विधिनिषेधवचनप्रवृत्तियौगपद्यापपत्तेः। अत एव च लैङ्गिकविनियोगसिद्धिसम्भवमात्रेण तदर्थशास्त्रस्यानुवादत्वं सिद्धवत्कृत्य चतुर्भिरभ्रिमादत्त इत्यादिगुणार्थेन पुनः श्रुतिः, "अभ्रिरसिनारिरसी"त्यादिमन्त्रसमुच्चयोऽत्र विधेय इति। "इमामगृभ्णन् रशनामृतस्ये"त्यादिः परिसंख्या गर्दभरशनादाने मन्त्रोऽनेन निषेध्य इति। "उरु प्रथस्वे"ति पुरोडाशं प्रथयतीत्यादिरर्थवादो वा। तेन मन्त्रकरणकपुरोडाशप्रथनं यज्ञपतिमेव प्रथयतीति स्तोतव्यमिति। तदन्यथासिद्धिरध्वरमीमांसायामुपपादिता। न खलु तदर्थशास्त्रप्रवृत्तेः प्रागेव लैङ्गिकविनियोगप्रतिपत्तिः। विनियोजकश्रुत्यनुमानापेक्षया विलम्बात्। तथा च **जैमिनीयं सूत्रं** "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादि"ति। तस्माद्योऽर्थस्ताद्रूप्येण तद्विपर्ययेण वा मानान्तरपरिच्छेद्यस्सम्भाव्यतेऽपि तत्र श्रुतेरतात्पर्यमेव नीतिविद्भिरुपगम्यते। तथा च **शाबरे दर्शितं** – "शास्त्रं शब्दासन्निकृष्टेऽर्थे विज्ञानमि"ति। उक्तं च **भट्टमिश्रैः** "असन्निकृष्टवाचा च द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि च"॥ इति॥

**स्यादेतत्**, तत्र नाम मानान्तरसिद्धिसम्भवमात्रेणानुवादत्वमुपगम्यते, यत्र विधित्वे बाधकमुपतिष्ठते। यथा तावत् "दध्ना जुहोती"त्यत्र विशिष्टविधौ गौरवम्। "अग्निहोत्रं जुहोती"त्यस्य च साकाङ्क्षत्वं बाधकम्। "न गिरा गिरेति ब्रूयादि"त्यत्र च निषेधविधौ "ऐरं कृत्वोद्गेयमि"ति पाक्षिकत्वप्रसङ्गः। प्राप्तिपूर्वको हि प्रतिषेधः। ततश्च ऐरमिति तद्धितस्य स्वार्थिकत्वदिरां कृत्वोद्गेयमिति विधेरध्वरसन्निवेशसाम्येन गिरापदस्थानिकत्वे तन्निवृत्तावभागिप्रतिषेधविध्यनुपपत्तेः। "यज्ञा यज्ञीयेन स्तुवीते"ति सामान्यविधिनैव पुनस्तत्प्राप्त्युपजीवनेन फलतो गिरा पदविकल्पः प्रसज्येत। युगपदुभयप्रवृत्तावपि वाक्यभेदः प्रसज्येत। निष्फलश्च निषेधस्स्यादिति अस्ति बाधकम्। तथा तदर्थशास्त्रे विनियोजके लिङ्गाद्यन्यत्र विनियोगो न निवार्येत। अवश्यं हि "बर्हिर्देवसदनं दामी"त्यादौ लिङ्गादिविनियोगः आश्रयितव्यः। तत्र तदर्थशास्त्राभावात्। तत्रैवं सति लिङ्गेनैवे"मामगृभ्णन्नि"त्यादेरुभयार्थत्वे निष्फलं तदर्थशास्त्रं स्यात्। न च विधिरेकत्र, निषेधश्चान्यत्रेति

व्यापारद्वयमेकस्य सम्भवति। "अश्वाभिधानीमादत्ते नान्यामादत्त" इत्यावृत्तिप्रसङ्गात्। न च नान्तरीयकोऽन्यत्र निषेधः। विनापि तेन विध्युपपत्तेः। अथ मन्त्राणामध्ययनविधिगृहीताना-मर्थवत्वाकाङ्क्षाया एकत्र श्रुतिविनियोगेनैव शान्तत्वात्। न पुनरन्यत्र, लिङ्गविनियोगप्राप्तिरिति चेन्न, प्रयोजनाकाङ्क्षया प्रमाणप्रवृत्तिः उपेक्षणीयादिज्ञानदर्शनात्। प्रवृत्ते तु प्रमाणे यदि प्रयोजनं स्यात् स्यान्नाम। मन्त्रस्य च श्रुतिलिङ्गाभ्यामुभयार्थत्वं प्रयोजनभूम्ना ऽध्ययनविधिरनुमन्यनेतराम्। अत एव जपयज्ञे विनियुक्ता एव मन्त्राः क्रियायज्ञेऽपि विनियुज्यन्ते। "सर्वादाशतयीरनुब्र्यादि"त्यादौ "अथैवमैन्द्र्या गार्हपत्यमुपतिष्ठत" – इति श्रुतिविनियुक्तस्य मन्त्रस्य लिङ्गादिन्द्रेऽपि विनियोगः प्रसज्येत। अतो "यावदज्ञातसम्बन्धं ज्ञेयं तावत्प्रमित्सति। प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यते।" इत्येव श्रुतिविनियोगादेव मन्त्राकाङ्क्षाशान्तौ, न पुनर्लिङ्गविनियोगप्राप्त्यवसर इत्येव वाच्यम्। एवमन्यत्रापि श्रुतिविनियोगे सति लिङ्गविनियोगप्राप्तिरेवेति चेत् सत्यम्। विरोधि-श्रुतिविनियोगसामर्थ्यादेव परत्र प्रमौत्सुक्यविघाते तत्र लिङ्गविनियोगापच्छेदो गम्यते। इह पुनरविरोधित्वात्तदनुज्ञैवेत्युभयत्र विनियोगोऽनिवार्य एव तदुपगमे च लिङ्गादेव तत्सम्भवे तदर्थ-शास्त्रानर्थक्यं स्थितमेवेत्यस्ति बाधकम्। अतो युक्तं तत्र यथायथं मानान्तरसिद्धिसम्भवमात्रेणानु-वादत्वमन्यार्थत्वं च। न च ब्रह्मकारणवादे तथा बाधकमस्तीति तत्प्रतिपादकत्वैव स्यादिति।

उच्यते। अस्त्यत्रापि बाधकम्। प्रतिपाद्यस्याज्ञातस्य लक्षणत्वानुपपत्तिरेव। शास्त्रादेव प्रज्ञातं लक्षणमिति चेत्तर्हि यस्येदं लक्षणं तत्प्रतिपत्तिपरं शास्त्रमिति न विश्वहेतुपरं स्यात्। उभयतात्पर्ये वाक्यभेदप्रसङ्गात्। अङ्गाङ्गिविधिवत्स्यादिति चेन्न, विश्वहेतोरनुमेयत्वसम्भवेन पूर्ववत्त्वे तद्वादस्य प्रयाजादिविधिवदवान्तरतात्पर्यस्याप्यकल्पनीयत्वात्। तत्सिद्धं विश्वहेतुस्वभावत्वे परमात्मनो नौपनिष-दत्वं स्यात्। अनुमेयत्वादिति। कथं पुनरनुमेयो विश्वहेतुः परमात्मेति? उच्यते। महीमहीधरमहार्णव-तनुभुवनादिकार्यं सावयवत्वात्, महत्त्वे सति सक्रियत्वात् महत्वे सति मूर्तत्वाद्वा। घटादिवत्कार्यं च सर्वं सकर्तृकं। अथ यत्कार्यं सकर्तृकं च तच्छक्यक्रियम्। शक्योपादानादिविज्ञानं च। न च महीमहीधरादि तथेति व्यापकविरुद्धोपलब्धिरिति चेन्न, सर्वशक्यक्रियत्वादि सपक्षादपि व्यावर्तत इति। न साध्यव्यापकता तत्कर्तृशक्यक्रियत्वादिकं च कर्तृसिद्धिनान्तरीयकमिति साधनव्यापकता। ततश्च कार्यत्वात् कर्ताऽनुमीयमानः पक्षधर्मताबलात् पुरुषविशेष एव सर्वज्ञः सर्वशक्तिश्च सिद्ध्यति। अत्राङ्कुरसुखादिषु पक्षसमेषु व्यभिचारशङ्का श्रोत्रियवेतालानां अनुमानविभवाज्ञानमूलैव। अत्र कर्तुरन्याज्ञानासामर्थ्यादि यदन्यत् सपक्षे सहचारदर्शनमात्रेण शङ्क्यते तत्सर्वं कार्यत्वादावप्रयोजकत्वे-नानपेक्ष्यत्वादनाशङ्क्यमेव। न खलु तदितरसकलाज्ञानादितत्कार्यतायां प्रयोजकं कस्यचिदनेक-शिल्पपर्यवदातत्वसम्भवात्। तदितरकिञ्चिदज्ञानादि च परस्परव्यभिचारीति नाप्रयोजकेनाप्रयोज्यस्या-शक्यज्ञानादेश्शक्तिज्ञानादेरिव कर्तृसिद्ध्यानुषङ्गिकता। सिद्धे तु कर्तरि तदनुमाने धर्मिग्राहकमानबाधः।

अथापि कर्ता सिद्ध्यन् सशरीर एव सिद्ध्येत्। अशरीरस्य मुक्तात्मन इव ज्ञातृत्वकर्तृत्वाद्यनुपपत्त्या-शरीरस्य तदुपयोगित्वादिति चेन्न, शरीरप्रवृत्त्यादिकार्ये जीवस्याशरीरस्यैव कर्तृत्वदर्शनेन तस्यान-पेक्ष्यत्वात्। अथ विपुलपुरगोपुरादिकार्ये एकस्मिन्नपि कर्तृकालैक्यमसम्भावितम्। किमङ्ग पुनर्मही-महार्णवादिविपुलतमानेककार्येष्विति। कर्त्रैक्यबाधे क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायेन कर्तृत्वकल्पनान्न तद्भिन्नलक्षणेश्वरसिद्धिरिति चेन्न, एकस्यैवानेकशिल्पपर्यवदातस्य विपुलविचित्रकम्बलादिनिर्माणसामर्थ्यदर्शनेन लाघवात्कर्तुरेकस्यैव कल्पनौचित्यात्। प्रतिकल्पं प्रतिकार्यं च बहूनामस्मदादिविलक्षणशक्तीनामन्येषां कर्तृत्वकल्पने गौरवात्। तादृशा बहव एव केचित्क्षेत्रज्ञाः प्रतिनियताः कर्तार इति विलक्षणानेककल्पनाद्वरं, लाघवादेक एव क्षेत्रज्ञविलक्षणः कर्तेति न तैरर्थान्तरता। एतेन तदनुभुवनादिकं क्षेत्रज्ञकर्तृकं, कार्यत्वात् घटादिवदित्यनुमानम-प्रयोजकत्वात् उक्तगौरवतर्कहतत्वाच्च निरस्तम्। एवं सति बुद्धिमदेककर्तृकत्वे साध्ये पुरगोपुरादौ कार्यत्वस्यानैकान्त्यम्। सर्वज्ञसर्वशक्त्येककर्तृकत्वे साध्ये पक्षस्याप्रसिद्धविशेषणत्वं च साध्यविकलता च दृष्टान्तस्य बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाध्यता, क्षेत्रज्ञानामप्यदृष्टद्वाराकर्तृत्वसम्भवात्। तैरर्थान्तरता वा, तथा कार्यत्वमात्रं कर्तृविशेषसिद्धावप्रयोजकम्। युगपदुत्पद्यमानकार्यत्वमसिद्धम्। क्रमोत्पद्यमानत्वं कालत्रयवर्तिसमस्तकार्यत्वं चानेककर्तृकत्वसाधनाद्विरुद्धं पक्षे चासिद्धम्। दृष्टान्तश्च साधनविकल इत्यादयो जल्पाकविकल्पान्यायकथानभिज्ञतन्त्रजडमोहनफलाः निरवकाशाः। कार्यत्वेनैव पक्षधर्मताबलेन लाघवतर्कानुग्रहेण च कार्यानुरूपज्ञानशक्त्यतिशयशालि सकलजगन्निर्माणचतुरपुरुष-विशेषसिद्धेरिष्टत्वात्। यच्चु शरीरादिकार्येषु सुखदुःखाद्यन्वयवैचित्र्यं तावदुपलभ्यते। सुखादयश्च सत्त्वादिगुणहेतुका इति शास्त्रप्रामाण्यवादिभिरङ्गीकार्यम्। कार्याणां च सत्त्वादिहेतुकत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण सत्त्वादिगुणयुक्तमुपादानं द्रव्यमुपादाय सत्त्वादिगुणविकारचिकीर्षादि-मानुपादेयं निर्मिमीत इति अर्थः। ततश्च ज्ञानशक्तिवत् सत्त्वादिगुणसम्बन्धस्तन्मूलकर्मवश्यत्वं च विश्वकर्तुरपि कार्यहेतुत्वे नैवावश्याश्रयणीयः प्रसज्येत इत्यादि, तन्न, कार्याणामचेतनानां सुखाद्यन्वया-सिद्धेः। तथा च पुराणम् – "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायत" इति प्रक्रम्य, "तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्। मनसः परिणामोऽयं सुखदुःखादिलक्षणः"॥ इति॥ सुखाद्यन्वयश्शरीरादीनां सुखादिहेतुत्वावस्थान्वय इति तच्छिष्यो व्याख्यदिति चेत् सोऽयं लण्डगुरोर्भण्डशिष्यः। सकलकार्यवर्गेषु सुखदुःखादिहेतुत्वस्य भोक्तृकर्मनिबन्धनत्वेन तत्कर्त्रुपादान-गतसत्त्वादिमूलत्वानुपपत्तेः कर्तुश्चिकीर्षादिः सत्त्वादिगुणमूल इति चेत् तर्ह्ययमेव दोष उपवर्ण्यताम्। किं कार्याणां सुखाद्यन्वयोपवर्णनक्लेशेन। कर्तृत्वं च कार्यानुकूलज्ञानवत्त्वमेव। न चिकीर्षादिलक्षणम्। सुखादिकर्तृत्वानुरोधादात्मन इत्युक्तमिति न महदादिकर्तुस्सत्त्वादिगुणान्वयः। कर्मवश्यत्वं वा शङ्कास्पदम्। ईश्वरः कर्ता न भवति। प्रयोजनशून्यत्वात्, अशरीरत्वाद्वा। मुक्तात्मवदित्यादि

व्यापारद्वयमेकस्य सम्भवति। "अश्वाभिधानीमादत्ते नान्यामादत्त" इत्यावृत्तिप्रसङ्गात्। न च नान्तरीयकोऽन्यत्र निषेधः। विनापि तेन विध्युपपत्तेः। अथ मन्त्राणामध्ययनविधिगृहीताना-मर्थवत्वाकाङ्क्षाया एकत्र श्रुतिविनियोगेनैव शान्तत्वात्। न पुनरन्यत्र, लिङ्गविनियोगप्राप्तिरिति चेन्न, प्रयोजनाकाङ्क्षया प्रमाणप्रवृत्तिः उपेक्षणीयादिज्ञानदर्शनात्। प्रवृत्ते तु प्रमाणे यदि प्रयोजनं स्यात् स्यान्नाम। मन्त्रस्य च श्रुतिलिङ्गाभ्यामुभयार्थत्वं प्रयोजनभूम्नाऽध्ययनविधिरनुमन्यनेतराम्। अत एव जपयज्ञे विनियुक्ता एव मन्त्राः क्रियायज्ञेऽपि विनियुज्यन्ते। "सर्वादाशतयीरनुब्रूयादि"त्यादौ "अथैवमैन्द्र्या गार्हपत्यमुपतिष्ठत" – इति श्रुतिविनियुक्तस्य मन्त्रस्य लिङ्गादिन्द्रेऽपि विनियोगः प्रसज्येत। अतो "यावदज्ञातसम्बन्धं ज्ञेयं तावत्प्रमित्सति। प्रमिते तु प्रमातॄणां प्रमौत्सुक्यं विहन्यते।" इत्येव श्रुतिविनियोगादेव मन्त्राकाङ्क्षाशान्तौ, न पुनर्लिङ्गविनियोगप्राप्त्यवसर इत्येव वाच्यम्। एवमन्यत्रापि श्रतिविनियोगे सति लिङ्गविनियोगप्राप्तिरेवेति चेत् सत्यम्। विरोधि-श्रुतिविनियोगसामर्थ्यादेव परत्र प्रमौत्सुक्यविघाते तत्र लिङ्गविनियोगापच्छेदो गम्यते। इह पुनरविरोधित्वात्तदनुज्ञैवेत्युभयत्र विनियोगोऽनिवार्य एव तदुपगमे च लिङ्गादेव तत्सम्भवे तदर्थ-शास्त्रानर्थक्यं स्थितमेवेत्यस्ति बाधकम्। अतो युक्तं तत्र यथायथं मानान्तरसिद्धिसम्भवमात्रेणानु-वादत्वमन्यार्थत्वं च। न च ब्रह्मकारणवादे तथा बाधकमस्तीति तत्प्रतिपादकत्वैव स्यादिति।

उच्यते। अस्त्यत्रापि बाधकम्। प्रतिपाद्यस्याज्ञातस्य लक्षणत्वानुपपत्तिरेव। शास्त्रादेव प्रज्ञातं लक्षणमिति चेत्तर्हि यस्येदं लक्षणं तत्प्रतिपत्तिपरं शास्त्रमिति न विश्वहेतुपरं स्यात्। उभयतात्पर्ये वाक्यभेदप्रसङ्गात्। अङ्गाङ्गिविधिवत्स्यादिति चेन्न, विश्वहेतोरनुमेयत्वसम्भवेन पूर्ववत्त्वे तद्वादस्य प्रयाजादिविधिवदवान्तरतात्पर्यस्याप्यकल्पनीयत्वात्। तत्सिद्धं विश्वहेतुस्वभावत्वे परमात्मनो नौपनिष-दत्वं स्यात्। अनुमेयत्वादिति। कथं पुनरनुमेयो विश्वहेतुः परमात्मेति? उच्यते। महीमहीधरमहार्णव-तनुभुवनादिकार्यं सावयवत्वात्, महत्वे सति सक्रियत्वात् महत्वे सति मूर्तत्वाद्वा। घटादिवत्कार्यं च सर्वं सकर्तृकं। अथ यत्कार्यं सकर्तृकं च तच्छक्यक्रियम्। शक्योपादानादिविज्ञानं च। न च महीमहीधरादि तथेति व्यापकविरुद्धोपलब्धिरिति चेन्न, सर्वशक्यक्रियत्वादि सपक्षादपि व्यावर्तत इति। न साध्यव्यापकता तत्कर्तृशक्यक्रियत्वादिकं च कर्तृसिद्धिनान्तरीयकमिति साधनव्यापकता। ततश्च कार्यत्वात् कर्ताऽनुमीयमानः पक्षधर्मताबलात् पुरुषविशेष एव सर्वज्ञः सर्वशक्तिश्च सिद्ध्यति। अत्राङ्कुरसुखादिषु पक्षसमेषु व्यभिचारशङ्का श्रोत्रियवेतालानां अनुमानविभवाज्ञानमूलैव। अत्र कर्तुरन्याज्ञानासामर्थ्यादि यदन्यत् सपक्षे सहचारदर्शनमात्रेण शङ्क्यते तत्सर्वं कार्यत्वादावप्रयोजकत्वे-नानपेक्ष्यत्वादनाशङ्क्यमेव। न खलु तदितरसकलाज्ञानादितरकार्यतायां प्रयोजकं कस्यचिदनेक-शिल्पपर्यवदाततत्सम्भवात्। तदितरकिञ्चिदज्ञानादि च परस्परव्यभिचारीति नाप्रयोजकेनाप्रयोज्यस्या-शक्यज्ञानादेशशक्तिज्ञानादेरिव कर्तृसिद्ध्यानुषङ्गिकता। सिद्धे तु कर्तरि तदनुमाने धर्मिग्राहकमानबाधः।

अथापि कर्ता सिद्ध्यन् सशरीर एव सिद्ध्येत्। अशरीरस्य मुक्तात्मन इव ज्ञातृत्वकर्तृत्वाद्यनुपपत्त्या-शरीरस्य तदुपयोगित्वादिति चेन्न, शरीरप्रवृत्त्यादिकार्ये जीवस्याशरीरस्यैव कर्तृत्वदर्शनेन तस्यान-पेक्ष्यत्वात्। अथ विपुलपुरगोपुरादिकार्य एकस्मिन्नपि कर्तृकालैक्यमसम्भावितम्। किमङ्ग पुनर्मही-महार्णवादिविपुलतमानेककार्येष्विति। कर्त्रैक्यबाधे क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायेन कर्तृत्वकल्पनान्न तद्भिलक्षणेश्वरसिद्धिरिति चेन्न, एकस्यैवानेकशिल्पपर्यन्तदातस्य विपुलविचित्रकम्बलादिनिर्माणसामर्थ्यदर्शनेन लाघवात्कर्तुरेकस्यैव कल्पनौचित्यात्। प्रतिकल्पं प्रतिकार्यं च बहूनामस्मदादिविलक्षणशक्तीनामन्येषां कर्तृत्वकल्पने गौरवात्। तादृशा बहव एव केचित्क्षेत्रज्ञाः प्रतिनियताः कर्तार इति विलक्षणानेककल्पनाद्वरं, लाघवादेक एव क्षेत्रज्ञविलक्षणः कर्तेति न तैरर्थान्तरता। **एतेन** तदनुभुवनादिकं क्षेत्रज्ञकर्तृकं, कार्यत्वात् घटादिवदित्यनुमानम-प्रयोजकत्वात् उक्तगौरवतर्कहतत्वाच्च निरस्तम्। एवं सति बुद्धिमदेककर्तृकत्वे साध्ये पुरगोपुरादौ कार्यत्वस्यानैकान्त्यम्। सर्वज्ञसर्वशक्त्येककर्तृकत्वे साध्ये पक्षस्याप्रसिद्धविशेषणत्वं च साध्यविकल्पता च दृष्टान्तस्य बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाध्यता, क्षेत्रज्ञानामप्यदृष्टद्वाराकर्तृत्वसम्भवात्। तैरर्थान्तरता वा, तथा कार्यत्वमात्रं कर्तृविशेषसिद्धावप्रयोजकम्। युगपदुत्पद्यमानकार्यत्वमसिद्धम्। क्रमोत्पद्यमानत्वं काल्यवर्तिसमस्तकार्यत्वं चानेककर्तृकत्वसाधनाद्विरुद्धं पक्षे चासिद्धम्। दृष्टान्तश्च साधनविकल इत्यादयो जल्पाकविकल्पान्यायकथानभिज्ञतन्त्रजडमोहनफलाः निरवकाशाः। कार्यत्वेनैव पक्षधर्मताबलेन लाघवतर्कानुग्रहेण च कार्यानुरूपज्ञानशक्त्यतिशयशालि सकलजगन्निर्माणचतुरपुरुष-विशेषसिद्धेरिष्टत्वात्। यच्चु शरीरादिकार्येषु सुखदुःखाद्यन्वयवैचित्र्यं तावदुपलभ्यते। सुखादयश्च सत्त्वादिगुणहेतुका इति शास्त्रप्रामाण्यवादिभिरङ्गीकार्यम्। कार्याणां च सत्त्वादिहेतुकत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण सत्त्वादिगुणयुक्तमुपादानं द्रव्यमुपादाय सत्त्वादिगुणविकारचिकीर्षादि-मानुपादेयं निर्मिमीत इति अर्थः। ततश्च ज्ञानशक्तिवत् सत्त्वादिगुणसम्बन्धस्तन्मूलकर्मवश्यत्वं च विश्वकर्तुरपि कार्यहेतुत्वे नैवावश्याश्रयणीयः प्रसज्येत इत्यादि, तन्न, कार्याणामचेतनानां सुखाद्यन्वया-सिद्धेः। तथा च **पुराणम्** – "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते" इति प्रकृत्य, "तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्। मनसः परिणामोऽयं सुखदुःखादिलक्षणः"॥ इति॥ सुखाद्यन्वयश्शरीरादीनां सुखादिहेतुत्वावस्थान्वय इति तच्छिष्यो व्याख्यदिति चेत् सोऽयं लण्डगुरोर्भण्डशिष्यः। सकलकार्यवर्गेषु सुखदुःखादिहेतुत्वस्य भोक्तृकर्मनिबन्धनत्वेन तत्कर्त्रुपादान-गतसत्त्वादिमूलत्वानुपपत्तेः कर्तुश्चिकीर्षादिः सत्त्वादिगुणमूल इति चेत् तर्ह्ययमेव दोष उपवर्ण्यताम्। किं कार्याणां सुखाद्यन्वयोपवर्णनक्लेशेन। कर्तृत्वं च कार्यानुकूलज्ञानवत्त्वमेव। न चिकीर्षादिलक्षणम्। सुखादिकर्तृत्वानुरोधादात्मन इत्युक्तमिति न महदादिकर्तुस्सत्त्वादिगुणान्वयः। कर्मवश्यत्वं वा शङ्कास्पदम्। ईश्वरः कर्ता न भवति। प्रयोजनशून्यत्वात्, अशरीरत्वाद्वा। मुक्तात्मवदित्यादि

प्रतितर्कवचनं नैयायिकविडम्बनमुपहसनीयम्। ईश्वरसिद्धौ धर्मिग्राहकमानबाधात्। तदसिद्धावाश्रयासिद्धेः। आद्यहेतोर्लीलाकर्तरि बालादौ व्यभिचाराच्च। फलाभिसन्धिशून्यव्यापार एव हि लीला नाम। द्वितीयस्य च शरीरव्यापारकर्तरि जीवे व्यभिचारादित्यलं प्रपञ्चेन।

अत्र सम्भावितदोषपरिहारस्तन्त्रान्तरपरिश्रमादधिगन्तव्यः। वस्तुतस्तु यानीमानि विपरीतानुमानानि तैरेव विरोधान्न शास्त्रप्रतिपाद्यो विश्वहेतुरिति प्रसज्येत। एतावद्धि नो विवक्षितम्। मानान्तरयोग्ये तस्मिंस्तत्संवादविसंवादाभ्यामागमस्याप्रामाण्यप्रसङ्ग इति। तथा पुण्यापुण्यक्रिये चेतनाधिष्ठेयफले परवशचेतनहिताहितक्रियात्वात् राजसेवापराधादिवत्। चेतनपरवशत्वं हितसङ्कल्पेऽप्यहितकारणादुन्नीयते। अन्यथाऽचेतनस्य पुण्यादेः फलसाधनत्वानुपपत्तिरिति सर्वकर्मफलप्रदानचतुरप्रतिनियतकर्मविपाकदेशकालाभिज्ञपुरुषविशेषसिद्धिः। अन्ये तु धर्माधर्मौ स्वसाक्षात्कारिचेतनाधिष्ठातावेव कार्यकरौ। अचेतनत्वाद्वास्यादितिवदिति अनुमिमते। सर्वथाप्यस्ति विश्वहेतुरूपे परमात्मनि मानान्तरप्रसक्तिरिति तदौपनिषदत्ववादविरोधः। अथापि स्यान्निमित्तत्वे सत्युपादानत्वमात्मनश्शास्त्रैकसमधिगमनीयमिति न विश्वं सोपादाननियन्तृकं, कार्यत्वादित्यनुमाने नैव लाघवानुगृहीतेन तदेकत्वसिद्धिसम्भवात्। न च लोकेऽत्यन्तापरिदृष्टे कार्यत्वानपेक्षिते च तदेकत्वे लाघवानवतार इति शङ्क्यम्। कल्पनायां तावदपेक्षितेऽनपेक्षिते वा लाघवमादरणीयम्। न चात्यन्तापरिदृष्टं लोके कर्त्रुपादानैकत्वं, जानामि, करोमि, भुञ्जे इत्यात्मन एवात्मोपादानज्ञानादिकर्तृत्वानुभवस्य सार्वजनीनत्वात्। अस्तु वा यथालोकनिदर्शनम्। विश्वकर्त्रुपादानभेदानुमानविरोधात्, विश्वहेतुपरमात्मवादे वेदाप्रामाण्यप्रसङ्गः। एतेनाकाशादिकारणत्वमात्मनश्शास्त्रैकसमधिगमनीयमिति प्रत्युक्तम्। विपरीतानुमाने तद्धेतुवादविरोधस्यैव प्रसङ्गात्। तस्माद्विश्वहेतुरूपस्य मानान्तरयोग्यत्वेन तत्संवादविसंवादाभ्यामागमाप्रामाण्यप्रसङ्गादौपनिषदत्वविशेषणम्। परमात्मनो निरूपयता हेतुरूपोत्तीर्णमेव परमात्मतत्त्वमागमप्रतिपाद्यमित्यकामेनाऽपि स्वीकरणीयम्। न च निर्विशेषात्मपरत्वे कारणात्मपरत्व इवागमस्य मानान्तरसंवादविसंवादाभ्यामप्रामाण्यप्रसङ्गादो शङ्कातङ्कः, निर्विशेषात्मनो मानान्तरयोग्यत्वात्। किन्तु विश्वहेतुत्वलक्षणतः सम्भाविते तस्मिन् "सत्यं ज्ञानमनन्तं ब्रह्म", "सदेव सोम्येदमग्र – आसीत्", "एकमेवाद्वितीयमि"त्यादिभिः प्रतिपिपादयिषिते तदुपयोगितया तदाश्रयोपासनाविधिशेषतया च विश्वहेतुत्वम्। "आत्मन आकाशस्सम्भूतः", "तदैक्षत बहुस्यां प्रजायेयेति", "तत्तेजोऽसृजते"त्यादिभिरुपपादयन्नागमोऽनुमानाविषयमपि तदर्थसिद्धनिमित्तोपादानाभेदं पृथिव्यादिनिदर्शनेन, "यावद्विकारन्तु विभागो लोकवत्, न विभागो विकारं व्यभिचरति, विभक्तत्वादाकाशादिकं कार्यमि"ति न्यायोपक्षेपेणाकाशादिकारणत्वं चानुषज्योपपादयति। तदुपपादने हि विश्वहेत्वन्तरापरिशेषात्तन्निषेधेन निर्विशेषाद्वितीयवस्तु प्रतिपादितं भवति। तदेतदभिधीयते — "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति। तस्मादौपनिषदत्वविशेषणादहेतुरूपमेवात्मतत्वं आगमप्रतिपाद्यमिति स्थितम्॥ ७९॥

**स्यादेतत्**, यस्येदं विश्वनिमित्तोपादानत्वं लक्षणं स तदुभयसाधारणस्तद्विलक्षणः परमात्मा शास्त्रप्रतिपाद्य इत्ययुक्तम् । "स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत", "सोऽकामयत बहु स्यां प्रजायेयेति, स तपस्तप्त्वा, इदं सर्वमसृजत", "तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत", "यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते" इत्यादिषु सार्वज्ञ्य-सत्यकामसङ्कल्पादिगुणविशिष्टस्येश्वरस्यैवाऽऽत्मना बहुभवनसङ्कल्पोपन्यासादिलिङ्गादुपादानत्वावगम-विरोधात् । **अथ** "आत्मा वा इदमेक – एवाग्र आसीत्", "सदेव सोम्येदमग्र आसीत्, एकमेवा-द्वितीयमि"त्यादौ निर्विशेषाद्वितीयसत्तामात्रात्मा प्रकृतस्तच्छब्देनावमर्शनीयः । तत्कथमीश्वरस्य सत उपादानत्वमिति **चेन्नेति ब्रूमः** । सन्मात्रस्येक्षणसङ्कल्पाद्यक्षमतया बहु स्यामितीक्षणबहुभावसामानाधि-करण्यानुरोधेन सूक्ष्मचिदचिद्विशिष्टस्य कारणात्मन एव सदेवेत्यादिना विवक्षणीयत्वात् । कथं पुनरेवं सति सदेवेत्यवधारणं कार्यावस्थापेक्षयेदमवधारणं भविष्यति । **यथा** कश्चित्कुलालकुलं गतः सायममत्राणि प्रसारितानि पश्यन्नाह प्रातरिमानि मृदेवासीत् एकैवाद्वितीया इति तद्वत् । अन्यथा वस्तुस्वरूपापेक्षयैव तदवधारणे सदेवासींन्नान्यदित्येव स्यात् । तत्रेदं सदासीदिति सामानाधिकरण्य-विरोधः । अग्र आसीदिति कालसम्बन्धविरोधश्च । न हि कालविशेषे निर्विशेषाद्वितीयमात्मतत्वमिष्यते । अन्यदा हेतूपरागेण सविशेषत्वे निरञ्जनत्वाविकारित्वविरोधात् । तस्मादीक्षणलक्षणनिमित्तत्व-बहुभवनलक्षणोपादानत्वयोः परस्परनियमात्तदुभयविलक्षणः परमात्मा तदुपलक्षणीय – इति मृषैवेत्याशङ्कां परिहरन्नाह —

जीवात्मना भवनमत्र तवेश ! सर्गे
ब्रह्मात्मना निगतिमस्य च मोहहानौ ।
आम्नायमौलिषु विदन्नपि को भवन्तं
तत्त्वेन विश्वसितु विश्वनिदानमेव ॥ ८० ॥

**अत्र**, अस्मिन्सर्गे, सृज्यमाने भूतवर्गे । अत्रेति विशेषणं सर्गस्य यथोपस्थितहेयत्वानुसरणेन सर्वज्ञसर्वशक्तेरीश्वरस्य तदनुप्रवेशेन जीवभावायोगं सूचयति । तदेव स्फुटयितुमत्र **हे ईशेति** सम्बोधनम् । **तव**, विश्वहेतुभावमापद्यमानस्य । **जीवात्मना**, 'इत्थं भूतलक्षणे तृतीया' । **भवनं**, भावः । तद्रूपेणावस्थानम् । यथा चैतत्तथा वक्ष्यामः । **अस्य**, जीवस्य तत्वविद्यया **मोहहानौ**, जीवभावभ्रमहेत्वविद्यानिवृत्तौ सत्याम् । **ब्रह्मात्मना**, तृतीया पूर्ववत् । **निगतिं**, निगमनं तद्रूपेणाप-संहारं च । तद्रूपपरिशेषतामित्यर्थः । **अत्र मोहहानौ ब्रह्मात्मना निगतिमित्यनेन** जीवो नाम न परमात्मनस्तत्वान्तरं, किन्तु तस्यैवानाद्यविद्यानिबन्धनोऽवस्थाभेद एवेति सूचयति । "त्वं हि नः पिता,

यो ऽस्माकमविद्यायाः परं पारं तारयसि। तस्मै मृदितकषायाय तमसः पारं दर्शयती"त्यादिशास्त्र-दर्शनात्। अत्र परस्य जीवात्मना भवनं, जीवस्य ब्रह्मात्मना निर्गतिं चेति समुच्चयेन व्यवहारावगमात् तदवगमितस्वरूपाभेदस्य श्रुतितात्पर्यविषयतामभिप्रैति । तत्स्फुटीकारप्रयोजनायोभयत्वात्मग्रहणम् । तदेतदुभयं, **आम्नायमौलिषु**। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति प्रक्रृत्य "तत्त्वमसि, यो वेदाहं ब्रह्मास्मी"ति, "स इदं सर्वमभवदि"ति प्रक्रृत्य "आत्माह्येषां स भवती"त्यादिषु वेदान्तेषु। बहुवचनं उक्तार्थस्य गतिसामान्यप्रदर्शनार्थम्। "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत, स एतमेव पुरुषं ब्रह्म तु ततमपश्यत्। तदनु प्रविश्य सच्च त्यच्चाभवत्। यदा ह्येवैष एतस्मिन्नदृश्येनात्म्ये ऽनिरुक्ते ऽनिलयने ऽभयं प्रतिष्ठां विन्दते । अथ सो ऽभयं गतो भवति। स एष इह प्रविष्ट आनखाग्रेभ्यः" इति प्रक्रृत्य तदेतत्पदनियमस्य सर्वस्य यदयमात्मा, स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवती"त्यादौ सर्वत्र परस्य जीवभावापत्तौ, जीवस्य परस्वरूपप्रतिष्ठायां च गतिसामान्यदर्शनात्। **विदन्नपि,** जानन्नपि जीवाभेदवेदनं। परस्य विश्वहेतुस्वभावत्वाश्वासश्च विरुद्ध इति सूचयितुमपिशब्दः। **कः,** यो मादृशो गुरुसम्प्रदायसम्पन्नः स कः। भवस्तं परमात्मानम्। **तत्वेन,** स्वभावेन। **विश्वनिदानमेव,** विश्वमूलकारणमेव। **विश्वसितु,** श्रद्धत्ताम्। न कश्चिदपि विश्वसिति। यदि विश्वहेतुस्वभावः परमात्मा स्यात् तर्ह्यवश्यं तद्विलक्षणमेव जीवतत्वमिति उदाहृत-श्रुतिगतिसामान्यविरोध इत्यभिप्रायः। **विश्वनिदानमेवेत्येवकारेण** अहेतुरूपमपि परमात्मनो विश्वसनीयं दर्शयति । एकस्य हेत्वहेतुरूपत्वं विरुद्धमिति तत्त्वेनेति विशेषणम् । नात्यन्तमेव परमात्मनो विश्वहेतुत्वं निषिध्यते। हेतुवादस्य निरालम्बनत्वापत्तेः। आत्मनस्तल्लक्षणत्वोपगमविरोधाच्च। किन्तु कुतो ऽपि हेतोर्यावत्परतत्वविद्यायामनधिकृतः तावदतात्त्विकमेव विश्वहेतुभावमुपासनविधाना-श्रयतया ऽनुवर्तनीयमुपगच्छामः। विरोधाभावादित्यभिप्रायः।

**अयमाशयः** – यो नु खलु विश्वहेतुतामापद्यमानस्तदनुप्रवेशेन तादात्म्याभिमानेन जीवभाव-मापद्यते। जीवश्च तत्त्वज्ञानेन मोहहानौ यद्भावं निगच्छति स परमात्मा विश्वहेतुत्वेनोपलक्ष्य शास्त्रेण प्रतिपाद्य इत्युपगन्तव्यम्। न च सर्वज्ञसर्वशक्तिरीश्वरो विश्वानुप्रवेशेन दुःखमयजीवभाव-मापत्तुमर्हति। हिताहितविवेचकस्सम्राडिव निगलितचोरभावं। **न च** जीवो ऽपि तद्विलक्षणस्वभावो मुक्तोपीश्वरभावं निगच्छति। निगलनिर्मुक्तश्चोर इव तन्नियन्तृराजभावम्। तस्मादुभयविधहेतूत्तीर्ण-स्वभाव एव परमात्मा केवलमविद्यया जीवजगदीशभावमापद्यत इत्येव प्रतिपादनीयो ऽर्थानुगुण्येन केवलमुपपाद्यते। **एवं सति** "आत्मा वा इदमेक एवाग्र आसीत्", "सदेव सोम्येदमग्र – आसीदि"ति निर्विशेषोपक्रमस्समञ्जसो भवति। **ननूक्तं** सन्मात्रस्येक्षणाद्यक्षमतया ईक्षण-बहुभवनसामानाधिकरण्यानुरोधेन विशिष्टकारणात्मविषय – एवायमुपक्रमः स्यादिति, **तन्न,**

उपक्रमस्यानुपसञ्जातविरोधिनः स्वरसत एव निर्विशेषविषयत्वे सत्युपजातविरोध्युत्तरानुरोधेन तन्नियमनायोगात् । अत एवाध्वरमीमांसायां, "अग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इति वेदोपक्रमात् उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्नेति विधिगता अप्यृगादिशब्दास्तेषां, "ऋग्यत्रार्थवशेन, पादव्यवस्था गीतिषु सामाख्या शेषे यजुश्शब्दः" इति जैमिनिलक्षणात् । यदृचा स्तुवते यद्यजुषा, जुहुयात् साम्ना स्तुवीतेत्यादि वैदिकप्रयोगाच्चार्थान्तरेषु प्रसिद्धा अपि वेदविषयात्व्यवस्थाप्यन्ते । ऋग्वेदचोदितान्युच्चैः कर्तव्यानि, यजुर्वेदचोदितान्युपांश्वित्येवं वेदधर्म उच्चैस्त्वादिविधिरिति । तथा 'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामगच्छत्, सपर्यदीव्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तन्निरवपत्ततो वै स वरुणपाशादमुच्यते"-त्युपक्रमात् "वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणं चतुष्कपालं निर्वपेदि"त्यत्र प्रतिग्रहप्रयोजककर्तृलक्षणया दातुरिष्टिरिति व्यवस्थाप्यते । तथा ब्रह्ममीमांसायामपि "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्यः इत्यत्र धर्माधर्मादिवाचिना कर्मशब्देन तत्सम्बन्धिनो जीवस्य वेदितव्यत्वप्राप्तिमाशङ्क्य "ब्रह्म ते ब्रवाणि" इति प्रतिज्ञाय बालाकिना "आदित्ये पुरुषश्चन्द्रे पुरुष" इत्यादिना केषुचिदुक्तेषु, "मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणी"ति तानब्रह्मत्वेनापोह्याजातशत्रुराह "ये वै बालाक" इत्यादितदुपक्रमानुरोधेन, "यस्य वैतत्कर्मे"ति प्रकृतपुरुषकर्मत्वस्य "यो वै पुरुषाणां कर्ते"त्येवार्थसिद्धतया विशेषाभावेन सर्वनाम्ना प्रत्यक्षादिसंनिधापितं जगदवमृश्य, क्रियत इति कर्मेति व्युत्पत्त्या, "यस्यैतज्जगत्कार्यं स परमात्मा वेदितव्य" इत्युच्यत इति "जगद्वाचित्वात्" इत्यधिकरणे व्यवस्थाप्यते । एवं "वाक्यान्वयात्" इत्यधिकरणे "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती"त्यादिभोक्त्रात्मप्रक्रमात् "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् । अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद" इत्याद्युत्तरलिङ्गान्यथासिद्ध्या "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादौ जीवस्य द्रष्टव्यताप्राप्तिमाशङ्क्य "येनाहं नामृता स्यां, किमहं तेन कुर्यां, यदेव भगवान्वेद तदेव मे ब्रूही"त्यमृतत्वसाधनवेदनस्य ततोऽपि प्रथमतरोपक्रमात् तदनुरोधेन परमात्मैव द्रष्टव्य उपदिश्यत इति निर्णीयते । एवम् "सदेव इदमग्र आसीदि"त्यादौ "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति, सोऽकामयते"त्युपक्रमानुरोधेन यथायथमर्थनिर्णय उदाहरणीयः । यत्तु सदेवेत्यवधारणं कार्यावस्थापेक्षयेति न निर्विशेषोपक्रम इति तन्न सत्स्वरूपावधारणस्य स्वरसत्वात् । मृदेवासीदित्युदाहरणे तु दृष्टविरोधेन सङ्कोचोऽनुमन्यते । नन्वत्रापि इदंशब्दसामानाधिकरण्यादिविरोधः संकोचहेतुः । नेत्युच्यते । इदं सदेवासीत् नत्विदमासीदिति यथायथं प्रत्यक्षाद्युपस्थापनीयसकलजगत्स्वरूपनिषेधसिद्धेः । न खल्विदमेवासत्वनिषेधेनानसत्वेनावदिधारयिषितं

ब्रह्मतत्त्वप्रतिपादनपरं हीदं प्रकरणं, न जगत्सत्त्वप्रतिपादनपरम्। ततः प्रयोजनाभावात् साक्षादेव सच्छब्द-स्याबाधितसत्तामात्रात्मार्थत्वे सम्भवति, इवं यदात्मना सत् तद्ब्रह्मेति तदर्थलक्षणार्थत्वकल्पनायोगाच्च। यद्यपि सदेवासीन्नान्यदासीदित्येव विवक्षितार्थसिद्धिः, तथापि तदुपपादनायैव ब्रह्मण एवेदंभावविवक्षया इदं ग्रहणम्। तद्ग्रहणे चास्य इदमर्थस्य वर्तमानत्वापेक्षयैवाग्र आसीदित्युपचर्यते। न तु कालविशेष-विवक्षया। येन कालविशेषोपाधिकं निर्विशेषत्वं प्रसज्येत। एवमेव च युक्तम्। अन्यथा जगतस्सत्त्वावधारणपक्षे इदमग्रे सदासीन्नेदानीमिति वा अधिकावापेनाग्रेऽपि सदासीदिति वा सत् कारणं ब्रह्म वा अग्र आसीन्नेदानीमिति विपरीतप्रसङ्गात्। एवमवधारणेनेतरनिषेधोपलक्षितं स्वरूपेण लक्षयितुमिदमुच्यते एकमेवाद्वितीयमिति। यथा — "वृक्षान्तरात्सजातीयाद्विजातीयाच्छिलोच्चयात्। स्वतश्च पर्णपुष्पादेरस्ति वृक्षे त्रिधा भिदा"॥ न तथाऽत्र। किन्तु सत्तामात्रकेवलमित्यर्थः। उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवतीत्यादिप्रक्रमोऽपि यथा एतदनुगुण एव तथा प्रपञ्चितमन्यत्र अग्रे च वक्ष्यामः। तदेवं कारणस्वभावविरुद्धनिर्विशेषोपक्रमात् परस्यैवसर्गे जीवात्मभाववचनात्, तस्यैव विधया ब्रह्मभावनिगमनाच्चाहेतुम्वभावस्यैव परमात्मनः शास्त्रप्रतिपाद्यत्वेऽवसिते तदनुरोधेन, "गुणे त्वन्याय्यकल्पनैकदेशत्वादि" ति न्यायार्दीक्षणादिसामानाधिकरण्येन न बहुभवनादिवादाः प्रागुक्तविधया कथञ्चिदुपपादनीया इति सिद्धम् ॥ ८० ॥

स्यादेतत् यदुक्तं सदेवेत्याद्युपक्रमानुरोधादुत्तरमीक्षणादिकमुपपादनियमिति। तत्रेद-माशङ्क्यते अस्ति तावदुत्तरानुरोधेनापि उपक्रमोपपादनं, यथा धर्ममीमांसायां ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणमिति। चतुर्थाधिकरणे "ज्योतिष्टोमेन स्वर्गकामो यजेत" त्यत्र दीक्षणीयदग्निष्टोमीयादिष्टिपशुयागकर्माणि तुल्यानि समप्रधानानि। न तु सोमयाग एव प्रधानम्। अङ्गानि इतराणीति विशिष्यते अविशिष्टं हि सर्वेषां प्राधान्यकारणं फलसम्बन्धश्रवणम्। यजेत स्वर्गकाम इति यागात्फलं श्रूयते। दीक्षणीयदयश्च यागा इति। तत्र स्वाराज्यकामो राजसूयेन यजेतेत्यत्र प्रकृतानुमत्यादिमान्हादियागेष्वविशेषेण राजसूयपदवज्ज्योतिष्टोमपदमपि यजिपरतन्त्रतया तत्रैव वत्स्यति इति प्रक्रमतो यजेः प्रकृतसर्वयागानुवदस्वारस्येन सिद्धान्तितम्। गुणानां तूत्पत्तिवाक्येन संयोगात्। कारणं श्रुतिः तस्मात्सोमप्राधानं स्यात्। "गुणानां त्रिवृत्पञ्चदशस्सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा" इति वाक्यशेषश्रुतानां ज्योतिषां स्तोमानां ज्योतिष्टोमेन यजेतेति विधिवाक्येन सम्बन्धात्, तद्विशेषितस्यैव यागस्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्रान्यत्रश्रुतकालविशेषसम्बन्धात् तद्विशेषितानामाग्नेयादीनामिव फलसम्बन्धकारणं श्रुतिः। तस्मात्सोमयागः प्रधानं स्यात्। तस्यैव गृहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति स्तोमसम्बन्धा-वगमात्। दीक्षणीयादीनि तु तदङ्गान्येव फलवत्सन्निधावफलत्वादिति। तथा द्वादशाहे पत्नीसंयाजान्तान्यहानि सन्तिष्ठत इति पत्नीसंयाजान्तत्वं सर्वेषामविशेषादिति। प्रक्रमादवगते

वाक्यशेषेणोत्तमाहवर्जमिति सिद्धान्तितम् । स्याद्वानारभ्य विधानादन्त्ये लिङ्गविरोधात् । स्याद्वा प्रागुत्तमादह्नः पत्नीसंयाजांतता न ह्युत्तममहरारभ्यैषा विधीयते । किन्तु सामान्येन तत्रोत्तमस्याप्यह्नः पत्नीसंयाजांतत्वे, असंस्थितो हि तर्हि यज्ञ इति वाक्यशेषगतलिङ्गविरोधो भवति । असंस्थितिरसमाप्तिर्हि पत्नीसंयाजांतत्वे हेतुवन्निगद्यते । अन्त्ये चाहनि द्वादशाहयज्ञस्य संस्थितिरेवेति तस्यापि पत्नीसंयाजांतत्वे तदसंस्थितिसामानाधिकरण्यलिङ्गविरोध इति । तथा ब्रह्ममीमांसायामपि, "दहर उत्तरेभ्य" इत्यत्र । "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशः, तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति । प्रक्रमावगताप्याकाशश्रुतिः "यावान्वाऽयमाकाशः तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते, एष आत्माऽपहतपाप्मे"त्याद्याकाशोपमेयत्वद्यावापृथिव्यादिसमाधानाधारत्वात्मत्वापहतपाप्मत्वादिभिरुत्तरैर्लिङ्गैः परमात्मविषया नीयते । तथा "आकाशस्तल्लिङ्गादि"त्यत्र, "अस्य लोकस्य का गतिरित्याकाश इति होवाचे"त्युपक्रमस्थाऽऽकाशश्रुतिः, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशोह्येवैभ्यो ज्यायानाकाशः परायण"मित्यादिसर्वभूतोत्पत्ति, ज्यायस्त्वपरायणत्वादिलिङ्गादुत्तरात् **परमात्मपराऽवस्थाप्यते** ।

**इष्टश्च** सूत्रकृतोपसंहारानुरोधेनोपक्रमार्थनिर्णयः । "यदयं यस्मिन् पञ्च पञ्चजना" इत्यत्र भाषिकस्वरेणान्तो दात्तेन पञ्च जना इत्येकपदत्वे निश्चिते तदर्थनिर्णयं **सूत्रयति** – "प्राणादयो वाक्यशेषात्" । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि"त्यादेरिति । तस्मात्तदैक्षतेत्याद्युत्तरेक्षणादिलिङ्गानुरोधेन सदेवेत्याद्युपक्रमस्य कारणात्मविषयत्वेऽवधृते कार्यावस्थापेक्षमेवावधारणमिति निर्णीयत इति चेत्

**उच्यते** । ज्योतिष्टोमाधिकरणे तावदुपसंहार इत्येव नोपक्रमस्य तदनुरोधः । किं तर्हि ? ज्योतिष्टोमेनेति यागनामधेयस्य वाक्यशेषसमर्पणीयप्रवृत्तिनिमित्तसम्बन्धाकाङ्क्षित्वात् । तत्तु वाक्यशेषेण समर्प्यमाणं त्रिवृदादिस्तोत्रसम्बन्धलक्षणं प्रवृत्तिनिमित्तं गृहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति दर्शनात् । सोमयागस्यैवेति तत्र नामाख्यातसम्बन्धनियमात् । स एव फलवत्वात् प्रधानं, दीक्षणीयादयस्तु तदङ्गानीत्यवसीयते । अन्यथाऽनाकाङ्क्षायामपि उपक्रमस्योपसंहारानुरोधे, एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाथान्येन यजेत कर्तृपत्यमेव तदित्यत्रान्येनेति ज्योतिष्टोमव्यतिरिक्तानामेकानेकस्तोमकानां प्रत्यवमर्श इति सिद्धान्तो न स्यात् । **उपसंहारे** "यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दापयति, यः पञ्चदशस्स तं, यस्सप्तदशस्स तं, य एकविंशस्स तं" इत्येकस्तोमक्रतुसङ्कीर्तनात् । तथा च **जैमिनिना** "एकस्तोमो वा क्रतुसंयोगादि"ति **पूर्वपक्षयित्वा** "सर्वेषां वा चोदनाविशेषात् प्रशंसनार्था, स्तोमानां सर्वेषां

एकानेकस्तोमकानां अयं वादः । अथान्येनेति चोदनाविशेषात् "यो वै त्रिवृदमन्यमि"त्यादिश्रुतिस्तु स्तोमानां **प्रशंसार्था** । कथं प्रकृतिमग्निष्टोममनुष्ठायैव तद्विकृतिं गवादिकमनुतिष्ठतः ? प्रकृतौ स्वभ्यस्ता धर्मा विकृतावतिदेशिकास्सुखं प्रतिपद्यन्त – इत्यतस्त्रिवृदादयस्तोमास्तं तं क्रतुं दीपयन्ती"ति **सिद्धान्तितम्** । द्वादशाहाधिकरणे तु पुनरुपक्रमस्योपसंहारानुरोधो ऽसिद्ध एव । "द्वादशाहेन प्रजाकामं याजयेदि"ति द्वादशानामह्नां सहकर्तव्यत्वविध्यनुरोधाय पूर्वेषामेवाह्नां असमाप्यावस्थापनावध्याकाङ्क्षया प्राप्तविशेषनियमविधिलाघवेन योग्यतया च संस्थितोहीत्याद्युपसंहारमनपेक्ष्यैव "प्रागुत्तमादहानि पत्नींसंयाजांतानी"ति शक्यप्रत्ययत्वात् । असंस्थितिहेतुवन्निगदः पुनरौचित्येन प्रशंसैव केवलमिति । **एवमन्यत्रापि** यथायोगमुपसंहारबलीयस्त्वशङ्का **निराकर्तव्या** ।

. . . . . . . . . .

**ब्रह्ममीमांसायामपि** दहराकाशस्य न परमात्मत्वे तल्लिङ्गानामुत्तरत्वं प्राबल्यहेतुः । किन्तु भूयस्त्वं "तदिदमुत्तरेभ्य" इति बहुवचनेन सूचितम् । अनन्यथासिद्धिश्च । अत एव लोकगत्याकाशस्य परमात्मत्वेनैवोत्तराणि भूतोपादानत्वादीनि लिङ्गान्युपजीव्यन्ते । "अस्य लोकस्य का गतिरि"ति प्रश्नस्य प्रकृतभूलोकगतिविषयतया भूताकाशस्यैव योग्यत्वेन सन्निहितत्वेन च भूतान्तरापेक्षयैव तेषामन्यथासिद्धिसम्भवेनाप्रयोजकत्वात् । किन्त्वन्यदेव प्रक्रमाभिप्रेतमनन्तत्वं, तदिदमा"काशस्तल्लिङ्गादि"त्येकवचनेन सूचितम् । तमिममेकवचनाभिप्रायं भगवान्भाष्यकारो वर्णयाम्बभूव । अपि च "कासाम्नो गतिरिति, स्वर इति होवाचे"त्यादि सामगतिप्रश्नपरम्परया ऽ"मुष्य लोकस्य का गतिरित्ययं लोक इति, न प्रतिष्ठां लोकमतिनयेदि"ति शालावत्येनोपसंहृते "अन्तवद्वै किल ते शालावत्य सामे"त्यंतवत्वदोषेण शालावत्यस्य पक्षं निन्दित्वा ऽनन्तं किंचिद्वक्तुकामेन **जैबलिना** आकाशः परिगृहीतः । तं चाकाशमुद्गीथे सम्पाद्योपसंहरति "स एष परो वरीयानुद्गीथः, स एषो ऽनन्त" इति । तच्चानन्त्यं ब्रह्मलिङ्गमिति । "अत एव प्राणास्तथा ऽनुगमादि"त्यत्रापि "प्राणो ऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वे"त्यादौ प्राणस्य परमात्मत्वे "स एष प्राण एव प्रज्ञात्मा ऽऽनन्दो ऽजरो ऽमृत" इत्याद्युपसंहारगतब्रह्मलिङ्गानि, त्रिशीर्षाणं त्वाष्ट्रमहनमित्यादिदेवतालिङ्गैरन्यथासिद्धानि मा भूवन्निति । ततो ऽपि प्राक्"त्वमेव वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यस" इति हिततमवरप्रक्रमलिङ्गमामृतं वाक्यान्वयाधिकरणादौ चोपक्रमप्राबल्यस्यादर्तव्यता दर्शिता । यत्तूपसंहारबलीयस्त्वे कारणमुच्यते "प्राणादयो वाक्यशेषादि"ति सूत्रयतीति **तत्र वदामः** – पञ्चजनशब्दस्तावन्मनुष्ये रूढः । न च पञ्चमनुष्याधारत्वेनात्मनो गुणः कश्चिदवगम्यते । ततः पञ्चेति, पञ्चविधा इति लक्षणामाश्रित्य, निषादपञ्चमाश्चत्वारो वर्णायस्मिन्सति प्रतिष्ठिताः असंभिन्नमर्यादा भवन्तीति व्याख्येयम् । "एष सेतुर्विधरण एषां लोकानामसम्भेदाये"ति हि श्रूयते । **अथवा** लिङ्गसमवायात् प्राणभृन्न्यायेन पञ्चजनसम्बन्धाल्लक्षिता मनुष्यपञ्चमा देवा असुरारक्षांसि पिशाचा इति ।

पञ्च पञ्चजना यस्मिन्प्रतिष्ठिता — इति व्याख्येयम्। "यस्मिँल्लोका निहिता लोकिनश्चे"ति हि श्रूयते । इति प्राप्ते यदिदं पञ्चजनशब्देन तत्सम्बन्धिनः पञ्चलक्षणीयास्तर्हि प्राणादय एव वाक्यशेषगता लक्षणीयाः । उपस्थितलाघवादित्युच्यते । "प्राणादयो वाक्यशेषादि"ति सन्दिग्धे तु वाक्यशेषादिति हि जैमिनः। तत्र चोपसंहारगतत्वमतन्त्रम् । अत एव, "येषां प्राणस्य प्राणमि"यादौ, अन्नस्यान्नमिति नास्ति । तेषां केन पञ्चसंख्यापूरणमित्याकाङ्क्षायां, "तं देवा ज्योतिषां ज्योतिरि"ति प्रक्रमगतज्योतिषा तदुपगम्यते । ज्योतिषैकेषां सत्यन्न इति । एव"मसद्व्यपदे-शान्नेति चेन्न धर्मान्तरेण वाक्यशेषादि"त्यत्र, "असदेवेदमग्र आसीत् तत्सदासीत्; असद्वा इदमग्र आसीत्, तदात्मानं स्वयमकुरुते"त्यादौ वाक्यशेषादसच्छब्दार्थनिर्णये योजयितव्यः । असद्व्यपदेशा-दत्यन्तमेवासत्कार्यं कालसम्बन्धनिर्देशाद्धर्मान्तरेण वेत्युपक्रमस्य सन्दिग्धत्वात्। यथा चैतद्विषये भाष्यम् — "यद्युपक्रमे सन्दिग्धार्थं तद्वाक्यशेषेण निश्चीयत इति । तदियमत्र न्यायव्यवस्था । यत्र तावदुपक्रम एव प्रतिपक्षप्राप्तेरवधृतार्थः तत्र तदनुरोधेनोत्तरं व्यवस्थाप्यम् । यत्र तु तदर्थसन्देहः तत्र वाक्यशेषान्निर्णयः । यत्र पुनरुपक्रमश्चासन्दिग्धार्थः बहुधाऽन्यथा साधयितुमशक्यश्चोपसंहारः तदा 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन उपक्रमस्याधोप्याश्रयितव्यः । यत्र तूभयमन्यथासाधयितुं शक्यं तत्र प्रधानस्वारस्यानुरोधेन गुणत्वन्याय्यकल्पनाश्रयितव्या । प्रकृते च सदेकमेवाद्वितीयं प्रतिपाद्यम्। प्रधानमीक्षणादिकं तत्प्रतिपादनोपायो गुण इति तत्प्रक्रमस्वारस्यानुरोधेनान्याय्यकल्पनया व्यवस्थापनीयमिति । एवमुपक्रमबलेन सद्वाक्यस्य निर्विशेषपरत्वेऽपरितुष्यन् यदि कश्चिदुपसंहार-प्राबल्य एवाभिनिविशते तं प्रति तस्योपसंहारबलेनापि निर्विशेषपरत्वं दर्शयन्नाह —

त्वादात्म्यमीश ! सकलं श्रुतिरामनन्ती
तत्सत्यमित्यपि किमप्यवशेषयन्ती ।
कार्यं जगच्च तदुपाधि च हेतुरूपम्
ब्रूतेऽस्तिनास्तिपदलङ्घिपरस्वभावम् ॥ ८१ ॥

हे ईश, श्रुतिः, "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे"त्यादिका । सकलं जगत्, त्वं परमात्मैव आत्मा स्वरूपं यस्य तत् त्वदात्मा तस्य भावस्त्वादात्म्यम्। ब्राह्मणादित्वाद्भावे ष्यञ् । विधेयविशेषणमेतत् । तत्त्वेनामनन्ती, ऐतदात्म्यमिदं सर्वमिति । सामानाधिकरण्येनाभ्य-स्यन्ती । अभ्यासे हि भूयस्त्वमर्थस्य भवतीति तात्पर्यातिशयसूचनायामनन्तीत्युक्तम् । अत्रेशेति सम्बोधनेन यदि सदात्मसामानाधिकरण्यं विवक्षितं एतदिदं सर्वमित्येव ब्रूयादिति नियोगानर्हा श्रुतिः ईशवदिति सूचयति । "आम्नातस्यार्थं वक्तुं प्रभवामः, नाम्नातं पर्यनुयोक्तुमि"ति हि नीतिविद

इति । अथ कथमैतदात्म्यमिदं सर्वमिति सामानाधिकरण्यमुच्यते ? एष प्रकृतस्सदात्मा यस्य तदेतदात्मेति समासादुच्चरन् भावप्रत्ययः सदात्मसम्बन्धमाचक्षीत । यथाह **कैयटः** — "कृत्तद्धितसमासेभ्यो भावप्रत्ययेन सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यपदेशसम्बन्धेभ्य" इति । नैवं जगत्, सामानाधिकरण्यविरोधादेतदात्मकमित्येव सदात्मसम्बन्धाभिधानसिद्धौ भावप्रत्ययोपादानस्यार्थान्तरविवक्षागमकत्वाच्च । तदिह यथा गिरिरग्निमान् धूमवत्वादिति धूमादिति **गम्यते** । औपाधिकधर्माणामुपाधावेव विश्रान्तिरिति । तथैतदात्म्यमित्येष सदात्मैवगम्यत इत्युपपन्नं सदात्मसामानाधिकरण्यम् । **किन्तु** एतदिदं सर्वमित्युक्ते तदैक्षतेत्यादावीक्षणसङ्कल्पादिमतः प्रकृतत्वादेतदापरामृष्टस्य तस्य जगत्सामानाधिकरण्यं कथञ्चिद्विशिष्टाभेदवृत्त्याऽपि नेयमापद्येत । **ऐतदात्म्यमिति** जगद्भावरूपेण तदुपादाने तु तस्य विशेषान्तरनिवृत्तेरनुगतरूपान्तराभावात्तदालम्बनेन कथञ्चिद्विशिष्टाभेदप्रसङ्गात्, तद्रूपाभेदासम्भवाच्च । तत्सामानाधिकरण्यं सर्वस्य जगतः सत्तामात्रावशेषतामवगमयत् सदेवेत्याद्युपक्रमगतनिर्विशेषात्मावधारणमेवानुगृह्णीयादित्यभिप्रायः । **अथ** तत्सामानाधिकरण्यं सदात्मनो जगद्रूपत्वप्रतिपादनार्थमेव किं न स्यात् ? **न स्यात्** । बहुस्यामित्यादिनोक्तस्य तस्य पुनरुक्तिवैयर्थ्यात् **अपि च** तथात्वे तत्सत्यं स आत्मेत्यधिकवचनमनर्थकं स्यादित्यभिप्रेत्याह **तत्सत्यमित्यादि** । **अपिस्समुच्चये** । न केवलं त्वादात्म्यं जगदामनन्ति, येनोक्तशङ्कावकाशः स्यात्, अपि तु तत्सत्यमिति किमप्यवशेषयन्त्यपीति योजना । किमपीति, तदेव सदात्मतत्त्वं वाङ्मनसागोचरतया निर्विशेषमित्युपक्षिपति । अवशेषयन्ती, ऐतदात्म्यमिदं सर्वमित्यस्य सदात्मावशेषपरत्वमुपपादयन्तीत्यर्थः । एवं सति कथमेष सदात्मैवेदं सर्वं तत्सत्यं, अनृतमितरत्, अतः सर्वस्य स आत्मा, सर्पादेरिव रज्ज्वादिरिति । तद्वचनमर्थवत्स्यादित्यभिप्रायः । ऐतदात्म्यमित्यादिश्रुतिस्तादृशी सती किमित्यत आह **कार्यमित्यादि** । **कार्यमिति विशेषणं**, कारणत्वस्य तन्निरूप्यतया जगदुपाधिकत्वोपपादनार्थम् । **जगच्चेति चकारः** तदनुप्रवेशोपाधिकजीवरूपसमुच्चयार्थः । **तत्कार्यं, उपाधिः** निरूपकं **यस्य तत्तदुपाधिहेतुरिति** रूपं **हेतुरूपं** । **तदुपाधि** चेति चकारो हेतुरूपस्य स्वाभाविकत्वशङ्काव्युदासार्थः । न खलु कार्यनिरूप्यं कारणत्वं । अथ च स्वभाव इति युज्यते । परनिरूप्यरूपस्यास्वभावत्वंह्यभिहितं **पराशरेण** — "त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः । पत्न्याः पतिः पिता सूनोः कं त्वां भूप वदाम्यहमि"ति । **तदिदं कार्यं** जगदादिकं **अस्ति नास्ति पदलङ्घिपरस्वभावं** ब्रूते । कार्यादिरूपं हि स्वव्यवहारकाले अस्तिपदं, आरोपात् । तत्वावबोधकाले नास्तिपदं, बाधात् । तदुभयपदातिलङ्घी परः परमात्मैव स्वभावो यस्य तत्तथाभूतं ब्रूते ॥ अर्थगत्या प्रतिपादयति न तु जगद्रूपं न वा तद्धेतुरूपमित्यर्थः । यद्वा अस्तिपदं विधिः, नास्तिपदं निषेधः तदुभयातिलङ्घि विधिनिषेधायोग्यमापाद्येति शेषः । परस्वभावं ब्रूत इति **पूर्ववत्** । वस्तुतत्वप्रतिपत्तौ खल्वारोप्यं विधिनिषेधायोग्यं भवति । आरोपनिरूप्यनिषेधस्याप्यारोप्यतया रज्जुसर्पविसर्पणादिवत् तदेकबाधत्वात् । **हन्तैवं** शुक्तितत्वज्ञाने सति नेदं

रजतमित्यारोप्य निषेधव्यवहारो न स्यात्। **सत्यं, न स्यादेव।** किन्तु आरोप्यवृत्तिसामान्यावच्छिन्नवस्तुरजतनिषेधव्यवहार एवायमिष्यते। यदि पुनरारोप्यवृत्तिसामान्यावच्छिन्नमन्यन्नास्ति वस्तु सदारोप्यमेव च विषयतत्त्वबोधेन बाध्यते। स्वव्यवहारसमय एव भावाभावविरोधग्रहात् यथात्मतत्त्वबोधेन जगदादि, तत्र न परस्तान्निषेधव्यवहार — इति।

**एतदुक्तं भवति** — "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयमि"ति प्रक्रम्य तदुपपादनाय, "तदैक्षत, बहु स्यां प्रजायेय, अनेन जीवेनात्मनाऽनुप्रविश्ये"त्यादिना तस्यैव सदात्मनो जगज्जीवरूपभवनमभिधाय, भूयोऽभ्यासेन "ऐतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मा, तत्त्वमसि श्वेतकेतो" इत्युपसंहरति श्रुतिः। तत्र ऐतदात्म्यमिदमित्यादिना कार्यस्य जगतः सदात्मैकशेषत्वे प्रतिपादिते, तद्बाधात् तदपेक्षमात्मनो हेतुरूपं तत्तादात्म्याभिमानमयं जीवरूपं च बाधितमेवेति स्वरूपतादात्म्यमुपदिश्यते तत्त्वमसीति। तस्मादुपसंहारबलादपि सदेवेत्युपक्रमे श्रुतिसन्दर्भ - ईक्षणादिगौणत्वोपपादनेन कारणोत्तीर्णो निर्विशेष — एव परमात्मा प्रतिपत्तव्य इति ॥ ८१ ॥

**स्यादेतत्,** न तावदैतदात्म्यमिदमिति सामानाधिकरण्यं सदात्मपरिशेषपरं, अन्यथासिद्धेः। कार्यकारणाभेदस्यैव बहुस्यां प्रजायेयेत्यर्थसिद्धस्योपसंहारसम्भवात्, तत्सत्यमिति च प्रत्यभिज्ञोपक्षेपेण मृत्तिकेत्येव सत्यमित्यादिवत् तदुपपादनार्थं स्यात्। **तथा च सूत्रकारः,** "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति कारणस्यावस्थान्तरमेव हि कार्यं, यथा मृत्पिण्डाद्यवस्थाकारणं तत्प्रहाणेन घटशरावाद्यवस्थाकार्यं। तच्च मृत्तिकेत्येव प्रत्यभिज्ञानात् कारणाभिन्नमेव। **एवं ब्रह्मापि** प्रागविभक्तनामरूपैकावस्थं कारणं तत्प्रहाणेन विभक्तनामरूपबहुत्वावस्थं कार्यमिति। अन्यथा कार्यरूपपरिशेषपरमेव किं न स्यात्। **ततश्च** तदनुरोधेन सदेव सोम्येदमग्र — आसीदिति कारणात्मावधारणपरमेव युक्तं, न तु निर्विशेषात्मावधारणपरमित्याशङ्कां निरस्यन्नाह — **"नाभेदमित्यादि।** तत्र किं विश्वात्मनोः कार्यकारणभूतयोः तद्रूपाभेद एव, उत भेदाभेदः, अथवा विशिष्टाभेदः इति विकल्प्याद्यं निराकुर्वन्नाह —

**नाभेदमेव जडचेतनयोर्निगन्तु-**
**मीशीमहीश ! युवयोरकृतैकशेषम् ।**
**ब्रह्मैव सर्वमिति सर्वजडापवादं**
**वेदोऽवशेषयति तत्रभवन्तमेव** ॥ ८२ ॥

**अत्र हे ईश, युवयोर्जडचेतनयोरिति** सम्बन्धकरणात्, ऐतदात्म्यमिदं सर्वमित्यत्र एतच्छब्देन तदैक्षत बहु स्यामिति प्रकृतनिमित्ताभिन्नोपादानस्य प्रत्यवमर्शनीयतां दर्शयति।

चेतनशब्दोपादानं च ज्ञानकामादिमत्तया कारणरूपोपस्थापनाय सर्वनाम्नामुत्सर्गतो यथा प्रकृतावमर्शित्वात्। "त्रिवृदग्निष्टुदग्निष्टोम" इति प्रकृत्यै "तस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते"ति, अत्र तु पशुफलस्य रेवतीवारवन्तीयसम्बन्धविधियांगित्वे प्रकृतस्य रेवत्यभा"वाद्रेवत्यो भवन्ति तासु च वारवन्तीयमि"त्यादिवाक्यभेददोषात्। पशुफलाय तद्विशिष्टापूर्वकर्मविधिः, एतेन यजेतेति न प्रकृतावमर्श इति भेदलक्षणे स्थितम्। "समेषु कर्मयुक्तं स्यादि"ति समेष्वेवंजातीयकेषु भिन्नवाक्येषु कर्मयुक्तं फलं स्यात् न गुणयुक्तमित्यर्थ। न चैवमिह प्रकृतरूपावमर्शे किञ्चिद्बाधकमस्ति। युक्तं च कारणाभेदे कार्यस्य विवक्षिते तद्रूपस्यावमर्शनीयत्वमिति। **तेन च** तद्रूपाभेदविरोधस्सूच्यते। अथाभेदविधिविरोधादेव कारणरूपहानेन सत्तामात्रं प्रत्यवमृश्येत न कार्यस्य कारणाभेदविधिस्स्यादित्यभिप्रायः। **तयोरभेदमेव,** न त्वन्यतरबाधपरिशेषमित्येवकारार्थः। तद्रूपाभेदमेव **निगन्तुं,** ऐतदात्म्यमिदमित्यत्रोपसंहर्तुं **नेशीमहि** न शक्नुयाम, तत्स्वभावभेदविरोधात्। अत्यन्ताभेदे कार्यकारणभावविरोधाच्च। **अथ तर्हि** सामानाधिकरण्यविरोध इत्यत आह – **अकृतैकशेषमिति।** अकृतः अनिरूपितः पदार्थयोरेकः शेषः यस्मिन्तमभेदमित्यन्वयः। चोरस्थाणुरित्यादाविवान्यतरपदार्थबाधेनान्यतरपरिशेषेप्यारोपापादितरूपभेदविरोधिस्वरूपमभेद – इति कृत्वाकृतैकशेषाभेदविषयं सामानाधिकरण्यमुपपन्नमित्यभिप्रायः। कस्य बाधः कस्य परिशेष इति कात्र विनिगमनेत्यत आह **ब्रह्मैव सर्वमित्यादिः। वेदः** सर्वजडापवादं, **सर्वं जडमपोह्य,** अभावस्याप्यपरिशेषाय सर्वशब्दः। **तत्रभवन्तमेव, तत्रभवच्छब्दः** पूज्यवाची। सर्वसत्ताप्रदतया च पूज्यता। अथवा, **तत्रेति** तयोः पदार्थयोरिति निर्धारणे सप्तमी। **भवन्तं** परमात्मानमेव। **अवशेषयति,** न तु सर्वं सर्वनिरूपितं कारणं वेत्येवकारार्थः। जगत्सत्ताप्रदतया तदुपादानभूतस्य ब्रह्मणोऽपवादे जगदेव न स्यात्, सर्पबाध इव तदुत्कम्पनादि **इत्यभिप्रायः।**

**अयं भावः** – परिणामपक्षे यत्तावदवस्थान्तरविशिष्टं कारणं तदेवावस्थान्तरविशिष्टं कार्यमुपेयते। तथा चोदाहृतं प्रागेव। **न च** तथारूपयोरेव तयोरभेदस्संभवति, कार्यकारणसाङ्कर्यप्रसङ्गात्। अथ कार्यानुगतरूपमेव कारणं, न त्ववस्थान्तरविशिष्टम्। तदुपमर्दनावस्थान्तरापत्तावाकस्मिककार्यवादापत्तेरिति **चेन्न,** कारणस्य कार्यव्यावृत्तरूपभेदाभावे कार्यकारणविवेकानुपपत्तेः। एकस्यानुवृत्तव्यावृत्तत्वविरोधेन वा तदत्यन्ताभेदानुपपत्तेश्च। एवं सति यदुक्तं मृत्तिकेत्येव सत्यमित्यादिवक्तृत्समिति कार्याभेदोपपादनाय प्रमाणसिद्धत्वाभिप्रायमिति। तदनुपपन्नम्। अपि च तत्सत्यमितीतरानृतांपक्षेपेण सदात्म्यसत्यत्वप्रतिपादनं हि प्रत्यक्षम्। मृत्तिकेत्येव सत्यमित्यपि घटशरावादेः मृत्तिकाभेदः प्रमाणसिद्ध – इति नेयार्थत्वापादनं न शब्दगतिविदामनुरूपम्। तदन्यत्वन्यायश्च न कार्यकारणरूपाभेदं **साधयितुमलमित्यग्रे वक्ष्यामः।** तस्मादैतदात्म्यमिदं

सर्वमिति न कार्यकारणाभेदविवक्षायुक्ता, किं तर्हि कार्यबाधेन कारणस्वरूपपरिशेषविवक्षैवेति निर्विशेषात्मावधारणोपक्रमानुग्रह एवानेनेति ॥ ८२ ॥

**स्यादेतत्**, माभूदत्यन्ताभेदविवक्षाकार्यकारणयोः। ऐतदात्म्यमिदमिति भेदाभेदविवक्षा स्यात्। केनचिदनेकान्तवादिना खलु विवसनसमयविनीतेन कार्यकारणादिषु भेदाभेदावभ्युपगम्येते। अथ कथमिदं भवति न भवति चेति विरुद्धमुपगम्यते? रूपभेदादित्याह। कार्यरूपेण नानात्वमभेदः कारणात्मना हेमात्मना यथाऽभेदः। कुण्डलाद्यात्मना भिदेति। किं पुनरत्र मानम्? मृद्घटः, हेमकुण्डलमित्यादिसामानाधिकरण्यप्रत्ययः। अभेदमात्रे तस्मिन्नेव तद्द्विरूपप्रत्ययानुपपत्तेः। भेदमात्रे च नीलपीतयोरिव सामानाधिकरण्यप्रत्ययानुपपत्तेः। एवमुभयाबाधेन सामानाधिकरण्यसम्भवे नान्यतरबाधकल्पना युक्तेति भेदाभेदपक्षं निराकुर्वन्नाह –

आत्यन्तिकीं जनिमतामभिदां भिदां च
निर्बध्य निश्चनुमहे न महेश हेतोः।
कार्योपमर्दमिह कारणशेषता च
निर्युक्तिका तदसि केवलवस्तुशेषः ॥ ८३ ॥

**जनिमतां**, कार्याणां हेतोः, कारणस्य च **भिदामभिदां** चेति समुच्चये चः **निर्बध्य**, प्रसह्य **न निश्चिनुमहे**, न निश्चेतुं प्रभवाम इत्यर्थः। भेदाभेदसहभावस्याप्रामाणिकत्वसूचनाय निर्बध्येत्युक्तम्। कुत एवमित्यत्र हेतुगर्भं विशेषणं, **आत्यन्तिकीमिति**। यस्मादभिदाऽऽत्यन्तिकी नियता भेदा सहभूतैव, यथा गोर्गोरेव भिदाऽऽत्यन्तिकी अभेदा सहभूतैव, यथा गोरश्वादेः तस्मादित्यर्थः। शीतोष्णतमःप्रकाशवदत्यन्तविरुद्धयोर्भेदाभेदयोरेकत्रासम्भवात्। न सामान्याधिकरण्यप्रत्ययस्य तद्विषयत्वमुपपद्यत इत्यभिप्रायः। अत्र **महेशेति** सम्बोधनेन भेदाभेदयोरीश्वराऽपि नाविरोधाय कल्पत इति सूचयति। **तथाहि** — यदि तावद्भेदाभेदयोरविरोधः तर्हि भिन्नयोरपि शुक्तिरजतयोरिदं रजतमित्यभेदज्ञानस्य, अभिन्नोऽपि मैवं तस्मादयमन्य इति ज्ञानस्य च वस्तुविषयत्वेनाभ्रमत्वात्, नेदं रजतं, सोऽयमिति भेदाभेदज्ञानबाध्यत्वं न स्यात्। रजतस्येदमात्मना भेदात्तद्भेदज्ञानं भ्रम इति **चेन्न**, न हि शुक्ती रजतमित्यभेदप्रतिभासः। **किं तर्हि? इदं रजतमित्येव**। स च वस्तुविषयत्वादभ्रम इति युक्तम्। अथ तत्रासदनर्थक्रियासमर्थविषयत्वाद्भ्रम इति चेन्न नन्विदमात्मना तदेव तत्र तदर्थक्रियासमर्थं च, तदभेदात् रजतात्मना नेति चेत्तर्हि रजतस्य तत्र सत्वाद्यव्यवस्थितेः। इदं रजतमिति ज्ञानस्य भ्रमत्वाभ्रमत्वाव्यवस्थापन्नेति, नेदं रजतमिति बाधोऽपि न **व्यवतिष्ठेत**। अतो भ्रमबाधव्यवस्थया भेदाभेदविरोधावश्यम्भावान्न सामानाधिकरण्यप्रत्ययस्तद्विषय

इति युक्तम् । अपि च मृद्घट इति भेदाभेदावुपगच्छता कस्य कस्मादिति विवेक्तव्यम् । इदमिदं, न इदमिदमेव न नेदमिति तयोस्सप्रतियोगिकत्वावगमात् । यदि घटस्य मृदः, मृदश्च घटादित्युच्येत, सोऽयमिदमिदं भवति न भवति चेति व्याघातः । घटस्य मृदोऽभेदः, मृदस्तु घटाद्भेद इति चेत्तर्हि न क्वचिदपि भेदाभेदसहभावः । अपि च घटस्य मृदोऽत्यन्ताभेदे मृद्घट इति द्विरूपावभासविरोधः । न खलु घटो घट इति द्विरूपावभासः । किं कारणं? अत्यन्ताभेदात् । एवं मृद्घट इति न स्यात् । मृदित्येव घट इत्येव वा स्यात् । अथ मृदात्मना अभेदः, घटात्मना भेदः इति चेत् कस्य पुनः? न खलु मृद्घटाभ्यां अन्यदस्त्युभयात्मकं किञ्चित् । अथ मृद-एवेत्युच्येत मृदो घटश्चेदमात्मा तदात्मना भेदानुपपत्तिः । अथ मृदित्येकत्वमेव मृदोऽभेदः, तस्या एव घटशरावोदञ्चनमिति नानात्वं भेदः इति चेत्तर्हि सामानाधिकरण्यप्रत्ययो भेदाभेदविषय इति तावदेवोक्तं स्यात् यावत् मृद्घटविषय इति । ततश्च मृद्घटरूपत्वायाभेदविषयत्वानुभवविरोधः । अपि चानेकान्तवादी ब्रूते — नह्यभिन्नं भिन्नमेव वा केनचिद्दर्शयितुं शक्यते । सत्ताद्रव्यत्वज्ञेयत्वादिसामान्यात्मना सर्वमभिन्नं व्यक्त्यात्मना च परस्परवैलक्षण्याद्भिन्नमिति । यथाह – "एकरूपं प्रतीतत्वाद्द्विरूपं तत्तथेष्यताम् । एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥" इति । तत्र किं तत्तथा भिन्नमभिन्नं चेति स व्याचष्टाम् । न खलु सामान्यव्यक्तिभ्यामन्यदुभयात्मकं किञ्चिदस्ति वस्तु । न च मृदिव घटशरावादिरूपेण सत्तासामान्यमेव, व्यक्तिरूपेण परिणमते, येन तदेव स्वात्मना एकमभिन्नं व्यक्त्यात्मना नानाभिन्नं चेत्युच्येत । तस्मात्सामान्यमभिन्नमेव । व्यक्तयस्तु भिन्ना एवेति न किञ्चिदपिभिन्नाभिन्नं दर्शयितुं शक्यम् । अथ सामान्यस्य व्यक्तीनां च सहोपलम्भनियमादभेदोऽपीति चेत् जातिगुणादेरपि शुक्लो गौरिति सहोपलम्भनियमादभेदः स्यात्, न चेष्टापत्तिः । कार्यकारणे, जातिव्यक्ती, गुणगुणिनौ, विशिष्टस्वरूपे इत्येष्वेव भेदाभेदावित्यभ्युपगमविरोधात् । अपि च सहोपलम्भो द्वयोः भवतीति भेदस्य हेतुः । तन्नियमस्तु भेदनियमस्यैव हेतुः स्यात्, कुतोऽभेदः? । अपि चैवं भेदाभेदाभ्यां सर्वसाङ्कर्यमिच्छतः सर्वत्रेष्टानिष्टव्यवस्थापत्या प्रवृत्तिनिवृत्तिव्यवहारव्याकुली स्यादिति दिक् । तस्मात् "मानाभावाद्विरोधाच्च भ्रमबाधव्यवस्थितेः । व्यवहारव्यवस्थानां नानेकान्ते भिदाभिदे ॥" स चायमनेकान्तप्रलापः । "स्यादस्ति, स्यान्नास्तीत्या"दिसप्तभङ्गीनयं निरस्यता भगवता सूत्रकृता चिकित्सितः । "सत्वासत्वादय एकत्वानेकत्वादयो वाऽनैकान्ता नैकस्मिन्नसंभवात्" इति । अथ "उभयव्यपदेशात्त्वहिकुण्डलवदि"ति भेदाभेदौ सूत्रितौ । "ततस्तु तं पश्यते निष्कलं ध्यायमानायात्मानमन्तरो यमयती"त्यादौ ध्यातृध्येयत्वादिना भेदस्य, "तत्त्वमसि, एष त आत्मान्तर्याम्यमृतः" इत्यादावभेदस्य च व्यपदेशात् जीवब्रह्मणोर्ब्रह्मेत्यभेदः, जीव इति भेदश्च । यथाऽहिरित्यभेदः, कुण्डलमाभोगः प्रांशुरिति भेदः, तथेत्यत्र वक्तव्यं उत्तरत्र वक्ष्यामः ।

यत्तु सामानाधिकरण्यप्रत्ययो भेदाभेदसाधक इति, तन्न, इदमिदं, नेदमिदमिति तत्रानवभासात्। अथ घटस्य घटात्मना शरावादेर्यत्स्वभाववैलक्षण्यं, यच्च घटशरावादौ मृदः स्वभाववैलक्षण्यं सोऽभेदः, तदुभयं मृद्घट इत्यवभासत इति चेदस्तु तावदेव मृद्घटयोर्भेदाभेदे किमायातम्?। प्रत्युत मृदियं, न घटः घटोऽयं न मृदित्यवगमनीयमन्योन्यवैलक्षण्यमेव मृदिति घट इति चावभासत इति कुतो भेदाभेदशङ्का?। अथाऽभेदमात्रे भेदमात्रे वा सामानाधिकरण्यप्रत्ययो नोपपद्यत इत्यन्यथाऽनुपपत्त्या भेदाभेदसिद्धिरिति चेत्, अथ सत्वासत्वादिवदेकस्य तत्वान्यत्वे नोपपद्येते। इत्यन्यथानुपपत्त्या भेदाभेदशून्यविषयस्स किं न स्यात्। अथ घटस्य मृद्बुद्ध्यालम्बनत्वान्मृदभेद इति चेत्तर्हि मृदोऽपि घटबुद्ध्यालम्बनत्वात्तदभेद इत्यतः सामानाधिकरण्यप्रत्ययोऽभेदालम्बन एव। तत्र रूपभेदप्रतिभासश्च प्रागेव मृदिति घट इति च व्यस्तरूपविशेषप्रतिभासः प्रयोज्यः तदपेक्षयैव च परस्परविशेषणेन सामानाधिकरण्यव्यवहारः। तत्र यथा "कं ब्रह्म खं ब्रह्मे"त्यत्र कं खमिति परस्परविशेषणेन विषयसुखाकाशव्यावृत्तवस्तुमात्रमवभासते, तथा मृद्घट इति सामान्याधिकरण्येऽपि। यद्यपि मृदित्येव वा घट इत्येव वा तदेव वस्तुमात्राभेदरूपमवभासते, तथाप्यभिज्ञाद्वयेऽवभासिताभेद एव प्रत्यभिज्ञायामिव सामानाधिकरण्ये तदेव भेदभ्रमविरोधिरूपमवभासते। तत्र यदि व्यक्तय एव सामान्यापादिताऽतिप्रसङ्गादन्येन विशेष्यन्ते। यथा नीलमुत्पलं, रक्तमुत्पलमिति। तत्र व्यक्तिस्वरूपमात्रावसायी सामानाधिकरण्यप्रत्ययो भवति। न तु तस्मिन्नेव विशेषणनिषेधमप्यवगमयति। यदि पुनरसामान्यविशेषस्वभावं विशेषान्तरसम्बन्धापादितातिप्रसङ्गं विशेष्यते। यथा नीलं गगनं रक्तं गगनमिति। तत्र सामानाधिकरण्यप्रत्ययो भिन्नविशेषोपाधिकभेदव्यावृत्त्या तस्मिन्नेव विशेषणनिषेधमप्यवगमयन् अनीलारक्तस्वभावगगनवस्तुमात्रपर्यवसायी भवति। तत्र गगनत्वसामान्यरूपस्यापि विशेषापादितभेदोपाधिकत्वात्। एवं च स्थाणुचोरन्यायेन, ऐतदात्म्यमिदं सर्वमिति वियदादिविश्वभेदेन विशेष्यमाणं ब्रह्मात्मतत्त्वमशेषविशेषनिषेधेन वस्तुस्वरूपमात्रमवगमयति न भिन्नाभिन्नमिति युक्तमुत्पश्यामः। अथापि स्यात्, एवं कार्योपमर्देऽपि कारणरूपपरिशेष एव स्यात् प्रतिसञ्चरवत्, न निर्विशेषवस्तुपरिशेष इति यदुच्यते तत्राह — कार्योपमर्दमित्यादि। 'द्वितीयायां चेति णमुल् प्रत्ययः'। इहेति, ऐतदात्म्यमिदं सर्वमिति वाक्यमवमृश्यते। तत्र कार्यमुपमर्द्येति, प्रमाणतः कार्योपमर्द — उक्तो भवति। तेन प्रतिसञ्चरे क्रियया कार्योपमर्द इति स्यात्। कारणरूपपरिशेषः प्रमाणज्ञानेन, पुनस्तदुपमर्दे कारणशेषता निर्युक्तिका। उपपत्तिशून्येत्युपष्टब्धं भवति। प्रत्युत शुक्तिरिदं रजतं, रज्जुरेष सर्पः इत्यादौ रजताद्युपमर्दे तन्निरूपितस्पृहणीयत्वभीषणत्वादेरिव कार्यनिरूपितसम्बन्धरूपस्य कारणत्वस्याप्युपमर्दो युक्त इति विपरीतोपपत्तिरेवास्तीति चकारः। यस्मादेवं कार्यकारणरूपभेदाभेदानुपपत्त्या सामानाधिकरण्येन कार्योपमर्दे कारणशेषता न युक्ता। तत्, तस्मात् केवलवस्तुशेषः, कार्यनिरूपणीयकारणत्वतद्घटकसर्वज्ञत्वादिनिश्शेषविशेषशून्यसत्तामात्रशेषोऽसि। अत्र वस्तुशेषोऽसीति

सत्त्वापदेशेनाभेदायोग्यसामानाधिकरण्ये विनिगमनाविरहादुभयोपमर्दे शून्यशेषताशङ्कां वारयति — "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयमि"ति परपक्षमुपन्यस्य "कुतस्तु खलु सोम्यैवं स्यात्, कथमसतस्सज्जायेते"त्याक्षिप्य, "सत्त्वेव सोम्येदमग्र आसीदि"ति सत्त्वव्यवस्थापनेन परमात्मनः प्रक्रमात् तदुपसंहारे न शून्यपरिशेषशङ्कावकाश इत्यभिप्रायः ॥ ८३ ॥

**अथापि स्यात्**, यद्यपि कार्यकारणयोरत्यन्ताभेदो भेदाभेदो वा नैतदात्म्यमिदं सर्वमित्यादि सामानाधिकरण्यालम्बनं, तथापि यथा शुक्लः पटः नीलमुत्पलमित्यादौ शुक्लत्वपटत्वादिविशिष्टाभेदः तथा कार्यत्वकारणत्वविशिष्टाभेद इह स्यात्। प्रलीननामरूपाविभागसूक्ष्मचिदचिद्विशिष्टावस्थं ब्रह्मकारणं। तदेव प्रभूतनामरूपविभागस्थूलचिदचिद्विशिष्टावस्थं कार्यमित्युपगम्यते। यत्तु एतदिदं सर्वमित्यनुक्त्वा ऐतदात्म्यमिदमिति भावप्रत्ययोपादानमविशिष्टस्वरूपविवक्षां गमयतीति, **तन्न**, सर्वं ब्रह्मेत्यादितुल्ययोगितया पदप्रवृत्तिनिमित्तापेक्षतया च विशिष्टवृत्त्यवश्यंभावात्, "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थवृत्तिस्सामानाधिकरण्यं" इति हि **पातञ्जलदर्शनम्**। अत एवान्यतरपदार्थाभावेऽपि सामानाधिकरण्यानुपपत्तिः। अथ कारणात्कार्यस्य भेदोऽवश्यं वाच्यः। अन्यथा कार्यकारणभावविरोधात्। तत्र कथं कार्यत्वविशिष्टाभेदः कारणत्वविशिष्टस्येति। **उच्यते**। कार्यकारणयोरश्वमहिषादेरिव नानन्तर्गतः पृथक्सिद्धिप्रयोजको भेदः। किन्त्वन्तर्गतः। ततश्च शुक्लपटयोरिव प्रकारप्रकारिभावे कार्यकारणयोस्तद्रूपविशिष्टाभेदालम्बनं सामानाधिकरण्यमित्युपपन्नम्। अतो विशिष्टार्थतैवोपसंहारस्येति न सदेवेत्युपक्रमो निर्विशेषविषयस्स्यादितीमां शङ्कां परिहरन्नाह —

अन्तर्गतामपि भिदां जगतस्तवाऽपि
मन्येत शुक्लपटयोरिव कः कथं वा।
आत्मैव सर्वमिदमित्यवधारयन्तीं
शृण्वन्नपि श्रुतिगिरं गिरिश! प्रजानन् ॥ ८४ ॥

**हे गिरिश, तवापि** सम्बन्धिनीं **अन्तर्गतामपि जगतो भिदां** इत्यन्वयः। अत्र तवापीत्यपिशब्दो गर्हायाम्। तदुपपादनाय गिरिशेति सम्बोधनम्। गिरि, वेदनान्तलक्षणायां शीयते, नेति नेत्यादिनिश्शेषविशेषनिषेधेन विशिष्टत्वमात्मनः शातयति कैवल्यायेति गिरिशः। 'अन्येभ्योऽपि दृश्यत' — इति शदेर्डप्रत्ययः। 'हलदन्तात्सप्तम्यास्संज्ञायां' इत्यलुक्। साक्षादशेषविशेषनिषेधे सति परमात्मनो जगद्वैशिष्ट्याभ्युपगमो गर्हित इत्यभिप्रायः। अन्तर्गतामपीत्यपिशब्देन च यथाऽभेदसहभूता भिदा प्रमाणशून्या तथा अन्तर्गता भिदाऽपि इति समुच्चीयते। तत्रापि तावन्न

सामानाधिकरण्यप्रत्ययो मानम् । तत्रान्तर्गतो भेद इत्यनवभासात् । अश्वमहिषादिवदनन्तर्गतभेदे सामानाधिकरण्यप्रत्ययानुपपत्त्याऽर्थापत्तिरिति चेन्न, रूपद्वयानुगतस्वरूपाभेदविषयत्वोपपत्तेः । **न हि** गवाश्वादिवत् शुक्लत्वपटत्वकार्यकारणत्वविशिष्टस्वरूपाभेदो नास्ति । तेन सामानाधिकरण्यव्यवहारोऽपि पदप्रवृत्तिनिमित्तरूपभेदावधीरणया स्वरूपाभेदविषय एव । **न विशिष्टाभेदविषयः** । भिन्नप्रवृत्तिनिमित्तानां शब्दानामिति ह्युक्तम् । वाक्यार्थप्रतिपादनाय पदार्थप्रतिपादनं शब्दानां प्रवृत्तिः । तत्र निमित्तानि पृथगुपस्थितानि जातिगुणक्रियादीनि, न तु प्रतिपादनीयवाक्यार्थानुप्रविष्टानीत्यर्थः । **अन्यथा,** भिन्नार्थानां शब्दानामेकार्थवृत्तिस्सामान्याधिकरण्यमित्येवाऽवक्ष्यत् । ततश्च यथा यथा पृथगुपस्थितरूपभेदानपेक्षया पदार्थस्वरूपाभेद एव समानविभक्तिपदसमभिव्याहारेण प्रतिपाद्य इति **पातञ्जलदर्शनादेवावगम्यते** । **अन्यथा** विशिष्टनामभिन्नत्वेन पदानामेकार्थवृत्त्यनुपपत्तेश्च । अत एव "आयुर्यज्ञेन कल्पतां", "प्राणो यज्ञेन कल्पताम्" इत्यादिषु कॢप्तिस्वरूपाभेदेऽपि आयुःकॢप्तिः, प्राणकॢप्तिः इत्यर्थभेदमाश्रित्य, "समेषु वाक्यभेदस्स्यात्" इति **सूत्रितं जैमिनिना** । तथा च लिङ्गं कॢप्तिर्वाचयतीति शब्दान्तरादिभिश्च विशेषणोपाधिको विशिष्टभेदः स्थित एव यथाचैवं स्वरूपाभेद एव सामानाधिकरण्यार्थः **न विशिष्टाभेदः,** तथा **सिद्धान्तसिद्धाञ्जनेप्रपञ्चितमस्माभिः** । तस्मात्सामानाधिकरण्यप्रत्ययाद्यन्यथासिद्धेरर्थापत्तिपरीक्षयाऽन्तर्गतो भेद इति व्यामोह इत्यभिप्रायः ।

**शुक्लपटयोरिवान्तर्गता** भिदेति पराभ्युपगतानुवादकोटिरेव । सिद्धान्ते शुक्लपटयोरप्यन्तर्गतभेदानुपगमात् । तादृशीं भिदां को मन्येत, बुद्ध्येत ? न कोऽपि । यदि श्रुतिगतिवित्प्राज्ञः । अतादृशस्तु विद्वस्यमानो भ्राम्येदित्यभिप्रायः **कथमित्युपपत्त्याऽऽक्षेपः । वेति** वितर्के । विमृशन्नपि नोपपत्तिं पश्यामीत्यभिप्रायः । **तथाहि** — अन्तर्गतेत्यपृथक्सिद्धिप्रयोजिकेत्युच्यते । अपृथगिति किमर्थविशेषणमुत सिद्धिविशेषणम् ? । आद्येऽपि किमपृथक्त्वं पृथक्त्वाभावः उताभेदः ? । आद्ये तावन्मात्रे वस्तुनि शुक्लः पट इति रूपभेदप्रत्ययानुपपत्तिः । द्वितीयेऽभेदस्य वस्तुसत्वे स एवायं भेदाभेदवाद इति **घट्टकुड्यां प्रभातम्** । न च शुक्लपटयोरभेदेन सिद्धिप्रयोजको भेदः, विरोधित्वात् । अथापृथक्त्वं सिद्धिविशेषणमित्युच्येत सा यदि बुद्धिः, एकबुद्धिप्रयोजकत्वं तदविरोधित्वं गोघटादिसाधारणं, न शुक्लपटादिभेदं विशेष्टुमीष्टे । अथ सत्ता न सत्त्वैक्यप्रयोजको भेदः, व्यभिचारात् । भावैक्यस्य स्वरूपाभेदस्य स्वाभाविकत्वाच्च । अथ पृथक्सत्वाप्रयोजको भेद इत्युच्येत, यदि सत्ता सर्वानुगतो भावः तस्य न गवाश्वादावपि पृथक्त्वमस्तीत्यतिप्रसङ्गः । अथ देशकालादिसम्बन्धित्वमर्थक्रियाकारित्वं वा तस्य वस्तुभेदे सति पृथक्त्वमेवेति भेदस्य तदप्रयोजकत्वानुपपत्तिः । अथापृथक्सिद्धिरन्यतरस्यान्यतरसम्बन्धनियतसत्त्वं तत्प्रयोजकत्वं, भेदस्यान्तर्गतत्वमुच्येत, तदपि न इन्धनदहनादेरपि भेदस्य तथाभावे **तत्सामान्याधिकरण्यप्रसङ्गादिति दिक्** ।

अतः परस्यान्तर्गता भिदेति रिक्तं वचः। तस्माद्यदि पृथग्वसत्वाप्रयोजकत्वं भेदस्य वाच्यम्, तर्हि स मृषैवेत्यवस्थेयम्। तस्मात्कार्यरूपभेदबाधेन कारणोपलक्षितस्वरूपभेद एव ऐतदात्म्यमिदं सर्वमित्यादिसामान्याधिकरण्यार्थं इत्यकामेनापि स्वीकरणीयमिति। अमुमेवार्थं प्रमाणमुखेनोपदर्शयन्न केवलमन्तर्गतो भेदो मानोपपत्तिशून्यः प्रमाणबाधितश्चेत्यभिप्रायेणाह — **आत्मैव सर्वमिदमित्यादि।** "आत्मैवेदं सर्वमि"ति श्रुतिश्छन्दोऽनुरोधात् पदव्यत्ययेन पठिता। अत्रेतिशब्दः प्रभृत्यर्थे। "ब्रह्मैवेदं विश्वं, पुरुष एवेदं विश्वमि"त्यादेरुपसंग्रहः। आत्मैवेदमित्याद्यामवधारयन्तीं शुक्तिरेवेदं रजतमित्यादिरिव रजतादिबाधेन शुक्त्यादिपरिशेषमिवात्मैवेदमिति जगद्रूपभेदबाधेनात्ममात्रपरिशेषमवबोधयन्तीम्। **अन्यथा** जगद्रूपं **नात्मापीत्यवधारणविरोधात्। श्रुतिगिरमित्यपौरुषेयतया** अत्र शब्दस्वरसलभ्य **एवार्थो** ग्राह्यः। न तु पुंवाक्य इव स्वच्छन्देन विवक्षितार्थोपक्षेप इति दर्शयति। तेन कारणात्मनोऽवस्थान्तरमेव कार्यं जगदिति तदनुगत्या स एवेदं सर्वमित्यादिवाचोयुक्तिरित्यनादरणीयम्। आत्मैव नान्यदिति तन्मात्रशेषपर्यवसानस्वारस्यहानप्रसङ्गादित्यभिप्रायः। **शृण्वन्नपि** को मन्येतेत्यन्वयः। किं पुनः **प्रजानन्।** उपपत्यापि प्रकर्षेण निश्चिन्वन्निति किं पुनर्न्यायसूचनाय अपिशब्दोपादानम्। व्युत्पन्नमात्रोप्यात्मैवेदमित्यादि शृण्वन्नेवान्यनिषेधेनात्मपरिशेषमवधारयति। **तत्रैवं सति** को नाम परीक्षकः प्राज्ञोऽन्तर्गतभेदमुपक्षिप्योक्तोपपत्तिविरुद्धं "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं "इत्यादिश्रौतोपपत्तिविरुद्धं च विशिष्टाभेदं प्रतिपद्येतेत्यभिप्रायः। यत्तु पदार्थबाधे सामानाधिकरण्यानुपपत्तिरिति तन्न, पदवृत्तिदशायां तदबाधात्। समानविभक्तिपदसमभिव्याहारेण तु प्रतिपाद्यमाने वाक्यार्थे नान्तरीयकबाधनीयबाधेन तन्मात्रप्रतिपत्तेरिष्टत्वात्। तदिदमेव बाधायां सामानाधिकरण्यमिति गीयते। न तु बाध एव सामानाधिकरण्यार्थः। येन व्यतिरेकलक्षणदोषः स्यादित्यन्यत्र प्रतिपादितमिति ॥ ८४ ॥

**स्यादेतत्,** यद्येवमैतदात्म्यमिदं सर्वमित्यादिसामानाधिकरण्यमविशिष्टाभेदपरमेव, तर्हि "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते"त्यादावपि तथाभावे "स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारुप" इत्यादितद्विषयविशिष्टोपासनाविधिविरोधः, विषयबाधात्। स मा भूदिति। तत्र विशिष्टाऽभेदपरत्वाभ्युपगमेनापराधोऽन्यत्रापीत्यात्मैवेदमित्याद्यवधारणमपि तदनुरोधेनैव व्याख्येयमित्याशङ्कामुद्देश्यविधेयगतिभेदोपपत्त्या परिहरन्नाह —

त्वामुद्दिशन्नुपदिशेदपि सर्वभाव-
मीशोपधौ भवदुपासनचोदनांशः।
उद्दिश्य सर्वमवधारणया भवन्त-
मीशाऽऽदिशन् जगदपोञ्छति वेदमौलिः ॥ ८५ ॥

यद्यपि तावत्सर्वत्रैव समानविभक्तिकपदसमभिव्याहारे स्वरूपाभेद एव प्रतिपाद्यः, तथापि हे ईशेति प्रकृतानुगुणं सम्बोधनम्। ईशोपधा, ईश – इत्युपाधिरालम्बनं, तस्मिन्विषये। न खलु विकारगुणविशेषानाश्रया केवलात्मविषया उपासनचोदनाऽस्ति। न चेशादन्यत्र विकारगुणविशेषसम्बन्ध इत्यत – उक्तं ईशोपधाविति। भवदुपासनचोदनांशः, भवतः परमात्मन उपासनचोदनायाः "स क्रतुं कुर्वीत मनोमय" इत्यादेः भवन्त्या उपासनचोदनाया इति वा। "सापेक्षत्वेऽपि गमकत्वात्समासः"। अंशः, "सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीते"ति, तदङ्गशमविधायितया तदंश इव। अङ्गप्रधानवाक्ययोः वाक्यैकवाक्यतया तदङ्गविधिवाक्यस्य तदवयवत्वोपचारात् स चायम्। त्वामुद्दिशन्, सर्वभावं तवैव विश्वरूपत्वं उपदिशेदपीति सम्भावनायाम्। "सर्वं खल्विदं ब्रह्मे"त्यादिर्हि "स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप" इत्याद्युपासनाङ्गशमविधिपरः, न तु ब्रह्मतत्वप्रतिपत्तिपरः। ततश्च तेन स्वरूपाभेद एव प्रतिपाद्यमाने बाधकाभावेन पदवृत्त्युपनीतविशेषणान्वयानुगमेन विशिष्टाभेदप्रतिपत्तिरापद्यते। चक्षुषा महोत्पले बोध्यमाने तद्वृत्तिभेदेन वा घ्राणादिवृत्त्या वा प्रत्युपस्थितसौन्दर्यसौगन्ध्याद्यन्वयानुगमेन तद्विशिष्टाभेदप्रतीतिवत्, न त्वाहत्यैव वाक्येन विशिष्टाभेदः प्रतिपाद्यते, विशिष्टभेदेन विरोधादेव।

नन्वेवं "यजमानः प्रस्तरः", "सिंहो माणवक" इत्यादिष्वपि विशिष्टाभेदस्याबोधनीयत्वेन सत्तामात्राभेदबोधने विरोधाभावान्न गुणवादकल्पना स्यात्। न। "उत्तरं बर्हिषः प्रस्तरं सादयती"ति विधेर्माणवकस्य वा प्रशंसार्थोऽयं वादः। न च सा सत्तामात्राभेदबोधनेऽवकल्पते। बाधकाभावे च पदवृत्त्युपनीतं विशिष्टाभेदप्रतीतिपर्यवसानमिष्यते। इत्यतो गौण्या वृत्त्या यजमानादिपदोपनीतयज्ञनिर्वाहकत्वादिगुणविशिष्टाभेदप्रतिपत्तये गुणवादकल्पना युक्तैवेत्यभिप्रायः। अत्र साक्षात्काराय परमात्मन "आत्मा वा अरे द्रष्टव्य" इत्यादिनिदिध्यासनविधिशेषे, इदं सर्वं यदयमात्मेत्यादौ सर्वबाधविवक्षैवेति तद्व्यावृत्त्यर्थं विशेषणमीशोपधाविति। एवं सति सत्यं चानृतं च सत्यमभवदित्यादिरपि उक्तविधया विशिष्टाभेदविषयोऽनुमन्यते। कारणवाक्यस्य ब्रह्मतत्वप्रतिपत्तिप्रयोजकत्वेऽपि तद्विषयेशव्यपाश्रयोपासनाविध्यंशवद्भावस्योपगमात्। दर्शपूर्णमासार्थप्रणयनविधेस्तदुपाश्रयपश्वादिफलगोदोहनादिविध्यंशवत्। ब्रह्मतत्वप्रतिपत्तिमात्रपरस्तु ब्रह्मैवेदं विश्वमित्यादि वेदमौलिः। अत्र मौलिग्रहणेन यथा पुरुषस्य मौलेरुपरि न किञ्चित् तथास्मदुपदेशादुपरीति पूर्ववदुपासनाविधिशेषत्वव्युदासः। सर्वमुद्दिश्य भवत्तां, परमात्ममात्रतां आदिशन् परमात्मस्वरूपाभेदमवबोधयन्। एवेत्यवधारणया जगदपोञ्छति, अपनयति बाधत इत्यर्थः। अत्र किमुद्दिश्य किं विधेयमिति को विनिगमनाहेतुः? उच्यते – अध्यारोपापवादाभ्यां ब्रह्मात्मतत्वं शास्त्रेण प्रतिपिपादयिषितम्। ततश्च यत्र कारणवाक्ये सगुणोपासनाविधिवाक्ये वा अध्यारोपविवक्षा, तत्र ब्रह्मोद्दिश्य सर्वभावो विधेयः। अन्यथा जगतो तद्विकारत्वे तदद्वितीयत्वोपदेशव्याघातात्। सर्वकर्मा सर्वगन्धः सर्वरस–इत्यादेरवस्तुत्वे

विधिनैवारोप्यत्वे जीवेऽपि तत्सम्भवेन सर्वकर्मेत्यादिविवक्षितगुणानामनुपपत्तेस्तु न शारीरो मनोमयादि-रूपास्य इति सौत्रनिषेधानुपपत्तेश्च। यत्र पुनः प्रतिपन्नं जगत् भावोपलक्षितब्रह्मात्मस्वरूपतत्वप्रत्यापत्तये अपवादविवक्षा, तत्र सर्वमुद्दिश्य ब्रह्मात्मता विधेया। तथा हि तावन्मात्रपरिशेषो गम्येत, तथा च लिङ्गम्। "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदि"त्यादि। तथा "वै तदात्म्यमिदं सर्वं" इत्यादावपवादविवक्षा गम्यये। "तत्सत्यं स आत्मा, तत्वमसी"ति स्वरूपोपदेशपर्यवसानात्। एवमपवादविवक्षायामवधारणान्यथासिद्धिरनपेक्षणीया, अन्यथाऽनेनापेक्षितात्मतत्त्वपरिशेषपरत्वोपपत्तेरिति ॥ ८५ ॥

एवमुपसंहारप्राबल्यमङ्गीकृत्य "ऐतदात्म्यमिदं सर्वमि"त्यादेः"स्तत्सत्यमि"त्यादिश्रुत्युपपत्या भेदा-भेदादिविषयत्वासम्भवोपपत्या च "नेति नेत्यात्मा आत्मैवेदमि"त्यादिनिषेधावधारणाभ्यां अशेषविशेष-बाधेन सत्तामात्रात्म परिशेषपरत्वमुपपादितम्।

तत्रेदमाशङ्क्यते — तदैक्षत, बहु स्यां प्रजायेये"त्यादिना भूतभौतिकविश्वात्मना भवनं, "अनेन जीवेनात्मनानुप्रविश्ये"त्यादिना विश्वात्मतयावस्थानं चात्मनः प्रपञ्च्यते। तच्चेदपवाद्यं वरं तदवचनमेव, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि"त्याभाणकः। अतस्तत्प्रपञ्चनानुरोधेन ऐतदात्म्यमिदं सर्वमित्याद्यपि विशिभेदपरमेव युक्तम्। एवं सति यदि ब्रह्म प्रतिपत्तिपर्यवसायि न स्यात् उपासनाविधिशेष एव स्यात्। "अद्धा स्यादेवमेव तद्धास्य विजज्ञावि"ति ज्ञानेनोपसंहारादिति इमामाशङ्कां तदेवोपक्रमप्राबल्यमाश्रित्य, "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपक्रमानन्यथासिद्ध्या नैवमिति परिहरन्नाह —

त्वद्वेदने सकलवेदनसंविदा ते
विश्वात्मना भवनमात्मतया स्थितिं च।
आश्रुत्य मालुपमितीश्वर वस्तुतत्वं
वेदस्त्वदात्मपरिशेषमशेषमाह ॥ ८६ ॥

अत्र, हे ईश्वर, ते तव, विश्वात्मना भवनमित्यभिसम्बन्धादिदमवगमयति। "तत्तेजोऽसृजतेति स्वातन्त्र्यव्यपदेशान्निमित्तत्वमेव प्रत्यक्षम्। उपादानत्वं तु तत्र "तदैक्षत बहु स्यां प्रजायेये"ति सङ्कल्पोपक्रमानुरोधात् उपक्षेप्तव्यम्। अतोऽवश्यमुपक्रमानुरोधो वाक्यतात्पर्यार्थनिर्णयेऽनुसर्तव्य इति, आत्मतया स्थितिं चेति आत्मनः परमात्मभेदं व्यावर्तयति। "अवस्थितेरिति काशकृत्स्नः"

इति सूत्रम् । "आत्मा वा अरे द्रष्टव्य" इति द्रष्टव्योक्तस्य परमात्मनः, "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती"त्येवं पत्यादिशेषिणात्मनोपक्रमो न विरुद्ध्यते । तस्यैव तदात्मनाऽवस्थितेरिति मूलार्थः । जीवात्मन्यन्तर्यामितयाऽवस्थितेरिति परः । तन्निराकरणं चशब्देन समुच्चिनोति । आकाङ्क्षितं योऽयं चाध्याहर्तव्यम् । परमात्मनोऽवस्थितिवचनेनाधिकरणाकाङ्क्षा संभवति । भूमात्मानं प्रकृत्य "स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नी"त्यथवा न महिम्नीत्यनाधारत्वश्रवणात् । न च योग्यं जीवात्मनीति, तथापि भोक्त्रात्मोपक्रमविरोधासमाधानात्, तदात्मतया परमात्मोपक्रम एव स इति विवक्षा तु न सम्भवति । "आत्मनस्तु कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय जाया प्रिया भवति, पुत्रः प्रियो भवती"त्यभ्यासेन भोक्त्रात्मतात्पर्यावगमविरोधात् । यथा चात्र न परमात्मपर एव प्रक्रमः, तथा प्रस्तुत्य भोग्यगुणशेषिणमित्यत्र वक्ष्यामः । अथवाऽनेन जीवेनात्मनानुप्रविश्येति जीवान्तर्यामितया परमात्मन एवानुप्रवेशो विवक्षितः । न जीवरूपेणेति शङ्काव्यावृत्तये चशब्दः । यथा च नैवं तथा व्याकर्तुमीश्वरेति श्लोकविवरणावसरे वक्ष्यामः । तदेतदुभयं त्वद्वेदने, तव परमात्मनो विज्ञाने सति । सकलवेदनसंविदा, कलया लेशेन प्राणादिषोडशकलाभिर्वा सह वर्तत इति, सकलशब्दद्वयैकशेषः । तस्य शेषानवलेशस्य जडाजडात्मकस्य विश्वस्य वेदनसंविदा, विज्ञानप्रतिज्ञानेन । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं स्यात्, आत्मनि खल्वरे दृष्टे श्रुते विज्ञात इदं सर्वं विज्ञातमि"त्यादिसमानार्थक, "येनाश्रुतंश्रुतमि"त्यादिदर्शितेन हेतुना । आश्रुत्य, अत्र निर्वहणीयतया उद्देश्यत्वेन हेतुत्वं विवक्षितम्, तेन तत्सिद्ध्यर्थं प्रतिज्ञायेत्यर्थः । एवं सति तात्पर्यतो विवक्षितं वस्तुतत्त्वं केवलात्मतत्वम् । मालुपं, "लुम्पतेश्च्लेरङि रूपम्" । लुप्तं न करवाणीति । त्वदात्मपरिशेषमशेषमाह, "ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा, तत्त्वमसी"ति श्रुतिः । यदि ह्यत्र विश्ववाधेन जीवात्माभेदेन च परमात्ममात्रशेषता नोच्येत, विश्वात्मभाववचनेन तदात्मभावेनानुप्रवेशवचनेन च । उत "तमादेशमप्राक्ष्यो येनाश्रुतमि"त्यादिना प्रतिपिपादयिषितं परमात्मतावन्मात्रवस्तुतत्त्वमुच्छिद्येत । विश्वात्मना भवनं परिणामः आत्मतया स्थितिश्च । जीवान्तर्याम्यात्मनेति प्रतिपत्त्या । तदैक्षतेत्यादिसन्दर्भस्य विशिष्टात्मविषयत्वावगमे प्रक्रमस्वारस्यहानप्रसङ्गात् । तथा हि — "उत तमादेशमप्राक्ष्य" इत्यत्र, आदिश्यत उपदिश्यत इत्यादेश इत्युपदेशैकसमधिगमनीयः परमात्मा विवक्ष्यते । "अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यत" इति श्रुत्यन्तरात् । तच्चोपदेशैकसमधिगमनीयत्वमविशिष्टात्मन एव भवति । विशिष्टात्मन ईश्वरस्य प्रागुक्तविधयाऽनुमानेनाप्यवगमनीयत्वात् । यद्यपि चोपदेश्यत्वं मोक्षतदुपायसाधारणं, तथापि प्राधान्येनात्मन एवायं व्यपदेशः । विधेयत्वस्य द्रव्यदेवतादिसाधारण्येऽपि

कर्मण एव तद्व्यपदेशवत् अवश्यं चैतद्वक्तव्यम् । श्वेतकेतोरनूचानमानिनं स्तब्धस्य प्रयोजनायाय-मारुणेरनुयोगः । तत्र मेधयैव प्रज्ञाततुल्यन्यायावसेयत्वानुशयप्रतिक्षेपाय प्रष्टव्यत्वाकृत्यपेक्षितत्वात् । आदिश्यते शास्यते येनादेशः । "कर्तरि करणत्वोपचारः" । शासिता च परमात्मावश्य-वक्तव्यः । अन्यथा जगदुपादानमात्रादस्मान्निमित्तान्यत्वे तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् । इति कश्चित् । तन्न, यथा हि लवित्रं लुनातीति कर्तृत्वोपचारे करणाकाङ्क्षा, लवनीयसंस्पर्शादिना पूर्यते, लौकिकत्वात् । कारणत्वोपचारे पुनरीशितुः कर्त्राकाङ्क्षा केन पूर्यताम् ? । नह्यत्र लौकिकः कर्ताऽवगम्यते । अपि च, किमद्य तवायातमातुरत्वं ? यतः कारणत्वोपचारमादेशे शब्दे मन्यसे । कर्मण्यपि घञत्र सङ्गच्छते । "अकर्तरि च कारके संज्ञायां" इति हि स्मरन्ति । असंज्ञायामप्युदाहरन्ति, को भवता दायो दत्तः ? को भवता लाभो लब्धः ? इति आह । आदेश्यत्वं नियोज्यत्वं ब्रह्मणो न युक्तम् । उपदेश्यत्वं मुक्तितदुपायसाधारणत्वादविशेषणम् । प्रकृतेऽनपेक्षितमवक्तव्यं, प्रष्टव्यत्वोक्त्यर्थ-सिद्धं चेत्यत आदेशे शासने कर्तरि घञयोगात् करणत्वोपचार इति । तत्र वदामः — उपदेश्यत्वस्यासाधारण्यं प्रकृतप्रष्टव्यत्वानुयोगापेक्ष्यत्वम् । अत एव तदर्थसिद्ध्यभावं चाधुनैवावोचाम । शासितृत्वं पुनरनपेक्षितमवक्तव्यम् । उपादानविज्ञानेनोपादेयविज्ञानं हि तव तद्विज्ञानेन सर्वविज्ञान-प्रतिज्ञानार्थः । तच्च निमित्तान्यत्वेऽपि न विरुध्यते । अत्रानुक्तसिद्धं च तदवक्तव्यम् । तदैक्षता-सृजतेत्येव तत्सिद्धेः । तत्र विस्तरस्तु "सिद्धान्तसिद्धाञ्जने" द्रष्टव्यः । अपि च येन विज्ञातेनाविज्ञातं विज्ञातं भवतीति तद्विज्ञाने निरङ्कुशं सर्वविज्ञानमुच्यते । विशेषाभावात् । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति", "आत्मनि खल्वरे दृष्टे श्रुते विज्ञात इदं सर्वं विज्ञात-मित्यादिश्रुत्यन्तराच्च । तच्च विश्वजीवभेदवास्तवत्वे दुरुपपादम् । यद्यपि कारणस्यैवावस्थाभेदः कार्यं तथापि कारणे ब्रह्मणि विज्ञातेऽपि तत्तदसाधारणस्वरूपविशेषपरिज्ञानानुपपत्तिः । अन्यथा ब्रह्मविदो मेरुगुहान्तरितसंशयायोगात् । तदवास्तवत्वे तु तदेवात्मतत्वमन्यथा भातमिति, तस्मिन्विज्ञाते सर्वं विज्ञातमित्युपपन्नम् । नन्ववास्तवत्वे तज्ज्ञाने सर्वमेव बाध्येत । कुतः सर्वविज्ञानम् ? । न खलु रज्जुतत्वज्ञाने सर्पधारादिज्ञानं सम्भवति । उच्यते । अत्र सर्वविज्ञानमित्यारोपितविश्वभेदबाधेन तद्याथात्म्यविज्ञानमेव विवक्षितम् । न त्वारोपितरूपभेदविज्ञानमेव । हन्तैवमात्मैव यथात्म्यमस्य विश्वस्येति । तस्मिन्विज्ञाते तदेव विज्ञातमित्युक्तं स्यात् । सत्यं, फलतस्तथैव । किन्त्वारोपदशाया-मविज्ञातयाथात्म्यं सर्वमिति तदपेक्षयैव तत्प्रतियोगिकोऽयं, तस्मिन्विज्ञातेऽविज्ञातं सर्वं विज्ञातं भवतीति व्यपदेश उपपन्नः । विज्ञात आत्मतत्वे "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येज्जिघ्रेत् शृणुयात्स्पृशेद्रसयेन्मन्वीत विजानीयाद्" इति सर्वक्रियाकारकफलभेदापवादफलश्च, तथा व्यपदेशः । न चैवं परमतेऽपि प्राक्कारणात्मविज्ञानात्स्वातन्त्र्येण विश्वभेदो विज्ञात इति तेन सात्मकत्वेनाविज्ञातं, तस्मिन्विज्ञाते सर्वं तेन सात्मकत्वेन विज्ञातं भवतीति शाक्यते वक्तुम् । कारणात्मा हि

विज्ञायमानः कार्यात्मत्वेनैव विज्ञायेत। अतस्तदेव कार्यस्य सात्मकत्वज्ञानमिति। किमिदं पुनरुच्यते ? तस्मिन्विज्ञातेऽविज्ञातं सर्वं विज्ञातं भवतीति विपरिवृत्त्य प्राधान्यविवक्षायां च न प्रयोजनगन्धमपि पश्यामः। एवमन्येऽपि विश्वभेदवास्तवत्वपक्षे तद्विज्ञाने सर्वविज्ञाने सर्वविज्ञानोपपादनप्रकारभेदाः, "सिद्धान्तसिद्धाञ्जने" निरस्तास्तत्रैवानुसन्धेयाः। तस्मादेकविज्ञाने सर्वविज्ञानप्रतिज्ञया सदेवेत्यवधारणया च प्रक्रमस्य निर्विशेषसत्तातावन्मात्रपरमात्मप्रतिपादनस्वरसतया तदुपपादनार्थ-प्रवृत्तविश्वात्मभाववचनप्रसक्तविशिष्टात्मप्रतिपादनपरत्वभ्रमं व्युदसितुं तस्यैव केवलात्मवस्तुतत्त्वस्य प्रत्यापत्तये पुनरै "तदात्म्यमिदं सर्वं", "तत्त्वमसी"ति विश्वबाधेनात्माभेदेन चोपसंहार इति साम्प्रतम्। एवं सति "तद्धास्य विजज्ञावि"ति केवलं भूतार्थवादोऽपि विज्ञान एवोपदेशपर्यवसानमिति दर्शयति, न तूपासनाविधिं कल्पयति। अन्यथा त्रिवृत्करणप्रक्रियोपदेशेऽपि "तद्धास्य विजज्ञावि"ति परकृतिरूपार्थवादेन तदुपासनाविधिकल्पनाप्रसङ्गादिति। नन्वेवं यद्युपक्रमोपसंहारनिरूपणेन विश्वबाध एवाभ्युपगम्येत, कस्य तर्हि सदात्मनोऽन्यत्वं, "तदन्यत्वमारम्भणशब्दादिभ्यः" इति न्यायेनोपपाद्येत। न च तस्य सदात्मनोऽनन्यत्वं, अन्यशून्यत्वं प्रतिज्ञार्थः। हेतुविरोधात्। अत्रारम्भणशब्दस्यादिरिति, आरम्भणशब्द आदिर्येषामिति च तत्पुरुषबहुव्रीह्योः स्वरभिन्नानामपि, "यस्योत्तरस्वरविधिः स इष्यते" इत्येकविशेषेण आरम्भणशब्दादिभ्य इत्युच्यते। अत एव तत्पुरुषं सूचयितुं वाचारम्भणेत्यनुक्तिरर्थादादिरनुकक्ष्यत इति वाचेति पृथक्पदत्वसूचनाय तथानुक्तिरित्यप्याहुः। तत्र यद्यपि "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यस्या"दिः उत "तमादेशमप्राक्ष्यो, येनाश्रुतं श्रुतं भवतीत्यादिः"। तदादिकेष्वपि स एव वाचारम्भणमित्यादिः, "सदेव सोम्येदमग्र आसीत्" इत्यादिश्च शब्दो न सदात्मनोऽन्यशून्यत्वप्रतिज्ञया विरुद्ध्यते। उक्तविधया सदात्मवस्तुमात्रतात्पर्यपर्यवसानोपपत्तेः। तथापि, "तदैक्षत बहु स्यां प्रजायेय, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्यकरवाणि, तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत, सर्वं खल्विदं ब्रह्म, तज्जलानि"तीत्यादिशब्दा विरुध्यन्ते। तेषां कार्यकारणभाव-प्रतिपादनपरत्वात्। तथा "भावे चोपलब्धेरि"ति परस्सौत्रो हेतुः। तत्र यदि कारणभावो-पलम्भयोरेव कार्यभावोपलम्भादिति विवक्ष्येत यथा सिद्धान्ते, यदि वा कार्यस्य भावे घटादिसंस्थाने च तदेव मृद्द्रव्यमित्थमवस्थितमिति कारणोपलब्धेश्चेति विवक्ष्येत, यथा परमते उभयथाऽपि सविरुध्येत। असत उत्पत्त्यनुपपत्त्या वा घटशरावादिप्राङ्मृदेवासीदिति प्रत्ययेन वा। "सत्वाच्चापरस्ये"ति कार्यस्य कारणे सत्वादित्यपरोऽपि सौत्रहेतुर्विरुध्येत। एवं तदन्यत्वमित्य-न्यशून्यत्वप्रतिज्ञायामन्यस्यापि सौत्रहेतोर्विरोधो द्रष्टव्यः। तस्मात्तदन्यत्वं तस्य कार्यस्याभेदः कारणादिति वा। तस्मात्कारणादनन्यत्वं कार्यस्येति वा। तयोरभेद एव तदन्यत्वन्यायसध्य इत्यैतदात्म्यमित्यादौ कार्यबाधविवक्षायां तद्विरोध एवेति। अत्रोच्यते —

"कार्यकारणरूपाभ्यां घटते नैकता तयोः ।
पौर्वापर्यव्यवस्थादि वैधर्म्यानुपपत्तितः ॥

ततोऽनन्यत्तदेवैवमवस्थं त्विति नेयता ।
तस्मादनन्यत्वगिरा पृथक्सत्ता निरस्यते ॥

पृथक्सत्तानिरासे च मिथ्यात्वं पर्यवस्यति ।
प्रत्यक्षादिप्रसिद्धस्य ह्यसत्वं नोपपद्यते ॥

तदेकसत्ता हेतुश्च विषयारोप्यसङ्गतिः ।
लाघवादेक एवास्तु न जन्यजनकादिता" ॥

कार्यकारणजातिव्यक्तिगुणगुण्यादिष्वपि तादात्म्येनानुवर्तमानेषु कारणादिषु व्यावर्तमानानां कार्यादीनां स्वप्रतिपत्त्युपाधावेव निषेधप्रतियोगितया बाध्यत्वेनारोप्यत्वोपपत्तेः । तदेकसत्तायामन्यान्यहेतुकल्पनागौरवस्याप्रामाणिकत्वात् । तदेवं सति पृथक्सत्तानिषेधे सौत्रास्सर्वेऽपि हेतवः समञ्जसा एव । आरम्भणशब्दादिषु तावन्न कोऽपि विरोधः । तत्र सदात्मन एव विश्वभावोपदर्शनात् । सहोपलम्भसद्भावनियमस्य तु जातिव्यक्त्यादौ व्यभिचारः परेण दर्शितः । स निरस्तः । प्रत्यस्तमितभेदसत्तामात्रमात्मैव विशेषरूपापेक्षया गोत्वादिसामान्यमिति मन्यन्ते । यथाह हरिः —

"सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः" ॥

इति ॥ तत्र च तादात्म्येनानुवर्तमाने व्यावृत्तप्रतीताविशेषारोपा एवेत्युक्तम् सत्वाच्चापरस्येति । कार्यस्यारोप्यत्वे कारणे सत्वायोग — इति परेण यदुक्तं तदविमृश्यवचनम् । न खलु कार्यरूपमेव कारणे सदित्यस्माभिरभिप्रेयते । किं तर्हि ? यदारोप्यविषयस्याज्ञातसत्वं तदेवारोप्यसत्वमिति ।

अज्ञातवस्तुतत्त्वमेवारोप्यरूपमवभासत इति हि सिद्धान्तः। प्रकृतिविशिष्टं ब्रह्म पिण्डाद्यवस्थं वा मृदादि कार्यावस्थं भवतीति परमतम्। तत्र यथा प्रकृतिविशिष्टत्वमेव कार्यशक्तिरिति तदेव कार्यसत्त्वमिष्यते। तथा ज्ञानविषयत्वमेवारोप्यत्वशक्तिरिति तदेव तत्सत्यमित्यविरोधः। एवमन्यस्यापि सौत्रस्य हेतोरविरोधो योजनीयः।

कार्यरूपमनारोपितमुपेत्य द्रव्यान्तरत्वनिषेध एव तदन्यत्वमिति मते पुनरारम्भणशब्दादिविरोधः। उत तमादेशमप्राक्ष्य इत्यादिविरोधस्तावदुक्त एव। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्ययमपि शब्दो विरुध्यते। येनाश्रुतं श्रुतं भवतीत्यादिनैकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते कथं नु भगवः स आदेश इत्यसम्भवे चोदिते तदन्यत्वात्तद्विज्ञानेन सर्वविज्ञानं स्यादित्युपपादयितुं "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति दृष्टान्तमाचष्ट। "यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्, यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यादि"ति च। अत्रापि तथैवासम्भवशङ्कायां विषयारोप्यभावेन तदन्यत्वविवक्षया दृष्टान्ता उपपाद्यन्ते। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं, लोहमित्येव सत्यं कृष्णायसमित्येव सत्यमिति। वाचाऽऽरभ्यते, अलभ्यते। रलाभेदः, असुपाणिस्वंगुरुरित्यादिवत्। स्पृश्यते, विषयीक्रियते केवलमिति वाचारम्भणम्। किं तद्विकारः? नामधेयम्। अत्र नामधेयरूपधेयसामानाधिकरण्यानुपपत्त्याऽवश्यलक्षणीयेऽर्थान्तरे वक्यशेषानुगतं मृषात्वमेव लक्ष्यते। कार्याक्षमे सुत इति कल्पिते सुतो नामायमिति सामानाधिकरण्यदर्शनात्। कुत एवं मृत्तिकेत्येव सत्यमिति शब्देन स्वरूपमवमृशति? मृत्तिकास्वरूपमेव सत्यं, न तु तस्याः कार्यसम्बन्धिरूपं पिण्डघटादिकार्यरूपं वा सत्यं, किन्त्वनृतमिति तदेव सामानाधिकरण्यलक्षितमनृतत्वमापेक्षिकसत्यत्वावधारणेन दर्शितम्। एवं विकारानृतत्वादेव मृत्पिण्डेन विज्ञातेनेति मृदैव विज्ञातव्येति प्रकृतिमात्रविवक्षा सिद्धा भवति। तथा लोहमणिना नखनिकृन्तनेनेत्यत्रापि। अथैवं पिण्डाद्युपादानमनर्थकम्। मृदा लोहेन कृष्णायसेनेत्येव वक्तव्यम्। नैवं विकारविशेषणमृदाद्युपादानं हि विकारानृतत्वोपक्षेपार्थमेव। एकस्यानेकविकारप्रदर्शनेन तत्रैव कारणे परस्परव्यावृत्त्या तेषां विकाराणां स्वप्रतिपत्त्युपाधावेव निषेधोपहरणेन बाध्यत्वाक्षेपात्। विकारसत्यत्वेन तदन्यत्वमते पिण्डादिग्रहणमनवकॢप्तं स्यात्। तत्रैवं सति एकेन कार्यभेदेन तस्याकारणत्वात्। अन्यथा मृत्पिण्ड इत्येव सत्यमित्याद्येव ब्रूयात्। तत्रैवं सति एकेन कार्यभेदेन विज्ञातेन तस्य सर्वः कार्यभेदो विज्ञातो भवतीत्युक्तं स्यात्। तच्च न शक्यम्। न खलु मृत्पिण्डे विज्ञाते घटमणिकमल्लिकोदंजनादयो विज्ञाता भवन्ति, परस्परव्यावृत्तत्वात्। अथैकेन मृत्पिण्डेन मृण्मयत्वेन विज्ञातेन सर्वं घटशरावादि मृण्मयत्वेन विज्ञातं भवतीति व्याख्यायेत। अध्याहारस्तावदेको दोषः। न च यदेव पिण्डस्य मृण्मयत्वविज्ञानं तदेवान्यस्यापि तज्ज्ञानमिति युक्तम्। नियामकाभावेनातिप्रसङ्गात्।

न चैकस्य तन्मयत्वज्ञानमन्यस्य तन्मयत्वज्ञाने हेतुरपि । विनिगमकत्वाभावेन स्वत एव सर्वस्य तन्मयत्व-विज्ञानोपपत्तेः । दार्ष्टान्तिकेऽपि दृष्टान्तानुरोधेन एकस्य सदात्मजन्यत्वविज्ञानेऽन्यस्यापि तज्जन्यत्वविज्ञानं भवतीति विवक्षायां, "आत्मनि खल्वरे विदिते इदं सर्वं विदितमि"त्यादिभिरेकार्थो, येनाश्रुतं श्रुतं भवतीत्यादिप्रकृतादेश्यब्रह्मविषयव्यपतेश उपरुद्ध्येत । अपि च तन्मते वाचारम्भणं विकारो नामधेयमिति सामानाधिकरण्यविरोधः । न च वाचा घटेन जलमाहरेत्यादिवाक्पूर्वकव्यवहारेण प्रयोजनेन विकारो नामधेयं च मृद्द्रव्येणालभ्यते । वाक्पूर्वकव्यवहारसिद्ध्यर्थं मृद्द्रव्यमेव घटादि नामरूपभाग्भवतीति विवक्षितमिति वाच्यम् । स्वरूपहेतुत्वोल्लङ्घनेन वाक्पूर्वकव्यवहारलक्षणया उद्देश्यहेतुत्वकल्पनस्यानुषङ्गकल्पनस्याश्रुतसमुच्चयकल्पनस्य च यथाश्रुतसम्भवे अन्याय्यत्वात् । अपि चैवं मृत्तिकेत्येव सत्यमित्यवधारणविरोधः सदेवेत्यवधारणविरोधश्च स्थित एव । तस्मा द्विकारानृतत्वमेव तदन्यत्वन्न्यायलम्भनीयमिति **नास्मन्मते** विकारबाधेन सदात्मस्वरूपमात्रपरिशेषे सङ्कटं किञ्चिदिति सर्वमवदातम् ॥ ८६ ॥

**स्यादेतत्**, विश्वं तावदागमेषु शक्त्यादिशब्दैर्निर्दिश्यते । यथा — "एकदेशस्थितस्येन्दोः ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणश्शक्तिः तथेदमखिलं जगत्" ॥ "तत्सर्वं वै हरेस्तनुः । यस्य सर्वाणि भूतानि शरीरम्" । "एतावानस्य महिमा" । "तवैष महिमा येन व्याप्तमेतच्चराचरम् । अहमात्मा गुडाकेश सर्वभूताशयस्थितः" ॥ इति प्रकृत्य, एष तूद्देशतः प्रोक्तः विभूतेर्विस्तरो मया" । "पादोऽस्य विश्वा भूतानी"त्यादिषु । तत्र हेतोरपृथक्सिद्धविशेषणं शक्तिः, आत्मना व्याप्त्या नियाम्या धार्या वा तनुः । अनितरसाधारणः परप्रावण्यहेतुः विशेषो महिमा, विभूतिरात्मनः स्वच्छन्दविनियोज्यो विस्तारः अंशः विशिष्टस्यावयविनो वा एकदेशः । न चारोपितं शक्त्यादिशब्दनिर्देश्यं । न खलु गुञ्जापुञ्जस्यारोपिता ज्वलनता दाहशक्तिः । न हि स्थाणोरारोपितः पुरुषस्तनुः न च शुन आरोपिता सिंहता महिमा । न च रज्जोरारोपिताः सर्पधारादण्डादयो विभूतयः । न च चन्द्रमस आरोपितश्चन्द्रभूदोंऽशः । तस्माच्छक्त्यादिशब्दनिर्दिष्टविश्वविशिष्टाभेदः कारणात्मैव शास्त्रप्रतिपाद्य इति युक्तमित्याशङ्कां परिहरन्नाह —

शक्तिस्सदाशिव ! तनुर्महिमा विभूति-
रंशस्तवेति सकलं जगदामनन्तु ।
त्वादात्म्यनिह्नुतपृथग्भवनावलम्ब-
मास्थापयामि विमृशन्नविकल्पकं त्वाम् ॥ ८७ ॥

अत्र **हे सदाशिवेति** सम्बोधनेन नित्यकेवलमङ्गलैकस्वभावस्य परमात्मनो विश्वशक्त्याद्य-शिवसम्बन्धायोग्यतां **सूचयति**। उपासनाविध्याश्रयीभूतपरार्थविहितकारणरूपभेदविषयो यद्यपि **शक्त्यादिवादः**, कारणरूपे तस्यानारोपितत्वात् तथापि, "यजन्यज्वा यजत्येनं जपत्येनं जपन्नपि। घ्नंस्तथाऽन्यं हिनस्त्येनं सर्वभूतो यतो हरिः"॥ इति न्यायेन परमात्मन एव कारणरूपविवृत्ततया, **तवेति** शक्त्यादिसम्बन्धितानिर्देशः। आमनतेस्सकर्मकत्वेऽपि इतिशब्दोक्तकर्मत्वात् शक्तिरित्यादावनभिहिताधिकारविहिता, कर्मणि द्वितीया न प्रयुज्यते। **सकलं जगदित्या**न्त्यात्कार्यात्परमात्मानुगतिं दर्शयति। **आमनन्त्वित्यनादरे लोट्**। अथ कथं शक्तित्वाद्याम्नाने अनादरः? न खलु तत्प्रमत्तगीतम्। अतो यथाम्नातं प्रतिपत्तव्यम्। अन्यथा नास्तिक्यापातादित्यत्राह त्वादात्म्येत्यादि। **विमृशन्**, किं विश्वहेतुस्वभाव आत्मा यस्य, विश्वं साक्षाच्छक्त्यादिरूपमाम्नायते उत निर्विशेष-सत्तामात्रस्वभावः। यत्र विश्वनिषेध आम्नायत इति विचारयन्। अनेन निर्विशेषात्मपक्षपरिग्रहो न गतानुगत्या, **नाग्रहेण, न हठेन, न प्रमादेनेति** सूचितं भवति। **त्वादात्म्येन**, त्वदात्मपरिशेषतया। "आत्मैवेदं सर्वं", "ब्रह्मैवेदं विश्वम्", नेति नेत्यात्मेत्यादिना **निह्नुतं पृथग्भवनं**, पृथक्सत्त्वम्। विश्वस्य निषेधावधारणाभ्यां अवगतं वस्तुतत्त्वमिति यावत्। **तदवलम्ब्य**, त्वां परमात्मानं अविकल्पकं निरस्तसमस्तविशेषसत्तैकरसं। **आस्थापयामि**, अभिव्याप्त्या सर्वागमतात्पर्यविषयोऽयमर्थ इति शब्दगत्या न्यायेन चोपपादयामीत्यर्थः। सदेवेत्यादिशब्दगतिस्तावदुपपादिता। **न्यायस्तु** —

"कारणत्वविधिः पूर्वः वस्तुतत्त्वविधिः परः।
आद्यः परार्थस्स्वार्थोऽन्यः प्रापकोऽन्यो निषेधकः॥

पौर्वापर्ये च पूर्वस्य दौर्बल्यं न्यायतस्स्थितम्।
परार्थात्प्रबलस्स्वार्थो गुणमुख्यव्यतिक्रमे॥

प्रापकात्प्रतिषेधस्य प्राबल्यं लोकतस्स्थितम्"।

इति। कारणविधिस्तावत्प्रतिपादनीयस्य परमात्मनो लक्षणम्। वस्तुतत्वविधिश्च प्रमाणम्। लक्षणेन च सम्भावितः प्रमाणेन प्रतिपादनीयः। "सम्भावितः प्रतिज्ञायां पक्षस्साध्येत हेतुने"ति न्यायात्। तदनयोः पौर्वापर्यं सिद्धम्। "विरोधे सति पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्"। यथा "यद्युद्गातापच्छिद्याद्दक्षिणेन यजेत। यदि प्रतिहर्ता सर्ववेदसं दद्यादिति। बहिष्पवमानेऽध्वर्युं

प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाते" त्यादिविहितान्वारम्भणविच्छेदनिमित्त-प्रायश्चित्तविध्योः परनिमित्तविधितः पूर्वस्य दौर्बल्यम्। यथा वाऽभिचारे विकृतौ उपकाराकाङ्क्षिण्यां कुशमयबर्हिस्तरणातिदेशस्य पूर्वस्य "शरमयं बर्हिस्तृणाती"ति विधितो दौर्बल्यम्। तथाऽत्रापि स्यात्। यद्यपि लक्षणप्रमाणयोरेकवाक्यतया न विरोधः, तथापि प्रकृते परमात्मनि लक्षणस्य विधिमुखेन प्रमाणस्य निषेधमुखेन प्रवृत्तेरस्तिप्रातीतिको विरोध इति परवस्तुतत्त्वविध्यनुरोधेन पूर्वो लक्षणविधिः स्वलक्षणविशेषणलक्षणपरत्वबाधेनोपलक्षणपरोऽवस्थाप्यते। एवं कारणत्वविधिर्लक्षण-परतया वस्तुतत्त्वविधिविशेषः परार्थः शेष्यनुरोधेन च शेषव्यवस्थाऽऽस्थेया। यथा सूत्रितं जैमिनिना – "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग" इति। यथा याजुर्वेदिक आधाने उपांशुयजुषेति स्वरस्स्थितः। तदङ्गं साम य एवं विद्वान् वारवन्तीयं गायतीत्यादि विहितम्। तस्य चोच्चैस्सामेत्यौत्पत्तिकः स्वरः। तत्र विरोधे सति गुणानुरोधेन मुख्यद्वारकस्वरस्योपांशुत्वस्य मुख्यानुरोधेन वा गुणौत्पत्तिकस्वरस्यौच्चैस्त्वस्य व्यतिक्रमे विचिकित्सितमुख्येन मुख्याधानानुरोधेन वेदसंयोगः वेदधर्मस्योपांशुत्वस्य संयोगः गुणस्य साम्नः स्यात्। नत्वौत्पत्तिक-स्योच्चैस्त्वस्येति। एवमिह लक्षणं गुणः, तस्य विशेषणत्वमौत्सर्गिकम्। लक्ष्यं प्रधानं, तच्चेह निर्विशेषमिति तद्द्वारकविशेषणत्वमेवाश्रयणीयम्।

एवमथात आदेशो नेति नेति, स एष नेति नेत्यात्मेत्यादिनिषेधबोध्यमात्मतत्वं, निषेधश्च प्राप्तबाधेन वर्तत इति सर्वसम्प्रतिपन्नम्। अतः कारणत्वादिबाधेन निर्विशेषसत्तामात्रः परमात्मा प्रतिपाद्य इति। एतेन वस्तुतत्वविधेर्लक्षणे निषेधस्य च प्राप्तौ सापेक्षस्य कारणत्वविधिविरोधे सति तदनुरोधेन वस्तुतत्त्वविधिरेव हेयविशेषनिषेधविषयोऽवस्थाप्यताम्। "विरोधे त्वनपेक्षं स्यादि"ति न्यायादिति। तत्र हि "औदुम्बरीं स्पृष्ट्वोद्गायेत्, औदुम्बरी सर्वा वेष्टयितव्ये"त्यादि श्रुतिस्मृत्यो-र्विरोधे यदनपेक्षं श्रुतिवाक्यं तत्प्रमाणं स्यात्। सापेक्षं तु स्मृतिवाक्यमप्रमाणमिति स्थितमिति वा। कारणत्वविधेः प्रथमतयाऽनुपजातविरोधित्वेन प्रतिपन्नार्थत्वे परस्योपजातविरोधिनो निर्विशेषवस्तुतत्त्व-विधेस्तदनुरोधेनोक्तार्थव्यवस्था युक्ता। "वेदो वा प्रायदर्शनादि"ति न्यायात्। तत्र हि "अग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" – इत्यसञ्जातविरोधिवेदप्रायोपक्रमानुरोधेन "उच्चैरृचा क्रियते उपांशु यजुषा उच्चैस्साम्ने"त्युपसंहारस्तेषां "ऋग्यत्रार्थवशेन पादव्यवस्था गीतिषु सामाख्ये"-त्यादिसूत्रितमन्त्रविषयत्वापच्छेदेन ऋग्वेदादिविषयोऽवस्थापित इति वा। परमात्मनि विशेषनिषेधस्य तत्रैव तद्विधिविरोधे विध्यनुरोधेन हेयविशेषविषयत्वव्यवस्था युक्ता। अपि तु "वाक्यशेषत्वात्प-र्युदासस्स्यात् प्रतिषेधे विकल्पः स्यादि"ति न्यायात्। "दीक्षितो न ददाति न जुहोति न पचती"ति दानहोमपाकप्रतिषेधो, अविशेषात्। सर्वदा न होमपाकप्रतिषेधः स्यादिति प्राप्ते दीक्षितस्यैव प्रकृतयागे

"गृहान्जुहोति" "हिरण्यमात्रेयाय ददाती"त्यादिविधिविरोधात्पुरुषार्थहोमादिविषयो व्यवस्थापितः। अपि तु वाक्यशेषादित्यादिना सूत्रार्थस्तु न यागसम्बन्धिनामौपदेशिकातिदेशिकहोमादीनामयं प्रतिषेधः । "अग्निहोत्रं जुहोति," "अहरहर्दद्यादि"त्यादिविधिशेषत्वात् । दीक्षितो जुहोति दद्यादित्येवं पर्युदासस्स्यात् । अन्यथा विहितस्य प्रतिषेधे विकल्पस्स्यादिति । अत्र प्रकरणाम्नानबाधा-लक्षणादोषाच्च । पुरुषार्थहोमादीनामयं क्रत्वर्थतया प्रतिषेध एवेति वार्तिककारः । तत्रैवं सूत्रं योजनीयं – दीक्षितस्यैव गृहहोमादिविधेर्यागविधिशेषत्वात् पर्युदासस्स्यात् । न तस्यायं प्रतिषेध इति । अन्यथा तस्य प्रतिषेधे विकल्पस्स्यादिति फलतोऽयं प्रागुक्तपर्युदासवादः सूत्रभाष्ययोरित्यप्याहुः । **सर्वथा तत्र विध्यनुरोध एव** । दीक्षितो न ददातीत्यादेः स्थित इति वा शङ्कानावकाशं लभते । तथा हि – विरोधनयविषये तावत् सर्वत्रैष्टनस्मृतिः स्वप्रामाण्ये मूलप्रमाणसापेक्षा । स्पर्शनश्रुतिस्तु निरपेक्षा । स्वतः प्रमाणत्वात् । अतः प्रथमत एव स्वार्थवृत्त्या तयाऽर्थादपहृतविषया स्मृतिरप्रमाणमिति युक्तम् । न त्वेवं आत्मतत्वविधिश्रुतिः प्रामाण्ये सापेक्षा स्वार्थप्रमितौ विलम्बते । येन कारणत्वविधिनाऽपहृतविषया स्यादंशतोऽप्यप्रमाणमिति सम्भाव्येत । लक्षणेन प्रतिपाद्यवस्तुसम्भावनापेक्षा पुनर्व्युत्पत्त्याद्यपेक्षावन्ना-प्रामाण्यहेतुः । प्रत्युत कारणत्वविधिरेव लक्षणमुखेन लक्ष्यप्रतिपत्तिपरत्वेऽपि स्वयंसम्भावनामात्रे क्षीणशक्तितया लक्ष्यवस्तुतत्वप्रमितिपर्यवसानायैव तद्विधिसापेक्षतया तदनुरोधेनैव प्रामाण्यमर्हतीति वैषम्यम् । **अत एव** कारणत्वविधेर्लक्षणप्रत्यायने प्राथम्यादनुपजातविरोधित्वेऽपिस्वतात्पर्यविषय-लक्ष्यप्रमितौ वस्तुतत्वविधिसापेक्षतया स्वेनैव स्वार्थविशिष्टप्रतिपादने सञ्जातविरोधित्वादस्यां दशायां अनुपजातविरोधिवस्तुतत्वविधिरेवेति । वेदोपक्रमन्यायो नास्माकं प्रतिकूलः । दीक्षितहोमादिनिषेधो युक्तं यत् गृहहोमादिविध्यनुरोधेन भिन्नविषयतां नीतः। अन्यथा विहितप्रतिषिद्धतया विकल्पोपपत्तेः । स चायमष्टदोषदुष्टो विकल्पो न न्याय्यः । षोडशिग्रहणादौपुनरगतिको विकल्पः । यथा **भट्टमिश्राः** — "एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" ॥ इति ॥ इह तु कारणत्वविधेर्वस्तुतत्वविधिना बाध उपेयते । बाध्यबाधकाभावे च निषेधबलवत्ता सर्वसम्प्रतिपन्ना । न चैवमन्यत्रापि दीक्षितहोमादिनिषेधेन गृहहोमादि-विधिबाध एवास्तामिति वाच्यं, तदप्रामाण्यप्रसङ्गात् । न च कारणत्वविधेरपि सदोषः बाध्येनापि लक्षणेन लक्ष्यतत्वप्रतिपत्तिपरतया तात्पर्यविषये तत्प्रामाण्यानपवादात् । अथापि स्याद्य"द्वै तद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छा-यमतमोवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्रमाणमसुखममात्रमनन्तरमग्राह्यं च - मि"त्यादीनां, "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्रोत्रं तदपाणि-पादमि"त्यादीनां च ब्रह्मोपासनाविधिषूपसंहारो विवक्ष्येत तर्हि तेन कारणत्वादिसर्वविशेषबाधे तदुपाश्रयो-पासनाविरोधः प्रसज्येत । न तु तेषां **उपासनास्वुपसंहारः** । **सूत्र्यते** । "अक्षरधियां

त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तमि"ति । किं तर्हि ? तत्तद्भ्रमनिवर्तनेन ब्रह्मस्वरूपप्रतिपत्त्यर्थतया तेषामितरेतरत्रोपसंहारः । परस्यापि ह्यैश्वर्यगाम्भीर्यौदार्यादयो ब्रह्मगुणा न सर्वविद्यास्वनुवर्तन्ते । आनन्दादयस्तेभ्य इतरेत्वर्थसामान्यात् ब्रह्मार्थस्वरूपप्रतीत्यनुबन्धितया तत्समानत्वादुपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वनुवर्तन्ते । हेतुनिरूपितस्वरूपे तु गाम्भीर्यादयः प्रतिपन्ना इति वैषम्यं ब्रुवतस्स्थूलत्वादयोप्यानन्दादिभिरवगते प्रतिषिद्ध्यन्त इति, तेषां प्रतिषेधानां स्वरूपप्रतिपत्त्यनुबन्धित्वाभावेनानन्दादिवदनुपसंहरणीयत्वात् । अथानन्दादेर्जीवसाधारण्यादुपास्यासाधारणरूपेण ब्रह्मस्वरूपप्रतिपत्त्यनुबन्धित्वमस्थूलत्वादिहेयाभावविशेषितानामेवानन्दादीनामिति तत्तुल्ययोगित्वान्निषेधानामप्युपसंहार इति चेत्तन्न, एवं हि स्वरूपप्रतिपत्तौ साधारण्यव्यावृत्त्युपाया निषेधा इत्युक्तं भवति । न तु तेषां स्वरूपप्रतिपत्त्यनुबन्धितेति नानन्दादितुल्ययोगित्वम् । अत एव सामान्यतद्भावाभ्यामिति सौत्रहेतोरक्षरस्य सर्वोपासनासु समानत्वात् । अस्थूलत्वादीनां च तत्स्वरूपप्रतीतौ भावाच्चेति व्याख्याने स्यादसिद्धिः । तस्मादेवं सूत्रं व्याख्येयम् । अक्षरविषयाणां धियामस्थूलमनण्वित्यादीनामद्रेश्यमग्राह्यमित्यादीनां च अवरोधक उपसंग्रहः इतरेतरत्रोपसंहारस्स्यात् । अत्राक्षरविषयनिषेधानामिति वक्तव्ये धीग्रहणं यत्र यत्र निषेधवाक्येऽक्षरं परमात्मतत्त्वं बुध्यते तत्र तत्रैव सर्वनिषेधोपसंहारः । न त्वक्षरशब्दोपादानेन यत्र यत्र यो यो निषेधस्तत्र तत्रेतरस्येतरस्येति सूचयितुम् । अथवा निषेधानां वस्तुस्वरूपमात्रतया कस्य कुत्रोपसंहार उच्यत – इति न शङ्कनीयम् । प्रतीतितः प्रतियोगिनिरूप्यरूपभेदादिति सूचयितुं धीग्रहणम् । तत्र हेतुः, सामान्यतद्भावाभ्यामक्षरधियामित्येव निषेधानां तत्तद्भ्रमनिवर्तनेनाक्षरप्रतिपत्त्यर्थतया समानत्वात् एतदर्थं च धीग्रहणम् । अन्यथाऽऽनन्दादयः प्रधानस्याभेदादितिवदस्थूलत्वादयोऽक्षरस्य समानत्वात्तद्भावाच्चेत्यवक्ष्यत् । यस्मिन्नेकस्य निषेधस्य भावः तस्मिन्नेवापरस्यापि भावात्, तदेकविषयत्वादित्यर्थः । भाष्ये तु आर्थिकार्थ उक्तः । तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायत इति । प्रतिपाद्याभेदात्तत्प्रतिपत्त्यर्थानां विशेषणानां सर्वत्रोपसंहार इत्यभिप्रायः । गुणस्य प्रधानतन्त्रत्वे दृष्टान्तः औपसदवदिति । जामदग्न्ये हीने पुरोडाशिनीषु उपसत्सु पुरोडाशप्रदानमन्त्रोऽ"ग्नेर्वेर्होत्रं वेरध्वरमि"त्यादिरुद्गातृवेदोत्पन्नोऽपि नोद्गात्रा प्रयोक्तव्यः । किन्त्वध्वर्युणैवोपसदामाध्वर्यवत्वेन तदङ्गानामपि तत्तन्त्रत्वात्तदुक्तम् । शेषलक्षणे, "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग" इति । तदेवं विरोधनयाद्यविषयत्वादुदाहृतपौर्वापर्यनयादिना निर्विशेषमेवात्मतत्त्वं आगमावगमनीयमिति सर्वमवदातम् ॥ ८७ ॥

एवं श्रुत्युपपत्त्यादिना हेतुकार्यातीतनिर्विशेषस्वभावमात्मतत्वमागमप्रतिपाद्यमित्युपपादितम् । अधुना पुनरलं वा श्रुत्युपपत्त्याद्यनुसरणेन । श्रुतिरेव साक्षादहेतुरकार्यमात्मतत्त्वमिति कण्ठोक्त्या

प्रतिपादयतीति प्रस्तूयते । तत्र हेत्वादिरूपमात्मनो मानान्तरगम्यत्वात् नागमप्रतिपाद्यमित्युपवर्णितं प्रागेवाथाप्यपूर्वमेव स्यात् । तथापि तदेकवाक्यभूते परस्मिन् वस्तुतत्त्वविधौ सति तच्छेषोऽयम-भूतार्थवाद एव स्यात् । यथा "जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा नग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चे"ति "पयसाऽग्निहोत्रं जुहोती"त्यस्य विधेरर्थवादः । न हि तत्र जर्तिलयवाग्वा वा जुहुयादित्याद्यवगतार्थं । न च विधिरेव । किन्तु शिष्ट्वा प्रतिषेधस्वरूपो भूतार्थवाद एव । तथा च बाधलक्षणे जैमिनीयं सूत्रम् – "न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादस्स्यात्" इति । न चेदन्यं प्रकल्पयेत्, पयसाऽग्निहोत्रं जुहोतीति तदा जर्तिलादिविधिस्स्यात् । अन्यस्य विधेः प्रक्लृप्तौ च सार्थवादनिषेधं तद्वचनम् । इत्थं – महीयान्पयोहोमं यत्तदपेक्षया ग्राम्यादिपशुहिंसारहितोऽपि जर्तिलादिहोमः नाहुतिस्सम्पद्यत इति तच्छेषोऽर्थवादः स्यादित्यर्थः । तथा यत्पक्षसंमितां मामिनुयात् कनीयसीः प्रजाः कनीयसः पशून् कनीयोऽन्नाद्यं पापीयान् स्यात्, अथ यद्वेदिसंमितां मिनोति ज्यायसीः प्रजाः इत्यादियूपान्तरालविधिसरूपोऽग्नौ पश्वेकादशिनीविधिशेषोऽयं भूतार्थवादः । न हि पक्षसममानादि-यूपान्तरालमधिगतं । न चायं तद्विधिरेवाग्नौ यूपैकादशिन्याऽभावेनानपेक्ष्यत्वात् । न च यत्र सा वाचस्तोमादिषु तत्रोत्कर्षः तत्र रथाक्षमात्राणि यूपान्तरालानि भवन्तीति विहितत्वात् । तथा च भेदलक्षणे सूत्रं, "द्रव्येऽचोदितत्वाद्विधीनामव्यवस्था स्यात् । निर्देशाद्व्यवतिष्ठेत । तस्मान्नित्यानुवादस्स्यादि"ति । द्रव्येऽग्नौ यूपैकादशिन्याऽचोदितत्वात् पक्षे संमानादिविधीनां यूपैकादशिनीभेदेन व्यवस्था न स्यात् । किन्तु रथाक्षमात्रयूपान्तरालनिर्देशात्तदेव व्यवतिष्ठेत । तस्मादिह पक्षसंमानादिविधिसरूपो नित्यानुवादस्स्यात् । पश्वेकादशिनीविधिं स्तोतुं यूपैकादशिन्यां हि यदि पक्षसंमितां मिनुयात् अयं दोषो भवति । यदि वेदिसम्मितां न दोषो भवति क एतत्सङ्कटमध्यवसातुमर्हति । एकयूप एकादशपशवो नियोक्तव्या न सङ्कटं किञ्चिदिति एवमिहापि स्यात् । इदमात्मवस्तुतत्वमित्थं महीयः । यत्तदेव कारणं च कार्यं च । न च कारणं कार्यं चेति इत्येतमर्थमभिप्रेत्य हेतुकार्यातीतवस्तुतत्वविधिं दर्शयन्नाह —

साक्षादपूर्वमपि चाऽनपरं भवन्तं
गायन्त्यनन्तरमबाह्यमपीश वेदाः ।
तं त्वामहेतुकरणीयपरस्वभावं
हेतूयतामधिजगद्विचिनोमि हेतुम् ॥ ८८ ॥

अत्र विवक्षितवेदानुशासनमीश्वरशासनवदनतिक्रमणियमिति दर्शयितुं ईशेति सम्बोधनम् । भवन्तं परमात्मानं, न पूर्वं कारणं यस्य तं । नापरं कार्यं यस्य तम् । अत्र पक्षेऽकार्यमकारणं चेति विवक्षितत्वात् । पूर्वत्वमात्रस्यापरत्वमात्रस्य च कारणकार्यत्वव्यभिचारेऽपि न दोषः । नाऽन्तरं गर्भो यस्य, बीजमिव फलस्य तम् । न बाह्यं यस्य त्वगिव फलस्य तमिति । अत्राऽपिशब्देन स्वयमेव सबाह्याभ्यन्तरं चेति समुच्चीयते । तथा च श्रूयते — "सबाह्याभ्यन्तरो ह्यज" इति । तेन तदैकरस्यमुच्यते । न पूर्वं नाऽपरमिति तत्पूरूपो वा । अत्र पक्षेऽपूर्वमनत्तरमित्याभ्यामकारणमुच्यते । अनपरमबाह्यमित्यकार्यं, यत् खलु पूर्वं प्राग्भावि अन्तरं च कार्यरूपं यावदनुप्रविष्टं तत्कारणं, यथा मृत्सुवर्णादि घटरुचकादेः । यच्चापरं पश्चाद्भावि बाह्यं कारणरूपं यावदननुप्रविष्टं तत्कार्यं, यथा घटरुचकादि मृत्सुवर्णादेः । तद्विपरीतं अकारणाकार्यत्वेन साक्षादपि च वाचनिकवृत्त्या विश्वात्मसामानाधिकरण्यावधारणसामर्थ्यादर्थाच्चेति समुच्चयार्थोऽपि च शब्दः । गायन्ति वेदाः, "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनं, एतस्मिन्खल्वक्षरे गार्ग्याऽऽकाश ओतश्च प्रोतश्च, अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दति" इत्याद्याः । अत्र वेदा — इति सामान्यग्रहणं कारणवादस्य तदाश्रितोपासनादिवादस्य च तच्छेषतया तदेकवाक्यतां सूचयति । तदेतदाद्ये प्रसवे दर्शितं, यस्याववोधनफलः सकलोऽपि वेद" इति । अथापूर्वादिवाद एव कारणस्य स्वरूपोपवर्णनेन कारणवाक्यशेषः किं न स्यादित्याशङ्क्याह तं त्वामित्यादि । अपूर्वादिवाक्यप्रतिपाद्यत्वमवमृशता तमित्यनेन काक्वाऽपूर्वादिवादस्य कारणवाक्यशेषत्वे विरोधं सूचयति । यद्यपि स एवात्मा कारणं कार्यं च तथापि कार्यकारणभावनिर्वाहाय कथञ्चिदपि पूर्वाऽपरभावोऽवश्यवाच्य इत्यस्ति विरोधः । न चापूर्वमनपरमिति देशपरीच्छेदो व्यावर्त्यते । अनन्तरमबाह्यमिति च वस्तुपरिच्छेद इति वाच्यम् । तत्रैव प्रागि'दममृतमिदं ब्रह्मेदं सर्वमिति सर्वसामानाधिकरण्येन सकृदभ्यस्तस्य देशवस्तुपरिच्छेदाप्रसङ्गात् । हेतुकार्यत्वं पुनरत्रैव प्रसक्तं, "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । इन्द्रो मायाभिः पुरुरूप ईयत" इति, अन्यत्रापि "तदात्मानं स्वयमकुरुत, तन्नामरूपाभ्यामेव व्याक्रियत" इत्यादौ तथारूपमुपवर्णितम् । ततश्च तथैव परमार्थस्तात्पर्यविषयो माभूदिति, तद्विपरीतपरमार्थरूपमपूर्वमनपरमित्यादिना प्रतिपाद्योपसंहरति इत्यनुशासनमितीति युक्तमित्यभिप्रायः ।

नन्वेवमत एव विरोधात्कारणवदोऽपि नापूर्वादिवाक्यशेषः स्यादित्यत आह अहेत्विति । अहेतुकरणीयः हेतुकार्योत्तीर्णः परः काष्ठाभूतः स्वभावो यस्य न तमप्युत्तीर्णान्यस्वभाव इति परग्रहणम् । अर्थाच्च कारणभावाऽपरस्वभाव इत्युक्तं भवति । तथा च न स्वपदार्थान्वयेन

कारणवाक्यमपूर्वादिवाक्यैकवाक्यमिति भ्रमः। किं तर्हि तदुपलक्षणेन तच्चाहिनेव स्रजो ऽभूतेनापि कारणत्वेन सम्भवतीति न विरोध इत्यभिप्रायः। तं त्वां, परमात्मानं हेतूयतां हेतुमात्मन इच्छताम्। सुप आत्मन इच्छायां क्यच्प्रयोगेण स्वच्छन्दे नैवैषा हेतुस्वभाव आत्मेति संप्रतिपत्तिः नाशास्त्रमूलेति सूचयितुं, हेतुं अधिजगत्। विभक्त्यर्थेऽव्ययीभावः। जगति, विचिनोमि। कुतोऽमीषामेषा-हेतुस्वभाव आत्मेति सम्प्रतिपत्तिरित्यन्विच्छामि। नास्त्येव शास्त्रे तद्धेतुरिति जगतीत्युक्तम्। तत्रापि स्वप्नादिवज्जगतोऽवस्तुत्वेऽपि यथायथं सर्वव्यवहारनिर्वाहसम्भवेन परिणामित्वानपेक्षया सतस्तद्धेतोरसुलभत्वेन भ्रम एवायुष्मताम्, तथा सम्प्रतिपत्तौ हेतुरिति विचित्याध्यवस्यामीत्यभिप्रायः ॥ ८८ ॥

एवमुपादानोत्तीर्णस्वभावः परमात्मा शास्त्रकण्ठोक्त्या दर्शित इत्युपपादितम्। केचिदनुपादान-मेव परमात्मा सर्वज्ञत्वादिविशिष्टस्वभावो निमित्तमेवेत्यातिष्ठन्ते। तत्राप्यनन्तरमबाह्यं, सबाह्याभ्यन्तरो ह्यज इत्यादिश्रुतिविरोधः। यद्धि विशिष्टस्य स्वरूपं यस्य तद्विशेषणं तदन्तरं यच्च विशेषणं तद्बाह्यं, स्वरूपबहिर्भावात्। अत एव न स्वयमेव बाह्यमभ्यन्तरं च भवति। विशेषणस्याबाह्यान्यत्वात्। अथ बाह्याभ्यन्तराभ्यां सह वर्तत इति सबाह्याभ्यन्तर उच्येत, तन्न, अनन्तरमबाह्यमिति विरोधात्। तत्पुरुषपक्षेऽपि बाह्यविषेषापेक्षया स्वरूपस्यान्तरत्वेनानन्तर-मित्यनेन विरोधस्य दुस्तरत्वात्। एवमुदाहृतश्रुत्युपपत्तिसिद्धमपि निमित्तोत्तीर्णपरस्वभावत्वं परमात्मनः श्रुतिकण्ठोक्त्यापि दर्शयन्नाह —

ईशानमीश जगतामुदितोपधानं
त्वामीशनीभिरिदमीशत इत्युदीर्य।
ईशात्ततः परमशेषविशेषहीनं
ब्रह्माऽऽमनन्ति परमं भवतस्स्वभावम् ॥ ८९ ॥

अत्र हे ईशेति सम्बोधनप्रयोजनं पूर्ववत्। ईशनीभिः, ईष्टे आभिरिति "करणे ल्युट्"। इदं मायाऽविद्याशक्तिभिरुपाधिभिः, मायाशक्तेरेकत्वेऽपि शक्त्योपाधिकशक्तिबहुत्वेन बहुवचनम्। इदं विश्वं, ईशत इति विकरणव्यत्ययेन श्रुतस्यायमनुकारः। ईष्टेऽत्र शेषविवक्षाभावात् "अधीगर्थदयेशां कर्मणी"ति न षष्ठी। "य इमाल्लोकानीशत ईशनीभिरि"ति बहुवचनश्रवणेऽपि "इदमीशत"—इतीह सामान्यैकवचनम्। "य एको जालवानीशत ईशनीभिरि"ति सामान्यविवक्षाभिप्रायेण कृतम्। इति शब्दः श्रुतिप्रवृत्तिप्रकारप्रदर्शनार्थः। एवंप्रकारप्रवृत्तैर्"य एको जालवानीशत ईशनीभिरि"त्यादिमन्त्रैः।

त्वां परमात्मानं उदितं, अस्मिन्नेव प्रकरणे कारणत्वोपाधिर्मायाविद्येति निरूपितम्। उपधानं, उपाधिर्यस्य तं तथाभूतम् । जगतामीशानं, अविशेषेण स्वरूपस्थितिप्रवृत्तिषु सर्वशोनियन्तारम्। उदीर्य, ततः, मायोपाधिकात् तस्मादीशात् परं ईशतोत्तीर्णं, भवत ईश्वरस्य परमं परा सर्वोत्तरा ईशादिविषयप्रनेव परवाधरहिता मा यस्मिन्तं सर्वत्राधावधिं एवं नेश्वरत्वादिवत्परोपाधिकं भावं सत्तामात्रम् । अशेषविशेषहीनं, प्रतिषिद्धाऽशेषविशेषं ब्रह्मामनन्ति, श्वेताश्वतराः। यद्वाऽशेषविशेषहीनं, "अथात आदेशोनेति नेत्या"दिषु यत्प्रसिद्धं ब्रह्म तदेव भवतः परमं सर्वोत्तरं स्वभावमामनन्तीति योजना। श्वेताश्वतराः खलु "य एको जालवानीशत ईशनीभिः सर्वाल्लोकानीशत ईशनीभि"रिति । जालेन जालिको मत्स्यानिव मायाशक्तिभिरेव मायीभूतभौतिकानीष्ट इति मायोपाधिकमीश्वरं प्रकृत्य "प्रत्यङ्जनास्तिष्ठति सञ्चुको चान्तकाले संसृज्य विश्वा भुवनानि गोपा" इति तस्येशानप्रकारं प्रतिपाद्य तस्यैवेशस्य "स नो देवश्शुभया स्मृत्या संयुनक्त्वि"ति मुक्तिहेतुविद्याप्रार्थनामभिधाय तदीश्वरानुग्रहलम्भनीयविद्याविषयविवेचयिषया ततः परं ब्रह्म परं बृहन्तमिति। ततः प्रकृतादीशात् परमीशतोत्तीर्णं, तस्यैव स्वभावभूतं परं ब्रह्म दर्शयित्वा तस्यैव ज्ञानं मुक्तिसाधनं, न त्वीश्वरोपासनं, न खलु जीव ईश इति च। स्वभावभिदुरं तत्त्वान्तरमित्यभिप्रायेण। "यथा निकायं सर्वभूतेषु गूढं विश्वस्यैकं परिवेष्टितारं, ईशं तं ज्ञात्वाऽमृता भवन्ती"ति । तस्यैव परस्य जीवेशभावाभिधानपूर्वकं, तज्ज्ञानादमृतत्वमाम्नाय पुनश्च, "वेदाऽहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति। तस्यैवेशानोपाधितमश्शब्दितमायातीतस्य वेदैकसमधिगमनीयत्वोक्तिपूर्वकं तद्वेदनादन्यत्साधनं न विद्यत इति प्रशस्य, तस्यैव जीवजगदीशभावापत्तौ विकारित्वशङ्कायां "यस्मात्परं नापरमस्ति किञ्चित्, य एव परं कारणं परं कार्यं च, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, य एवाणीयानल्पतरः प्लुष्यादिशरीरो जीवः ज्यायान् विश्वशरीर ईश्वरश्च, स वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः निश्चलस्स्थाणुरिव दिवि द्योतनात्मके स्वमहिम्न्येवाधिकृतस्तिष्ठति, तेनेदं पूर्णं पुरुषेण सर्वमि"ति विश्वादिभावेप्यविक्रियत्वं प्रतिपाद्य, पुनस्तमेव ततः परं ब्रह्मेत्युक्त ईशोत्तीर्णस्वभावमशेषविशेषनिषेधेनामनन्ति। ततो "यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमिवापियन्तीति विश्वस्मादुत्तर ईश्वरः, ततोपीश्वरादुत्तरं, ततः परमुत्तराभावात् उत्तरतरं यदिति प्रागुक्तावमर्शः, तदरूपं रूपरहितं नामयातीति नामयम्। "आतोऽनुपसर्गे कः"। तन्न भवतित्यनामयम्। नामरहितं तन्नामरूपाभ्यामेव व्याक्रियतेति श्रुतस्यायं प्रतिषेधः। यद्वा जीवो जगदीश्वर इत्यनिरूपणीयं तर्हि तन्नास्त्येव न अनामयम्। आमयः अभावः तद्रहितं। सत्ताशेषो हि सर्वः प्रतिषेध इत्यभिप्रायः। "य एतत् हेतुकार्यातीतं आत्मतत्वं ये विदुरमृतास्ते भवन्ति। इतरो अन्योऽसावन्योऽहमस्मीति ईश्वरमुपासीना अपि दुःखमेवापियन्ति। यदाहच्चैष एतस्मिन्नुदर-

मन्तरं कुरुते अथ तस्य भयं भवति, तत्वेव भयं विदुषो मन्वानस्ये"ति हि श्रूयते। एव-"मक्षरात्परतः परः, द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥ प्रसूतिनाशस्थितिहेतुरीश्वरः त्वमेव नान्यत्परतश्च यत्पदमि"त्याद्युदाहरणेन हेतुकार्योत्तीर्णपरमात्म-तत्वप्रतिपादनप्रपञ्चस्तु सिद्धान्तसिद्धाञ्जनेऽनुसन्धेयः। तस्माद्धेतुकार्यातीतविशुद्धस्वभावः परमात्मा शास्त्रप्रतिपाद्य इति सिद्धम् ॥ ८९ ॥

प्रकरणावयवार्थोपसंहारपद्यावतारः प्रागुदीरित एव —

इति परमरहस्यं पण्डिताखण्डलानां
विमलमतिविमृग्यं वेदतात्पर्यगत्या ।
परमशिवपदस्याहेतुकार्यात्मकत्वं
प्रसव उदितमस्मिन्सप्रमाणं तृतीये ॥ ९० ॥

परशिवपदस्यास्तित्वमेव तावद्रहस्यम्। सांख्यगन्धिसमवायेऽप्रकाशनीयम्। तस्य विश्वहेतुत्वं रहस्यतरम्। हेतुकार्योत्तीर्णस्वभावत्वं तु रहस्यतममिति परमरहस्यमित्युक्तम्। सप्रमाणमिति आगमोपपत्त्यादीन्युक्तानि प्रमाणानि। अहेतुकार्यात्मकत्वं, हेतुकार्योत्तीर्णस्वभावत्वमित्यर्थः। शेषपद-जातव्याख्यानं तु पूर्ववदेवेति सर्वमवदातम् ॥ ९० ॥

इति श्रीशिवतत्त्वरत्नकलिकाव्याख्यायामामोदरञ्जनाख्यायां

विशुद्धवासनोल्लासस्तृतीयः ॥



॥ श्रीः ॥

## अथ तुरीयोल्लासः

अनुस्यूतं यत्तद्व्यतिभिदुर नामार्थरचने
जगत्येकाकारं सदिदमिति सद्भावविमितम् ।
परं धामास्मीति प्रतिपदयमानः प्रतिपदं
पदं भूमाऽऽनन्दं विपदपदमासीदति पुमान् ॥

एवं **सप्तचत्वारिंशता पद्यैः** परमात्मा विश्वहेतुत्वादिमललेशेनाप्यसंस्पृष्टो विशुद्धस्वभाव इति श्रुत्युपपत्त्यादिभिर्निरूपितम्। तद्यावज्जीवेश्वरस्वरूपाभेदो नोपपाद्यते तावन्न प्रतितिष्ठतीति तत्प्रतिष्ठापनायाधुना आद्यपद्ये सूत्रितं तदनन्यत्वमुपपादयितुं प्रस्तौति। मोक्षसाधनं च जीवपराभेदापरोक्षं तत्त्वमस्यादिमहावाक्योपपाद्यं, वाक्यार्थज्ञानं च पदार्थज्ञानायत्तम् तथा च जैमिनीयं सूत्रम् – "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" इति। तेषु पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन समाम्नायः सहोच्चारणं। तत्र क्रियैव वाक्यार्थो विवक्षित इति क्रियार्थेनेत्युक्तम्। वाक्यार्थप्रत्ययार्थेनेत्यर्थः अथ कुतस्तद्भूतानामेव पदानां वाक्यार्थप्रत्ययाय समुच्चारणं अनपेक्ष्यैव पदार्थान् पदानि समुच्चार्यन्ताम्। नार्थस्य तन्निमित्तत्वात् प्रतीतानां पदार्थानां वाक्यार्थप्रत्यये निमित्तत्वादित्यर्थः। तत्र तत्पदार्थो हेतुतोत्तीर्णः प्रत्यगात्मावसायी परिशोधितः। त्वंपदार्थोऽपि जीवतोत्तीर्णः परमात्मावसायी परिशोधनीय इत्ययमारम्भः। **पूर्वप्रसवे तावत्** परमात्मनोहेतुस्वभावत्वनिरासाय, "जीवात्मना भवनमत्र तवेश सर्गे" इत्यादौ प्रत्यगात्माभेद उपक्षिप्तः। स च "तत्वमसि", "अयमात्मा ब्रह्म" इत्यादिमहावाक्यैरुपदिश्यते। "यदर्थप्रतिपत्यर्थमितरोवाक्यविस्तरः। साक्षाद्वा व्यवधानाद्वा तन्महावाक्यमुच्यते"। यदि च हेतुस्वभाव एव परमात्मा स्यात् स तदभेदोपदेशा-अनुपपन्नः स्यात्। शब्दान्तरादिभिर्जीवेशभेदावगमात्। "य आत्मनि तिष्ठन्नात्मनोन्तरः एष त आत्मान्तर्याम्यमृतः नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादि-शब्दान्तरम्। शब्दान्तरे चात्मभेदः कृतानुबन्धत्वात् आधाराधेयभावादिना "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वन्तर" इत्यादिरभ्यासः। अत्र एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यादिति। "एष त आत्मा सर्वान्तरः "एष त आत्मा सर्वान्तरः" इत्यभ्यासो जीवेश्वर भेदविषयो नीयेत, "द्वा सुपर्णा सयुजा सखाया," "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टावि"त्यादिः संख्यापृथक्त्वनिवेशितत्वात् संख्यया जीवपरमात्मभेदस्स्यात्। "ज्यायान्पृथिव्या ज्ययानन्तरिक्षात्, महान्तंविभुमात्मानं, आराग्रमात्रो

हृच्चवरोऽपिदृष्टः, अङ्गुष्ठमात्रो रवितुल्यरूप" इत्यादिः गुणभेदः गुणश्चापूर्वसंयोगे पूर्वसंयोगाभावे भेदकः। वाक्ययोस्समत्वात्परस्परानपेक्षयाबोधकत्वात्। अथ "यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरो ऽस्मिन्नन्तराकाश" इति प्रकृत्य "एष आत्माऽपहतपाप्मे"त्यादेः। "य आत्माऽपहतपाप्मे"त्यादि च प्रकरणान्तरम्। प्रकरणान्तरे च प्रयोजनान्यत्वम्। विधेयात्मभेदः। "ईशानो भूतभव्यस्य, स एव जीवः स्वपिति प्रबुद्ध" इति संज्ञाभेदः। संज्ञा चोत्पत्तिसंयोगात् भेदिका। एवं भेदकप्रमाणसंप्लवे सति जीवेशभेदावधारणाद्विश्वहेतुरीश्वरो नियन्ता जीवोऽनीश्वरो-नियन्तव्य इति व्यवतिष्ठेत। न च तथा व्यवस्था युक्ता तत्त्वमसीत्याद्यभेदोपदेशविरोधादित्यभिप्रेत्य **जीवेशभेदमुपपादयन्नाह —**

**नित्यं निरर्गलविसृत्वरदर्शनेश-**
**स्त्वं चेतनो हिरुगहंमतिसन्निरुद्धः।**
**आतः कथं पृथगवस्थितरूपयोर्वा-**
**मैकात्म्यमीरयतु तत्त्वमसीति शम्भो! ॥ ९१ ॥**

अत्र **शम्भो इति** सम्बोधनेनशंभवत्यस्मादिति। मितद्रवादिडुप्रत्ययान्तव्युत्पत्त्या। "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति शब्दान्तरम्। रूढ्या संज्ञां च भेदहेतुं सूचयति। **त्वं, नित्यं,** सर्वदा**निरर्गलं,** अर्गलाभावो यथा तथा निर्निरोधमित्यर्थः। **विसृत्वरे,** "सर्तेः क्वरप्"। यावद्विषयं विसरणशीले। ननु जीवस्यैवाक्षादिद्वाराऽर्गलनेन कुण्ठितप्रवृत्तिके साधननिरपेक्षत्वादित्यभिप्रायः। **दर्शनं,** साक्षात्कारः ईशाईशनं, "गुरोश्चहल" इति भावे अप्रत्ययः। **यस्य स तथाभूतः।** यद्यपि जीवस्य दर्शनेशे स्तः तथापि न ते बन्धस्य निरर्गलविसृत्वरे। मुक्तस्यापि न नित्यमिति गुणभेदमनेन भेदहेतुमभिप्रैति। न केवलं शब्दान्तरादि-लिङ्गेनैव जीवेशभेदः प्रतिपत्तव्यः। किन्तु स्वशब्देनापीत्यभिप्रायेणाह **चेतनो** जीवो **हिरुक्** पृथक् अन्यः। **अहंमत्या,** अविद्यया "अविद्याऽहंमतिस्त्रियां" इत्यमरः। **सन्निरुद्धः,** सं अभेदार्थः निर्निकामार्थः। एकलोलीभावेन निकामावृतस्वभाव इत्यर्थः। "तस्मान्मायीसृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" इति हि श्रूयते। अनेन ज्ञाज्ञौ द्वावजावीशानीशावित्यादिगुणभेदवचनमनुसार्यते। **पृथगिति** प्रकरणभेदाभिप्रायम्। **अवस्थिते** असङ्कीर्णे **रूपे आतइति** अतश्शब्दार्थो निपातः। **पृथगिति** प्रकरणभेदाभिप्रायम्। **अवस्थिते** असङ्कीर्णे **रूपे** तयोर्वा, चेतनस्य तव च, **जीव – इति ईश इति च ययोः।** अनेन द्विवचनेन संख्यासंगृहीता। तयोर्वा, चेतनस्य तव च, **ऐकात्म्यम**भेदं **तत्वमसीति, इति शब्दः** प्रभृत्यर्थे। "अयमात्मा ब्रह्मे"त्यादिसंग्रहार्थः।

तत्त्वमस्यादिवाक्यं कथमीरयतु। सम्भावनायां लोट्। न कथञ्चिदपि तादात्म्यप्रतिपादनं तत्त्वमस्यादेस्सम्भाव्येत। किन्तु तथारूपोपासनपरत्वं, ताज्जात्यविवक्षा वा, विशिष्टाभेदप्रतिपादनं वोपगन्तव्यं स्यात्। न च तद्युज्यते, श्रुतहानाश्रुतकल्पनाप्रसङ्गात्। सामानाधिकरण्यस्य पदार्थ-स्वरूपाभेदपरत्वात् विशिष्टाभेदानुपपत्तेश्च। अतोऽभेदोपदेशादहेतुस्वभाव – एव परमात्मे-त्यभिप्रायः॥ ९१॥

हन्तैवं शब्दान्तरादिनामानवति जीवेशभेदे तदभेदोपदेशानुपपत्तिरेव इत्याशङ्क्य, सत्यमेवं, किन्तु येन जीवेशेति विशिष्टरूपेण शब्दान्तरादिलिङ्गभेदेन भेदस्संभाव्यते, न तेन रूपेण वयं तदभेदं ब्रूमः। किं तर्हि? परस्वभावेनसत्तामात्रात्मना, तत्र च न शब्दान्तरादिभेदलिङ्गमस्तीत्यभि-प्रायेण परिहरन्नाह —

सर्वज्ञशक्तिमपि सर्वनियामकं त्वां
सर्वक्रियाफलदमीश्वर! सर्वजन्तोः।
भूयः प्रपञ्च्य परमेण भवन्तमेव
भावेन वेदयति तत्त्वमसीति वेदः ॥ ९२॥

अत्रहेईश्वरेति सम्बोधनेन तत्त्वमादिपदप्रवृत्तिनिमित्तभेदेन जीव ईश्वर इति भेदस्याभ्युगमं सूचयति। त्वां मायिनं, सर्वज्ञशक्तिं, अत्र ज्ञशब्दो भावपरः। जानातीति ज्ञः। ज्ञस्य च भावः ज्ञानमेव। ततश्च सर्वविषये ज्ञत्वशक्ति यस्य तमिति बहुव्रीहिरेव तेन सर्वस्यज्ञइति तत्पुरुषे शक्तिशब्दानन्वयः। सर्वाशक्तिर्यस्येति बहुव्रीहिस्तु न सम्भवति ज्ञशब्दव्यवधानादितिशङ्का न भवति। अनेन विश्वोदयहेतुत्वमुपन्यस्तम्। सर्वनियामकं, सर्वस्य जगतो नियन्तारं अस्तम्भेदेन विधारयितारं सर्वजन्तोः सर्वस्य प्राणिजातस्य ब्रह्मादिस्तम्बपर्यन्तस्य चतुर्विधभूतग्रामस्य। सर्वाः क्रियाः, शुक्लकृष्णमिश्ररूपाः। तथा च "योगाः कर्मशुक्लकृष्णं योगिनस्त्रिविधमितरेषां" इति। तासां फलानि इष्टानिष्टमिश्ररूपाणि। तथा च भगवद्गीतासु – "अनिष्टमिष्टं मिश्रं च कर्मणस्त्रिविधं फलमि"ति। तानि ददातीति। तथा तं, आभ्यां विशेषणाभ्यां स्थितिहेतुत्वमुक्तम्। अपिर्लयहेतुत्वसमुच्चयार्थः। तथाभूतं, प्रपञ्च्य। "यस्सर्वज्ञः, परास्यशक्तिः, सर्वाणि भूतान्यन्तरो यमयति, अन्नादो वसुदानः रातिर्ददातुः परायणं, तदैक्षत, सन्मूलास्सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इत्यादिभिर्विस्तरेण प्रतिपाद्य। भूय इति पुनरर्थे निपातः। तत्प्रपञ्चनमात्रेणानिष्ठित-व्यापारतां वेदस्य सूचयति। 'ल्यपैव' तत्सूचने भूयो बहुलं यथा भवति तथा प्रपञ्च्येति योजनीयम्।

**परमेणानेन,** तदुत्तीर्णसत्तामात्रात्मना । **भवन्तं** सन्तम् । भवतेश्शत्रन्तस्येदंरूपम् । **वेदः तत्त्वमसीत्यावेदयति,** भवन्तमित्यावेदयति इति च । वाक्यार्थभूततादात्म्यवस्तुसत्ता, दर्शिता। वेद – इति च शब्दगतिनिगमनीयार्थतां दर्शयति ।

**तेनेदमुक्तं भवति**-अस्ति सर्वज्ञत्वादिगुणार्णवो विश्वहेतुरीश्वरो जीवविलक्षणः शास्त्रे समधिगतः जीवश्चाविद्याकामकर्मादिमलानुगतः परिमितज्ञानादिगुणकः अनीश्वरस्समधिगतः । किन्तु तत्र शास्त्रम-विश्रान्तव्यापारं "तत्त्वमस्ययमात्मा ब्रह्मे"त्यादि तदैकात्म्योपदेशे विश्राम्यति । नचाऽत्र तादात्म्यवि-विज्ञानविधिरूपलभ्यते । **अथभिन्नार्थं** वृत्तपदसामानाधिकरण्ये तदुपासनाविधिराक्षिप्यते । "असौवा आदित्यो देव मध्वि"त्यादिवत् गौणो वा कश्चिदर्थः कल्प्यते । "यजमानः प्रस्तरः" इत्यादिवत् आभिमानिकं तादात्म्यं, मन्त्रिण इव भावनामयं गरुडत्वं इति चेन्मैवम् । वस्तुसत्ताऽव्यभिचारिणा ऽसिना तदुभयकल्पनावल्लीमूलच्छेदात् । यद्यसिंहे "सिंहस्त्वमसी"ति लौकिकव्यवहारस्स्यात् । स्ववक्तृविवक्षयाऽऽरोपविषयस्स्यात् **वेदे तु** शब्दगतिरेवाऽनुसरणीया । साचाऽसिसामानाधिकरण्यादुभयैकात्म्यसत्तावसायिनी गम्यते अथापिस्या "दहं मनुष्यश्शुक्लः पट" इत्यादिवद्विशिष्टाऽभेदइति चेतत्र वक्ष्यामः । तत्र च तादात्म्येनावबोधनीये वस्तुस्वरूपे विशेषणलेशस्याप्यनन्वयान्नशब्दान्तरादिभेदलिङ्गावकाशः । "य आत्मनितिष्ठन्नि"ति । शब्दान्तरं तावन्न विशुद्धात्मविषयम् । समानप्रकरणे "य आत्मनी"ति स्थाने "यो विज्ञाने तिष्ठन्नि"ति "यश्चक्षुषि तिष्ठन्नि"त्यादौ, "यो रेतसि तिष्ठन्नि"त्यन्ते विज्ञानोपाधिकस्यैवात्मनः श्रवणात् । अन्यत्रापि तस्यैवात्मनः स्थानतः प्रत्यभिज्ञानात्स्फुटमेव विशिष्टविषयत्वम् । **अथ** "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानि" त्यत्र न विशिष्टविषयं शब्दान्तरम् । नित्यानां चेतनानामिति विशुद्धविषयत्वात् विशिष्टस्य हि चेतनस्योत्पत्यादिश्रूयते यथा "सुदीप्तात्पावकाद्विस्फु-लिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते, तत्र चैवापियन्ति, सर्व एत आत्मानो व्युच्चरन्ति तोयेन जीवान्व्यससर्ज भूम्यां" इत्यादौ। अतो नित्यानां चेतनानां नित्यश्चेतन इति शब्दान्तराद्विशुद्धात्मभेदः स्यादिति चेन्न, लिङ्गविशिष्टमर्याद एव तावज्जीवः कर्ता भोक्ता च । "विज्ञानं यज्ञं तनुते", "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादिश्रुतेः । स चेदुत्पत्त्यप्य-याभ्यामनुबध्येत, कृतनाशादिः प्रसज्येत । अतस्तदुत्पत्त्यादिवादोलिङ्गोपाधिवृत्तिविषयो व्याख्येयः स च लिङ्गोपाधिसम्बन्धो यावदात्मभावी आमोक्षादनुवर्तते । "तदापीतेस्संसारव्यपदेशात्" इति हि **सूत्रम्** । "अमृतत्वं चानुपोस्ये"ति पूर्वसूत्रशेषे यदविद्यालिङ्गमदग्ध्वा अमृतत्वमुक्तं तदापीतेः आमोक्षादनुवर्तते । कुतः ? "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः" इति तावत्संसारव्यपदेशात् । तेऽर्चिषमभिसम्भवन्तीत्यादिगतिव्यपदेशाच्चेत्यर्थः । यद्यप्येवंपरावधिरस्तीति

विशिष्टस्य जीवस्यानित्यत्वमापद्यते तथाऽपि मोक्षस्य दुर्लभतया कस्यचिदेव कथञ्चिदेव भावात् नैसर्गिकनित्यत्ववादोऽपि विशिष्टस्योपपद्यत एव। **अन्यथा** नित्यानां चेतनानामिति विशुद्धविषयत्वे एको बहूनां विदधाति कामानिति वाक्यशेषविरोधः। विशिष्टस्यैव हि कामसम्बन्धो भोक्तृत्वमित्युक्तम्। रसँ ह्येवाऽयं लब्ध्वाऽऽनन्दी भवतित्यादौ सत्ताऽऽनन्दैकरस एवात्मा लम्भनीयोऽभिप्रेयते। तथापि विशिष्टमेव जिवमपेक्ष्यशब्दभेदव्यपदेशः। ननु विशुद्ध एवात्मनि शब्दान्तरानुबन्धो दर्शयितुं शक्यते यत्साक्षादपरोक्षादित्यादिरभ्यासोयद्यपि विशुद्धात्मविषयः तथापि विवक्षाभेदेन तस्यैवाभ्यासस्स्यात्। को विवक्षाभेदः? पूर्वत्रार्तभागप्रश्ने इन्द्रियविषयलक्षणग्रहातिग्रहग्रस्तः आत्मा पुण्यपापप्रयुक्तस्संसरतीत्यभिहिते तत्स्वरूपविवक्षया उषस्तप्रश्नोऽवतारितः। यत्साक्षादित्यादिः। तत्र "यः प्राणेन प्राणिति स त आत्मा सर्वान्तर" इति प्राणादिविविक्तस्वरूपेऽभिहिते सोऽयं गवादिवच्छृङ्गग्राहिकया विशिष्य दर्शनीय इति पुनः प्रश्ने "दृष्टेर्द्रष्टारं पश्येः "इत्यादिना निर्विशेषस्वभावोऽयमात्मेति विवक्षति। विवक्षाभेदे पुनः श्रुतिरेकस्यैव सम्प्रतिपन्ना। यथा "सत्यं त्वेव विजिज्ञासितव्यं सत्यं भगवो विजिज्ञास" इति प्राणोपाधिमतिक्रान्तस्य "प्राणा वै सत्यं, तेषामेष सत्यमि"त्युदितस्य परमार्थसत्यस्यात्मनः स्वरूपविजिज्ञासामवतार्य तद्विज्ञानसाधनानि श्रद्धादीन्यभिधाय पुनस्तस्यैवाशेषविशेषनिषेधेन स्वरूपविवक्षया "भूमात्वेव विजिज्ञासितव्यो भूमानं भगवो विजिज्ञास" इति। न चात्रात्मभेदः, "भूमासंप्रसत्दादध्युपदेशादि"ति हि सूत्रितम्। भूमा परमात्मा, यस्य वेदनं शोकतरणकारणमुपक्रान्तम्। "तरति शोकमात्मविदि"ति। संप्रसादादधिप्राणाद्युपर्युपदेशात्, "प्राणो वाऽऽकाशं या भूयानि"ति प्रकृत्य "प्राणोह पिता प्राणो माते"त्यादिना पित्रादिभावमुपपाद्य "प्राणोह्येवैतानि सर्वाणि भूतानी"त्युपसंहृत्य "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती"ति प्राणातिवादित्वमुपदिश्य "प्राणात्मन्येव वेदनीयतात्मबुद्धिर्मा पर्यवसासीदि"ति, **ततः पर आत्मा वक्तव्य इत्यभिप्रेत्य उपदिश्यते** "एष तु वाऽतिवदति यस्सत्येनातिवदति," यः परमार्थसत्येन विज्ञातेन सर्वानतीत्य वदति स एवातिवादी, न तु प्राणातिवादित्यर्थः। यत्तु "द्वा सुपर्णे"त्यादिसंख्याऽऽत्मभेदे लिङ्गमुदाहृतं, तत्र द्वा सुपर्णेति मन्त्रस्तावत्पैङ्गिरहस्येपरमात्मपरतया व्याख्यायत इति नात्मभेदेलिङ्गम्। एवं हि तत्र श्रूयते "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति, "सत्वमनश्नन्नन्योऽभिचाकशी"ति अनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्वक्षेत्रज्ञौ "येन स्वप्नं पश्यति तत्सत्वं, अथ योऽयं शारीरउपद्रष्टा स क्षेत्रज्ञ" इति। **ननु** तत्रापि सत्वक्षेत्रज्ञौ जीवेश्वरावेव। "सत्वमस्त्री तु जन्तुषु, क्षेत्रज्ञोऽक्षर एव चे"त्यादिषु, तयो स्तत्प्रयोगानुगमादिति, **नैवं**, गुणविशेषजीवयोरपि तत्प्रयोगादनेकार्थत्वे सति तदर्थव्यवस्थाऽयोगात्। तत्रोत्तरमन्त्रे "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति

जीवेशग्रहणादेतौ तौ द्वौ सुपर्णाविह सत्वक्षेत्रज्ञाविति निर्णीयत इति चेत्तर्हि तत एव द्वा सुपर्णामन्त्रार्थनिर्णये सन्दिग्धार्थसत्वक्षेत्रज्ञशब्दाभ्यां तद्व्याख्यानं पैङ्गिश्रुतेरनर्थकमेव स्यात् । येन स्वप्नं पश्यतीत्यादिना स्वप्नदर्शनसाधनं सत्वं तदुपद्रष्टा क्षेत्रज्ञ इति स्वयमेव तदर्थनिरूपणाच्च । न खलु परमेश्वरस्य स्वप्नदर्शने जीवः कारणं रूपादिदर्शने जीवस्य चक्षुरादिवत् निसर्गत एव नित्यनिरङ्कुश-ज्ञानत्वात् । न च द्वारमपि, राज्ञः परसैन्यसङ्कलने चारादिवत्, स्वतस्सर्ववित्त्वाभ्युपगमविरोधात् । जीवस्य पुनरात्मनो जीवत्वं बुद्धिसत्वोपाधिकमिति दर्शयितुं तद्विवेकाय स्वप्नदर्शनसाधनं तदुच्यते । येन स्वप्नं पश्यति तत्सत्वमिति । यद्यपि तस्य जगरादिदर्शनेऽपि बुद्धिसत्वमेव हेतुः, "प्रज्ञया वाचं समारुह्य सर्वाणि नामान्याप्नोति, प्रज्ञया चक्षुस्समारुह्य सर्वाणि रूपाणि आप्नोती"त्यादिश्रुतेः तथापि जागरे चक्षुरादिकारकभेदव्यवस्थितेर्न तद्विवेक आत्मनस्सुदर्श इति स्वप्नोपादानम् । तत्र तु बुद्धिसत्वमेव कारकादिभेदावस्थं, आत्मा तु केवलमुपद्रष्टैवेति विवेकः स्फुटतरमुपदर्शितो भवतीति शरीर – उपद्रष्टेति विशेषणाच्च । नात्रेश्वरः क्षेत्रज्ञ इति युक्तम् । तस्याशरीरत्वात् । यद्यपि बुद्धिसत्वविविक्तो जीवत्वोत्तीर्णात्माऽपि न शरीरः न क्षेत्रज्ञो वा तथापि भूतपूर्वगत्याऽपि तस्य तथा निर्देश उपपद्यते, न तु सर्वथाऽशरीरस्येशस्य । न चेशोऽपि शारीरइत्यन्यत्र विस्तरः । अथ 'उपोधिके च कर्म प्रवचनीयः' यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ततश्च शारीरे उपद्रष्टाशारीरादेव सत्वशब्दितादधिको द्रष्टाईश्वरः क्षेत्रज्ञइति विवक्ष्येत, तन्न, अथ योऽयं शारीर इति प्रथमाप्राये वचने सप्तमीप्रत्ययायोगात् । अग्यूप्राये लिखिते भवेदयमग्य् इति बुद्धिरिति ह्युदाहरन्ति । विशये प्रायदर्शनादिति च न्यायः, "वत्समालभेते"ति किमालभतिर्यजिमद्वचनः स्पर्शलक्षणालम्भसंस्कारमात्रवचनो वेति विशये गां दोग्धीत्यादि संस्कारप्राये दर्शनात्संस्कारवचन एवायमिति निर्णय इत्यर्थः । एवमत्र शारीर इति प्रथमासप्तमी-विशये प्रथमाप्रायदर्शनात्प्रथमानिर्णयो युक्तः । "यज्ञस्योपद्रष्टाऽनुमन्ता चे"त्यादौ साक्षिणि समस्तप्रसिद्धेरिह तद्विरुद्धप्रत्ययायोगाच्च । तस्माद्द्वासुपर्णेत्यत्र यद्यपि जीवेशावभिधीयेयातां तथापि स भेदस्सत्त्वतादात्म्याभिमाननिबन्धनः । तस्य जीवस्य भोक्तृत्वं च तद्विवेकेन भेदो न भोक्तृत्वं वेति पैङ्गिश्रुत्या विवक्षितमवधारणीयमिति युक्तमुत्पश्यामः । अस्य तु विस्तरः सिद्धान्तसिद्धाञ्जने द्रष्टव्यः ।

"ऋतं पिबन्तावि"त्यपि विशिष्टभेद एव गम्यते । न विशुद्धात्म भेदः । सुकृतस्य लोके, ऋतं पिबन्तावितिवचनात् शरीरादितादात्म्याभिमानाभावे सुप्तादावात्मनः कर्तृत्वभोक्तृत्वादर्शनात् विशिष्टात्मभेदश्च न नो वारणीयः । अत्र न भिन्नयोरेव सतोर्जीवेशयोः गुहाप्रवेशः । किं तर्हि बुद्ध्यादितादात्म्याभिमानलक्षणगुहाप्रवेशनिबन्धन एव जीवेशभेद इति दर्शयितुं ऋतं पिबन्तौ,

गुहां प्रविष्टाविति शत्रन्तसामानाधिकरण्यव्यपदेशः । एतेन ज्ञाऽज्ञौ द्वावजावीशानीशाविति विशिष्टात्मभेदविषया संख्या व्याख्याता । एवमेव महान्तं विभुमात्मानं, आराग्रमात्र इत्यादिगुण-भेदोऽपि विशिष्टात्मविषये दर्शयितव्यः । नहि बुद्धेर्गुणेन आत्मगुणेन चैवाराग्रमात्रइत्यभिसम्बन्धः, येन विशुद्धात्मन एव गुण भेद आशङ्क्येत । तथा सति आराग्रमात्रः, अङ्गुष्ठमात्रः, "वालाग्रशत-भागस्यशतधा कल्पितस्य च । भागो जीवस्य विज्ञेयः स चानन्त्याय कल्पते" ॥ इत्यादि-विरुद्धोन्मानविरोधात् । स्वभावादल्पत्वे तदानन्त्यक्लृप्तिवचनविरोधाच्च । न चेह गुणत आनन्त्यं विवक्षितम् । अध्याहारगौरवात् । न च स्वरूपविकारेणानन्त्यं, प्रभादिवत्, विकारित्वे-अनित्यत्वापत्तेः । अतोऽयमभिसम्बन्धः । बुद्धेर्गुणेनाराग्रमात्रोऽवरोऽपि आत्मगुणेन ज्ञान-प्रकाशात्मत्वेन दृष्टस्साक्षात्कृत इति । तथा च सूत्रम् "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्" इति बुद्धेर्गुणेनेत्याद्युन्मानोदाहरणश्रुतिसन्निहितबुद्धिगुणसारत्वादल्पत्वोत्क्रान्त्यादिव्यपदेशः, प्राज्ञस्ये-शस्येव "एषम – आत्मान्तर्हृदयेऽणीयान्व्रीहे र्वायवाद्वा" इत्यादिहृदयायतनत्वोपाधिकाणीयस्त्व-व्यपदेश इति सूत्रार्थः । प्रकरणभेदस्तु जीवेशभेदविषयो नास्त्येव मानान्तरगमनीयत्वेन शास्त्रे तयोरप्रतिपाद्यत्वात् । विशुद्धतत्स्वरूपाभेद एव हि शास्त्रे प्रतिपिपादयिषितः । तत्र "अथ यदिद-मस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाश" इत्यादि न परमेशप्रकरणम् । "तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति तदुपास्तिविधिपरत्वाऽवगमात् । तस्य पुन"रेष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोपिपासः सत्यकामस्सत्यसङ्कल्प" इत्याद्युदितस्यो-पासनाशुद्धौ विशुद्धप्रत्यगात्मभूतस्वभाववेदनाय कैवल्यफलाय तमेव "यआत्माऽपहतपाप्मा विजरो विमृत्युरि"त्यादिना पुनः प्रत्यवमृश्य सोऽन्वेष्टव्य" इत्युपदिश्य, तमेव जागराद्यवस्थासंस्पृष्टपरिशुद्ध-प्रत्यगात्म भूतमुपदिदिक्षति – "य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्यस्वेनरूपेणा-भिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति य एष स्वेन रूपेणाभिनिष्पद्यते एष आत्मा य उपास्यः प्रक्रान्त" इति सामानाधिकरण्येनोपास्यस्यप्रत्यगात्मस्वभावत्वंप्रागप्युपक्षिप्तम् । "एष संप्रसाद" इत्यादिजीवपरामर्शोऽन्यार्थः । "यत्परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते तदेष आत्मेति" सम्प्रसादशब्दितजीवोपसंपत्तव्यतया दहरप्रतिपत्त्यर्थो, न तु स्वप्राधान्येन जीवप्रतिपत्त्यर्थ एव । येन दहराकशो जीव इत्याशङ्क्येतेत्येवमर्थकमन्यार्थश्च परामर्श इति । सूत्रं तु – "आविद्यक-जीवरूपभेदापेक्षया तस्यैवेहोपास्यताया निराकार्यत्वात्," नत्वभिनिष्पन्नपारमार्थिकब्रह्मस्वरूपापेक्षया अत एवोत्तराच्चेत् "य आत्माऽपहतपाप्मे"त्यादिप्रजापतिवाक्याज्जीवोदहरस्स्यादित्याशङ्क्या-"विभूतस्वरूपस्तु स परमात्मैव परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इति हि श्रूयते इति समाहितम् । तत्सामान्यादितरत्राऽपि तथात्वमेव विवक्षितम् । इह पुन"र्य एषोऽक्षिणि पुरुषो दृश्यत - एष आत्मेति होवाच, एतंत्वेव ते भूयोऽनुव्याख्यास्यामि

य - एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाच, एतंत्वेव ते भूयोऽनुव्याख्यास्यामि तद्यत्रैतत्सुप्तस्समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच, एतं त्वेवते भूयोऽनुव्याख्यास्यामि एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इति तमेवात्मानमनुकृष्यानुकृष्य जागराद्यवस्थायां यावज्जीवत्वात्क्रमेणोत्तार्य उपसंहरति। तदेवं सति न विशुद्धात्मनि प्रकरणभेदो भेदहेतुरिति। संज्ञाभेदस्तु प्रवृत्तिनिमित्तसापेक्ष इति विशिष्टजीवेशभेदहेतुरिष्यत एवेति न नः क्षतिः। तत्सिद्धं परस्वभावेन सत्तामात्रात्मना तत्त्वमसीति जीवेशतादात्म्यमवबोध्यत इति ॥ ९२ ॥

**अथापि** स्यात्कठवल्लीषु तावदस्ति - "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥" इति देहातिव्यतिरिक्तजीवविषयो मृत्युं प्रति **नचिकेतसः प्रश्नः**। अपरश्च, "अन्यत्र धर्मादन्यत्राऽधर्मादन्यत्राऽस्मात्कृताऽकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे"ति परमात्मविषय इति, प्रश्नभेदादात्मभेदोऽवश्याश्रयणीयः न चैकस्यैवात्मनो विवक्षाभेदेन प्रश्नभेद इति युक्तम्। त्रयाणामेवमुपन्यासः प्रश्नश्च इति **सूत्रविरोधात्** त्रयाणामग्निजीवपरमात्मनामेव प्रश्नोपन्यासौ न प्रधानादेः। अतोऽत्र न प्रकरणे ज्ञेयं तदुपन्यस्यत इति सूत्रार्थः। तत्र "सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण"॥ इत्यग्नेः प्रश्नः। "प्रते ब्रवीमि तदुमे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन्। अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धित्वमेनं निहितं गुहायाम् ॥ लोकादिमग्निं तमुवाच तस्मै य - इष्टका यावतीर्वा यथा वा"। **इत्युपन्यासः** "येयं प्रेत" इति जीवस्य प्रश्नः। "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्"॥ **इत्युपन्यासः**। "अन्यत्र धर्मादि"ति परमात्मनः प्रश्नः। "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्" इत्यादिर्बहुविस्तर उपन्यास इति।

**अत्र कश्चित्** - "येयं प्रेत" इति नायं देहादिव्यतिरिक्तजीवास्तित्वप्रश्नः। "स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं जरया बिभेति। उभेतीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ सत्वमग्निमि"त्यादिकाग्निविषयप्रश्नानुरोधेन स्वर्गलोके गन्तुरतिरिक्तजीवस्य निश्चितत्वेन नचिकेतसः तद्विषयप्रश्नायोगात्। किं तर्हि? मोक्षप्रश्नः प्रेते परित्यक्तचरमशरीर इत्यर्थः। अन्यत्र धर्मादिति च न परमात्मप्रश्नः। धर्मादेस्सर्वस्यापि कालावच्छिन्नतया कृताऽकृतादन्यत्र भूतादित्यादि नैव तत्सिद्धौ शेषवैयर्थ्यात्। **किं तर्हि?** सकलेतरविलक्षणोऽपायोपेयोपेतृप्रश्नः।

धर्मात्प्रसिद्धोपायादन्यत्र विलक्षण उपायः, अधर्माद्धर्मभिन्नाद्धर्मसाध्यात्प्रसिद्धादुपेयादन्यत्र विलक्षण उपेयः, अस्माद्बुद्धिस्थानात्प्रसिद्धादुपेतुरन्यत्र विलक्षण उपेता । कृताऽकृतादित्यादिधर्मादीनां विशेषणं कृताकृतं, आरब्धापरिसमाप्तं वर्तमानमित्यर्थः । एतत्त्रितयं यत्तत्पश्यसि तद्वदेति । सर्वमेतदसम्बन्धमिव नः प्रतिभाति । शब्दगतिस्वरसभङ्गेन परोक्षोक्षामालमूलत्वात् प्रेते मनुष्ये अयं परित्यक्तशरीर आत्माऽस्ति नास्तीति देहातिरिक्तात्मसदसद्विचिकित्सा हि वाक्यस्वरसादवगम्यते । न तु प्रेत - इति चरमशरीरत्यागविवक्षायामपि मोक्षसदसत्त्वविचिकित्सा । नायमस्तीति चैक इतीदं शब्दस्य प्रकृतमनुष्यात्मपरत्वेन मोक्षशब्दाभावात् । अग्निविद्याप्रश्न एव स्वर्गलोका अमृतत्वं भजन्त इति नचिकेतसो मोक्षसद्भावस्य निश्चितत्वाच्च अपि च मोक्षापेक्षयैव शरीरस्य चरमत्वमिति । प्रेत इति तत्त्यागविवक्षायां मोक्षविचिकित्सानुपपत्तिः । तस्माद्देहातिरिक्तजीवास्तित्वप्रश्न एवायमिति युक्तम् । नन्वग्निविद्याप्रश्नादेव तस्य जीवास्तित्वनिर्णयोऽपि गम्यत इत्युक्तम् । सत्यं, अस्ति निर्णयः । स तु अद्यत्वइव तदात्वेऽपि अविदुष एव वैदिकसमयानुप्रवेशमात्रेण पारलौकिक विस्रम्भात् । अयं तु तत्स्वरूपविविदिषया प्रश्न इत्युपपन्नम् । अन्यत्र धर्मादित्याद्यपि नात्यन्तपरोक्षवृत्त्या विलक्षणोपेयादिपरत्वेन कुकाव्यमिवनेयार्थमापादयितुं युक्तम् धर्मादन्यत्रेति हि धर्मसामान्यादन्यत्वं गम्यते । अधर्मादिति च धर्मसाध्येऽत्यन्तपरोक्षं, अस्मादिति च यथा समभिव्याहृतेन तथा मानान्तरसन्निहित उपेतरि स्वरसं कृताकृतादित्यादेर्धर्मादिविशेषणत्वे अन्यत्र भूतादिति पुनरन्यत्रग्रहणमनर्थकम् । "यत्पुनरिदमुक्तं परेण, अन्यत्र धर्मादधर्मादिति प्रसिद्धपुण्यपापविलक्षण उपायः अन्यत्रास्मात्कृताऽकृतादित्यादिना कालानवच्छेद्यः प्रसिद्धस्वर्गादिविलक्षणः परमात्मोपेयः उपेयान्तर्भूतत्वात् उपेताप्यर्थात्पृष्ट" इति तत्राभिधीयते — एकस्मिन्वाक्ये एवं विभज्य कल्पना न युक्ता । हेत्वभावात् अन्यत्र धर्माद्यत्तत्पश्यसि इत्यावृत्त्या वाक्यभेदो हि स्यात् । अन्यत्र धर्मादित्यादि यत्तत्पश्यसितद्वदेति चैकोऽर्थः प्रतीयते । "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति च जैमिनिः । अथ "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वाम्" ॥ इति साधनान्तरप्रतिषेधपूर्वकं परमात्मवरणीयताहेतुभूतभक्तिलक्षणोपायोपन्यासोऽपि दृश्यतेय। यस्य हि परमात्मा निरतिशयप्रियः स तस्य प्रियतमस्सन् वरणीयो भवति प्रीतिविषयश्च प्रिय-इत्युच्यते। प्रीतिर्नाम विषयास्वादकरी निदिध्यासनपर्याया भक्तिरेव तथा च स्मृतिः – तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ इति उपन्यासानुसारेण प्रश्नवाक्यं व्याख्येयं, अपृष्टप्रतिवचनायोगात् । "नाऽपृष्टः कस्यचिद्ब्रूयादि"ति हि स्मृतिः । अत एव सूत्रकारः प्रश्नोपन्यासप्रवृत्तिक्रममतिक्रम्योदिताभिप्रायेणोपन्यासं प्रथमं निर्दिशति । अतः प्रश्नस्यैवमर्थविभागकल्पना वाक्यभेदेनेति चेन्न, परमात्मविज्ञानाय हि तत्प्रश्ने तदुपायोऽपृष्टोऽप्युपन्यसनीयः ।

अन्यथा तावन्मात्रोपन्यासस्य तद्विज्ञानापर्यवसानात् इत्यर्थप्राप्ते तदुपन्यासे पृथक्पृश्नकल्पनावैयर्थ्यात्। अन्यथाऽऽर्थिकस्याप्युपायस्य प्रश्ने कल्प्यमाने तदुपायस्याप्यग्निविद्यायाः पृथक्पृश्नोऽदृश्यतएवेति चतुर्णां प्रश्ने त्रयाणामेवेति सौत्रावधारणविरोधात्। अथ तस्योपायान्तर्गतत्वाददविरोधः, तर्ह्युपेतुरपि विशुद्धस्य प्राप्यान्तर्गतत्वोपगमात्। उपायोपेययोर्द्वयोरेव प्रश्न इति त्रयाणामिति सूत्रविरोधः। तस्मादन्यत्र धर्मादित्यादिः परमात्मविषय एव प्रश्न इति युक्तम्। जीवो हि "पुण्यः पुण्येन कर्मणा भवति पापः पापेने"ति धर्मादियोगितया धर्मादिरुच्यते। कारणकार्यात्मकं च वस्तु भूतभव्यादिरूपं भवति। अतो जीवादिवैलक्षण्याय प्रथमं पृथग्धर्मादेरुपादानमिति न वैयर्थ्यम्। तस्मात्त्रयाणामग्निजीवपरमात्मनामित्येव सूत्रार्थो न्याय्यतरः। तत्रोपन्यासस्यैव ज्ञेयज्ञानार्थतया प्रथममुपादानं। नियामकाभावे "महतः परमव्यक्त", "अनाद्यनन्तं महतः परं ध्रुवमि"त्यादिः, महत्तत्त्व-परत्वलिङ्गेन परमात्मप्रकरणं बाधित्वाऽप्रधानाद्युपन्यासः स्यादिति त्रयाणामेवेत्यवधारणानुपपत्तिरिति शङ्कायामनन्तरं प्रश्नश्चेति गृह्यते। ततश्च पृष्टस्यैवज्ञानायोपन्यासोऽत्रप्रकरणेनाऽपृष्टस्येति नियमात् प्रधानाद्युपन्यासाभावस्सिद्ध्यतीति। ततश्च जीवपरप्रश्नभेदादात्मभेद एषितव्यः। अन्यथा तत्त्वमसीत्येव सामानाधिकरण्यविरोधात्। **यथाऽऽह खण्डनकारः** – "नातत्त्वमन्यसे तावन्न तत्तदपि मन्यसे। सामानाधिकरण्यं हि भेदबुद्धिमपेक्षते॥" इति। शङ्कायामाविद्यकजीवपरभेदापेक्षया प्रश्नभेदस्स्यात्। न विशुद्धात्मभेदसिद्धिः। त्रयाणामित्यादिसूत्रं च तदालम्बनमेव। नह्यत्र प्रश्नोपन्यासविषयत्रित्वमपि सिषाधयिषितम्। किं तर्हि? सर्वथैत्र प्रश्नोपन्यासाभ्यामेवेह प्रतिपादनीयोऽर्थः प्रतिपाद्यत इत्यतः प्रधानादेरप्रसङ्ग इत्येतावदेव तात्पर्यतो विवक्षितम्। तच्चात्मतत्त्वभेदाऽभावेऽपि सिद्ध्यति। आविद्यकजीवेशभेदापेक्षयैव च पदप्रवृत्त्या स्वरूपाभेदविषयं सामानाधिकरण्यमुपपद्यत इति परिहारमभिप्रेत्य अविद्या चेत्स्यात्तद्वानात्मा जीव एव स्यात्। तयैव कथमाविद्यको जीवपरभेद इत्याशङ्क्य सनिदर्शनं तमुपपादयन्नाह —

निद्रावृतस्वमहिमेह यथैति जन्तु-
निद्राणभावमपि तत्पदपश्यभावम्।
ईश, त्वमेवमविदापिहितस्वभावो
जीवात्मभावमुपयासि तथेशभावम् ॥ ९३ ॥

इह, अस्यां संसारावस्थायां। जन्तुः प्राणी "विशेषविज्ञानोपरमलक्षणा बुद्ध्यवस्था निद्रा, यामाहुर्योगाः," "अभावप्रत्ययालम्बना वृत्तिर्निद्रे"ति। अभावस्य विषयविज्ञानाभावस्य प्रत्ययः कारणं तमः, तदालम्बना बुद्धिवृत्तिरित्यर्थः। तयाऽऽवृतस्तिरोहितः, स्वः सहजः।

न तु नटस्येव भूमिकाभेदस्तदात्वगृहीतः। **महिमा**, अयमहमस्मीति विशेषबुद्धिनिर्ग्राह्यं महत्त्वं, यस्य तथाभूतस्सन्। **निद्राणभावं** अयमहमस्मीति विशेषावेदित्वं, तमोलीनावस्था विकारत्वमित्यर्थः। अपिस्समुच्चये तच्च एति," नाह खल्वयमेवं सम्प्रत्यात्मानं जानाती"त्यादिश्रुतेः। **तत्पदस्य**, तस्या एव निद्राणावस्थायाः। पश्यतीति **पश्यः**, "दृशेश्शः"। **तद्भावं**, द्रष्टृत्वं च एति प्राप्नोति। अन्यथा अयमहमस्मीति, नावेदिषमिति प्रतिबुद्धप्रत्यवमर्शायोगात्। न चाऽनुमितिरेव सा, लिङ्गाभावात्। न च तत्कालीनतया स्मर्तव्यास्मरणं, लिङ्गं तत्काल इति विशेषविज्ञानाभावकाल एव विवक्षितव्य इत्यधुना तदसिद्धेः, संस्कारपरिमोषादिनाऽपि स्मर्तव्यास्मरणसम्भवेनाप्रयोजकत्वाच्च। **इत्याद्यन्यत्र प्रपञ्चितम्**। यथाऽयं दृष्टान्तः एवं, **हे ईशेति** प्रस्तुतदृशा सम्बोधनम्। **त्वं**, ईशस्यैवात्मभूतः परमात्मा। परमात्मैव हि **अविद्यया** ईशभूत इति ईशत्वमिति सामानाधिकरण्यम्। इममेवार्थं दर्शयितुं इह तत्सम्बोधनम्। **अविदा**, अविद्यया **पिहितः** छादितः आवृतः **स्वः** आत्मभूतः, नत्वीशत्वादिवदौपाधिकः भावः प्रकाशानन्दस्सत्तैकरस्यलक्षणो यस्य स तथाभूतस्सन् **जीव इत्यात्मा** जीवात्मा **तद्भावं**। तथाशब्दस्समुच्चये। **ईशभावं चीपयासि**।

**एतदुक्तं भवति** — यथा जन्तुर्निद्रयैव तद्विशिष्टमर्यादः चेतनः, तदुपहितमर्यादस्तद्द्रष्टा चेति भेदेन भवति, तथा प्रकाशानन्दसत्तातावन्मात्रः परमात्माऽऽत्मसत्तानुबन्धिन्यविद्यैव, तद्विशिष्टमर्यादो जीवः प्रमाता कर्ता भोक्ता कर्मज्ञानधिकारी ब्रह्मादिस्थावरान्तासु योनिषु पर्यावर्तमानस्संसरति मुच्यते वा तदुपहितमर्यादस्तु सर्वज्ञस्सर्वशक्तिस्सर्वान्तर्यामी कर्मज्ञानाराधनीयस्तत्फलदातेश्वर इति भेदेन भवति। न चैकस्यौपाधिकभेदे पृथगुपाध्यपेक्षा, एकेनैवादर्शोपाधिना बिम्बप्रतिबिम्बभेददर्शनात्। एकेनैव गृहाद्युपाधिना बहिरन्तरित्याकाशादि भेददर्शनाच्च। सोऽयमाविद्यको भेदोऽनाद्यविद्यामनुबन्धन्नां ब्रह्मात्मतत्त्वसाक्षात्कारादनुवर्तते। तत्रैवं सति नचिकेतसो जीवपरभेदालम्बनेनैव, येयं प्रेत इत्यादिप्रश्नप्रवृत्तिः। परन्तुमृत्युना, "देवैरप्यत्र विचिकित्सितं पुरा नहि सुज्ञेयमणुरेष धर्मः," इति देवरहस्यतया तत्पृष्टस्य तदुपदेशयोग्यतापरीक्षणाभिप्रायेण, "शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून् हस्तिहिरण्यमश्वानि"त्यादिना तैस्तैः कामैः प्रलोभ्यमानोऽपि यदा नचिकेता न क्षोभ्यते तदा, "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाते"ति फलभेदेन विद्याऽविद्याविभागपूर्वकं विद्याभीप्सिनं नचिकेतसं "मन्ये नत्वा कामा बहवो लोलुपन्ते"ति प्रशस्य, "नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ। यां त्वमापस्सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टे"ति। विद्यामाचार्योपदेशलभ्यां नचिकेतसस्तदुपदेशयोग्यतां च दर्शयित्वा, "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेनदेवं मत्वा धीरो हर्षशोकौ जहाति। एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य स मोदते मोदनीयं हि लब्ध्वे"ति प्रकृतप्रश्नविषयात्मविज्ञानफलं

दर्शयित्वा, "विवृतं सद्म नचिकेतसं मन्ये यत्र सीदत्येव न पुनरावर्तते", तदात्मकैवल्य-लक्षणं सद्म नचिकेतसं त्वां प्रति विवृतं अपावृतद्वारं सुप्रापं मन्ये। यस्त्वं येयं प्रेत इति विज्ञेयमात्मतत्त्वं पृच्छसीति प्रशंसनात् नूनमयमेव परमात्मा मृत्युनाऽभिप्रेतः यो मया देहादिविविक्तोऽनुयुक्तो, येयं प्रेत इति। कथमन्यथा तद्विज्ञानं श्रेयः फलमुच्येत परमात्म विज्ञानमेव हि निःश्रेयसफलं, "तमेव विदित्वाऽतिमृत्युमेती"ति श्रुतिविदितमिति मन्यमानो नचिकेतास्तमेवतृतीयं वरमालम्ब्याप्रत्तचतुर्थवरातिप्रश्नकथंताशङ्कारहितस्तमेव जीवतोत्कीर्णं परमात्मानं प्रक्ष्यामीति विस्रब्धः **अनुपृच्छति** "अन्यत्र धर्मादि"त्यादिना। यदि पुनरन्यं पृच्छेत् **प्रागुपन्यस्तं** प्रशंसादिकं सर्वमेवाद्यथार्थमापादितंस्यात्। प्रत्तवरत्रयातिक्रमश्च प्रसज्येत। ततश्च एवं विवक्षाभेदेन प्रश्नभेदेऽपि न प्रष्टव्यात्मतत्त्वभेदः, तथापि तत्र प्रश्नप्रवृत्तिर्जीवपरभेदभ्रममूलेति तदालम्बनमेव त्रयाणामिति सूत्रमुपपन्नम्। अन्था वस्तुभेदालम्बनत्वे, "स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति। महान्तं विभुमात्मानं मत्वाधीरो न शोचति य इदं मध्वदं वेदात्मानं जीवमन्तिकात्। ईशानं भूतभव्यस्य न ततो विजुगुप्सते। यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति"। इत्यादिप्रतिवचनसन्दर्भानाञ्जस्यप्रसङ्गात्। **अथवात्रयाणा-मिति** सूत्रमेवमपि शक्यं व्याख्यातुम्। अत्र, "अध्यात्मयोगाधिगमेन "देवं मत्वा धीरो हर्षशोकौ जहाती"ति योगोपक्षेपात् "यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानमात्मनि ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनी"ति तद्रूपविधानात् "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रिय-धारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाऽप्ययौ"। इति तदुपवर्णनात्, "मृत्युप्रोक्तां नचिकेतोऽथलब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्। ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरित्यन्ते दर्शनाच्च, आत्मतत्त्वप्रश्नविषयैकत्वेप्युपन्यासानुसारेणार्थिकतदुपाययोगप्रश्नोपगमादपिपरमात्मतदुपायानां त्रयाणामेवोपन्यासः। **प्रश्नश्च न साङ्ख्यीयप्रधानादेरत्र प्रसङ्ग इति तस्मादविरोध इति** ॥ ९३ ॥

एवमतिरिक्तजडाविद्योपगमेन तन्निबन्धन एव परमात्मनो जीवेश इति भेदः प्रश्नभेदादिव्य-वहारालम्बनतया निरूपितः। अधुना तदनभ्युपगमपक्षेऽपि तथाभेदमाविद्यकमुपपादयन्नाह —

**सैकः पराङ्दृशिरहंदृशिभाववृत्त्या**
**जीवः पराक्त्वदृशिमात्रतया महेशः।**
**इत्थं विकल्पितनियम्यनियन्तृभावः**
**स्वेनैव जृम्भसि निसर्गत एव शम्भो** ॥ ९४ ॥

अत्र सैक इत्यत्र, "सोऽचि लोपे चेत्पादपूरणमि"ति सोर्लोपः। "सैष दाशरथी राम" इत्यादिवत्। स इति यस्यातिरिक्ताविद्यानिबन्धनो जीवेशभेद उदितः तं प्रत्यवमृशति, पक्षान्तरोपन्यासत्वसूचनाय। य एकः, "एकोमुख्यान्यकेवला" इति दर्शनात्। कैवल्यस्खलणो, दृशिः, साक्षादपरोक्षसंविदात्मा पराञ्चतीति पराङ्, स्वमात्रावसितस्वभावात्परावृत्य दृश्यवृत्त्यात्मा सम्पद्यमानः। अहमिति दृशिभावेन, दृश्यतादात्म्याभिमानलक्षणेन वृत्त्या विशेषावस्थया जीवो नाम भवति। अत्र परङ्हंदृशिभाववृत्त्येति विशेषणादात्मा न स्वतोऽहंरूप इति दर्शयति न खल्वहन्त्वमात्मनः स्वभावः, सुप्त्यादौ स्वप्रकाशात्मलक्षणतदवभासकसामग्र्ये सत्येवानवभासेन तस्यावस्थान्तरेष्वौपाधिकत्वानुमानात्। न च सुप्तेऽहमित्येवात्मा भासते। अहमित्यनुभवन्नेवास्वाप्समिति कदापि प्रतिबुद्धप्रत्यवमर्शप्रसङ्गात्। "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीत्या" दिश्रुतिविरोधाच्च। अयमहमस्मीति विशेषणादन्यदातनजातिगुणादिविज्ञाननिषेधएवायमितिचेन्न, अन्यदा यावदयं जानात्यात्मानं जातिगुणादिकं वा तदज्ञानपरत्वात्। अन्यथा सुप्तेप्यहन्त्वविशेषविज्ञानोपगमे, "विनाशमेवापीतो भवती" त्यनन्तरवचनविरोधात्। न हि तदानीमहमित्यवभासे विदुष इन्द्रस्यात्मविनाशः स्वध्यवसानः। कथं तर्हि सुखमहमस्वाप्समित्यादिप्रतिबुद्धप्रत्यवमर्शः? तत्र ह्यहमर्थस्य स्वापकालसम्बन्धोऽवमृश्यते। उच्यतेतदात्वप्रत्युपस्थितमेवाहन्त्वमवगृह्यतदवधिकमेव पूर्वकालमात्मन एव स्वापसम्बन्धित्वमवमृश्यते। यथा न किञ्चिदवेदिषमिति प्रबोधकालप्रत्युपस्थितमेव किञ्चिद्वेदनमवगृह्यात्ममात्रसंविद एव पूर्वकालं तदभावत्वम्। अहं ब्रह्मासीत्याद्युपदेशस्तु दृशिमात्रलक्षणयैवेति नाहन्त्वमात्मनः स्वभावः। अत एव, "तरति शोकमात्मविदि"ति प्रक्रम्य लौकिकात्म बुद्धिगृहीतान्नामादिप्राणान्तादुपरि वास्तवमात्मानं भूमात्वेव विजिज्ञासितव्यः, "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे"त्यादिना प्रतिपाद्य, "स एवाधस्तात्स उपरिष्टात्सपश्चात् सदक्षिणतः स उत्तरतः स एवेदं सर्वम्" इत्येवकारेण प्रक्रान्तान्यनिषेधे नैव सर्वात्मतया भूम्न्युपवर्णिते तच्छब्दोपादानापादितपारोक्ष्यभ्रमनिवृत्तये "अथातो अहंकारादेश एवाहमेवाधस्तादित्याद्यहमेवेदं सर्वमि"त्यस्मदर्थतयाऽभिहिते, अहन्त्वं चेत्तस्य स्वभावः, तस्य परिच्छिन्नस्य सर्वात्मत्ववचनमौपचारिकमेव स्यात्। इत्याशङ्कानिरासाय पुनरहन्त्वोपलक्षितं तमेव भूमानमादिशति "अथात आत्मादेश एवात्मैवाधस्तादित्याद्यात्मैवेदं सर्वमि"ति अत्रोभयत्रापि प्रकृतभूमात्मन एवादेशो नार्थान्तरस्येति विवक्षयैवकारः। **अत्र वक्तव्यमन्यत्र प्रपञ्चितमिति नेह प्रपञ्च्यते, विस्तरभयात्।** न चाहन्त्वमेव प्रत्यक्त्वं, अहङ्कारस्यापि तत्प्रसङ्गात्। किन्त्वस्मदर्थत्वं दृक्त्वमेव वा प्रत्यक्त्वम्। वस्तुतस्तु आत्मनो न प्रत्यक्त्वं पराक्त्वं वा स्वभावः पितृत्वपुत्रत्वादिवत्परनिरूप्यत्वादित्यलं **अतिपल्लवेन। पराक्त्वेन** दृश्यवस्तुत्वेन **दृशिः**, पराक्त्वदृशिः। **तन्मात्रतया।** अत्र दृशेरेव दृश्यरूपावभासित्वोपगमात् पराक्त्वेति भावग्रहणम्। अत्र

चाहंदृशिताव्यावृत्तिः । **महेश** इति अहंदृशिमतो जीवस्यापीशत्वाद्विशेषणम् ननु महेशस्याप्यहं-वादोऽनुश्रूयते । "सेयं देवतैक्षत, हन्ताहमिमास्तिस्रो देवता – अनुप्रविश्य नामरूपे व्याकरवाणी"ति । "अहमेकः प्रथममासमि"त्यादिः । **स्मर्यते च** – "अहं सर्वस्य प्रथमः ।" "अहमात्मा गुडाकेशे"त्यादिः । तत्र कथं "पराक्त्वदृशिमात्रतया महेश" इति मात्रग्रहणमिति । **उच्यते** – उपपादितमेतद्विश्वहेतोश्चेतनवदुपचारोऽचेतनप्रधानव्यावृत्तिफल इति, बोध्यबुध्यवतारफल इति च । **रुद्रादेस्तु** शरीरोपादानादहंदृशिभाववृत्तौ सत्यामेवाविर्भूतस्वरूपतयाऽऽत्मन एवाहन्त्वेनोपलक्ष्य शास्त्रदृष्ट्या व्यपदेशः, "अहमेकः", "अहं सर्वस्ये"त्यादिः । **अत एवाऽऽत्मनो** हिततमं पृच्छते प्रतर्दनाय मामेव विजानीहीति अस्मदर्थालम्बनः परमात्मोपदेश-श्शास्त्रदृष्ट्येति **सूत्रितम्** – "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति यथाविर्भूतस्वरूपस्य वामदेवस्य, "अहं मनुरभवं सूर्यश्चे"त्यादि सार्वात्म्यव्यपदेशश्शास्त्रदृष्ट्या तद्वदित्यर्थः । अन्यथा महेशस्यापि दृश्याहंदृशिभाववृत्त्युपगमे तादात्म्येन विकारितया तदुपजनापायाद्यसिद्धिप्रसङ्गः । विक्रियते च पश्यति चेति दुर्घटमित्येतदुपपादितम् । "दृश्यं विभो किमपि दर्शयते न दृश्यमि"त्यत्र, न च दृशिरेव तथारूपो विक्रियमाणः स्वयं सिद्ध्यतीति युक्तम् । दृशिवैलक्षण्येन दृश्यत्वेनैवारोपात् । अतो दृश्यदृशिमात्रमस्तिपृथग्रूपमिति युक्तमुक्तम् । "पराक्त्वदृशिमात्रतया महेश" इति **अथाऽऽत्मनः** स्वमहिमप्रतिष्ठस्वभावस्य पराग्दृशितैव कुतः ? अतिरिक्ताऽविद्या हिनेष्यते । तदभावे कुतस्तरामुदितजीवेश्वररूप भेद इत्यत आह – **इत्थमित्यादि** । निसर्गतः, स्वभावत एव । न त्वतिरिक्ताविद्योपरागात् । स्वेन, आत्मनैव । न तु विक्रियावेशेन इत्थं दृश्यतादात्म्यातादात्म्यदृशितालक्षणप्रकारभेदेन, **विकल्पितः** विशेषेणारोपितः दृश्यदृशिभाव एव तावतारोपितः । तत्र जीवे रूप भेदो विशेष इति विशब्दोपादानं । **नियम्यः**, जीवः । **नियन्ता**, ईशः । तदुभयभावो यस्य स – तथारूपो **जृम्भसि**, स्वमात्रावसितावभासत्वलक्षणमालस्यमवधूय दृश्यदृशिभावलक्षणविश्वसर्गादौ व्याप्रियमाणो वर्तसे इत्यर्थः । "जृम्भतेरनुदात्तेतोपि चक्षिङो ञित्करणात् ज्ञापकादात्मनेपदविभाषेति परस्मैपदप्रयोगः" । अत्र **शम्भो** – इति, शं भुङ्क्ते भोजयति चेत्युभयव्युत्पत्तिर्विवक्षिता । तेन स एवैको जीवेश्वरभावेन वल्गतीत्युदितमर्थं शम्भु-समाख्यैवावष्टभ्नातीति सूचयति ॥ ९४ ॥

उक्तं तावद्दृशिमात्रात्मनो दृश्यदृशिभावे सति तदहंदृशितया जीवत्वं, तन्मात्रदृशितयेश्वरत्वमिति । एष एव तु भेदः केन विशेषेणेत्युपपादयन् यद्यविद्यामनपेक्ष्य निसर्गादेव दृशिमात्रात्मनो दृश्यदृशि-भावस्तदहंदृशितावा तर्हि स नारोपस्स्यात् । प्रकाशमात्रस्येव तत्क्रियादिप्रकाशता तदविद्यामूलत्वा-भावात् । अपि च निसर्गत इति आत्मसत्तामात्रनिबन्धनत्वे तथैव स्वभाव इति मुक्त्यभावप्रसङ्गः ।

तस्य कादाचित्कत्वे जीवेशयोरस्सादित्वं च प्रसज्येत । ततश्च कृतहानादिदोषादित्यादिशङ्कां परिहरन्नाह —

दृश्यात्मनेश तदहंदृशिताऽसुमत्वं
स्वेनाऽऽत्मना तव परागदृशितेश्वरत्वम् ।
जीवेश्वरभ्रममयीयमनादिमाया
या मानमेयमितिसंव्यवहारहेतुः ॥ ९५ ॥

अत्र **ईशेति** सम्बोधनं वक्ष्यमाणनिदर्शनोपपत्त्या तादात्म्येऽपि ताटस्थ्येनापि दृश्यदृशिभावसम्भवान्नानीश्वरवादप्रसङ्ग इति सूचयति । तव, दृश्यदृशिभावमापन्नस्य । **दृश्यात्मना** न्यग्भूतदृशितया दृश्यप्राधान्येन विशिष्टमर्यादया । **तदहंदृशिता,** तस्मिन्दृश्येऽहमित्यवभासिता । **असुमत्वं,** प्राणित्वं । "जीवप्राणधारण" इति स्मरणात् असुमत्वमिति जीवपदप्रवृत्तिनिमित्तमुक्तम् । जीवत्वमिति यावत् । न तु जीवो नाप परमात्मनस्तत्वान्तरमित्यभिप्रायः । **स्वेन,** दृश्यतादात्म्यरहितेन तदुपहितमर्यादेन ताटस्थ्येन । **आत्मना,** स्वरूपेण । पराग्दृशिता, दृश्यदृशिता । तव, ईश्वरस्येश्वरत्वम् । न तु जीवस्य, स्वरूपभूतादात्मनस्तत्वान्तरमीश्वरइत्यभिप्रायः । उक्त एष दृश्यदृशितासाधारण्येऽपि जीवेश्वर भात्रे विशेषः। **अथैष एव** विशेषो यदि स्वभावः स्वरूपसाक्षात्कारेण कैवल्यानुपपत्तिः । **अथाऽऽरोपः,** विषयाविद्यामायानिबन्धनत्वं वाच्यम् । अन्यथा तस्य निर्निबन्धनत्वे स्वभावत्वापत्तेरुक्तदोषात् । तत्रैवं सति सा यद्यनारोपितसद्भावा दृगात्मनो निर्निबन्धनदृश्यदृशिताहेतुः, सैव स्वभाव इति प्रागुक्तदोषानतिवृत्तिः । अथ साप्यारोपः, सोऽयं महावेणुगुल्मगहनावगाहो दुर्निर्गम इति यदुक्तं तत्परिहर्तव्यमित्यत आह **जीवेत्यादि । जीवईश्वर इति च भ्रमो** बाधनीयविषय एव, न स्वभावः । **तन्मयी,** तद्रूपा । इयं प्रकृता पराग्दृशितालक्षणा **अनादिमाया,** न तूक्तभ्रमानुयायितत्त्वान्तरम् । अतोऽनारोपितत्वादिविकल्पानवकाशः इति अभिप्रायः । निष्केवलात्मनि निर्निबन्धनभ्रमायोग इत्युक्तदोष निरासायादीति विशेषणम् । **उक्तमेतदधस्तात्** अनुपजातबाधविकल्पा प्राचीनदृश्यदृशिरेव भ्रमवासना मायेति ततश्च प्रवाहानादितया पूर्वपूर्वभ्रमवासनैवाविद्यादोषो निबन्धनमुत्तरोत्तरभ्रम इत्यतस्तत्वसाक्षात्कारबाध्यत्वोपपत्तेर्न मुक्त्यभावप्रसङ्गः । न वा जीवेशकादाचित्कतया कृतहानादिप्रसङ्ग **इत्यभिप्रायः** । अथ "घञि मातेर्मिमीतेर्वा मयते र्वा युगागमे । अकर्तरि च संज्ञायां कारके घञुपाश्रयात् ॥ स्त्रियामजाद्यतष्टापि मायाशब्दस्स लौकिकैः । आश्चर्यकार्यनिर्माणकारणे च प्रयुज्यते" ॥ अतः कथं पराग्दृशिता दृगतात्मनो मायेत्याशङ्क्य तन्मायात्वनिर्वाहायाह

**या मानेत्यादि ।** अत्र यो मिमीते येन वामीयते स प्रमाता प्रत्यक्षादिप्रमाणं च मानशब्देनोच्यते। "कृत्यल्युटोर्बहुलमर्थे भवन्ती" ति स्मरणात्। **मेयमक्षसन्निकृष्टादिमितिः साक्षात्कारादिः।** अनेन संक्षेपतः क्रियाकारकफलात्मकः मातृमानमेयमितयः कर्तृकरणकार्यकृतयः भोक्तृभोजनभोग्यभोगा इति व्यवहारोपाधिना द्वादशविधः प्रपञ्चः उपलक्ष्यते। केचित्तु क्रियामनपेक्ष्य नवविधं प्रपञ्चमाहुः। श्रुतौ तु "त्रयं वा इदं नामरूपं कर्मे" ति स्वरूपतस्त्रिविध उक्तः। अन्यत्र "उभेह्येते एषणे एव भवत" इति एषणाद्वैधावधारणस्य विषयसङ्ग्रहाधीनत्वादेषितव्यतोपाधिनाससाध्यसाधनरूपेण द्विविध उक्तः। तदलम्बनः सङ्गतो व्यवहारस्संव्यवहारः। "प्रादयो गताद्यर्थे प्रथमये" ति समासः। अहमिदमनेन जानामि, करोमि, भुञ्ज इत्यभिमानपूर्वको हानादानादिलक्षणः तस्य हेतुः। या, सैषा सा अनादिमायेति योजना। विना मातृमानमेयादिप्रपञ्चव्यवहार इति। केवलव्यतिरेकात्, "मायां तु प्रकृतिं विद्यादि"ति श्रुतेर्विषयान्तराभावाच्च जीवेश्वरभ्रममय्येव माया या मानादिसंव्यवहारहेतुरिति सिद्धवन्निर्दिश्यते। मानादिव्यवहारस्य मायाकार्यत्वयोग्यतासूचनाय समुपसर्गः। अन्यथावस्तुत्वे कथं तदेव प्रियमित्युपादीयेत, अप्रियमिति च हीयेत। व्यभिचरित-व्यवहारं च मायामयं दृष्टम्। यथा तदेव रजतमित्यादीयते, शुक्तिरिति हीयते। भूयश्चेन्द्रजालादावुदाहरणमित्यभिप्रायः। अथवा, सर्वस्यापि दृश्यस्य जीवेश्वरलक्षणभ्रममात्रवृत्तत्वे मानादिव्यवहारलोप-प्रसङ्ग इत्यत आह या मानेत्यादि। संव्यवह्रियते येन यच्च संव्यवह्रियते। यच्च संव्यवहरणं तत्सर्वमुच्यते संव्यवहार इति। सङ्घातरूपेणाहंदृशिवृत्तस्याऽपि श्रोत्रत्वक्चक्षुरित्यादिपृथग्रूपेण मानादिलक्षणव्यवहारवृत्तत्वमपि सङ्गच्छते। तथैवानादिभ्रमवासनादित्यभिप्रायेण समुपसर्गः। अथवा, अहंदृशिभ्रमत्वे प्रमातैवाऽध्यस्त इति तदुपकरणं प्रमाणाद्यपि तथा स्यात् ततश्च व्यवहारविसंवादापत्तिः। नहि स्वप्नारोपितराजभावस्य च्छत्रामात्यादितदुपकरणव्यवहाराविसंवाद इति युज्यते इत्यत आह – **या मानेत्यादि ।** सत्यमात्मतत्त्वदर्शनापेक्षया बाध्या एव सर्वेऽपि मातृमानादयस्तन्निबन्धनव्यवहाराश्च। किन्तु स्वकालाविसंवादिन एव स्वप्नसागरादिस्नानतन्निबन्धनशौचादिव्यवहार इव तत्कालः इत्यभिप्रायेण व्यवहारसम्यक्त्वसूचनाय 'समु'पसर्ग इति ॥ ९५ ॥

उक्तमेतदनादिवासनयैव मायया दृश्यदृशी भवतो दृगात्मनो दृश्यतादात्म्याभिमानानभि मानाभ्यामेव जीवेश्वर भाव इति तदयुक्तमिव, प्रकाशस्य ह्येष स्वभावः यद्यथा स्वगतं प्रकाश्यं प्रकाशयतीति दृगात्मा च प्रकाशो दृश्यतादात्म्यात्तथावृत्तमेव दृश्यं प्रकाशयेदिति नोक्तविशेषोप पत्तिरित्याशङ्क्यां, सत्येव तादात्म्ये दृश्यभेदस्य द्विधाऽवभासनिदर्शनेन परिहरन्नाह —

देहोऽयमित्यहमयं मनुजोऽस्मि चेति
जन्तोश्शरीरदृशिता भवति द्विधैका ।
एषा दिगीश्वर ; समस्तपराग्दृशित्वे
तेनैष जीवपरमेश्वरभेदमोहः ॥ ९६ ॥

देहेन्द्रियादयस्तावद्दृगात्मन एवान्यथावृत्तिरित्यवश्याभ्युपेयम् अन्यथा पृथक्स्वरूपसत्त्वे अहमिति तादात्म्यप्रति भासायोगात् । न च गौणोऽयमभिमानः, तथा सति "अग्निरयं वटु"रित्यादाविव भेदग्रहावश्यंभावे कायचैतन्यविवादाभावप्रसङ्गात् । अथापि स्यात्पृथक्सतोरेव दूरस्थयोर्वनस्पत्यो रैकात्म्यावभासो दृश्यते । एवं देहात्मनोरपि स्यात् । न स्यात् । द्रष्टुर्हि परस्य वनस्पत्योरविवेकादैकात्म्यावभासो युक्तः, तद्विरोधिविवेकबुद्धेस्ताटस्थ्यादागन्तुकत्वाच्च । दृगात्मनः पुनरात्मस्थदृशिस्वभावस्य नागन्तुकविवेकाभावमात्रादैकात्म्यावभासः शक्यशङ्कः । तदिदं जन्तोरित्यनेन सूचयति जाजत इति जन्तुः । 'जनेस्तुन्प्रत्ययः' । न खल्वात्मा स्वात्मनैव जायते । अनित्यत्वप्रसङ्गात् । तथा च सूत्रम् – "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य" इति । नात्मा जायते, "तत्तेजोऽसृजते"त्याद्युत्पत्तिप्रकरणेष्वश्रुतेः । "सर्व एत आत्मानो व्युच्चरन्ती"त्यादिश्रुतिश्चासम्भवद्विषयत्वाद्भक्त्या व्याख्येया । न ह्यात्मन उत्पत्तिस्सम्भवति । कुतः ? ताभ्यः, "न जायते न म्रियते वा विपश्चिदि"त्यादिश्रुतिभ्यः नित्यत्वाच्चेत्यर्थः । किन्तु, देहादितादात्म्यापत्त्यैव तदपि सूत्रितम् – "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति "वैश्वानरं द्वादशकपालं निर्वपेत्, पुत्रे जाते श्राद्धं दद्यान्मृतेऽहनिदेवदत्तो जातो मृतः" इत्यादिरात्मनो जन्मादिव्यपदेशो भाक्तस्स्यात् भक्तिर्भजनं, तन्निबन्धनो भाक्तः । कस्य तद्भजनमिति ? तद्व्याख्यायते – चराचरव्यपाश्रयस्त्विति । यथा शुक्ते रजतव्यपाश्रयो महार्हत्वादिव्यपदेशः । यथा वा रज्जोरहिव्यपाश्रयो भीषणत्वादिव्यपदेशः । तद्वदित्यर्थः । श्रुतिश्च–"स वा अयंपुरुषो जायमानश्शरीरमभिसम्पद्यमानः पाप्मभिस्संसृज्यत" इति । शरीरतादात्म्याभिमानापत्त्यैव जीवस्य जन्म व्याचष्टे । एवं सत्यपि तादात्म्ये जन्तोर्जीवस्यैका शरीरदृशिता देहोऽयमिति, अहमयं मनुजोऽस्मीति च द्विधा भवतीति योजना । तत्राहमिति स्वदृशिः देहोऽयमिति चाक्षुषस्स्पार्शनो वा अहमयं मनुजोऽस्मीति चोपनीतोभयविषयो मानस इति दृशिभेदशङ्कां निरासितुं "एका शरीरदृशिने"ति विशेषणम् । न खल्वात्मा अहंस्वभावः न वा, अहमिति भानं स्वदृशिता सुप्तादावात्मभानेऽपि तद्रूपभानव्यभिचारात् दृगन्तरानपेक्षभानस्यैव स्वदृशित्वाच्च प्रकाशस्य प्रकाशान्तरनिरपेक्षप्रकाशस्यैव स्वप्रकाशत्वदर्शनादित्याद्यन्यत्र प्रपञ्चितम् ।

अतः स्वदृशेरेवात्मनो दृश्यतादात्म्यविकल्पो ऽहमित्यवभासः । स च चक्षुरादप्रवृत्तावपि देहेन्द्रियादि-विषयस्सर्वेषां नः प्रत्यक्षः । अत एव न चाक्षुषः स्पार्शनो वा देहो ऽयमित्यवभासः । अन्धकारे ऽस्पृशतो ऽपि ममायं देह इति प्रतिभासात् अत एव चाऽहं मनुजो ऽस्मीति न मानसो युक्तः तस्य स्वदृशेरन्यत्वे सत्यात्मनस्तदनवभासप्रसङ्गात् । आत्मसम्बन्धी सो ऽवभास इति चेत् स विषयसम्बन्ध्यपीति तस्या ऽपि विषयावभासस्स्यात् विषयस्यात्मनो वा स्वयं तदवभासत्वाभावाविशेषे तदवभासस्य विषयतासमवायो वेति सम्बन्धभेदकल्पनव्यसनस्या-प्रयोजकत्वादित्यादिरन्यत्र विस्तरः । अतो ऽपि च न देहो ऽयमित्यात्मदृशेरन्यश्चाक्षुषादिरिति सिद्धं विशेषणं "एका शरीरदृशिते" ति देह इत्येव सिद्धे ऽनहन्दृशित्वे तत्स्फुटीकरणाया ऽयमिति विशेषणम् । मनुजो ऽस्मीत्येवाहन्दृशित्वेसिद्धे तस्य गौणत्वशङ्काव्युदासाय देहात्मतादात्म्यविषयत्वं व्यवस्थापयितुमयमहमिति विशेषणम् । अन्यथा गौणत्वे तस्य भेदग्रहनियतत्वात् कायचैतन्यविवादा भावप्रसङ्गइत्युक्तमित्यभिप्रायः । **इतिशब्दः** शरीरदृशि प्रकार भेदव्यवस्थार्थः । इति **चेति** चकारो भिन्नक्रमस्समुच्चयार्थो द्विविधशरीरदृशितायौगपद्यं दर्शयति – इयतैव तद्द्वैधे सिद्धे **द्विधेति** विशेषणं अन्धबधिरगौरकृष्णादिप्रकारभेदो ऽपि ताटस्थ्यतादात्म्याभ्यां विवक्षितशरीर-दृशिताद्वैधाविघातं दर्शयति ।

**एवं** सार्वलौकिकं व्यस्तपराग्दृशित्वद्वैधमुदाहृत्य तदुपमानेन समस्तपराग्दृशित्वद्वैधमवगन्त-व्यमित्याह – **एषा दिगित्यादिना** । एषेति द्विधा शरीरदृशितां प्रत्यवमृशति । यथा दिश्यवस्तु-प्रदर्शनाय दिक् प्रदश्यते तथा विश्वदृशिताद्वैधमित्यभिप्रायेणैषा दिगिति रूपकोक्तिः । **अत्रेश्वरेति** सम्बोधनेनेदं सूचयति–अवश्यमेष विभाग-आश्रयितव्यः । अन्यथा दृश्याहन्दृशिमात्रे तन्नियन्तृत्वानुप-पत्तिः । तक्षादिर्हि तदनहन्दृशिरेव । वास्यादिनियन्ता दृष्ट इति शरीरादिनियन्ता ऽपि तदनहन्दृशिरेव स्यादिति । एवं पराग्दृशिता द्वैधोपपादनफलमुपसंह्रियते – **तेनेत्यादिना** । पराग्दृशिताद्वैधेनैव एष इति प्रत्यगात्मप्रसिद्धिं दर्शयति, **जीव इति परमेश्वर इति च भेदमोहो** भेदभ्रमः । न वास्तवो जीवेश्वरभेदः । तेन न तत्त्वमसीत्याद्यभेदोपदेशग्रहप्रत्यूह इत्यभिप्रायः । दृश्यानहन्दृशिता व्यस्तविषया ऽपि ईश्वरतैव । किन्तु स तावन्मात्रेश्वरइत्युपरमः । समस्तदृश्यानहन्दृशिस्तु सर्वेश्वर इति परममेश्वरेति विशेषणम् । एवं जीवो ऽपि समस्ताहन्दृशिः परमो जीवो जीवघन इत्युच्यते । "स एतस्माज्जीवघ-नादि" ति । श्रुतिलिङ्गादिति दर्शनीयम् । तथा च बाल्यब्राह्मणे, "सवा ऽयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयः चक्षुर्मयः श्रोत्रमयः पृथिवीमय" इत्यारभ्य "धर्मययो ऽधर्ममय" इत्यन्तेन व्यस्तदृश्याहन्दृशितां "सर्वमयस्तद्यदेतदिदंमयो ऽदोमय" इति सामान्येन समस्ताहन्दृशितां च दर्शयति । **तथान्तर्यामिब्राह्मणे** – "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष आत्मा ऽन्तर्याम्यमृतः, यो ऽप्सु तिष्ठन्नद्भ्यो ऽन्तरः,

योऽग्नौ तिष्ठन्नि" त्यारभ्य "यो रेतसि तिष्ठन् रेतसोऽन्तर" इत्या "द्येष त आत्मान्तर्याम्यमृत" इत्यन्तेन व्यस्तदृश्यानहन्दशितां, "अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता, नान्योऽताऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति विज्ञातैषत आत्माऽन्तर्याम्यमृत" इति भेदनिषेधेन समस्तानहन्दशितां च दर्शयति ।

अथ कोऽयं व्यस्तसमस्तभावः ? यं व्यष्टिसमष्टि भावमाचक्षते स एष सः । ननु शब्देनैव शब्दं व्याकरोति भवान् ! । अथ विविधमस्तं व्यस्तं विक्षिप्तं पृथग्भावेन विकीर्णं, समुदितमस्तं समस्तं संक्षिप्तं एकीभावेन सङ्गृहीतं, विविधमश्यते प्राप्यत इति व्यष्टिः, समुदितमश्यत इति समष्टिरित्यर्थः इति चेत् एवं तद्व्यतिरिक्तमायाभ्युपगमे तथा कारणात्मना दृश्यस्य समष्टिभावः स्वेन स्वेन कार्यात्मना च व्यष्टि भावउपपद्यते । तदनभ्युपगमे किमात्मना समष्टिभावस्स्यात् । दृगात्मनैव चेत् समस्तदशित्वानुपपत्तिः । तस्याऽदृश्यत्वादिति । उच्यते – वृक्षवद्वनवच्चात्र व्यष्टिसमष्टिभाव इष्यते । न हि वृक्षेषु वनमित्येकमस्ति सामान्यम् । येन तदात्मना एकीभावेन सामस्त्यं स्यात् । अवनेऽपि स्वल्पाम्रत्वमाम्रेषु अनाम्रेषु च, शिरीषवणे वनत्वमुभयमप्याम्रवणइतीत्याम्रत्वशिरीषत्वादिभिस्साङ्कर्यात् । बहुत्वसामानाधिकरणं वृक्षत्वं अवनेऽपि वृक्षेष्वनैकान्तिकम् । "वृक्षा हि बहवो वनमि"ति चाहुः । त एवैकदेशोपाधिना वनमिति समष्टिस्स्यादिति चेत्, ननु सर्वोऽपि देशः एक एव, तत्र चावनमपि, सन्ति बहवो वृक्षा इति व्यभिचारः । वृक्षाभाववृत्त्यवच्छिन्नदेशानन्तरितत्वं चैकस्मिन्नपि वने दुस्सम्पादम् । तस्माद्देशस्य च बहुवृक्षाणां च परस्परोपाधिनैकत्वं वनत्वं च निर्वहणीयम् । एवं दृगात्मनो दृश्यानां च परस्परनियमादेव समस्तदृश्यदशितया परमेश्वरत्वं समष्टिभावश्चेति सन्तोष्टव्यम् । अथापि स्यात् । माण्डूक्ये तावत् "सोऽयमात्मा चतुष्पादि"ति प्रतिज्ञाय "जागरितस्थानो बहिः प्रज्ञस्सप्ताङ्ग – एकोनविंशतिमुखस्स्थूलभुग्वैश्वानरः प्रथमः पादः, स्वप्नस्थानोऽन्तःप्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसः द्वितीयः पादः, यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तं, सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयः ह्यानन्दभुक् चेतोमुखः प्राज्ञः तृतीयः पाद" इति, जीवव्यपाश्रयं पादत्रयमुपव्याख्यातम् । तत्र जागरितस्थानो विश्वसंज्ञितः । तथाह्यत्रैते श्लोका भवन्ति — "बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः घनप्रज्ञस्तथा प्राज्ञः एक एव त्रिधा स्मृतः ॥ दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः । आकाशे हृदि च प्राज्ञस्त्रिधा देहे व्यवस्थितः । विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् । आनन्दभुक्तथा प्राज्ञः त्रिधा भोगं निबोधत ॥ स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् । आनन्दस्तु तथा प्राज्ञं त्रिधा तृप्तिं विजानथ" ॥ इत्याद्याः स च वैश्वानर इति समष्टिशरिराहन्दशिरूपविराडभेदेन निर्दिष्टः । "वैश्वानरश्च लोकशरीरः सप्ताङ्गो"ऽन्यत्रनिर्दिष्टः । "तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः

प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावास्यमाहवनीय" इति तत्र दिवादित्यवाय्वाकाश वारिपृथिव्याहवनीयास्सुतेजस्त्वादिगुणा, मूर्धचक्षुः – प्राणमध्यदेहमूत्रस्थान-पादास्थानि सप्ताङ्गान्युक्तानीह समासेन प्रत्यभिज्ञायन्ते। "जागरितस्थानो बहिः प्रज्ञस्सप्ताङ्ग" इति अतो लिङ्गादपि तदभेदो गम्यते। स चैकोनविंशतिमुखः दशेन्द्रियाणि, पञ्च प्राणाः, मनोबुद्ध्यहङ्कारचित्तानीत्येकोनविंशतिर्मुखानिभोगसाधनानि यस्येति। स्वप्नस्थानस्तैजसोऽपि तद्वासनामयत्वात् सप्ताङ्ग एकोनविंशतिमुखउच्यते। स च ज्ञानकर्मेन्द्रियप्राणलक्षणज्ञानक्रियाशक्तिमय-बुद्ध्यहंदृशिरूपः। तादृशबुद्धिसमष्ट्यहङ्कारदृशिरूपहिरण्यगर्भाभेदेनार्थादुक्त एव भवति। अत एव हि हिरण्यगर्भो जीवघनो निर्दिश्यते। "स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षत" इत्यत्र। प्राज्ञस्तु सुषुप्तस्थानो देहेन्द्रियादिदृश्यभेदोपशमादेकीभूतः चेतः-स्वात्मभूतं ज्ञानमेव मुखं स्वानन्दभोगे साधनं यस्येति चेतोमुख उच्यते। तुरीयपादस्तु "नान्तः प्रज्ञं न बहिः प्रज्ञं नो भयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाऽप्रज्ञमदृश्यमव्यवहार्यमि"त्यादि प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते। "स आत्मा स विज्ञेय" इति सर्वापवादेन वक्तव्य इत्यन्तराले "प्राज्ञस्तृतीयः पादः" इत्यनन्तरं **तदभेदेनेश्वरं प्रति निर्दिशति** – "एष सर्वेश्वर एषसर्वज्ञ एषोऽन्तर्याम्येष योनिस्सर्वस्य प्रभवाप्ययौ हि भूतानां" इति। तत्रैवं सति यदि दृश्यानहन्दशिरेवेश्वरस्स्यात् जागर-स्वप्नयोरेव स्यात्। तरुवनन्यायेन व्यष्टिसमष्टि भेदाभावोपगमेन तत्रैव समष्टिदृश्यदृशित्वसम्भवात्। ततश्च प्रशान्तदृश्यभेदैकीभूतप्रज्ञाभेदनिर्देशविरोध इति। अत्रोच्यते। अनुपजातबाधदृश्याह-न्दशिभावो दृगात्मा जीव इति तावदुपगम्यते। स च जागरस्वप्नयोरुद्भूताहन्दशिभावो विश्वतैजसौ सूप्तौ, तन्निरूपितरूपेण तदुपशमात्मा प्राज्ञ इति व्यपदिश्यते। एवं तदविनाभूतसमष्टिः दृश्यानहन्दशिभावो दृगात्मैवेश्वर इति तन्निरूपिततदुपशमात्माऽपि तथैवेति स प्राज्ञाभेदनिर्देशमर्हतीति न कश्चिद्विरोधः अत एव समष्टिविश्वानहन्दशिरेवेश्वरइत्यभिप्रायेण, "वैश्वानरस्साधारणशब्दविशेषात्" इत्यधिकरणे द्युमूर्धादिलक्षणस्त्रैलोक्यशरीरो वैश्वानरः परमेश्वर एव, नाग्न्यादिः। वैश्वानर आत्मेत्यग्निजीवादिसाधारणशब्दयोर्विशेषाद्विशेषकात् द्युमूर्धाद्यवयववत्वादि-लिङ्गादिति निर्णीतम्। अत एव च "स एनान्ब्रह्म गमयती"त्यत्र हिरण्यगर्भशरीरं परं ब्रह्मैव गमनीयमित्युपगम्यते। यथा चैत"त्तथा कार्यं बादरि"रित्याद्यधिकरणोदाहरणेन वक्ष्यामः। अन्यथा ईश्वरस्य सुषुप्तैकात्ममात्रत्वे लोकशरीर ईश्वरो न स्यात्। तत्र तदभावात्। तदवस्थश्च योग्यतयैव "सर्वेश्वरस्सर्वज्ञस्सर्वान्तर्यामी" च निर्दिश्यते अत एव "एषयोनिस्सर्वस्य प्रभवाप्ययौ हि भूतानामि"ति, हिशब्देन हेत्वर्थेन सर्वेश्वरत्वादिकमुपपाद्यते। यस्मादयं सर्वस्य योनिः, भूतानां प्रभवाप्ययौ च तस्मात्सर्वेश्वरादिति। तदा तद्योग्यतैवेत्यभिप्रायः। तस्माद्दृश्याह-न्दशिर्जीवः, समस्तदृश्यानहन्दशिरेव परमेश्वर इति सिद्धम् ॥ ९६ ॥

उक्तमेतदेव दृश्यदृशिता द्वैधोपाधिना जीवेश्वरभेदभ्रम इति । तदयुक्तमिव । यदि हि जीवेश्वरभेदभ्रमइति सिद्धं स्यात्तदा तद्धेतुदोषगवेषणायां दृश्यदृशिताभेद इति व्यवस्थाप्येत । तदेव तु न सिद्धम् । ईश्वरस्य प्रतियोगिनोऽनवगमेनाहमीश्वर इत्यध्यक्षानुपपत्तेः । अनुमानादीश्वरसिद्धौ तन्मूलो भेद भ्रम इति चेत् यदि तदीश्वरे प्रमाणं तदा तद्भेदेऽपि । अधिकरणसिद्धान्तो हि भेदेनैव तत्स्वरूपसिद्धिरिति । अन्यथाऽनीश्वरजीवसाधारण्ये साधनीयजगत्कर्तृत्वस्यैव व्याघातात् । यदि च तत्तद्भेदे न प्रमाणं तदा तदीश्वरस्वरूपेऽपि न प्रमाणं स्यात्, उदितन्यायादेव । अत एव नागमादपि तद्भ्रमः तस्य जात्यैव प्रामाण्योपगमात् । वाचनिकश्च जीवेश्वरभेदो, "द्वा सुपर्णा सयुजा सखायासमानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" ॥ इत्यादेरागमस्य वाचनिकेऽपि चेदप्रामाण्यं सर्वत्रानाश्वासप्रसङ्ग इत्याशङ्क्य नागमस्य पदसमन्वयावगमनीयार्थे एव प्रामाण्यम् "सोऽरोदीदि"त्यादे रुद्ररोदनादावपि प्रामाण्यप्रसङ्गात् । किन्तु तत्र मानान्तरविरोधादप्रामाण्यमिष्टम् । अन्यत्र तु तत्त्वमस्याद्युपदेशविरोधादिति तुल्यम् । उभयस्याप्यागमत्वाऽविशेषेऽपि स्वार्थावसायित्वतदभावाभ्यां वाचनिकार्थे तात्पर्यातात्पर्यव्यवस्थायाः प्रामाण्याप्रामाण्यव्यवस्थित्युपपत्तिः । न च द्वा सुपर्णामन्त्रः स्वार्थावसायी । पैङ्गिरहस्ये बुद्धिसत्त्वपरमात्मपरत्वव्याख्यानात्, तदनपेक्षया जीवेशभेदविषयत्वेऽपि "समाने वृक्षे पुरुषो निमग्नोऽनीशयाशोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ॥ इति वाक्यशेषगतापवर्ग फलवादोन्नेयतदुपासनाविधिशेषत्वात् । इयानत्र विशेषः । यदेकत्र सोऽरोदीदित्यादौ सर्वदैव न स्वार्थे प्रामाण्यं, अन्यत्र द्वा सुपर्णादौ वाक्यशेषगतोपासनाविधिविषयसमर्पकतया तादात्विकं प्रामाण्यमिति । तथापि तात्पर्याभावे सति स्वार्थवृत्तिर्मानान्तरविरोधः तदाप्रामाण्यहेतुः । सोऽरोदीदित्यादिसाधारण एवेति । न सर्वदैव प्रामाण्यम् । एवं सति तत्तात्पर्याज्ञानमूलानादिपूर्वपक्षन्यायाभासनिबन्धनलोकव्यवहारहेतुको जीवेशभेदभ्रम इति सिद्धम् । तद्धेतुदृश्यदृशिता द्वैधालम्बन एव द्वा सुपर्णादौ जीवेशभेदनिगद इति परिहरन्नाह —

दृक्शक्तिरेव तव दृश्यमयावभासा
सन्तायतेऽहमिदमित्यपि भिन्नवाहा ।
भूतेषु, तां सह सदा समुदाचरन्तौ
जीवेश्वराविति गृणन्ति गिरीश, सन्तः ॥ ९७ ॥

अत्राधिकविवक्षयोक्तार्थएवानुकृष्यते । दृश्यदृशिरूपस्य विशिष्टस्येश्वरस्य स्वरूपभूतापि दृक्सम्बन्धिनीति **तवेत्युक्तिः**। दृश्यदृशितयेश्वरस्यसतो दृगात्मनः स्वरूप भूतैव **दृक्**। यथा-नीलादिप्रकाशतया प्रकाशकस्य सतः सौरादिप्रकाशस्य स्वरूपभूतः प्रकाशस्तथागुणभूतेव दहनस्य दाहादिशक्तिरिव नियमनादिकार्यानुगुणेव च भवतीति **दृक्शक्तिरिति** व्यपदिष्टम् । सा **दृश्यमयावभासा** सती । न खलु दृशो दृश्यं पृथग्भूतं । तथा सति सम्बन्धाभावेन तदनवभासप्रसङ्गात् । विषयतैवसम्बन्धइति चेत् तदवभास्यतातिरिक्तविषयताया दुर्निरूपत्वात् । तयैव तदवभास्यतां निर्ब्रुवता किमिव समर्थितं इत्यभिप्रेत्य **दृश्यमयावभासेति मयट्प्रयोगः**। अहमिदमित्यपीत्यपिशब्दो ऽहमित्यत्रापि 'इते' रनुकर्षणेन निरुक्तदृश्यदृशिप्रकारभेदसमुच्चयार्थः । तेन तदुभययौगपद्यसिद्धिः । **अहमिदं पश्यामीति** पुनरहन्दृशेरिदंदृशितादात्म्याभिमान एव । अहम्दृशेन्र्यग्भूतदृशितया दृश्यमात्रात्मकत्वेन विकारिण इदमर्थदर्शित्वानुपपत्तेः इत्यभिप्रायोक्तं **भिन्नवाहेति** ! भिन्नो वाहः प्रवाहः यस्यास्सा । तथा दृशेर्दृश्यभूयस्यापायोपजन धर्मित्वेनासदातनव्यक्तितया वाहशब्दः । तेन सर्गप्रलयभावेऽपि प्रवाहानादितया शक्तिवृत्तिभ्यां जीवेशानादित्वसिद्धिः **सन्तायत इति** । ता सन्तानपालनयोरित्यस्य रूपम् । अभेदेन तदिदमिति प्रत्यभिज्ञायांम्यानुगतरूपेणानुवर्तत इति विवक्षया समुपसर्गः। "संभेदे च सम्यक्त्व" इतिह्याहुः। तेन "क्षणिकविज्ञानमात्रमर्थाः" इति पक्षो निरस्तः। एवं सति यदत्र विवक्षितं तदाह **भूतेष्वित्यादि**। तां द्विधावाहां दृशं। **भूतेषु** जरायुजाण्डजादि भेदभिन्नेषु चराचरेषु **सदा सहेत्यविनाभाव उक्तः**। तेन द्वा सुपर्णामन्त्रे सयुजासखायाविति पदद्वयार्थोऽनुगमितः। पृथग्वृत्त्या सम्यगुद्धृयेति समुपसर्गाभ्यां सुपर्णाविति पदार्थः, आसमन्ताच्छरीरमभिव्याप्येत्याङुपसर्गेण समानं वृक्षं परिषस्वजाते इत्यस्यार्थः प्रत्यायितः। **चरन्ताविति** गतिभक्षार्थेन तयोरन्यः पिप्पलमित्यादेरर्थस्सूचितः। द्वावेवमविशेषितावुक्तौ। समाने वृक्षे पुरुषो निमग्न इत्याद्यनन्तरमन्त्रयोः पुरुष इति चेशमिति चोपादानात् **जीवेश्वराविति**, सन्तः पदव्युत्पत्तिमात्रेण, अस्ति ब्रह्मेतिपरोक्षविदः। "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति हि श्रुतिः। "अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत्। अहं ब्रह्मेति चेद्वेद साक्षात्कारस्य उच्यते"॥ इति वाऽभियुक्ता गृणन्ति। न्यायानुसरणे तु नासौ श्रुतितात्पर्यविषयोऽर्थः। किन्तु तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमित्यादि **पैङ्गिरहस्यव्याख्यानानुरोधेन** बुद्धिसत्त्वपरमात्मानावेव। यथा चैतत्तथा व्याख्यातम्। तथापि यदि सन्तो जीवेश्वरावेव। तदर्थ इति **गृणन्ति** तथाप्यहमिदमिति भिन्नवाहां दृक्शक्तिमेव न तु छायातपाविव तत्त्वान्तरमित्यभिप्रायः। अत्र **गिरीशेति** सम्बोधनेन दृश्याहन्दृशिर्जीवः तदनहन्दृशिरीश्वर इत्यत्र गिरीशसमाख्यैव साक्षिणीति सूचयति। गिरिरिन्द्रियसमुदायः स खलु शैल इव रत्नादिकं आत्मानं गिरति स्वमात्रतया तिरयति। यथा **ऐतरेयश्रुतिः**—"स एष गिरिश्चक्षुः श्रोत्रंमनो वाक्प्राणस्तं

ब्रह्मगिरित्याचक्षत " इति । तदहन्दशितया च तद्व्यापाराविष्टत्तन्मात्रतया निगीर्ण इवाऽऽत्मा भवति । तथा च श्रुत्यन्तरे लिङ्गं — "प्राणन्नेव प्राणो भवति वदन्वागि" त्यादि । तदनेन गिरिशब्देन दृश्याहन्दशिर्जीव इति सूचितं भवति। तस्येश इति चार्थात्तदनहन्दशिरेवेश्वर इति। अन्यथा तन्नियन्तृत्वाद्यनुपपत्तेरित्युक्तमिति ॥ ९.७ ॥

एवं द्वा सुपर्णादिश्रुतिविषयविवेचनया हेतुनिरूपणेन जीवेशभेदभ्रमो व्यवस्थापितः। स तावन्न जीवेश्वरयोरेव तदवधिबाधविरहात् । दृश्यदृशिताभेदोपाधिको दृगात्मन्येव तद्भ्रम इति चेत् एकस्यैव तस्याहन्दशिताऽनहन्दशिता च भिन्नविशेषणे स्याताम् । एकस्यैव दण्डित्वकुण्डलत्वादिवत् । खण्डमुण्डादौ च स्वत एव व्यक्तिभेदविज्ञानं न विशेषणभेदाधीनो भेदभ्रमः। अन्यथा, युवा रेतस्सिक् जरी जनको न प्रत्यभिज्ञायेत । यौवनजराभ्यां देवदत्तभ्रमध्रौव्यापत्तेः। एकेन तदहं भावेनाभेदावगमान्न भेदभ्रमस्तत्रेति चेत्, अत्रापि दृगात्मभावेनाभेदावगमात् तद्भेदभ्रमानुपपत्तिरित्याशङ्क्य एकस्यैव भिन्नोपाधिनिबन्धनभेदभ्रमं निदर्शनेनोपपादयन्नाह —

कालो महांश्च भवदादिरशेषधृत्त्या
विश्वोदयादिपरिवर्तनया च भूयः ।
नाऽसौ महानपि न भूत भवद्भविष्य-
न्नेषोपमा शिव, तवेश्वरजीवभावे ॥ ९८ ॥

अस्ति तावन्नवपुराणत्वादिव्यवहारासाधारणकारणं कालो नाम तत्त्वान्तरं, नेश्वर एव । यथा तद्भेद आम्नायते "ज्ञः कालकालो गुणी सर्वविद्यः", इति, "कालः कलयतामहं" इति चेश्वरस्य विभूतिसंस्तवः, तत्प्रकरणात् ना भेदविवक्षैत्र । स च कल्पनालाघवादेको व्यवस्थाप्यते। **असौ** स **कालः** स्वतो **न महान्** सजातीयाल्पापेक्षानिरूप्यतया महत्त्वस्य तदभावे तदयोगात् । पुरुषस्य पुत्रादिनिरूप्यपितृत्वादिवत्, परनिरूपणीयरूपस्य स्वभावत्वानुपपत्तेश्च । अपिर्निषेधसमुच्चये। एकनिषेधेनेतरविधिपरिशेषपरिहाराय **नापि भूतभवद्भविष्यन्नित्यन्वयः** । "विशेषणं विशेष्येण बहुलमि"ति बहुलग्रहणाद्विशेषणानामेव । भूतश्चासौ भवंश्चासौ भविष्यंश्चेति कर्मधारयः । पूर्वकालत्वविवक्षया वा । "भूत्वेह सत्त्वसम्बन्धविधुरं भूतमीर्यते । भूत्वाऽथ सत्त्वसम्बन्धबन्धुरं भण्यते भवत् ॥ अभूत्वा सत्वसम्बन्धमन्थरं भाविकीर्यते" । अथवा वर्तमानध्वंसप्रतियोगित्वं भूतं, कादाचित्काभावरहितसमयसम्बन्धि

भवत्। वर्तमानप्रागभावप्रतियोगि भविष्यत्। एवं बहुविधोऽपि न भवति कालः, स्वत एकत्वात्। तमेव स्वभावाभेदं दर्शयितुं भूतभवद्भविष्यन्निति समानाधिकरणसमासनिर्देशः। एवमखण्डस्वभाव एव **कालः महांश्च भवदादिश्च।** भवन्नादिर्यस्य भवद्भूतभविष्यतः स तथेति तद्गुणसंविज्ञानो बहुव्रीहिः। स्वतो महत्त्वादिनिषेधात्। तत्प्रयोजकोपाधिविवक्षयाऽऽह **अशेषधृत्येत्यादि।** अशेषधृत्या, सर्वं हि जगत्कालानतिवर्ति नवपुराणादिव्यवहारानतिवृत्तेः। अतः उदयादिरूपभेदमनपेक्ष्य केवलं निश्शेषजगदाधारतया महान्। **विश्वोदयादिपरिवर्तनया च भवदादिरिति।** अत्र प्रयोजकद्वये प्रयोज्यद्वये च समुच्चये चशब्दः। तस्य तस्य यौगपद्यसूचनाय। विश्वसम्बन्धिनामुदयआदिर्येषां, उदयस्थितिनाशानां तेषां परिवर्तनया। परिवर्तनं विनिमयः। उदयादेस्स्थित्यादिः, स्थित्यादेरुदयादिः इति तत्प्रयोजकतापरिवर्तना, तया च भवदादिरिति यथासङ्ख्यमन्वयः। कथं? भूत्वा भवनमुदयः, स खलु प्रागभवदशानिरूप्य इति तामपेक्ष्य घटादेर्भविष्यत्ता, स्वस्य च। अत एव भविष्यतीति प्रत्ययं प्रागभावमानमास्थिषत **न्यायिनः।** अत एव च "घट उदेष्यती"ति तुल्यवदुदयस्यापि भविष्यत्वमवगम्यते। अन्यथा उदयस्य सदातनत्वे कारकव्यापारवैयर्थ्यात्। तस्यापि पृथगुदयोपगमे तदनवस्थापातात् तदुपाधिकः कालोऽपि भविष्यन्नित्युच्यते। भूत्वा भवनं स्थितिः, घटादेर्भवत्ता। स्वस्य च वर्तमानता लक्षणस्थितेरारब्धा, परिसमाप्तत्वाविशेषात्। अत एवास्ति घटो वर्ततइति तुल्यवद्वृत्तेरपि वर्तमानता गम्यते। तदुपाधिकः कालोऽपि भवन्निति व्यपदिश्यते। भूत्वाऽभवनं नाशो घटादेर्भूतता। स्वस्य च, भवनक्षयाविशेषात्। अत एवाऽभूद्घटोऽनशदिति तुल्यवन्नाशस्यापि भूतताऽवगम्यते। ननु नाशः पश्चादस्ति कथं तस्य भवनक्षयः उच्यते। पश्चादभावप्रयोजिका क्रियैव नाशो नाम, नतूक्ताभाव एव। सा च क्षणिकेति नानन्तरमस्तीति तदुपाधिकः कालोऽपि भूतइति निर्दिश्यते। एवं उदैषीद्घट उदेतीति च उदयस्य भूतभवत्वं अस्थात् स्थास्यतीति च स्थितेर्भूतभविष्यत्वं नश्यति घटो नङ्क्ष्यतीति च नाशस्य भवद्भविष्यत्वं तदुपाधिकं च कालतथात्वमुदाहर्तव्यम्। नात्र यथासङ्ख्यं प्रयोज्यप्रयोजकभावः। किन्तु सर्वथा उदयादिरेव कालस्य भवत्वाद्युपाधिरित्येतदभिप्रायेण उदयादिपरिवर्तनया भवदादिरित्युक्तम्। तदभिप्रायेणैव च निषेधे भूतादिग्रहणम्। यद्यपि सर्वोप्ययं वस्तुभेदः खण्डकालभेदोपाधिकः, तदुपाधिकश्च कालभेद इत्यन्योन्याश्रयता तथापि एकदेशत्ववनत्ववत् अन्योन्यनियमाश्रयणेन सा सोढव्या। एषैव गतिरव्याप्यवृत्तेस्सर्वस्याप्येकदेशाश्रयत्वं निर्वहणीयमिति **भूय इत्यनेन** काले महत्वभूतत्वादिभेदस्य कादाचित्कजगदुपाधिकत्वेऽपि तत्परिवर्तकोपाधिकामनादितां जीवेश्वरानादित्वनिदर्शनायदर्शयति। **अथवा** भूय इति विनैवैकलोलीभावं केवलं निखिलसमष्टिजगदाधारतया महत एव कालस्यावयवभूताः, "नलिनीदलसंहत्यां सूक्ष्मसूच्यभिवेधने। दले दले तु यः कालस्स कालो लवसंज्ञितः"॥

**इत्याद्यागमोक्तलवत्रुटिपूर्वकाः**, "सर्वे निमेषाजज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम्" **इत्यादिश्रुतिसिद्धकालभेदाश्च** । तथैव व्यष्टितत्तदाधारतोपाधिकाः एकलोलीभावेन समष्टिविश्वोदयाद्युपाधिकतया महत एव भवदादिकालस्यावयवभूताः । तथैव व्यष्टितत्तदुदयाद्युपाधिक भवदादिकालभेदाश्च लोकसिद्धा व्यष्टिजीवेशभेदनिदर्शनाय सूच्यन्ते । एवं निदर्शनमुपपाद्य तेन प्रदर्शनीयमर्थमतिदेशेन दर्शयति - **एषोपमेत्यादिना** । अत्र **शिवेति** सम्बोधनेन निष्केवलदृगात्मस्वरूपमुपलक्षयति । तस्य तत्र दृगात्मन ईश्वरजीवभावे एषोपमा । एतच्छब्देनाखण्डस्यैव कालस्य परोपाधिकं महत्त्वभूतत्वादिकं प्रत्यवमृशति । उपमापेक्षया स्त्रीलिङ्गनिर्देशः । अत्रोपमाशब्दः सदृशवाची । "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यां" इति तुल्यार्थतुलोपमाशब्दयोगे तेनायं तुल्यस्सदृशस्समो वेत्यादिवत्तृतीया माऽभूत् । तस्यायं तुलाउपमावेति षष्ठ्येव स्यादित्यतुलोपमाभ्यामिति पाणिनीयनिषेधलिङ्गात् । उप सदृशतया सामीप्येन मीयते, यया वस्तुतत्त्वं सा उपमा । उपपूर्वान्मातेर्मिमीतेर्वा । "अकर्तरि च कारके संज्ञायां" । करणे धञर्थैकविधाने सति टापि रूपमेतदुपमेति । अनेनोक्तलक्षणायामुपमितौ तद्विषयसादृश्यप्रतियोगिभूतं करणमित्या"काशवत्सर्वगतश्च नित्यः", "दग्धेन्धनमिवानलम्" इत्युपमानप्रामाण्यमपि सिद्धं भवति अत्राखण्डकालः केवलदृगात्मन उपमा । तस्येश्वरभावे कालस्य महत्वं, जीवभावे तस्य भूतत्वादिकमिति **यथायोगमुन्नेयम** ।

**अयमत्राऽऽशयः** — यद्यप्येकस्यैव भिन्नानि विशेषणानि युज्यन्ते, विरुद्धविशेषणान्यपि चावच्छेदभेदेनैकस्यैव गगनस्य तारमन्द्रशब्दसितासितादिभाववदुपपत्स्यन्ते तथापि दृगात्मनो दृश्यहमनहन्दर्शितोपाधिको जीवेशादिभेदप्रत्ययो दिक्कालयोरिव परोपाधिकः प्राच्यादिभूतादिभेदप्रत्ययो विश्वजनीनो नापह्नवमर्हति । युवत्वजरित्वद्यनादरेण निषेक्तृत्वात्यन्तायोगव्यवच्छेद एव जनकतेति प्रत्यभिज्ञया यौवनजराद्युपाधिभेदप्रसक्ततद्भेदभ्रमोऽपोद्यते निष्केवलदृगात्मतत्त्वदर्शनेन च जीवेशभेदभ्रमइति नातिप्रसङ्गः अपि च यजति जुहोतीत्यादौ प्रत्ययाभिधेयभावनारूपाभेदावगमे प्राप्ते शब्दान्तरादिविशेषणभेदोपाधिक एव वास्तवतद्व्यक्तिभेजप्रत्यय आश्रीयते । एवं दृगात्मनोऽपि विशेषणभेदोपाधिको जीवेशभेदप्रत्यय आश्रीयताम् । किन्तु स तत्त्वमसीत्याद्यभेदमानप्रत्ययात् भ्रम इत्यवसीयते । यजत्यादिभावनाभेदमानान्तराभावादुपाधितोऽपि तद्भेदप्रत्ययः प्रमैवेत्येष एव विशेषः । एवं विशेषणभेदोपाधिकविशिष्टभेदोपपादनप्रपञ्चः सिद्धान्तसिद्धाञ्जनेऽनुसन्धेयः ॥ ९८ ॥

एवं कालनिदर्शनेन चिदात्मन्यौपाधिको जीवेशभेदभ्रम इत्युपपादितम् । एवं सति दृगात्मनो जीवेशभेदभिन्नत्वे यथाम्राम्रातकादिमात्रतया वनमिति तदतिरेकेण निर्वस्तुकः प्रत्ययः, तथा

जीवेशमात्रतया दृगात्मेति निर्वस्तुक एव प्रत्ययस्स्यादिति शास्त्रविज्ञेयाभावः प्राप्तइत्याशङ्काऽपि कालनिदर्शनेनैव सुपरिहरेत्यभिप्रेत्याह —

कालो महान् तदुपधिश्च जगत्समस्तं
भूतादिभावकलितोऽपि च कालभेदः ।
एवं त्वयीशजडचेतनभेदि विश्वं
विश्वेश, वल्गतु परस्तु तव स्वभावः ॥ ९९ ॥

महान् कालः, तदुपाधिस्समस्तं जगच्च । चकारो महाकालावयवभूतानां लवत्रुट्यदीनां तदुपाधीनां च समुच्चयार्थः। तथा भूतभवद्भादिभावेन भूतादित्वेन कलितः विकल्पितः कालभेदोऽपि च तदुपाधिसमुच्चयार्थोऽपि च शब्दः। अथवा, भूतादिभिर्भावैः पदार्थैः कलितः एकलोलीकृतः कालभेदः भूतादिलक्षणः। महतो भूतादिकालभेदस्यावयवभूतानां व्यष्टिभूतादिकालभेदानां तदुपाधीनां च समुच्चयार्थोऽपि च शब्दः। तदेतत्सर्वमपि काले भवति, न कालमतिक्रामति । यथा भगवान्वाल्मीकिः – "न कालः कालमत्येति"। भावाभवादि-कालस्स्वस्वकालं नात्येति । "न कालः परिहीयते" भूतादिकालभेदैरिति कालभेदाधारमभिन्नं कालं दर्शयति एवं यथा काले महदादिकालः तथा त्वयि दृगात्मनि ईशइति जडमिति चेतनो जीव इति च भेदोऽस्यास्तीति वा तथा भिद्यत इति वा ईशजडचेतनभेदि । विश्वं वल्गतु, उपप्लवतां स्वभावतिरस्कारेण स्वयमुद्भासयतामित्यनादरे लोट् । तव दृगात्मनः स्वभावस्तु परः, अतिरिक्तः जीवेशभावाद्यसंस्पृष्ट एव । अत्र विश्वेशेति सम्बोधनेन यथा लोके दण्डकोशाद्युपकरणो-पाधिकमीश्वरत्वमिति तदसंस्पृष्टस्वभाव एव देवदत्तः, तथा जीवत्वमीशत्वं वा परोपाधिकमिति तदसंस्पृष्टस्वभावएव दृगात्मेति सूचयति । ननु तस्मिन्नुपप्लवमाने कथं तदसंस्पर्शः ? भ्रममात्रत्वादिति ब्रूमः । यदा तुल्यसदुपाधिकोऽपि कालभेदः भ्रम इत्यतथास्वभाव एव कालः, तदा कैव कथा जीवेशभेदोपाधेरपि भ्रममात्रत्व इत्यभिप्रायेण तु शब्दः । तथा च भगवान्भाष्यकारः – "यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते" इति । न खल्वारोपिताऽहिभीषणत्वादिदोषेणारोपितरजतस्पृहणीयत्वादिगुणेन वा रज्जुशुक्त्यादि संस्पृश्यत इति आम्राम्रातकादिवृक्ष भेदेषु परोपाधिको वनमितिप्रत्यय इति स निर्वस्तुकस्स्यात् । दृगात्मनि पुनरभिन्ने भेदभ्रम इति सवस्तुकएव तत्प्रत्ययइति पूर्ववादिशङ्कितनिदर्शनवैषम्यसूचनाय वा तुशब्दः। सोऽयमसंस्पृष्टसकलभेदभ्रमो दृगात्मा शास्त्रविज्ञेयइति सिद्धम् ॥ ९९ ॥

स्यादेतद्यद्येवं जीवेश्वरभेदस्तदुपाधिविश्वभेदश्च भ्रम एव स्यात्, हन्त तर्हि "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, य एषोऽन्तरक्षिणि पुरुषो दृश्यत" इत्यादि प्रकृत्य "य एतदेवं विद्वान् साम गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च अथाऽनेनैव ये चैतदस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्चे" त्यादयः, कर्माङ्गोद्गीथादिव्यपाश्रयाः। कर्मसमृद्ध्यर्थोपासनाविषया "मनो ब्रह्मेत्युपासीते" त्यध्यात्ममथाधिदैवत "माकाशो ब्रह्मे" त्यादि प्रकृत्य "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेने" त्याद्या अभ्युदयार्थोपासनाविषयाः। "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेणपरं पुरुषमभिध्यायीत, स सामभिरुन्नीयते ब्रह्मलोकमि" त्याद्याः क्रममुक्त्यर्थोपासनाविषयाः ज्ञानविधयः वैश्वानरस्यात्मनो दिवादित्यादयो मूर्धचक्षुराद्यङ्गनीति दिवादिप्रत्येकोपासनाया "मूर्धा ते व्यपदिष्यद्यन्मां नागमिष्य" इत्यादिमूर्धपातादिनिन्दयाऽभेदेन देवतोपासनाया "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामि" त्यादि पशुत्वादिनिन्दया चोन्नेया निषेधाश्चान्ये च कर्मविधिनिषेधाः प्रामाण्यादुपरुद्ध्येरन्। शास्त्रस्य तदवबोधनीयानां सहाऽनुबन्धेन ज्ञानकर्मविधिनिषेधानां, तत्र चोदनीयस्य जीवस्य तदभिलषणीयस्य ज्ञानकर्मफलस्य तत्प्रतिभुव ईश्वरस्य च भ्रममात्रत्वेनापवाद्यत्वात् अपवाद्यविषयं च न प्रमाणम्। शुक्तिरजताद्यध्यक्षादिवदितीमां शङ्कां परिहरन्नाह —

आस्थाय विश्वदृशितामयमीशभेदं
तादात्म्यतोऽहमभिमानमयं च जीवम्।
अन्योन्यभिन्नमिव चाखिलमीश विश्वं
नानाफला विधिनिषेधगिरः प्रथन्ते ॥ १०० ॥

**विश्वदृशितामयं**, तदुपाधिविभावनीयत्वेन तद्विकारत्वोपचारा'न्मयड्'व्यपदेशः। **ईशइति भेदं**, एकस्यैव दृगात्मनोऽयमौपाधिको विभाग इति ईशभेदमित्युक्तिः। **तादात्म्यतः**, दृश्यैकात्म्येनाऽहमभिमानमयं, तदुपाधिविभावनीयजीवं चेति। **चकारो**भिन्नक्रमः। आस्थेयतायां ईशादिसमुच्चयार्थः। तं **जीवमन्योन्यभिन्न**, **मिवे**ति विशेषणसमुच्चयार्थश्चः। मनुष्यो देवादन्यो "यष्टादेवो मनुष्यादन्य इज्यः, ब्राह्मणोऽयमन्यो राज्ञः राजाऽसौ ब्राह्मणादन्यः वर्ण्ययं गृहिणोऽन्यः गृहीचायं वर्णिनोऽन्य" इत्येवमन्योन्यभेदाभावे "यष्टृयजनीयाधिकार्यनधिकार्या" दिव्यवस्थानुपपत्तेः। सर्वस्यापि पराहन्दृशिमात्रत्वादयमपि भेदो भ्रम **एवेतीवशब्दः**। न खिलं पराहन्दृशिताया न विभक्तमित्यखिलम्। विश्वं च, तदन्योन्यभिन्नमिव चेत्यत्रापि विशेषणसमुच्चयः "अयं लोकः लोकिनोऽन्यः लेकी चायं लोकादन्यः भोग्यमिदं भोक्तुरन्यत् भोक्ताचायं भोग्यादन्य" इत्येवं

भेदाभावे तदर्थत्वार्थित्वाद्यनुपपत्तेः। भेदाभेदपक्षे भेदेन यथोक्तव्यवस्था, अभेदेन तदव्यवस्था च प्राप्नोतीति दोष इति अन्योऽन्यभिन्नमित्युक्तम्। विश्वमप्यखिलं पराहन्दशिकवलितमेवेति तद्भेदोऽप्य-यमारोपित इतीवशब्दः। **आस्थाय**, ईशादिकं व्यवस्थितरूपमेव सर्वमाश्रित्य। **नाना**, "कर्मसमृद्धिरन्यस्याः, अभ्युदयोऽन्यस्याः, संसृतिरपरस्याः" इत्येवं पृथग्व्यवस्थितानि **फलानि यासां ताः**। बोध्यतया सम्बन्धिनि ता नानाफलाः, विधिनिषेधगिरः। कुर्यान्नकुर्यादित्येवंरूपाश-शब्दाः। **ननु** क्रियासाध्यं हि फलम्। न च निषेधेषु क्रिया काचिदवगमनीया। किन्तु प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव। अतो निषेधगिरो नानाफलाइत्ययुक्तमिति **उच्यते**। प्रसक्तक्रियानि-वृत्त्युपायक्रियैव "नेक्षेतोद्यन्तमादित्यमि"त्यादिवन्निषेधावगमनीयेति पक्षे प्रसक्तदुरिताऽभावपरिपालन-मेव फलमपेक्षितत्वादुपक्षिप्यते। **वस्तुतस्तु** अनिष्टसाधनताबोधिनिषेधविधिरिति व्युत्पादितं **प्रथमोल्लासे**। ततश्च निषेध्यक्रियासाध्यसंसाराद्यनर्थफलोपहरणान्निषेधगिरोऽपि नानाफला-इति युक्तमेव। **प्रथन्ते**, सर्वत्राविसंवदनीयप्रामाण्याः प्रसिद्ध्यन्ति। अत्र नानाफला इति विशेषणं, भोग्यविश्वभेदः व्यवस्थितफलकाम भोक्तृभेदश्च, **विधिनिषेधाश्रयतया**ऽवश्यादर्तव्य इति दर्शयति। **ईशेति** सम्बोधनं विधिनिषेधानां फलसम्बन्धाश्वास ईश्वरप्रति भुवमाश्रित्यैव। स हि कर्माध्यक्षः कर्मफलहेतुः। "फलमत उपपत्तेः"। सेवातारतम्यविदस्सेविताद्राज्ञः सेवाफमिव कर्मतारतम्यविद इन्द्रादिरूपेण कर्माराधितादीशादेव हि तत्फलमुपपद्यते। न कर्मणोऽचेतनात्। "श्रुतेश्च," अन्नादो वसुदानः रातिर्दातुः परायणमि"त्यादेः, हेतुव्यपदेशात्। "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः उन्निनीषतीत्यादिप्रयोजकत्वव्यपदेशात्। इति न्यायादित्येतमर्थं सूचयति।

**अयं भावः** — परमात्मतत्त्वोपलक्षणाय विश्वहेतुत्वोपपादनेन प्राप्तमीशभेदं लोकसिद्धम्, जीवजगद्भेदं चाश्रित्य विधयो निषेधाश्च प्रवर्तन्ते। यथा दर्शपूर्णमासाद्यर्थतया प्राप्तमाप्रणयनाद्याश्रित्य गोदोहनादिविधयः यागार्थत्वेन प्राप्ताध्वर्यादिकमाश्रित्य नाध्वर्युरुपगायेदित्यादिनिषेधा वा यदाश्रयणेन च यत्किञ्चित्प्रामाण्यं बोधयति तस्मिन्सति तदपवादे तस्य शुक्त्याश्रयरजतप्रत्ययवद्‍ध्य-वहारविसंवादपर्यन्तं प्रामाण्यमापद्यते। न चेशादिभेदे सत्याश्रयेऽविद्याविषये विधिनिषेधाव-बोधनीयक्रियासाध्यसाधनभावादिरपोद्यत इति तादात्विकं विधिनिषेधप्रामाण्यमनपवदनीयमेव। आत्मतत्त्वविद्याविषये च सहाश्रयेण सर्वापवादे तदप्रामाण्येऽपि न क्षतिः। कैवल्यात्। "अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि सर्वाणि च शास्त्राणि विधिनिषेधमोक्षपराणी"ति भाष्ये प्रपञ्चितम्।

**नन्वपूर्वमिदं** प्रमाणपथप्रवर्तनम्। शास्त्रजनितं तदेव विज्ञानं प्रमाचाप्रमाचेति दुर्घटं खल्वेतत् ननु "उत्सर्गे चातिदेशे च विकल्पे च प्रमाऽप्रमा। तदेव शास्त्रजं ज्ञानं तथेहापि भविष्यति"।

यथा तावत् "आहवनीये जुहोति" "न हिंस्याद्भूतानी" त्यादिशास्त्रजनितं तदेव विज्ञानं प्रमाचाऽप्रमाचेति दृष्टम्। "पदे जुहोति," "पशुमालभेते" त्यादिना, आहवनीयहोमाधारत्वादेः भूतहिंसाऽनर्थसाधनत्वादेश्चापवादात्। तथा "प्राजापत्यं चरुं निर्वपेत्," "शतकृष्णलमायुष्काम" इत्यादौ दार्शपूर्णमासिकातिदेशशास्त्रजनितं तदेव विज्ञानं प्रमाचाऽप्रमा चेति दृष्टम्।

अर्थलोपादिना तत्रावहननसाध्यत्वादिबाधात्। तथा "व्रीहिभिर्यजेत, यवैर्यजेते" त्यादि-विकल्पशास्त्रजनितं ज्ञानं तदेव प्रमाचाऽप्रमाचेति दृष्टम् यवादिपक्षे यागादेर्व्रीहिसाध्यत्वादिबाधात्। तथा "आहिताग्निस्सायं प्रातरग्निहोत्रं जुहोती" त्यादिशास्त्रजनितं तदेव ज्ञानं प्रमाचाऽप्रमाचेति दृष्टम्। "दीक्षितो न जुहोती" त्यादिनिषेधेन दीक्षिताहिताग्निकर्तृकत्वबाधात्। सोमयागसंस्था विलम्बेन कालोत्कर्षादिना सायमादिकालसम्बन्धबाधाच्च। स एष प्रकारस्सर्वविधिनिषेधशास्त्रजनित-विज्ञानेऽपि भविष्यतीति चेदुच्यते — सापवादमेकं शास्त्रमिति हि स्थितिः। तत्र यद्यप्याद्यो-दाहरणेन परस्परापेक्षयाऽर्थप्रत्यायकता। यथा यजतिषु येयजामहं करोति नानुयाजेष्वित्यादिषु, किन्तु भिन्नविधी एव, तथापि यावदुत्सर्गा विधिबुद्धिर्निषेधबुद्धिर्वा सामान्यद्वारा विशेषमालम्बते तावदेव विशेषालम्बना विध्यादिबुद्धिस्स्वविषयविश्रान्तेति तद्विरोधालोचनया सामान्यबुद्धिस्तदितर-विषयावस्थापनीयेति तदेकशास्त्रत्वोपचारः। एवं चापवादानालोचनया पुरुषदोषेण सामान्य-विषयमेव शास्त्राज्जायमानं ज्ञानं अपवाद्यानपवाद्यविषयभेदेन अप्रमा प्रमा चेति युक्तम्। अतिदेशजनितेऽपि सामान्यविषयज्ञाने तुल्योऽयं चर्चः। तत्रार्थलोपस्यायोग्यतारूपतयाऽतिदेशैक-वाक्यतैव "स्फ्यो यूपो भवति, शरमयं बर्हिः स्तृणाती" त्यादेः प्रत्याम्नानस्य "नार्षेयं वृणीते न होतारं वृणीत" इत्यादेर्निषेधस्य च पदहोमादिविधिवादातिदेशिकज्ञानविषयव्यवस्थाहेतुता दर्शनीया। वैकल्पिकेऽपि ज्ञाने कथञ्चिद्बाध्याबाध्यविषयभेद आस्थीयते। यवपक्षे तत्प्रयोगावच्छिन्नयाग-विशेषस्यैव व्रीहिसाध्यत्वबाधात् प्रयोगान्तरावच्छिन्नस्य तदबाधाच्च। "दीक्षितो न जुहोती" त्यादिश्च यदि दीक्षितपर्युदासेन पुरुषार्थहोमादिविधिवाक्यशेषः अदीक्षितो जुहोतीति। "अपि तु वाक्यशेषस्स्यादि" ति जैमिनिदर्शनात्। यदि वा प्रकरणान्तरव्यवायादतच्छेषः। किन्तु प्राकरणिकग्रहहोमादिविधिवशेन दीक्षितस्य क्रत्वर्थतया पुरुषार्थहोमादिनिषेधः। सर्वथा तदनालोचनया पुरुषार्थहोमादौ कर्तृसामान्यबुद्धिः। दीक्षितस्य होमादिनिषेधसामान्यबुद्धिर्वा विषयभेदेनैव प्रमाऽप्रमा च भवति। कर्तृविशेष एव दीक्षिते होमादिकर्तृत्वबाधात्। तस्य वा ग्रहादिहोमादिविशेषे निषेधबाधात्। प्रकृते च बाधनीयैकविषयं शास्त्रजनितं तदेव ज्ञानं प्रमाचाऽप्रमा चेति दुर्घटमेवेति। अत्राऽभिधीयते — "सोमातिरेकेऽपच्छेदे चन्द्रमोऽभ्युदये तथा। हविरार्तौ च सर्वत्र नैमित्तिकविधानतः॥ स्वरूपविधिशास्त्रोत्था बाधनीयपदा मतिः। अप्रमा च प्रमाचेति दशा भेदादुपेयते"॥

अस्ति तावदग्निष्टोमयागविधिः। "एष वाव प्रथमो यज्ञो यज्ञानां यदग्निष्टोम" इत्यादिः। तज्जनिता बुद्धिश्च प्रमा तथाविषया तदनुष्ठापनीया। तत्र सोमातिरेके निमित्ते "यस्यतृतीयसवने सोमोऽतिरिच्येत, उक्थ्यं कुर्वीत यस्योक्थ्येऽतिरिच्येत, अतिरात्रं कुर्वीते" त्यादिसंस्थाविकारविधिबाधनीयविषया सैव प्रमा तथा तस्य "द्वादशशतं दक्षिणेति दक्षिणाभेदसम्बन्धविधिः, तज्जनिता च बुद्धिस्तथैव प्रमा। तत्र "बहिष्पवमानेऽध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाते"-त्येवमन्वारभ्य प्रसर्पतां ऋत्विजामपच्छेदे निमित्ते "यद्युद्गातापच्छिद्यादक्षिणं तं यज्ञं यजेत यदि प्रतिहर्ता सर्वस्वं दक्षिणमि" ति विकारविधिबाधनीयपिया सैवाप्रमा च। तथा अस्ति दर्शादिविधिः। "आग्नेयोऽष्टाकपालो भवति, ऐन्द्रं दधि ऐन्द्रं पयः" इत्यादिः। तज्जनिता च बुद्धिः तथैव प्रमा। तत्र दर्शभ्रमेण चतुर्दश्यामेव हविषि निरुप्ते चन्द्रोदये निमित्ते "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेत्, स्वतस्त्रेधा भूतांस्तण्डुलान्निर्वापोद्दिष्टाग्न्यादिदेवताभ्यो विभजेदपनयेत्। तत्र ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रिते चरुमि"-त्यादिविकारविधिबाधनीयविषया। तत्रैव सान्नाय्यनाशे निमित्ते यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदि" त्यादि" विकार विधबाधनीयविषया च। सैवाप्रमा चोपगम्यते। न च सर्वत्र निमित्तभाव एवं कर्तव्यम्। निमित्ते सत्यन्यथेत्येकवाक्यता युक्ता, येन तदालोचनया पूर्वा सामान्यबुद्धिरेवोत्सर्गादाविव विषयभेदेन प्रमा चाप्रमा च व्यवस्थाप्येत। पौण्डरीकादाववश्यदानादिवदिह यागस्वरूपे निमित्तस्याप्रसङ्गेन निरपेक्षप्रवृत्तं स्वरूपविधिशास्त्रं **नित्यम्। नैमित्तिकशास्त्रं** तु प्रयोगे यादृच्छिकतया निमित्तस्य सम्भावनामात्रमिति तदपेक्षप्रवृत्तमनित्यमिति, नित्यानित्ययोरेकवाक्यत्वा सम्भवेन विषयविशेषव्यवस्थानायोगात्। उत्सर्गापवादौ तु तुल्यवद्व्यक्ततया एकवाक्यताविषयव्यवस्था च युक्तेति वैषम्यम्। अथाऽपि स्याच्छ्यामस्य बदरस्य कालपाके निमित्ते रक्तादिविकारवदेष यागस्य विकारः। न च तत्र पूर्वश्यामप्रत्ययः। परेण रक्तप्रत्ययेन बाधनीयविषयाऽप्रमा। एवमत्रापि स्यादिति चेन्नैवं स्यात्। वस्तुवृत्तेन हि श्यामं सद्बदरं रक्तविकृतमिति, तेन प्रागवस्थाविनाशादबाध इति युक्तम्। अत्र पुनर्यागस्य स्वरूपविधौ नैमित्तिकविधौ च प्रतीतितएव तदवस्थो विकारावस्थश्च यागः। न खलु प्रयुज्यमानोऽपि यागः निमित्ते सति विकर्तव्यः। प्रागेव यथास्वरूपविधानं अग्निष्टोमसंस्थो अग्न्यादिदैवत्यसान्नाय्यहविष्को वा वस्तुवृत्तेन सम्पन्नः। तथाहि सति तस्यैव संस्थान्तरदक्षिणान्तरदेवतान्तरद्रव्यान्तरसम्बन्धविकर्तव्यत्वविरोधः। अविकारसमाप्तत्वात्। न च तथापि पूर्वकर्तव्यत्वाबाध एव। विकृतसमाप्तौ पुनरविकृतप्रयोगापत्तेः। आहुश्चपूर्वबाधमाचार्याः "पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादान्नाद्यबाधेन सम्भवः"॥ इति। "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिद्ध्यती"ति च।

अपरे च, यथाऽदक्षिणत्वदिना द्वादश शतादिकं बाध्यते, तथा सर्वस्वं दक्षिणत्वादिनाऽदक्षिणत्वादिकमिति । एवं बाधनीयविषयं शास्त्रजनितं तदेव विज्ञानं बहुशो दशाभेदेन प्रमाचाऽप्रमाचोपगतेति । तथैव तत्त्वमस्यादिदृगात्मतत्त्वविधिशास्त्रबाधनीयविषयं कृत्स्नविधिनिषेधशास्त्रजनितं तदेव विज्ञानं प्रमाचाऽप्रमाचोपगम्यत इति नाऽपूर्वमिदं प्रमाणपथप्रवर्तनमस्माकमिति ।

**एतदुक्तं भवति** — अनधिगतव्यवहाराविसंवादिविषयज्ञानजनकत्वमेकं प्रामाण्यं, स्वप्नस्तु प्रायेणाधिगतविषयः क्वचिदेव च यदृच्छासंवादीति न तज्जनकेऽतिप्रसङ्गः । अनधिगताऽबाधनीयविषयज्ञानजनकत्वमपरं तद्विपरीतमप्रामाण्यम् । तत्राद्यं व्यवहारादिकं प्रामाण्यमभिधीयते । द्वितीयं तु तात्त्विकं विधिनिषेधशास्त्रस्य च तात्त्विकाप्रामाण्यं व्यावहारिकप्रामाण्यं चाऽविरुद्धम् । इति न दुर्घटं किञ्चिदिति सर्वमवदातम् ॥ १०० ॥

**स्यादेतत्** । आस्तां तावदयं जीवेशभेदो भ्रमोऽन्यथा वेति । यदि दृगात्मन एवौपाधिको जीवेशविभागस्स्यात्, विश्वभेदश्च, जीवो विश्वं वा ईश्वरांशो न स्यात् तदंशश्च निर्दिश्यते — "पादोऽस्य विश्वा भूतानि" । "ममैवांशो जीवलोके जीवभूतस्सनातन" इत्यादौ । यस्य च योंऽशः तस्यैव हि भोगो भवितुमर्हति, पावकस्येव विस्फुलिङ्गाः । न च तदविनाभावादेव तदंशः शुक्लादिरिव पटस्य ज्ञानादिरिव वा चेतनस्येति वाच्यम् । अविनाभावाविशेषे जीवेशयोरंशांशिभावव्यवस्थाऽनुपपत्तेः । न चेश्वरस्यैवायमौपाधिको भावो जीवो नाम तदंश इति युक्तम् । अपहतपाप्मनईश्वरस्योपाधिसम्बन्धेऽपि हेयसम्बन्धयोग्यजीवभावानुपपत्तेः । तथा च सूत्रं — "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इति । परस्य नोपाधिस्थानतोऽपि हेयसम्बन्धः सर्वत्र"ह्यपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प" इत्यादौ उभयलिङ्गं "निरस्तदोषगन्धत्वं, समस्तकल्याणगुणत्वं" चाम्नायत इति सूत्रार्थः । अतस्तत्त्वान्तरमेव जीवो विश्वं च स्थूलसूक्ष्मचिदचिद्विशिष्टस्येश्वरस्य पृथक्सिद्धविशेषणतया नियाम्यतयाऽऽधार्यतया चांशस्तनुरिति च व्यपदिश्यते । देवमनुष्यादेरिव विशिष्टस्य देह इतीमांशङ्कां परिहरन्नाह —

विश्वेश विश्वदृशितान्तरितायतोऽसौ
विश्वाहमात्मदृशिता तदहं तवांशः ।
भूतं च भावि च भवच्च जगत्समस्तं
यम्यं च धार्यमपि ते तनुरित्युपेमः ॥ १०१ ॥

अत्र यद्यपि ईश्वरस्यैव सत्यसङ्कल्पतया श्रीनीललोहितरामादिभाववदौपाधिको जीवभावोऽपि कथञ्चिदुपपादयितुं शक्यः। तदिह वादान्तरमसङ्गतम्। न स्थानतोऽपीति सूत्रं च। पृथिव्याद्युपाधिस्थानतोऽपि परस्यात्मनो नो भयलिङ्गं, सविशेषत्वं निर्विशेषत्वं च। किन्तु निर्विशेषत्वमेकमेव सर्वत्र हि। "अस्थूलमनणु अशब्दमस्पर्शमि" त्यादिश्रुतिपु निर्विशेषत्वमुपदिश्यत इति निर्विशेषात्मविषयं व्याख्यातमाचार्यैः। तदुपपादनमिदानीं अनवसरग्रस्तमिति, तुष्यत्विति न्यायेन परोदीरितमुपेत्यैतदभिधीयते।

सत्यमीश्वरस्य न स्यादौपाधिकोऽपि जीवभावः, तथाऽपि जीवईश इति न पृथगेव तत्त्वान्तरमिति युक्तम्। तथा सति हि जीवो जीवान्तरस्येव ईश्वरस्यांशो न स्यात्। ननु विशिष्टस्येश्वरस्यापृथक्सिद्धविशेषणं जीवोंशस्स्यात् तत्वान्तरत्वे तस्याऽपृथक्सिद्धविशेषणत्वमेव कुतोऽवसेयम्। तदंशत्वव्यपदेशादेवेति चेत् कथमसावंश इति हेतुविमर्शे तद्धेतुं तेनैव साधयता किं साधितं स्यात्? अन्योन्याश्रयात्। "भूमिरापोऽनलो वायुरित्यादिः प्रकृतिरपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूतामि"ति प्रकृतित्वव्यपदेशादिति चेत् स्वयङ्कल्पितकार्यसिद्धिनिर्वाहकतया राज्ञः प्रकृतय–इवाऽयमीश्वरस्य प्रकृतिस्स्यात्। न च तावताऽपृथक्सिद्धविशेषणता तदंशता वा। "तस्मिंल्लोकाश्रितास्सर्वे तदुनात्येति कश्चने"ति साक्षादपृथक्सिद्धिराम्नायत इति चेन्न, कालसाधारण्यात्। "काले हि श्रिता लोकास्तन्नातियन्ति च राजनि। राष्ट्रं श्रितं तदाज्ञाविधेयतया यन्नात्येति" इति चेति पृथक्सिद्धेऽपि दर्शनाच्च। अपि चाऽपृथक्सिद्धिस्तत्प्रयोजकं च दुर्निर्वचमिति सिद्धान्तसिद्धाञ्जने प्रपञ्चितम्। अतः तमसः परस्तादीश्वरतामप्यतीतस्य केवलदृगात्मन–एवाविद्यको विश्वजीवेशविभागः। अथ च जीवो विश्वं चेश्वरस्यांश इति प्रतिजानीमहे। कथम्? विश्वस्मिन्व्यस्ते समस्ते वा अहमात्मा अहमित्येवमात्मको दृशिः अहमभिमानमय इति यावत्। तस्य भावः, विश्वाहमात्मदृशिता जीवभावः। यतो विश्वदृशितान्तरिता, केवलविश्वदृशिता ईश्वरभावः। तदन्तर्गता दृश्याहम्भावस्यापि विश्वान्तर्गततया दृश्यत्वात्। यथा भूतादिभावो महाकालस्य जगदाधारतायामन्तर्गतः तस्यापि जगत्कोटिप्रविष्टत्वात्, तद्वत्। तत्, तस्मात्, अहं जीवः। हे विश्वेशेति सम्बोधनं वक्ष्यमाणविश्वनियाम्यत्वाद्युपयोगाय प्रकृतविषयमेव। तव, ईश्वरस्यैवांशः, भूतादिरिव महाकालस्य। न केवलमहमेव तवांशः, भूतभव्यादिरूपं समस्तं जगच्च तवांशः। भूतं जगदतीतसर्गे, भावि भविष्यत्सर्ग भवद्वर्तमानसर्गे। अत्र वृश्चिकादिबीजस्येव गोमयसर्पादेः, कदलीबीजस्येव तत्कन्ददावदग्धवेत्रबीजादेः, जगद्बीजस्यापि सर्गभेदेन कालसम्भवो, नियतिर्यदृच्छा इत्येवमन्यान्यत्वे जगत ईश्वरांशत्वव्यभिचार इति शङ्कानिवृत्त्यर्थं एकश्चकारः। यथा वर्तमानसर्गे भवज्जगदात्मबीजकतया श्रुतिप्रामाण्यादीश्वरांशः,

तथा भूते भविनि च सर्गे भूतभाविनी जगती इत्यनुमिमीमहे अन्यदाऽपि सदैकरूपप्रवृत्तश्रुति-प्रामाण्याविशेषादित्यभिप्रायः। दृश्याऽहन्दृशिगृहीततया विश्वं जीवांशः नेश्वरांश इति शङ्कानिरासाय **द्वितीयश्चकारः**। तथैव विश्वं दृश्यानहन्दृशिगृहीतत्वादीश्वरांशोऽपि स्यादित्यभिप्रायः समस्तं चेति व्यस्तजगत्सङ्ग्रहार्थस्**तृतीयश्चकारः**। न केवलं चिदात्मकं विश्वं विश्वदृशितालक्षणेश्वररूपान्तर्गततया तदविनाभूतविशेषत्वेन तदंश एव, किन्तु तन्नियाम्यत्वादिना **तच्छरीरमपि**। तेन, "यस्य पृथिवी शरीरं, जगत्सर्वं शरीरं ते, तत्सर्वं वै हरेस्तनुः" इत्यादिश्रुतिस्मृतिव्यपदेशोपपत्तिरित्याह — **यस्यं चेत्यादि**। अन्तर्यामिब्राह्मणेऽनुश्रूयते "यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयत्येष त आत्मां-तर्याम्यमृत" इत्यादिः। तन्नेश्वरस्य हिताऽहितरहिततया आप्तकामतयाऽनिन्द्रियतया च तत्सम्बन्धिचेष्टाभोगेन्द्रियाश्रयत्वाभावान्न पृथिव्यादिकं जगच्छरीरमिति युक्तम्। इति **शङ्कानिरासाय** यस्यं चेति **चकारः**। नियाम्यातिरिक्तशरीरनिरपेक्षं यद्येन नियम्यते न तत्तस्य शरीरं दृष्टम्। यथा जीवस्य देवमनुष्यादिशरीरम् ईश्वरेण च पृथिव्यादि तथा नियम्यते। सत्ताया अन्यथासिद्धत्वात् स्थितिप्रवृत्तिषु सर्वशः स्वाधीनत्वमापद्यत इति तत्तस्य शरीरमित्युपपद्यत—इत्यभिप्रायः। **धार्यमपि** अविशरणेन कार्यक्षमत्वमापादनीयम्। "य एको दाधार भुवनानि विश्वे"ति हि श्रूयते गृहादि स्थूणादिना तथा धार्यम्। न च तत्तस्य शरीरमिति व्यभिचारशङ्कानिरासाय **'अपि'शब्दः**। स्वयमधार्येण सता येन यद्धार्यं तत्तस्य शरीरं दृष्टम्। यथा जीवस्य तदेव देवमनुष्यादि-शरीरम् ईश्ववरेण च तादृशेन विश्वं धार्यमिति तत्तस्य शरीरं स्थूणादिश्च गृहैकदेशधार्य एवेति नातिप्रसङ्ग **इत्यभिप्रायः**। ईश्वरं प्रति किञ्चित्कारो दुरुपपाद इति जगतोऽकिञ्चित्करस्य तं प्रति शेषत्वायोगात्। तदिह शरीरोपचारप्रयोजकत्वेन नोपात्तम्। **केचित्तु** न नियाम्यत्वादिना विश्वं शरीरमित्युपचारः। किन्तु नियाम्यत्वादिलक्षणमेव मुख्यं शरीरं न भोगाश्रयत्वादिलक्षणमिति प्रतिजानते। **अत्र वक्तव्यं प्रपञ्चितं सिद्धान्तसिद्धाञ्जन** इति न पुनरिह प्रयत्यते ग्रन्थविस्तरभयादिति। तथाभूतं जगत्, ते, तवेश्वरस्य तनुरित्युपेमः, उपगच्छामः न "त्वशरीरं शरीरेष्वनवस्थेष्ववस्थितम्"। "स पर्यगाच्छुक्रमकायमव्रणं" इत्यादिश्रुतिदर्शनान्निवारयामः। तस्याभोगायतनभावेन शरीरसम्बन्ध-व्यावृत्त्या निष्केवलदृगात्मतत्त्वशुद्धपरत्वात्। **ईश्वरस्य तु** नियाम्यत्वादिसम्बन्धेन जगता शरीरत्वोप-गमेऽपि तदीश्वरत्वाव्याघातादित्यभिप्रायः। **इतिशब्दः** प्रभृत्यर्थः एवमन्ये च जगत ईश्वरशक्ति-विभूतित्वादिव्यपदेशा विश्वविषया उपपादनीयाः। शक्तिर्विश्वं ईश्वरस्य नियमनादितत्कार्यानुकूलाविना-भूतविशेषणत्वात् दाहादिशक्तिरिव दहनस्य। विभूतिश्च तदीश्वरस्य स्वोपाधिना विविधभावेन नियन्तृतानिर्वाहकत्वात्। "एकस्सन् बहुधा विचचार" इति हि श्रूयते। इति, "शक्तिस्सदाशिव तनुर्महिमा विभूतिरि"त्यत्र च कारणरूपापेक्षया विश्वगोचरः शक्त्यादिवादः। आत्मस्वरूपापेक्षया तु सत्त्वनिषेधादवस्तुत्वमभिहितमिति नाभ्युपगमविरोध इति ॥ १०१ ॥

इदं तावदत्रस्थितं, तत्त्वमसीति जीवेश्वरस्वरूपतत्त्वाभेद उपदिश्यते। तस्यैव दृगात्मनो जीवेशादि भेदकलुषातीतस्वभावस्याविद्यको जगज्जीवेशभेदविभागो भ्रमः। तदालम्बना एवागमेषु जीवेशादिभेदवादाः। तदुपाश्रयाणि प्रत्यक्षानुमानादीनि शास्त्राणि च विधिनिषेधमोक्षपराणि। तानि चात्रह्मतत्त्वावगतेरेव प्रमाणानि। तदवगतौ च प्रमाणप्रमेयादिसकलव्यवहारबाध–एव। स्वावस्थानां च जीवेशादीनां अन्योन्यमविनाभावेन कयाऽपि विवक्षया अंशांशिभावाद्युपचार इति। तन्नैतत्स्यात्। सन्ति हि सहस्रमागमेषु जीवेशभेदवादाः। "द्वा सुपर्णा, ज्ञाऽज्ञौ, क्षरं प्रधानममृतमक्षरं, हरः क्षरात्मानावीशते तदेव एक इत्याद्याः, तदनुग्राहकाश्चेशजगत्कारणत्वजीव संसारादिवादाः अधिकास्सन्ति च। ततोऽप्यधिकाः विधिनिषेधवादाः सर्व एवाऽमी कुतो बाधनीयविषयाव्यवस्थाप्यन्ते ?। "तत्त्वमसी" ति अभेदोपदेशबलादेवेति चेत् ननु बहूनामनुग्रहो न्याय्यः ततः "त्यजेदेकं कुलस्यार्थे" इति न्यायेन स एवैकोऽन्यथा सम्पदादिविषय उपपद्यताम्। जीवरूपमतिरस्कृत्य तस्य ब्रह्मभावसम्पादनं सम्पत्। यथाऽ "नन्तं वै मनोऽनन्ता वै विश्वेदेवाः"- इति मनसो विश्वेदेवत्वसम्पादनम्। जीवरूपतिरस्कारेण तस्य ब्रह्मभावारोपोऽध्यासः, यथा "मनो ब्रह्मेत्युपासीते"त्यादिः। समानगुणक्रियानिबन्धनो जीव ईश्वरश्च चेतन इत्यभेदाध्यवसायः, यथा "वायुर्वाव संवर्गः प्राणो वाव संसर्गः" इति। वायुप्राणाभेदाध्यवसायः। तद्विषय "स्तत्त्वमसी" त्युपदेश इति। यद्यपि सन्ति सहस्रं जीवेशाभेदवादाः। "तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, यदेवेह तदमुत्र यदमुत्र तदन्विह, सयश्चायं पुरुषे यश्चासावादित्ये स एकः"- इत्याद्याः। तदनुग्राहकाश्च – "अन्योसावन्योहमस्मीति न स वेद, मृत्योस्समृत्युमाप्नोति य इह नानेव पश्यति, उदरमन्तरं कुरुते अथ तस्य भयं भवति, स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवतीत्याद्याः अधिकाः तथापि व्यक्तिपरिगणनायां भेदोपपादकाअधिकाः। विषयतस्तु एकमुखप्रवृत्तत्वात् एक एवाऽयम-भेदोपदेशः। न खलु कश्चे जीवेशभेद इति भेदनिन्दा एव दृश्यन्ते येनाऽभेद विधिशेषास्स्युः। भेददर्शननिन्दाश्चाभेददर्शनविधिशेषतया सुगमाः। "निरञ्जनः परमं साम्यमुपैति, इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः"॥ इत्यादिफलवादभूयस्त्वानुरोधेन ब्रह्मैव भवतीत्येको वादः। "यद्विष्णु-क्रमान्क्रमते विष्णुरेव भूत्वेमाँल्लोकानभिजयती"त्यादिवत् सादृश्यविषयएव सुनयः। भेदोपपादकास्तु बहुमुखप्रवृत्ता बहुविषयाश्चेति तेषामयथाविषयत्वकल्पनमिति साहसमिति स्यात्। एवं यदि अभेदोपदेशः सम्पदादिविषय उपसंहर्तुं शक्येत। तथा सति तत्त्वमसीति सिद्धवद्वस्तुस्वरूपपरनिष्ठितः पदसमन्वयः पीड्येत। "अनन्तं वै मन" इत्यादौ सम्पदादिविषये हि नैवंविधः पदसमन्वयो दृश्यते "सन्तिमनो विश्वेदेवा" इति। अत एकेनाऽपि निरवकाशेनाभेदोपदेशेन सावकाशाभेदोपदेशा बहवोऽपि यथासम्भवं विनेतव्याः। किमङ्ग पुनः "ब्रह्म वेद ब्रह्मैव भवति, क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावरे आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन

यो वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवति, तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः, यदापश्यतः पश्यते रुक्मवर्णं तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"ति ज्ञानकालत्वोपग्रन्थात् पारम्यविशेषणाच्च। भेद एवेति ज्ञानसमकालफलवादानुगृहीतैर्बहुभिरुपदेशैरिति। एवं स्थितेऽपि वस्तुवृत्ते मन्दमतिव्याकुलीभावं प्रशमयितुमभेदविषयेऽपि बहुमुखप्रवृत्ताश्श्रुतयः उदाहर्तव्या इत्युत्तरारम्भः।

तत्र यदुक्तं "तत्त्वमसी"ति वस्तुस्वरूपपरिनिष्ठितः पदसमन्वयो न सम्पदादिविषय इति तत्तथैव। किन्तु विशिष्टाऽभेदेऽपि तत्पदसमन्वयोपपत्तिः यथाऽऽम्नायते "त्वं स्त्री, त्वं पुमानसी"त्यादि। न खलु तत्र स्त्रीपुंसादेरीश्वरस्य चाभेदो विवक्षित इति समस्ति। न च विशेषापवादं सत्तामात्रेण तदभेदविवक्षा शक्यशङ्का। "एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान् निहितार्थो दधाति"। वर्ण्यन्ते यैश्शब्दैर्ये चार्था वर्ण्यन्ते ते वर्णा नास्य सन्तीत्यवर्णः। अत एवैकः परमात्मा बहुधा शक्तियोगाद्वर्णाननेकान्बहूनि नामरूपाणि। तेष्वेव निहितः चेतनानामर्थः प्रयोजनं व्यवहारलक्षणं येन स तथाभूतोदधाति, विदधाति। चेतनभोग्यानि नामरूपाणि व्याकरोतीति प्रतिपाद्य, "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इत्याद्याधिदैविकविभूतिरनुक्रम्य, "त्वं स्त्री"त्याद्याध्यात्मिकविभूतेर्विवक्षितत्वात्। ततश्च स्त्रीपुंसादिरूपविशिष्ट एव परमात्मा, "त्वं स्त्री त्वं पुमानसी"त्यादिसामानाधिकरण्येनाभिधीयते तथा "तत्त्वमसी"ति जीवविशिष्टः परमात्माऽभिधीयताम्। अत्रापि "तत्तेजोऽसृजते"त्यादिभूतसर्गानुक्रमणेन "नामरूपे व्याकरोदि"ति नामादिव्याकरणोक्तिपूर्वकं "ऐतदात्म्यमिदं सर्वमि"ति विश्वस्य तदात्मकत्वमभिधाय, क्वचिच्चेतनविशेषे तदेवोपसंहरति "तत्त्वमसी"ति। ततश्च जीवात्मतया परमात्मोपासनविधिः तत्प्रतिपादनफलमिति न तत्त्वमसीति जीवेशस्वरूपाभेदविधिस्तद्भेदबाधेन सर्वप्रमाणादिबाधायाश्रयित-व्यइतीमां शङ्कां परिहरन्नियमेव श्रुतिरस्माकं जीवेशाभेदसाधिकेत्यभिप्रायेणाह —

त्वं स्त्री पुमानसि कुमार्युतवा कुमारो
दण्डेन वञ्चसि च जीर्ण इति श्रुतिस्त्वाम्।
देहेन्द्रियासुमयपञ्जरपक्षिभूतं
क्षेत्रज्ञमाह परमेश्वर, संविदाना ॥ १०२ ॥

अत्र त्वं स्त्री त्वं पुमानसि त्वं कुमारी त्वं जीर्णो दण्डेन वञ्चसि अवष्टम्भयष्ट्या चरसि, त्वं जातो भवसि विश्वतोमुखः" इति श्रुतिश्छन्दोऽनुरोधात्पदनिवेशविनिमयेनानुक्रान्ता।

तत्र 'उतत्वे' ति निपातसमुदायः। स्त्रीपुंसादिभावसमुच्चयार्थः। **श्लोके चकारः**, "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इत्यादेः पूर्वस्य देवादिभावस्य "नीलः पतङ्गो हरितो लोहिताक्षः" इत्यादेरुत्तरस्य पक्ष्यादिभावस्य च सङ्ग्रहार्थः इति, एवंप्रकारा श्रुतिः। **परमेश्वर, त्वां, क्षेत्रज्ञं जीवावस्थमाहेति योजना** अत्र त्वामिति परमेश्वरस्य विशिष्टस्यात्मभूतं परमात्मानं शास्त्रदृष्ट्या निर्दिशति। यथा, "त्वामेव विजानीयामि" तीन्द्रं प्रति विश्वामित्रः, यथा वा "मामेव विजानीही" ति प्रतर्दनं प्रतीन्द्रः, यथा वा "अहं मनुरभवं सूर्यश्चे" ति स्वगतमेव वामदेवस्यात्मभूतं परमात्मानमसद्वृत्तेन शास्त्रदृष्ट्या निर्दिशति। यथा सूत्रयति भगवान्बादरायणः — "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति, तद्वत्। **परमेश्वरेति** च दृश्याहमभिमानाभावेन समुद्भूतस्वात्मस्वभावतया तस्याऽऽत्माभूतः परमात्मा त्वामिति सुनिर्देश इति इन्द्रादेरत्र विविशेषोऽभिप्रेतः। अथ कथं श्रुतिः स्त्रीपुमानिति देहभेदविषयेण क्षेत्रज्ञावस्थमपि परमात्मानं ब्रूयादित्याशङ्क्य, "क्षेत्रज्ञास्समवर्तन्त गात्रेभ्यस्तस्य धीमतः। क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता"॥ इत्यादिप्रयोगभूम्ना जीवेरूढस्यापि क्षेत्रज्ञशब्दस्य, "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥ इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः। एतत्क्षेत्रं समासेन सविकारमुदाहृतम् एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः"। इति स्मृत्यनुरोधेन क्षेत्रमुक्तलक्षणमात्मात्मीयतया जानाति अभिमन्यत इति क्षेत्रज्ञ इति सम्भावितयोगव्यपाश्रयेण तदुपपादनाय देहेन्द्रियेत्यादि विशेषणम्। देहः स्थूलः स्त्रीपुंसादिलक्षणः, इन्द्रियाणि श्रोत्रादीनि दश, असवः प्राणाः पञ्च, अत्र बुद्धिमनसोरावापेन सप्तदशकं लिङ्गम्। अन्ये बुध्यतिरिक्तमहङ्कारं मन्यमानाः सप्तदशैकं लिङ्गमिति पठन्तोऽष्टादशकं लिङ्गं मन्यन्ते। तन्मयं, तदात्मकं पञ्जरं पञ्जरवत्सङ्घातं, पक्षयति परिगृह्णाति अहमिति तादात्म्येनाऽभिनिविशते इति देहेन्द्रियासुमयपञ्जरपक्षी, तद्भूतं तदवस्थमिति। तथा च देहादितादात्म्याभिमानमय आत्मा जीवः। ततश्च यथा रजतादितादात्म्याभिमानेन शुक्त्यादि रजतमिदं रज्जुमिदमिति वा सर्पोऽयमयं फणीति वा ब्रूते लोकः तथा तमपि श्रुतिस्स्त्रीति पुमानिति वा ब्रूयात्। न च लोकस्येव श्रुतेरभिमानाभावेन तथावचनानुपपत्तिः, पराभिमानसिद्धस्यैव ब्राह्मणादिभावस्येव क्रियाविधये स्त्रीपुंसादिभावस्य परमात्मतत्त्वविधयेऽनुवादोपपत्तेरित्यभिप्रायः। अत्र यथा क्रीडार्थः पक्षी शारिकादिः **पञ्जरे नियतनिविष्टः**, तथा देहादिसङ्घाते **नियतनिविष्ट एवाऽऽत्मा** जीव इति सूचयितुं, पञ्जरपक्षिभूतमित्युक्तम्। तेन देहादिनिर्मुक्तपरमात्मैव न तत्त्वान्तरजीव इति ध्वनितं भवति **यद्वा**, देहमयं पञ्जरं इन्द्रियासुमयं पक्षिणं च भूतं प्राप्तं तादात्म्येनाभिनिविष्टं देहमयं पञ्जरत्वेन इन्द्रियासुमयं पक्षित्वेन च भूतं तादात्म्यभिमानेन सम्पन्नमिति वा। **तथा च श्रुतिः** — "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरस्स पक्षी भूत्वा पुरः पुरुष आविशत्"॥ इति। "पक्षी लिङ्गशरीरं भूत्वे" ति भगवत्पादाः

उमसर्गभेदेन धातूनामर्थभेदादावेशनीयतादात्म्याभिमान एव भूतानामावेश इति लौकिकव्यवहाराच्च। आविशदिति तादात्म्याभिमानमकृतेत्यर्थः। अत्र यथा पक्षी नीडे निलीय पुन रुड्डीयते तथा लिङ्गं देहे सङ्क्रम्य पुनरुत्क्रामति। जीवस्य च देहसङ्क्रमणे तत उत्क्रमणे च लिङ्गतादात्म्याभिमान एव हेतुरिति सूचयितुं पञ्जरपक्षिशब्दः। ततश्च तदभिमानहानौ परमात्मैव जीवः, न तु स्वत उत्क्रमणादिमानणुपरिमाणस्तत्त्वान्तरमिति ध्वनितं भवति। अत्र च त्वं स्त्रीत्यादिश्रुतिः परमेश्वरस्याऽऽत्मभूतं परमात्मानमेव देहादितादात्म्याभिमानमयं जीवावस्थमाह। न तु स्त्र्यादिदेहविशिष्टतत्त्वान्तरभूतजीवविशिष्टमीश्वरमेवेति वाक्यार्थः। कुत एवमित्यतः संविदानेति श्रुतिविशेषणम्। 'सम्पूर्वाद्विदेरात्मनेपदम्'। सम्यगात्मतत्वं विदती सतीति न्यायेन संप्रदायाद्वा। ये मीमांसकयाज्ञिकाः वेदं व्याचक्षते तेषामभिप्रायोऽयमिष्यत इत्यभियुक्तोक्तेः। आत्मतत्त्वविषयश्रुतितात्पर्यविदामेव च वेदनं श्रुतेरुपचर्यते। तत्त्वान्तरत्वे हि जीवेशयोर्गोघटादिवद्विशेषणविशेष्यभावायोग इत्युक्तम्। श्रुतितात्पर्यं च परमेश्वरेति सम्बोध्य त्वामिति तदात्मभूतं परमात्मानमेव विवक्षता तद्विषयमेव सूचितम्। कथं श्रुतिस्तावत् प्राक्सृष्टेरीशो जीव इति द्वगात्मनो विभागाभावेन सम्बोध्यविशेषासिद्धेः स्थानिनोऽपि युष्मद्वृत्तस्याविषयतया, एको वर्णो वर्णाननेकान् विदधातीति प्रथमपुरुषेण व्यवहितमिव विश्वबीजं परमात्मानमभिधाय अनन्तरं विश्वाहमनहन्दशिताभेदेन जीवेशभेदे सति ईश्वरभूतस्याऽऽत्मन एव सम्बोध्यतया युष्मद्वृत्ताऽवकाश इति, य एकोऽनीशजीवस्वभावोऽनेकान्वर्णान् व्यदधात्। परमात्मा तमेवेशावस्थमभिमुखीकृत्य "त्वं स्त्री पुमानसी"ति जीवावस्थं व्यपदिशति। अन्यथा यदि प्रागेव तत्त्वान्तरं इश्वर एव सन् विश्वं विदध्यात्। स च जीवविशिष्टो विवक्ष्येत। त्वमेको वर्णाननेकान् विदधासीति ब्रूयात्। न च तथा ब्रवीति। एवमन्यत्रापि। यथा त्वमेकोऽसि बहूननुप्रविष्ट इति युष्मद्वृत्तेन व्यपदेशः। तत्रापीशावस्थामभिलक्ष्यैवेति योजनीयम्। ऐतदात्म्यमिदं सर्वमित्यादौ तु भावनिर्देशे नैष आत्मा सर्वमिति सामानाधिकरण्यपर्यवसानात्। तत्सत्यं, स आत्माऽबाधितं जगतस्स्वरूपमनृतं जगद्रूपं बाध्यमित्येवं विवक्षाऽवगमात्र जीवात्मनेव देहस्य जगतस्तदात्मना सात्मकत्वं प्रतिपाद्यमिति। "स्वादात्म्यमीश सकलं श्रुतिरामनन्ती"त्यत्रोपपादितम्। अत एव सामान्योक्तस्य विश्वसदात्मकत्वस्य तत्त्वमसीति क्वचिच्चेतनविशेष उपसंहारः स्वात्मात्मत्वेन तदुपासनविधिप्रतिपत्त्यर्थं इति यथाजातभाषितमनादरणीयम्। अपि च सदात्मकत्वं यदि चेतनविशेषे विवक्षितं तर्हि तत्पदस्य तदात्मकत्वे लक्षणा स्यात्। न च यथाश्रुतसम्भवे लक्षणा युक्ता। न चैतदात्म्यमेव सन्निहितं तत्पदेन परामृश्यते। सदात्मेतिभावेन भवितुश्चेतनस्य तत्त्वमिति सामानाधिकरण्यानुपपत्तेः। ऐतदात्म्यमिदं सर्वमिति श्रुतत्वात् भवितृभेदविवक्षा कल्प्यताम्। न च तत्पदस्य प्रकृतसदात्मप्रत्यवमर्शकत्वं व्युत्पत्तिबलायातमपहायान्यविशेषणत्वोपस्थितैतदात्म्यविषयत्वं भावभवितृकल्पनागौरवायाश्रयितव्यमिति किञ्चित्कारणमस्ति। "तत्सत्यं स आत्मा तत्त्वमसी"ति प्रायपाठेन सदात्मविषयत्वौचित्याच्च।

**अथ** एतदात्मकं सर्वमित्युक्ते ऽर्थतस्सर्वशरीरकसदात्मेति सामान्यांक्तस्य चेतनविशेषमालम्ब्य जीवशरीरकं ब्रह्मेत्युपसंहारस्तत्त्वमसीति विवक्ष्येत। तथा सति कथमत्र पदसमन्वयः? तदित्युद्दिश्य-त्वमिति विधिः उत त्वमित्युद्दिश्य तदिति विधिरिति। आद्ये, असिपदानन्वयः। अस्तेरुद्देश्यतन्त्रता— यथा "यदग्ने स्यामहं त्वं त्वं स्या अहं स्युष्टे सत्या इहाशिष" इत्यादौ अहमुद्देश्यत्वे उत्तमः, त्व मुद्देश्यत्वे मध्यमः, आशिषामुद्देश्यत्वे प्रथमश्च दृश्यते। तथाऽत्र तद उद्देश्यत्वे त्वच्छरीरकं तदस्तीति प्रथमपुरुष एव स्यात्। द्वितीये च, तत्पदस्य तदात्मकत्वे लक्षणैव स्यादित्यादि प्रपञ्चितं सिद्धान्तसिद्धाञ्जने। तस्मा "त्सदेव सोम्य इदमग्र आसीत्, एकमेवाऽद्वितीयमि" ति प्रतिज्ञातनिर्विशेषाऽद्वितीयवस्तुतत्त्वसिद्धये तस्य जगत्कारणत्वोपपादनेनारोपमुपवर्ण्य "ऐतदात्म्यमिदं सर्वमि" ति तदपवादे दर्शिते पुरुषार्थभागिनो जीवस्यापवाद्यत्वायोगेन तेन तदद्वितीयत्वप्रतिपत्तिविधातो मा भूदिति तदभेद एव तत्त्वमसीति प्रतिपाद्यत इति साम्प्रतम्। तस्माज्जीवविशिष्टपरमात्मविषये पदसमन्वये त्वं स्त्रीत्यादि न निदर्शनम्। नापि तत्त्वमसीति निदर्शनीयमिति स्थितम्। एवं सति यदुक्तं ईशकारणत्वादिवादा जीवेशभेदवादानुग्राहका इति तदयुक्तम्। "एकोऽवर्णो बहुधा शक्तियोगादि" त्यादिकारणवादो जीवेशविभागशून्यस्यैव परमात्मनो नामरूपविधायित्वाभि-धायीत्यतोऽनेन तत्स्वरूपाभेदवादस्यैवानुग्रहादिति ॥ १०२ ॥

**स्यादेतत्**। अस्ति तावत्सर्वपदवाच्यत्वं परमात्मनश्शास्त्रसिद्धम्। "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते"ति हि श्रूयते। अत्र प्राङ्नामव्याकरणादव्याकृतं अव्यक्तमात्मनैव व्याक्रियत, व्यक्तमक्रियतेत्येष न विवक्षितोऽर्थः, नामग्रहणानर्थक्यप्रसङ्गात्। रूप्यमाणतैव हि शब्दार्थाभ्यां प्रकाराभ्यां व्यक्तीकरणमिति रूपग्रहणादेव तत्सिद्धेः। किं तर्हि? नामरूपाभ्यां विशिष्टा क्रियतेति। तत्र रूपवैशिष्ट्यमात्मात्मीयभावः, नामवैशिष्ट्यमभिधानाभिधेयभावः। अत एव शब्देत्यनिर्दिश्य नामेति संज्ञापर्यायनिर्देशः। अत एव च कथं तन्नामरूपाभ्यां व्याक्रियतेत्यपेक्षायां, "असौ नामाऽयं इदं रूपमि"त्यभिनीयते। अतो डित्थादिनाम यस्येत्यस्मिन्नर्थे असौ नामेति च्छान्दसो निर्देशः। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"त्यन्याऽपि श्रुतिः। अनयैव दिशा व्याख्येया। "नतास्स सर्ववचसां प्रतिष्ठा यत्र शाश्वती"। "वचसां वाच्यमुत्तमम्" इत्याद्या स्मृतिश्च। सर्वशब्दवाच्यतां स्पष्टमाह। ततश्च स्त्र्यादिशब्दैस्त्वमहमादिशब्दैश्च जीवेऽभिधानपर्यवसानाभावादर्थतो विशिष्टाऽभेद परमात्मैवाऽभिधेयो, न जीवावस्थ इत्यतो एव त्वं स्त्रीत्यादौ, तत्त्वमसीत्यादौ चाऽऽपद्यत इति कथं तन्निरास — इति शङ्कामात्रं परिहर्तव्यम्। तत्र यथा गवादिशब्दा गवान्तरादिकमनभिदधाना एव गवादिकमभिदधते तथा किं सर्वे शब्दास्तं तं अर्थमनभिदधाना एव परमात्मानमभिदधीरन् किं वा त एव

गोत्वादिकमभिदधाना एव तद्विशिष्टं गवादिकमिव तं तमर्थमभिदधाना एव तद्विशिष्टं परमात्मानमभिदधीरन्निति । आद्ये परमात्मनो जीवत्वमेवानुपपन्नं शब्दप्रवृत्तिनिमित्तसम्बन्धानिरूपणादित्यभिप्रेत्याह —

ये त्वामशेषवचसां वचनीयमीश
तत्तन्मयत्वमनपेक्ष्य वदन्ति मन्दाः ।
ते जातिनामगुणकर्मभिदाऽभिदादि-
वाग्वृत्तिहेतुमिह किं त्वयि सङ्गिरन्ताम् ॥ १०३ ॥

अत्र यद्यपि तद्ब्रह्मेदमिदि विधेयविशेषणं, परिदृश्यमाननामरूपात्मकजगदात्मना न व्याकृतमव्याकृतमासीत् । तन्नामरूपाभ्यामेव वाच्यवाचकरूपजगदात्मना व्यक्तमक्रियतेत्येव शक्यं व्याख्यातुं, नामग्रहणं च तयोरेवाऽन्योन्याऽभिधानाऽभिधेयभावविवक्षया, न तु परमात्माभिधेयत्वविवक्षयेति सुवचं । **एवमन्यत्रापि** । यद्यपि रूपव्याकरणमुत्पादनं नामव्याकरणं तु व्युत्पादनम् तथापि तत्समभिव्याहृतरूपविषयमेवास्थेयम् । तावतैव नामेति ग्रहणार्थवत्वोपपत्तेः । एवमपि यदि परमात्मैव सर्वपदवाच्य इति शास्त्रतस्साधनीयः । तथापि तत्तन्मयो जगदवस्थ एव । यथा घटादिमयी मृत् घटादिशब्दवाच्या रजतादिमयी वा शुक्तिः रजतादिशब्दवाच्या तद्वत् । अत एव पदभाष्ये "इदं जगत् तत्परोक्षमव्याकृतावस्थमासीत् प्रलये, इदानीं तदेव नामरूपाभ्यां व्यक्तमक्रियते"ति जगदवस्थाविषयमेव व्याख्यातम् । ततो नामरूपाभ्यां विशिष्टमपि क्रियमाणं जगदवस्थमेव ब्रह्मेति युक्तम् । तथा च श्रुतिलिङ्गम् "नैव स्त्री न पुमानेष नैव चायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स चोद्यते" । इति । आदानमहमिति तादात्म्याभिमान एव ।

ये पुनस्तत्तन्मयत्वमनपेक्ष्य, हे ईश, त्वां ईश्वरमेव । परपक्षे त्वामिति ईशोत्तीर्णविवक्षा मा भूदिति ईशेत्यत्र सम्बोधनम् । **अशेषवचसां**, ब्रह्मादिशब्दवाच्यत्वमवस्थितं कृत्वा शब्दान्तरसङ्ग्रहार्थमशेषविशेषणम् । अत्र सर्वेति विशेषणं न कृतम् । सर्वः पटो रक्त इत्येकस्मिन्नपि साकल्यपरस्सर्वशब्दो दृष्ट इति सन्निहितैरेव भवशिवादिभिरन्यथासिद्धिसम्भवात् । अत एव च "विश्वजित्सर्वपृष्ठो भवती"त्यत्र सर्वशब्दस्य ज्यौतिष्टोमिकविध्यन्तातिदेशसन्निधापितबृहद्रथन्तरपृष्ठद्वयविषयत्वमाशङ्कितम् । "द्वयोरिति चेदि"ति "उत्पन्नाधिकारो

ज्योतिष्टोम" इति पूर्वसूत्रादिह द्वयोः पृष्ठयोरधिकार इत्यनुषज्यते सर्वशब्देनोपादानमित्यर्थः। ननु तद्दूषितं, न, व्यर्थत्वात् सर्वशब्दस्येति बहुविषयस्सर्वशब्दो द्वयोरर्थशून्यस्स्यादिति सोऽयमभ्युच्चयः। अन्यथा "सर्वः पटो रक्त" इत्यादिविरोधात्। किन्तु तत्र "पवमाने रथन्तरं करोति, आर्भवे बृहन्मध्य इतराणि वैरूपं होतुस्साम वैराजं मैत्रावरुणस्य रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्ये"ति विनिवेशविधिलिङ्गदर्शनादसन्निहितषाडहिकपृष्ठातिदेशविधिरिति व्यवस्थितम्। अन्यथा लिङ्गानादरे य "द्वैंश्यस्तोमे (कण्व) रथन्तरं पृष्ठं भवती"ति विहितं तदपीह सर्वशब्देनाधिक्रियेत, असन्निहित-पृष्ठाधिकाराविशेषादिति।

अत्र पुनस्सर्वविशेषणेनासन्निहितयावदभिधानग्रहकारणाभावइति। अशेषेति विशेषणेन तु न शेषमीश्वरावाचकं येषु तेषां अशेषाणां वचसामिति व्यवहिताभिधानान्यपि सङ्गृहितानि भवन्ति। वेणुवीणादिशब्दव्यावृत्त्या वाचकशब्दग्रहणार्थं वचश्शब्दः। तेषां वचनीयं वाच्यमर्थं, वदन्ति **मन्दाः।** अभिधेये प्रवृत्तिनिमित्तसम्बन्धेनाऽभिधावृत्तिरित्यभिधानाऽभिधेयवृत्तमजानन्तः। इहेति निर्धारणे सप्तमी। लोकव्यवहारतश्शब्दवृत्तिनिमित्ततयाऽवगतेषु मध्ये। "चर्मणि द्वीपिनं हन्ती"त्यादिवन्निमित्तसप्तमी वा। परमात्मनस्सर्वपदवाच्यत्ववादे निमित्ते वा **जातिनामगुणकर्म-भिदाऽभिदा आदयः यस्य,** किमिति सामान्यतो निर्देष्टव्यस्य तत्तथा। तत्किं? तेष्वन्यतमं **त्वयि ईश्वरे वाग्वृत्तिहेतुं** शब्दप्रवृत्तिनिमित्तं **सङ्गिरन्तामिति** योजना। यद्वा, जातीत्यादि वाग्वृत्तिहेतुविशेषणम्। मयूरव्यंसकादिवत्समासः। जातिनामगुणकर्मभिदाऽभिदादिलक्षणो वाग्वृत्ति-हेतुरिति। **अथवा,** जातिनामगुणकर्मभिदाऽभिदादिषु वाग्वृत्तिहेतुरिति सप्तमीयोगविभागात्समासः। 'न निर्धारण'—इति षष्ठीसमासस्य प्रतिषेधो न सप्तमीसमासस्य। पुरुषेषु उत्तमः पुरुषोत्तम इत्यादि-दर्शनात्। तत्र क्वचित्तावज्जातिशब्दप्रवृत्तिनिमित्तं गौरश्वो देवो मनुष्यः स्त्री पुमानित्यादौ, क्वचिन्नाम डित्थो डवित्थ इत्यादौ, क्वचिद्गुणः नीलो गौरः पटुर्मृदुरित्यादौ, क्वचित्कर्म वदान्यः श्रोत्रिय इत्यादौ, क्वचिद्भेदः त्वमन्य इत्यादौ, क्वचिदभेदः एकस्समस्समान इत्यादौ "सयश्चायं पुरुषे, सयश्चासावादित्ये, स एकः," "एकरसं जलमि"त्यादिप्रयोगेष्वभेदविवक्षादर्शनात्। न च "तिस्र आहुतीर्जुहोती"त्यादौ बहुत्वसङ्ख्यया भेद इवात्र एकत्वसङ्ख्ययाऽभेदआक्षिप्यत इति युक्तम्। अभेदविवक्षयैव प्रयोगबाहुल्ये सति तत्र शक्तेरेव न्याय्यत्वात्। ननु समसमयौ समानाधिकरणावित्यादौ समादिशब्दस्तुल्यपर्यायः। साधारणपर्यायो वा। न तुल्यत्वस्य भेदगर्भत्वेन क्षणिकेषु समसमयत्वादि-व्यवहारानाञ्जस्यप्रसङ्गात्। द्वयोरेकं साधारणमिति तदभेदमप्रतीत्य साधारण्यप्रत्ययायोगेनावश्य-ज्ञाप्याभेदस्यैव लाघवेन समादिशब्दवृत्तिविषयत्वौचित्याच्चेत्यास्तामयमस्थाने चर्चः। आदिशब्दाद्द्र-व्यसम्बन्धौ गृह्येते। क्वचिद्द्रव्यं शब्दवृत्तिनिमित्तं, अवटीट आढ्य इत्यादौ, क्वचित्सम्बन्धः,

गोत्वादिकमभिदधाना एव तद्विशिष्टं गवादिकमिव तं तमर्थमभिदधाना एव तद्विशिष्टं परमात्मानमभिदधीरन्निति । आद्ये परमात्मनो जीवत्वमेवानुपपन्नं शब्दप्रवृत्तिनिमित्तसम्बन्धानिरूपणादित्यभिप्रेत्याह —

ये त्वामशेषवचसां वचनीयमीश
तत्तन्मयत्वमनपेक्ष्य वदन्ति मन्दाः ।
ते जातिनामगुणकर्मभिदाऽभिदादि-
वाग्वृत्तिहेतुमिह किं त्वयि सङ्गिरन्ताम् ॥ १०३ ॥

अत्र यद्यपि तद्ब्रह्मेदमिदि विधेयविशेषणं, परिदृश्यमाननामरूपात्मकजगदात्मना न व्याकृतमव्याकृतमासीत् । तन्नामरूपाभ्यामेव वाच्यवाचकरूपजगदात्मना व्यक्तमक्रियतेत्येव शक्यं व्याख्यातुं, नामग्रहणं च तयोरेवाऽन्योन्याऽभिधानाऽभिधेयभावविवक्षया, न तु परमात्माभिधेयत्वविवक्षयेति सुवचं । **एवमन्यत्रापि** । यद्यपि रूपव्याकरणमुत्पादनं नामव्याकरणं तु व्युत्पादनम् तथापि तत्समभिव्याहृतरूपविषयमेवास्थेयम् । तावतैव नामेति ग्रहणार्थवत्त्वोपपत्तेः । एवमपि यदि परमात्मैव सर्वपदवाच्य इति शास्त्रतस्साधनीयः । तथापि तत्तन्मयो जगदवस्थ एव । यथा घटादिमयी मृत् घटादिशब्दवाच्या रजतादिमयी वा शुक्तिः रजतादिशब्दवाच्या तद्वत् । अत एव पदभाष्ये "इदं जगत् तत्परोक्षमव्याकृतावस्थमासीत् प्रलये, इदानीं तदेव नामरूपाभ्यां व्यक्तमक्रियते"ति जगदवस्थाविषयमेव व्याख्यातम् । ततो नामरूपाभ्यां विशिष्टमपि क्रियमाणं जगदवस्थमेव ब्रह्मेति युक्तम् । तथा च श्रुतिलिङ्गम् "नैव स्त्री न पुमानेष नैव चायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स चोद्यते" । इति । आदानमहमिति तादात्म्याभिमान एव ।

ये पुनस्तत्तन्मयत्वमनपेक्ष्य, हे ईश, त्वां ईश्वरमेव । परपक्षे त्वामिति ईशोत्तीर्णविवक्षा मा भूदिति ईशेत्यत्र सम्बोधनम् । **अशेषवचसां,** ब्रह्मादिशब्दवाच्यत्वमवस्थितं कृत्वा शब्दान्तरसङ्ग्रहार्थमशेषविशेषणम् । अत्र सर्वेति विशेषणं न कृतम् । सर्वः पटो रक्त इत्येकस्मिन्नपि साकल्यपरस्सर्वशब्दो दृष्ट इति सन्निहितैरेव भवशिवादिभिरन्यथासिद्धिसम्भवात् । अत एव च "विश्वजित्सर्वपृष्ठो भवती" त्यत्र सर्वशब्दस्य ज्यौतिष्टोमिकविध्यन्तातिदेशसन्निधापितबृहद्रथन्तरपृष्ठद्वयविषयत्वमाशङ्कितम् । "द्वयोरिति चेदि"ति "उत्पन्नाधिकारो

ज्योतिष्टोम" इति पूर्वसूत्रादिह द्वयोः पृष्ठयोरधिकार इत्यनुषज्यते सर्वशब्देनोपादानमित्यर्थः। ननु तद्दूषितं, न, व्यर्थत्वात् सर्वशब्दस्येति बहुविषयस्सर्वशब्दो द्वयोरर्थशून्यस्स्यादिति सोऽयमभ्युच्चयः। अन्यथा "सर्वः पटो रक्त" इत्यादिविरोधात्। किन्तु तत्र "पवमाने रथन्तरं करोति, आर्भवे बृहन्मध्य इतराणि वैरूपं होतुस्साम वैराजं मैत्रावरुणस्य रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्ये"ति विनिवेशविधिलिङ्गदर्शनादसन्निहितषाडहिकपृष्ठातिदेशविधिरिति व्यवस्थितम्। अन्यथा लिङ्गानादरे य "द्वैश्यस्तोमे (कण्व) रथन्तरं पृष्ठं भवती"ति विहितं तदपीह सर्वशब्देनाधिक्रियेत, असन्निहित-पृष्ठाधिकाराविशेषादिति।

अत्र पुनस्सर्वविशेषणेनासन्निहितयावदभिधानग्रहकारणाभावइति। अशेषेति विशेषणेन तु न शेषमीश्वरावाचकं येषु तेषां अशेषाणां वचसामिति व्यवहिताभिधानान्यपि सङ्गृहितानि भवन्ति। वेणुवीणादिशब्दव्यावृत्त्या वाचकशब्दग्रहणार्थं वचश्शब्दः। तेषां वचनीयं वाच्यमर्थं, वदन्ति मन्दाः। अभिधेये प्रवृत्तिनिमित्तसम्बन्धेनाऽभिधावृत्तिरित्यभिधानाऽभिधेयवृत्तमजानन्तः। इहेति निर्धारणे सप्तमी। लोकव्यवहारतश्शब्दवृत्तिनिमित्ततयाऽवगतेषु मध्ये। "चर्मणि द्वीपिनं हन्ती"त्यादिवन्निमित्तसप्तमी वा। परमात्मनस्सर्वपदवाच्यत्ववादे निमित्ते वा **जातिनामगुणकर्म-भिदाऽभिदा आदयः यस्य,** किमिति सामान्यतो निर्देष्टव्यस्य तत्तथा। तत्किं ? तेष्वन्यतमं **त्वयि ईश्वरे वाग्वृत्तिहेतुं** शब्दप्रवृत्तिनिमित्तं सङ्गिरन्तामिति योजना। यद्वा, जात्यादि वाग्वृत्तिहेतुविशेषणम्। मयूरव्यंसकादिवत्समासः। जातिनामगुणकर्मभिदाऽभिदादिलक्षणो वाग्वृत्ति-हेतुरिति। अथवा, जातिनामगुणकर्मभिदाऽभिदादिषु वाग्वृत्तिहेतुरिति सप्तमीयोगविभागात्समासः। 'न निर्धारण'—इति षष्ठीसमासस्य प्रतिषेधो न सप्तमीसमासस्य। पुरुषेषु उत्तमः पुरुषोत्तम इत्यादि-दर्शनात्। तत्र क्वचित्तावज्जातिशब्दप्रवृत्तिनिमित्तं गौरश्वो देवो मनुष्यः स्त्री पुमानित्यादौ, क्वचिन्नाम डित्थो डवित्थ इत्यादौ, क्वचिद्गुणः नीलो गौरः पटुर्मृदुरित्यादौ, क्वचित्कर्म वदान्यः श्रोत्रिय इत्यादौ, क्वचिद्भेदः त्वमन्य इत्यादौ, क्वचिदभेदः एकस्समस्समान इत्यादौ "सयश्चायं पुरुषे, सयश्चासावादित्ये, स एकः," "एकरसं जलमि"त्यादिप्रयोगेष्वभेदविवक्षादर्शनात्। न च "तिस्र आहुतीर्जुहोती"त्यादौ बहुत्वसङ्ख्यया भेद इवात्र एकत्वसङ्ख्ययाऽभेदआक्षिप्यत इति युक्तम्। अभेदविवक्षयैव प्रयोगबाहुल्ये सति तत्र शक्तेरेव न्याय्यत्वात्। ननु समसमयौ समानाधिकरणावित्यादौ समादिशब्दस्तुल्यपर्यायः। साधारणपर्यायो वा। न तुल्यत्वस्य भेदगर्भत्वेन क्षणिकेषु समसमयत्वादि-व्यवहारानाञ्जस्यप्रसङ्गात्। द्वयोरेकं साधारणमिति तदभेदमप्रतीत्य साधारण्यप्रत्ययायोगेनावश्य-ज्ञाप्याभेदस्यैव लाघवेन समादिशब्दवृत्तिविषयत्वौचित्याच्चेत्यास्तामयमस्थाने चर्चः। आदिशब्दादद्र-व्यसम्बन्धौ गृह्येते। क्वचिद्द्रव्य शब्दवृत्तिनिमित्तं, क्वचित्सम्बन्धः, अवटीट आढ्य इत्यादौ,

पिता पुत्र इत्यादौ। नन्वभावोऽपि क्वचिच्छब्दप्रवृत्तिनिमित्तं, नपुंसकमित्यादौ स्त्रीत्वादिजात्यभावः, जड इत्यादौ ज्ञानादिगुणाभावः व्रात्य इत्यादावध्ययनादिक्रियाभावः, बन्ध्य इत्यादौ जनकतादिसम्बन्धाभावः दरिद्र इत्यादौ द्रव्याभावादिति। सत्यं, स्त्रीत्वादयो हि तादात्म्योपाधयः तादात्म्यप्रतियोगिकाभावश्च भेद इष्यते न्यायिभिः। अतः स्त्रीपुंसान्यो नपुंसकः, प्राज्ञान्यो जड इत्येवं भेदान्तर्भावादनतिरेकइत्यास्तामयमप्यनवसरे विस्तरः। तमिमं वाग्वृत्तिहेतुमित्येकवचनम्, जात्यादिष्वेकैकमेव प्रवृत्तिनिमित्तमिति सूचयितुम्। **ननु** द्वयं त्रयं वापि शब्दवृत्तिनिमित्तं दृश्यते। यथा दुहितेत्यस्य स्त्रीत्वसम्बन्धौ, सम्राडित्यस्य क्रियासम्बन्धजातयः। "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः शास्ति यश्चाज्ञया राज्ञः स सम्राडिति कथ्यते"। **इति हि वदन्ति**। न, एकत्र जातिविशिष्टस्सम्बन्धोऽन्यत्र जातिक्रियाविशिष्टस्सम्बन्धः, क्रियासम्बन्धविशिष्टा जातिर्वा तत्राप्येकमेव प्रवृत्तिनिमित्तम्। अन्यथा प्रवृत्तिनिमित्तभेदेशक्तिभेदापत्तेः। गवाक्षादावपि शक्तिभेदे तदतिरिक्तनियामकाभावात्। पुष्पवन्तशब्दस्यापि रविशशिनोरुभयविवक्षैकप्रयुक्तिनियमेऽपि शक्तिभेदापरिहारादित्यभिप्रायः। **किं सङ्गिरन्तां?** किमिति सामान्यविवक्षया नपुंसकनिर्देशः। व्यधिकरणेऽद्वितीये न किञ्चिदपि जात्यादिलक्षणं शब्दवृत्तिहेतुं सङ्गिरेरन्नित्यर्थः। "समः प्रतिज्ञाने" इति गिरतेरात्मनेपदम्। सम्भावनायां लोट्। आस्तां तावदीश्वरे गवादिशब्दवृत्तिनिमित्तसम्बन्धोपपादनम्। तत्प्रतिज्ञामपि न सम्भावयेयुरित्यभिप्रायः। **तथाहि —**

लोकव्यवहारे तावद्गवादिशब्दवृत्तिनिमित्तजात्यादिसम्बन्धो गवादिष्वेवाऽधिगतः। ईश्वरश्च यद्यत् तत्तन्मय एव गवादिपदवाच्चः, तर्हि तत्र तत्तत्पद प्रवृत्तिनिमित्तसम्बन्धो वक्तव्यः। अन्यथा तदभावेऽपि शब्दप्रवृत्तौ करिणीकरभशब्दवृत्तिप्रसङ्गात् गवाद्यन्तर्यामितयाऽऽत्मनस्तत्सम्बन्ध इति चेत् कालस्याऽपि तदाधारतया तत्सम्बन्धे सति गवादिशब्दवाच्यत्वप्रसङ्गः। **ननु** "दृष्टं कार्यं कारणकल्पनायां प्रमाणं, न तु कारणानुपलब्ध्या तदेव बाधनीयमि"ति नीतिविदः। तत्र परमात्मनस्सर्वपदवाच्यत्वे शास्त्रसिद्धे गवादिशब्दवृत्तिनिमित्तसम्बन्धे तयोरात्मात्मीयताविशेष इति कालादावनतिप्रसङ्ग इति चेत्सत्यं, दृष्टकार्यं कारणकल्पनायां हेतुः। तद्विशेषस्तु परिशेषादवगन्तव्यः। परमात्मा च "बहुस्यां प्रजायेयेति, सच्च त्यच्चाभवत्, अजायमानो बहुधा विजायते, स वाऽयमात्मा ब्रह्म मनोमय विज्ञानमय इत्यादि प्रकृत्य, "तद्यदेतदिदंमयोऽदोमय" इति चाहत्य **तत्तन्मय आम्नायते**। एवं तत्तन्मयतयैव परमात्मनस्साक्षादेव गवादिशब्दवृत्तिनिमित्तसम्बन्धेन गवादिशब्दवाच्यत्वस्य प्रसक्तस्याप्रतिषेधनीयत्वात्। अत एव तत्तन्मयत्वेनैव परमात्मनस्सर्वक्रियाविषयत्वं च दर्शयति – "यजन्यज्वा यजत्येनं जपन्नपि। घ्नंस्तथाऽन्यं हिनस्त्येनं सर्वभूतां यतो हरिः"॥ इति न चात्मात्मीयतासम्बन्धमात्रे शरीरे हन्यमाने तदात्मापि विविक्तां

हन्यते, "नहन्यते हन्यमाने शरीरे" इति हि स्मृतिः। अपि चैवमत्र पक्षे न विशिष्टभेदो वाक्यार्थस्सिद्ध्येत्। जगता जीवेन वा विशिष्टस्यात्मनः पदवृत्तिविषयत्वानुगमात्। अथात्मनि तत्तदात्मत्वोपाधिकतया तत्तत्पदवृत्तिनिमित्तसम्बन्धस्य तद्घटकतया गवाद्यनुप्रवेशादर्थतो विशिष्टवृत्तिसिद्धिः पदस्य स्यात्। यथा देवदत्तस्य नप्तेत्यादौ नप्त्रादिपदवृत्तिनिमित्तविशेषसम्बन्धघटकतया तत्पुत्रादेरनुप्रवेशाद्देवदत्तपुत्रपुत्रस्य पुत्र इति तस्य विशिष्टवृत्तिरार्थिकी, यथा वा गङ्गायां घोष इत्यादौ तीरे लक्षणीये लक्षणाघटकतया शक्यसम्बन्धानुप्रवेशात् गङ्गाविशिष्टे तीरे शब्दवृत्तिरार्थिकी तद्वदिति चेत् नैवं, तत्र युक्तं नप्त्रादिपदस्य ससम्बन्धिकवृत्तिकवृत्तितया व्युत्पत्तिरेव तत्पुत्रपुत्रानुप्रवेशेनेति तदुपस्थितिनैयत्यात् लाक्षणिकेऽपि शक्यसम्बन्धोपस्थितिनैयत्यादार्थिको विशिष्टवृत्तिलाभइति। इह पुनर्गवादिशब्दास्त्वमादिशब्दा वा न ससम्बन्धिकवृत्तयः। नापि गवादिसम्बन्धोपस्थितिनियता इति नार्थतोऽपि विशिष्टवृत्तिलाभो युक्तः। अथ यदि तदात्मतासम्बन्धोपस्थितिमूलैव गवादिपदव्युत्पत्तिरित्युच्येत तर्हि शक्यसम्बन्धोपस्थितिमूला तत्र लक्षणैव पदवृत्तिः स्यान्न शक्तिः। ततश्च तत्त्वमसीत्यादौ श्वेतकेतो इति सम्बोधनस्य त्वंशब्दस्य च परमात्मनि लक्षणयाईशत्वं जगत्कारणमसीति स्तुतिमात्रेण न दृष्टं पश्यामइत्यदृष्टार्थतयैवापद्येत। ऐतदात्म्यमिदं सर्वमित्युक्तस्यैव क्वचिच्चेतनविशेष उपसंहारः, तत्त्वमसीति स्वाभ्युपगमविरोधश्च स्यात्। अपि चैवं गवादयोऽपि गवादिशब्दवाच्या न वा। आद्ये तत्रैव गवादिशब्दशक्तिरवस्येत्। तन्निमित्तस्य गोत्वादेस्तत्रैव साक्षात्सम्बन्धात् न परमात्मानं यावदनुद्रवेत्। तत्र तन्निमित्तसम्बन्धव्यवधानात्। अन्यथा अविनाभाविनी तीरादौ गङ्गादिलक्षणा न स्यात्। तत्र तन्निमित्तसम्बन्धव्यवधानात्। अन्यथा अविनाभाविनी तीरादौ गङ्गादिलक्षणा न स्यात् तत्र गङ्गात्वादितन्निमित्तपरम्परासम्बधसौलभ्यात्। अथाऽपत्यशब्दः साक्षात्सम्बन्धनिमित्तशक्तिकः पुत्रे नप्त्रादौ च परम्परासम्बन्धनिमित्तशक्तिक इति दृष्टम्। एवं परमात्मन्यपि गवादयो व्यवहितजातिनिमित्तशक्तिका अपि स्युः। यदि तत्र अपत्यं पौत्रप्रभृतिगोत्रमित्यादिव्यवहारेण व्यवहिताव्यवहितसम्बन्धनिमित्तसाधरणी शक्तिरिष्येत तर्हि तथैव वचसां वाच्यमुत्तमम्। "त्व स्त्री त्वं पुमानसी" त्यादिशास्त्रव्यवहारानुसारेणैव व्यवहिताव्यवहितनिमित्तसाधारणी शक्तिरिष्यताम्। नैवं, अनन्यथासिद्धो हि व्यवहारः शक्तिं कल्पयति। यथा लोके वृक्षादावश्वकर्णादिव्यवहारः, शास्त्रे वाऽग्निविशेषादौ आहवनीयादिव्यवहारः। प्रकृते तु विविक्ते परमात्मनि शक्यसम्बन्धनियमात् लाक्षणिकत्वेनाऽपि तद्व्यवहारोऽन्यथासिद्धः। तीरादौ गङ्गादिव्यवहारवत्। ताद्रूप्येण वा शाक्त एव व्यवहारः स्यात्, न तु विविक्तात्मविषया गवादिशक्तिकल्पना युक्ता। अथ तर्हि गवादयो न वाच्याः परमात्मैव तु तदात्मतया गोत्वादिसम्बन्धेन वाच्य इति तर्हि गामानय, गौर्दक्षिणेति निखिललौकिकवैदिकव्यवहारोत्सादः।

ननूभयं परिहृतं सूत्रकृता । "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तः तद्भावभावित्वादि" ति । "एतस्माज्जायते प्राणः," "यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत" इत्यादि साक्षाद्ब्रह्मजत्वश्रवणात् । "तत्तेज ऐक्षत, तदपोऽसृजत ता आप ऐक्षन्त तामन्नमसृजन्ते" त्यादावपि "तदभिध्यानादेव तु तल्लिङ्गात्" इति न्यायेनेक्षणादिरूपात् परमात्मलिङ्गात् परमात्मैव तच्छरीरं कारणं, न तु पितामहादिरिव मनुष्यपशुपक्ष्यादेः परम्पराकारणम् । तेजः प्रभृतयश्च शब्दास्तदात्म भूतं ब्रह्मैवाभिदधति इति स्थिते तर्हि तैस्तैश्शब्दैस्तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्धो विरुध्येतेति शङ्कायामिदमुच्यते — जङ्गमस्थावरव्यपाश्रयस्तत्तच्छब्दव्यपदेशो **भाक्तः**। वाच्यैकदेशे भङ्क्त्वा क्रियत इत्यर्थः । कुतः परमात्मप्रतीतिभाव भावित्वात् तत्पर्यवसानस्य अथवा चराचरव्यपाश्रयः तद्व्यपदेशो ब्रह्मव्यपदेशो-ऽभाक्तः। ब्रह्मण्यगौणएव कुतः तद्भावभावित्वात्, तदनुप्रवेशाधीनत्वाच्छब्दानां वाचकभावस्या "नुप्रविश्य नामरूपे व्याकरवाणी" ति हि श्रूयतइति सोऽयमात्मीयशेमुषीदोषो न भगवति सूत्रकृति रूषयितुं युक्तः। अस्य हि अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्। प्राणा न जीवेन सह गच्छन्ति । "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणाश्चक्षुरादित्यं मनश्चन्द्रं दिशश्श्रोत्रमि-त्याद्यग्न्यादिगतिश्रुतेरिति चेन्न, वागादेरग्न्याद्यधिष्ठातृकरणीयोपकारनिवृत्तिविषयतया गौणत्वादिति। "तथा भाक्तं वा नात्मवित्वात् तथाहि दर्शयति" । इष्टादिकर्मणा चन्द्रं प्राप्तस्स "एष सोमो राजा तद्देवानामन्नं तं देवाभक्षयन्ती" त्येतत् भाक्तं गौणं, अनात्मवित्वात् इष्टादिकारिणो देवानामन्नवत् भोग्यत्वात्। तथाहि दर्शयति श्रुतिः — "योऽन्यां देवतामुपास्ते-ऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामि" ति । इति च भाक्तशब्दस्य गौणपर्यायत्वमभिप्रेतम् । तद्वरुद्धमिह भङ्क्त्वा व्यपदिश्यत इति भाक्तशब्दव्याख्यानमयुक्तम् । ब्रह्मपर्यवसानस्य तद्भावभावित्वादित्यत्र च साध्याध्याहारमस्वपदव्याख्यानं चायुक्तम् । द्वितीयव्याख्याने चाभाक्त इति क्लिष्टोऽकारप्रश्लेषः । ननु भङ्क्त्वा व्यपदिश्यत इति लाक्षणिक एव भाक्त-शब्दानुगतिमात्रमुक्तम् । सम्राडादिशब्दस्य राजादिमात्र इव वाच्यैकदेशवृत्ते गौणलाक्षणिकत्वा-ऽन्यतरस्यावश्यंभावादिति चेत् समस्तलौकिकवैदिकव्यवहारानुगतो गवादौ गवादिशब्दव्यपदेशो लाक्षणिको गौणो वा कथमपि 'गिरिखननगिरिकाग्रहण' न्यायकल्प्यः । ब्रह्मणि तद्व्यपदेशो मुख्य इति न न्यायविदामनुरूपम् । तस्मान्न चराचरसूत्रमात्मनस्सर्वपदवाच्यत्वविषयं । किन्तु प्रागुक्तविधया जीवजन्मादिव्यपदेशान्यथासिद्धविषयमेवेति सिद्धमात्मनो विविक्तस्य न गवादिपदवाच्यता, प्रवृत्तिनिमित्तसम्बन्धाभावादिति ॥ १०३ ॥

**एवमात्मनो** तन्मयस्य स्वरूपेण चराचरविषयशब्दवाच्यत्वेऽनुपपत्तिरुक्ता । अधुना तत्रैव ब्राह्मणादिपदवाच्यत्वमालम्ब्य बाधकमुद्भावयन्नाह —

स्वेनाऽऽत्मना यदि समस्तपदाभिधेयं
त्वामीहते विधिनिषेधविधेयमेव ।
ब्राह्मण्यमात्मगतमीश, विदन्कथं त्व-
मुल्लङ्घितुं विधिनिषेधपदं क्षमेथाः ॥ १०४ ॥

अत्र तत्तन्मयत्वेन तत्तत्पदाभिधेयत्वं तत्तद्विधिनिषेधविधेयत्वं चाभ्युपगतमिति **स्वेनाऽऽत्मना** तत्तन्मयत्वेन **स्वेनेति** विशेषणम् । **यदि** कश्चित् **त्वामीश्वरं समस्तैस्सर्वैः पदैरभिधेयमीहते** इच्छति तत्तन्मयत्वमनपेक्ष्याऽऽत्मनस्सर्वपदवाच्यत्वं स्वेच्छाकल्पितमेव न तु श्रुतिसम्प्रतिपन्नमिति सूचयितुमीहत इत्युक्तम् । **स त्वामेवेत्यत्रापि** सम्बध्यते । **विधिनिषेधविधेयमेव** तद्वश्यमेवेहते इत्यनुषङ्गः । अत्रास्ति तावद्विधिः, "ब्राह्मणोऽग्निमादधीते" त्यादिः । अस्ति च निषेधः, "मद्यं ब्राह्मणो वर्जयेदि" त्यादिः । परमात्मैव ब्राह्मणादिशब्दवाच्यः मनुष्यादिस्तत्र ब्राह्मण्यादि-तत्प्रवृत्तिनिमित्तसम्बन्धघटकतया वाच्यैकदेशत्वेन गौण इति परसम्प्रतिपत्तिः गौणमुख्यग्रहणविशये च मुख्यग्रहणं न्याय्यम्, अत एव "पूष्णोऽहं देवयज्यया प्रप्रजया च पशुभिः जनयिषये" त्यनुमन्त्रण मन्त्रो गौण्या वृत्त्या कथञ्चित्प्राकरिणिकेन्द्रादिविषये सम्भवन्नपि पूषण्येव मुख्ये सम्प्रत्ययवशेन दर्शपूर्णमासप्रकरणादुत्कर्षमपि नीयते । ततश्च राजन्यादिरिव ब्राह्मणादिसंस्पर्शिविधिनिषेधयोरविधेयो जीव इति तदतिक्रमे न प्रत्यवेयात्, नापि तेनाऽनुष्ठितेन फली स्यात् । बृहस्पतिसवादिनेव राजन्यादिरिति त्वामेवेत्यनुषक्तैवाभिप्रायः । अथ यदि लोकव्यवहारानुरोधादमुख्योऽपि ब्राह्मण्यादिः ब्राह्मणोऽहमित्येवं प्रतिपद्यत इत्येतावता ब्राह्मणादिसंस्पर्शिविधिविधेयो जीव उच्येत, तर्हि सुतरामीश्वरो मुख्यो ब्राह्मण इति ब्राह्मणमात्मानं जानंस्तदनुविद्धविध्यादिविधेय एव स्यादिति प्रकृतैवकारार्थं दर्शयन्नाह – **ब्राह्मण्यमित्यादि** ब्राह्मण्यादिर्यदि जातिः, यदि वाऽदृष्टविशेषः सर्वथाऽपि तदात्मसम्बन्धघटकतया मनुष्यादेस्सम्बन्धान्तःपातादात्मगतमिति वस्तुविशेषणमुक्तम् । तेन सर्वज्ञस्यात्मनस्तज्ज्ञानं न भ्रमो न वा गौणमिति फलति । तादृशं ब्राह्मण्यं **विदन्** ब्राह्मणोऽहमिति जानन् । **हे ईश, त्वं विधिनिषेधपदमुल्लङ्घितुं** । तत आत्मानं परिहर्तुं । **कथंक्षमेथाः** दक्षः स्याः । न कथञ्चिद्विधिनिषेधौ त्वय्यपि पदं निदधीयाताम् । त्वामपि विषयीकुर्याताम् । अतस्त्वमपि विधिनिषेधविधेयएव स्या इत्येवकारार्थः उक्तो भवति । ईशस्य सर्वज्ञस्य स्वात्मतत्त्व-ज्ञानेऽपि ज्ञानेन समुच्चित्य कर्मणामनुष्ठेयत्वोपगमाद्वसिष्ठापरान्तरप्रभृतीनामाधिकारिकाणामिव विधिनिषेधानतिक्रम इत्यभिप्रायेण न कथञ्चिदित्युक्तम् । अत्रेशेति सम्बोधनं, तस्य विध्यादिविधेयत्व-प्रसञ्जनस्यानिष्टत्वमननुकूलत्वं च दर्शयितुं । परमात्मस्वरूपेण सर्वशब्दवाच्यत्वमते खलु तस्य

तत्त्वमीश्वररूपावसितमिष्यते। तस्य च स्वतः सर्वज्ञस्य न ज्ञानप्रतिबन्धः। नापि कर्मवश्यता, न चाऽऽप्तकामस्य सत्यसङ्कल्पस्य कर्मणा किञ्चिदाप्तव्यं, न चानीश्वरा इन्द्रादयो देवाः ईश्वरेण यजनीयाः तस्य तु सर्वशब्दवाच्यत्वे विधिनिषेधविषयतया सर्वमेतदापद्येतेति। अथ तत्पदवाच्यत्वस्य तदनुबन्धविध्यादिविषयत्वस्य च व्याप्तिः पुरुषबुद्धिकल्प्या दोषमूलाऽपि स्यात्। न पक्षादन्यत्र सर्वत्र तत्साहचर्यानपवादात्। ईश्वरे च तद्वाच्यत्वे सति तदनुबद्धविध्यादिविषयत्वाभावबोधिप्रमाणाभावात्, "न कर्मणा वर्धते नो कनीयानि"ति कर्मवश्यताभाववादो नदीनामिव कर्मफलानां तत एवोद्भूय तदन्तर्भावेन नदीभिर्न वर्धते न ह्रसति समुद्र इतिवदविभाव्यवृद्धिह्रासविषयोऽस्तु। अथवा, यथा राजा स्वाराज्यफलेन राजसूयादिना भूयान्, ब्राह्मणस्तु ततः कनीयान्। स च ब्रह्मवर्चसादिफलेन बृहस्पतिसवादिना भूयान्, राजन्यस्तु ततः कनीयान्। नैवमीश्वरः सर्वशब्दवाच्यत्वेन तदनुबद्धसर्वविधिविषयतया क्वचिदपि शास्त्रापर्युदासेन सर्वकर्मक्षमतया च ततो नाधिको न न्यून इत्येवंपरोऽस्तु। अपहतपाप्मत्वादिवादश्च प्रायश्चित्तसौकर्यापेक्षया भविष्यति। तथा यथा सम्राडप्यनुचरोपचारविधिना परपुरजयादिकार्यं करोति, सङ्कल्पितकार्यसिद्ध्या चाऽऽप्तकामस्सत्यसङ्कल्पश्चोपचर्यते। एवमीश्वरोऽपीन्द्रादियजनेन विश्वसर्गादिकार्यं कुर्यात्। तथा चान्यार्थदर्शनं, "अग्निष्टोमेन वै प्रजापति प्रजा असृजत, प्रजापतिरकामयत प्रजास्सृजेयेति। स तपोऽतप्यत, स सर्वानसृजत, स तपस्तप्त्वा, इदं सर्वमसृजते"त्यादि कर्मलक्षणमेव तप ईश्वरस्य सुकरमिति "यस्य ज्ञानमयं तप" इत्ययुपचर्यते। तत एव च सङ्कल्पितसकलकार्यसिद्धिनैयत्येनाप्तकामसत्यसङ्कल्पादिवादोऽपि लब्धविषय इति **कल्पनोपपत्ते**रित्यभिप्रायः।

**अत्र केचित्परिहारमाचक्षते** – ब्राह्मणादिपदवाच्यत्वेऽपि ब्रह्मणो न विधिनिषेधविधेयतादिप्रसङ्गः। लोकवेदसाधारणप्रसिद्धिबाहुल्यात्, ब्राह्मणादिशब्दैः प्रथमोपस्थितानां तत्तच्छरीराभिमानिजीवानामन्वयेन झटिति वाक्यार्थबोधनिष्पत्तौ सत्यां, तावतैव वाक्यप्रामाण्यस्य चरितार्थतया ईश्वरस्य सर्वान्तर्यामित्वमन्तर्यामिणं प्रति नियाम्यानां शरीरत्वं, शरीरवाचिशब्दानां शरीरिपर्यन्तत्वं श्रुतिन्यायाभ्यामवगन्तव्यमपेक्ष्य विलम्बितोपस्थितिकस्य तस्येश्वरस्यान्वयेन पुनर्वाक्यार्थबोधान्तरानुदयात्। अत एव "त्रिः प्रथमामन्वाह त्रिरुत्तमामि"त्यत्र प्रथमोत्तमाशब्दाभ्यां शीघ्रोपस्थितिकयोः प्रथमचरमस्थानयोरेव वाक्यार्थान्वयः। न तु प्रथमचरमस्थानानुवचनीययोः "प्रवो वाजीया जुहोता" ऋचोर्विलम्बितोपस्थितिकयोरितीष्यत इति महानयममीषां व्यामोहः। ब्राह्मणादिपदव्युत्पत्त्यर्थं हि लोकव्यवहारश्रुतिन्यायाद्यनुसरणम्। न च वाक्यार्थबोधकालेव पदव्युत्पत्तिः, व्युत्पन्नस्यैव वाक्यार्थावगमात्। विधेरपि कार्यव्युत्पत्तौ लौकिकव्यवहारसिद्धायामेव स्वर्गकामकार्यविशेषोऽपूर्वसंज्ञोवाक्यार्थोऽवगम्यते। यदि च वैदिकविधित्वावच्छेदेनापूर्वकार्य एव व्युत्पत्तिरिति

मतम्। तथाऽपि स्वर्गकामादिसमभिव्याहारप्रतिरुद्धायां क्रियाकार्यप्रतीतौ स प्रयोगो विमर्शसनाथो व्युत्पत्त्यर्थः। पुनस्तदावृत्त्या वाक्यार्थबोध इति तत्कालैव व्युत्पत्तिः। एतेन "माकन्दे मधुरं पिको रौति" इत्यादौ, प्रसिद्धपदसमभिव्याहारादप्रसिद्धपदव्युत्पत्तिपूर्वकं वाक्यार्थावगमो व्याख्यातः। विधिप्रवृत्तिश्चादीक्षितायां ब्राह्मणइत्यादिवन्न तटस्थावेदनार्था, किं तर्हि स्वप्रवर्तनीयबोधनार्था। यश्च यथाविधि सम्बन्धोपात्तरूपमात्मानं जानाति ब्राह्मणोऽहं राजाऽहमिति स विधिना बोधनीयः प्रवर्तनीयश्च। ततश्च यथा जीवस्तथेश्वरोऽपि चेदात्मानं ब्राह्मणोऽहं राजाऽहमित्येव जानीयात्। अब्राह्मणादेर्ब्राह्मणादिशब्दवाच्यत्वायोगेन ब्राह्मणादेस्सत एव तस्य तथा ज्ञानाऽभावे नित्यसर्वज्ञत्व-व्याघातात्। ततो ब्राह्मणादिविषयविधिग्रहग्रहणं व्याहन्तुमीर्शात। एतेन विधिनाऽधिक्रियमाणस्य ब्राह्मणोऽहमित्यादि जानतः स्वयं ब्राह्मणादिपदोपस्थित्या वाक्यार्थभूतविधिसम्बन्धबोधे लोक-व्यवहारस्य श्रुतिन्याययोर्वाऽनपेक्ष्यत्वेन तन्निबन्धनतदुपस्थितिविलम्बाऽविलम्बवाचोयुक्तिरिहाऽयुक्ता। त्रिः प्रथमामन्वाहेत्यादौ तु प्रवोवाजीयादेः प्रथमोत्तमेत्येव त्रिरनुवचनान्वयिरूपोपस्थितिः। प्रकरणापेक्षया तु प्रयोगान्वयितादूप्योपस्थितिरिति तामनपेक्ष्य प्रथमोपस्थितरूपेणैव त्रिरनुवचनान्वय इति युक्तम्। तथैव प्रथमादिशब्दव्युत्पत्तेः। प्रकृते च जीव ईश्वरो वा ब्राह्मणादिशब्दव्युत्पत्तिर-विशिष्टेति तत्र यथा सर्वत्रानुवचनेषु प्रथमोत्तमयोरेव प्रवोवाजाद्यतिरिक्तयोरपि त्रिरनुवचनविध्यन्वयः प्रथमोत्तमाशब्दवाच्यत्वाविशेषात्। तथा जीववदीश्वरस्याऽपि ब्राह्मणाद्यालम्बनविध्याद्यन्वयस्स्यादिति तेषामुदाहरणोपन्यासोऽपि तनयार्थिन्याः प्रियघातिन्या यमनुहरत इत्येतत्सर्वं ब्राह्मण्यमात्मगतं विदन् कथमुल्लङ्घितुं क्षमेथाः इत्यनेन सूचितमिति ॥ १०४ ॥

एवं तत्पदाभिधेयावपि शरीरशरीरिणावनभिदधाना एव गवादिशब्दा ईश्वरमभिदधति। तदभिधाने च प्रवृत्तिनिमित्तसम्बन्धघटकतया केवलं शरीराद्यनुप्रवेशादर्थतो विशिष्टाभेदविषय"त्वं-स्त्री"त्यादि"तत्त्वमसी"त्यादिवेति पक्षो निरस्तः। अधुना शरीरशरीरिणावभिदधाना एव तद्विशिष्ट-मीश्वरमभिदधति। एवं सति न तत्प्रवृत्तिनिमित्तसम्बन्धोपपादनक्लेशः, पदवृत्तेरेव विशिष्टविषयतया त्वं स्त्रीत्यादेर्न विशिष्टाभेदविषयत्वोपपादनक्लेशो वेति पक्षान्तरेऽपि प्रागुक्तदोषमतिदिशन्नाह —

आलम्ब्यसे यदि च सर्वपदाभिधेय-
स्सर्वप्रकारकतयाऽपि स एव दोषः।
यद्ब्राह्मणादिवचसां त्वयि निष्ठितानां
देहे न पर्यवसितिर्न महेश जीवे ॥ १०५ ॥

तत्त्वमीश्वररूपावसितमिष्यते। तस्य च स्वतः सर्वज्ञस्य न ज्ञानप्रतिबन्धः। नापि कर्मवश्यता, न चाऽऽप्तकामस्य सत्यसङ्कल्पस्य कर्मणा किञ्चिदाप्तव्यं, न चानीश्वरा इन्द्रादयो देवाः ईश्वरेण यजनीयाः तस्य तु सर्वशब्दवाच्यत्वे विधिनिषेधविषयतया सर्वमेतदापद्येतेति। अथ तत्पदवाच्यत्वस्य तदनुबन्धविध्यादिविषयत्वस्य च व्याप्तिः पुरुषबुद्धिकल्प्या दोषमूलाऽपि स्यात्। न पक्षादन्यत्र सर्वत्र तत्साहचर्यानपवादात्। ईश्वरे च तद्वाच्यत्वे सति तदनुबद्धविध्यादिविषयत्वाभावबोधिप्रमाणाभावात्, "न कर्मणा वर्धते नो कनीयानि"ति कर्मवश्यताभाववादो नदीनामिव कर्मफलानां तत एवोद्भूय तदन्तर्भावेन नदीभिर्न वर्धते न ह्रसति समुद्र इतिवदविभाव्यवृद्धिह्रासविषयोऽस्तु। अथवा, यथा राजा स्वाराज्यफलेन राजसूयादिना भूयान्, ब्राह्मणस्तु ततः कनीयान्। स च ब्रह्मवर्चसादिफलेन बृहस्पतिसवादिना भूयान्, राजन्यस्तु ततः कनीयान्। नैवमीश्वरः सर्वशब्दवाच्यत्वेन तदनुबद्धसर्वविधिविषयतया क्वचिदपि शास्त्रापर्युदासेन सर्वकर्मक्षमतया च ततो नाधिको न न्यून इत्येवंपरोऽस्तु। अपहतपाप्मत्वादिवादश्च प्रायश्चित्तसौकर्यापेक्षया भविष्यति। तथा यथा सम्राडप्यनुचरोपचारविधिना परपुरजयादिकार्यं करोति, सङ्कल्पितकार्यसिद्ध्या चाऽऽप्तकामस्सत्यसङ्कल्पश्चोपचर्यते। एवमीश्वरोऽपिइन्द्रादियजनेन विश्वसर्गादिकार्यं कुर्यात्। तथा चान्यार्थदर्शनं, "अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत, प्रजापतिरकामयत प्रजास्सृजेयेति। स तपोऽतप्यत, स सर्वानसृजत, स तपस्तप्त्वा, इदं सर्वमसृजत"इत्यादि कर्मलक्षणमेव तप ईश्वरस्य सुकरमिति "यस्य ज्ञानमयं तप" इत्ययुपचर्यते। तत एव च सङ्कल्पितसकलकार्यसिद्धिनैयत्येनाप्तकामसत्यसङ्कल्पादिवादोऽपि लब्धविषय इति कल्पनोपपत्तेरित्यभिप्रायः।

अत्र केचित्परिहारमाचक्षते – ब्राह्मणादिपदवाच्यत्वेऽपि ब्रह्मणो न विधिनिषेधविधेयतादिप्रसङ्गः। लोकवेदसाधारणप्रसिद्धिबाहुल्यात्, ब्राह्मणादिशब्दैः प्रथमोपस्थितानां तत्तच्छरीराभिमानिजीवानामन्वयेन झटिति वाक्यार्थबोधनिष्पत्तौ सत्यां, तावतैव वाक्यप्रामाण्यस्य चरितार्थतया ईश्वरस्य सर्वान्तर्यामित्वमन्तर्यामिणं प्रति नियाम्यानां शरीरत्वं, शरीरवाचिशब्दानां शरीरिपर्यन्तत्वं श्रुतिन्यायाभ्यामवगन्तव्यमपेक्ष्य विलम्बितोपस्थितिकस्य तस्येश्वरस्यान्वयेन पुनर्वाक्यार्थबोधान्तरानुदयात्। अत एव "त्रिः प्रथमामन्वाह त्रिरुत्तमामि"त्यत्र प्रथमोत्तमाशब्दाभ्यां शीघ्रोपस्थितिकयोः प्रथमचरमस्थानयोरेव वाक्यार्थान्वयः। न तु प्रथमचरमस्थानानुवचनीययोः "प्रवो वाजीया जुहोता" ऋचोर्विलम्बितोपस्थितिकयोरितीष्यत इति महानयममीषां व्यामोहः। ब्राह्मणादिपदव्युत्पत्त्यर्थं हि लोकव्यवहारश्रुतिन्यायाद्यनुसरणम्। न च वाक्यार्थबोधकालेव पदव्युत्पत्तिः, व्युत्पन्नस्यैव वाक्यार्थावगमात्। विधेरपि कार्यव्युत्पत्तौ लौकिकव्यवहारसिद्धायामेव स्वर्गकामकार्यविशेषोऽपूर्वसंज्ञोवाक्यार्थोऽवगम्यते। यदि च वैदिकविधित्वावच्छेदेनापूर्वकार्य एव व्युत्पत्तिरिति

मतम्। तथाऽपि स्वर्गकामादिसमभिव्याहारप्रतिरुद्धायां क्रियाकार्यप्रतीतौ स प्रयोगो विमर्शसनाथो व्युत्पत्त्यर्थः। पुनस्तदावृत्त्या वाक्यार्थबोध इति तत्कालैव व्युत्पत्तिः। एतेन "माकन्दे मधुरं पिको रौति" इत्यादौ, प्रसिद्धपदसमभिव्याहारादप्रसिद्धपदव्युत्पत्तिपूर्वकं वाक्यार्थावगमो व्याख्यातः। विधिप्रवृत्तिश्चादीक्षिष्टायां ब्राह्मणइत्यादिवन्न तटस्थावेदनार्था, किं तर्हि स्वप्रवर्तनीयबोधनार्था। यश्च यथाविधि सन्तानधांपात्तरूपमात्मानं जानाति ब्राह्मणोऽहं राजाऽहमिति स विधिना बोधनीयः प्रवर्तनीयश्च। ततश्च यथा जीवस्तथेश्वरोऽपि चेदात्मानं ब्राह्मणोऽहं राजाऽहमित्येव जानीयात्। अब्राह्मणादेर्ब्राह्मणादिशब्दवाच्यत्वायोगेन ब्राह्मणादेस्सत एव तस्य तथा ज्ञानाऽभावे नित्यसर्वज्ञत्व-व्याघातात्। ततो ब्राह्मणादिविषयविधिग्रहग्रहणं व्याहन्तुर्माशांत। एतेन विधिनाऽधिक्रियमाणस्य ब्राह्मणोऽहमित्यादि जानतः स्वयं ब्राह्मणादिपदोपस्थित्या वाक्यार्थभूतविधिसम्बन्धबोधे लोक-व्यवहारस्य श्रुतिन्याययोर्वाऽनपेक्ष्यत्वेन तन्निबन्धनतदुपस्थितिविलम्बाऽविलम्बवाचोयुक्तिरिहाऽयुक्ता। त्रिः प्रथमामन्वाहेत्यादौ तु प्रवोवाजीयादेः प्रथमोत्तमेत्येव त्रिरनुवचनान्वयिरूपोपस्थितिः। प्रकरणापेक्षया तु प्रयोगान्वयिताद्रूप्योपस्थितिरिति तामनपेक्ष्य प्रथमोपस्थितरूपेणैव त्रिरनुवचनान्वय इति युक्तम्। तथैव प्रथमादिशब्दव्युत्पत्तेः। प्रकृते च जीव ईश्वरो वा ब्राह्मणादिशब्दव्युत्पत्तिर-विशिष्टेति तत्र यथा सर्वत्रानुवचनेषु प्रथमोत्तमयोरेव प्रवोवाजाद्यतिरिक्तयोरपि त्रिरनुवचनविध्यन्वयः प्रथमोत्तमाशब्दवाच्यत्वाविशेषात्। तथा जीववदीश्वरस्यऽपि ब्राह्मणाद्यालम्बनविध्याद्यन्वयस्स्यादिति तेषामुदाहरणोपन्यासोऽपि तनयार्थिन्याः प्रियघातिन्या यमनुहरत इत्येतत्सर्वं ब्राह्मण्यमात्मगतं विदन् कथमुल्लङ्घितुं क्षमेथाः इत्यनेन सूचितमिति ॥ १०४ ॥

एवं तत्पदाभिधेयावपि शरीरशरीरिणावनभिदधाना एव गवादिशब्दा ईश्वरमभिदधति। तदभिधाने च प्रवृत्तिनिमित्तसम्बन्धघटकतया केवलं शरीराद्यनुप्रवेशादर्थतो विशिष्टाभेदविषय"त्वं-स्त्री"त्यादि"तत्त्वमसी"त्यादिवेति पक्षो निरस्तः। अधुना शरीरशरीरिणावभिदधाना एव तद्विशिष्ट-मीश्वरमभिदधति। एवं सति न तत्प्रवृत्तिनिमित्तसम्बन्धोपपादनक्लेशः, पदवृत्तेरेव विशिष्टविषयतया त्वं स्त्रीत्यादेर्न विशिष्टाभेदविषयत्वोपपादनक्लेशो वेति पक्षान्तरेऽपि प्रागुक्तदोषमतिदिशन्नाह —

आलम्ब्यसे यदि च सर्वपदाभिधेय-
स्सर्वप्रकारकतयाऽपि स एव दोषः।
यद्ब्राह्मणादिवचसां त्वयि निष्ठितानां
देहे न पर्यवसितिर्न महेश जीवे ॥ १०५ ॥

अत्र यदि चेति चकारः पूर्वस्मात्पक्षादत्र पक्षे विशेषसूचनार्थः। स च विशेषः श्लोकावतार एव दर्शितः। **सर्वपदाभिधेय** इति विधेयविशेषणम्। **तथाऽत्यभ्युपगम्यसे** अभ्युपगम्यसे यदीत्यन्वयः। सर्वपदाभिधेयत्वाभ्युपगमे हेतुः **सर्वप्रकारकतयेति**। परमात्मनस्तावत्। "सोऽकामयत बहुस्यां प्रजायेये" तीत्यादि, "सच्च त्यच्चाऽभवदि" ति इत्थं भावः प्रत्याय्यते, नो एतन्नानेति प्रस्तुत्य रथारनेमिनाभिदृष्टान्तेन "एवमेता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता" इति च। "न तदस्ति विना यत्स्यान्मया भूतं चराचरं" इति चाविना भावः। वस्तुन इत्थमंशः। प्रकारो नाम विशेष्याविनाभावविशेषणमिति यावत्। ततश्च जातिगुणादिवत् द्रव्यस्यात्मनो जगदपृथक्सिद्धविशेषणमिति प्रकारः॥ प्रकारशब्दश्च प्रकारिपर्यन्तः, खण्डो गौर्नीलः पटइत्यादिसामानाधिकरण्यात्। **अन्यथा** भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थवृत्तित्वलक्षणं सामानाधिकरण्यं न स्यात्। जगदात्मनोश्च सर्वं ब्रह्म, त्वं स्त्रीत्यादिसामानाधिकरण्यमाम्नायते। ततश्च सर्वप्रकारकस्य प्रकारिण आत्मनः सर्वपदवाच्यत्वमिति। अत्र सर्वप्रकारतयापीत्यपिशब्देन जगदात्मनोः प्रकारप्रकारिभावान्ववसर्ग एव न स्वाभ्युपगम इति सूचयति यदीति। काक्वा च न तावता सर्वपदाभिधेयत्वसिद्धिरित्यनुशयं सूचयति **तथाहि** – इत्थमंश इत्यत्र प्रकारवचन इदमस्थमुरित्ययं प्रकारोंऽशः प्रकार इत्युक्तं स्यादित्यात्माश्रयादप्रतिपत्तिः। अविनाभाविविशेषणत्वमपि कालादिसाधारणं। अत एवापृथक्सिद्धविशेषणं न द्वयोरन्यतरस्यान्यतराश्रयणनियमलक्षणापृथक्सिद्धेरपि जगत्कालसाधारण्यात्। जगतो भूतादिभावेन कालविशेषणत्वाच्च। यत्प्रत्ययसम्भवे यस्य स्वातन्त्र्येण प्रत्येयत्वाभावः तेन सा तस्यापृथक्सिद्धिरित्यपि साधारणम्। कालप्रत्ययसम्भवे भूतादेरपृथक्प्रत्येयत्वात्। अपि च प्रकारशब्दः प्रकारिपर्यन्त इति कोऽर्थः? किं प्रकारवाचकः शब्दः तदेकप्रवृत्तिनिमित्तकः प्रकारिणमपि वक्तीति, किं वा तदवाचक एव, अथवा प्रकारेणैव निमित्तेन प्रकारिणं वक्तीति। तत्राद्यकल्पः प्रकारमभिदधानोऽनभिदधानो वा प्रकारिणमभिदधीतेति विकल्पेन प्रागेव **दूषितप्रायः**। द्वितीये सकललौकिकवैदिकव्यवहारविरोधः। तृतीये मत्वर्थीयमन्तरा विशिष्टं वक्तीति पर्यवसन्नोऽर्थः। एवं सति प्रागुक्तदोषमतिदिशति स एव, **ब्राह्मणादिशब्दाभिधेयत्वेनेश्वरस्य** तदनुबद्धविधिनिषेधविधेयभाव एव **दोषः**। खण्डमुण्डादिवदवश्यं विशिष्टभेदे"त्वं स्त्री, तत्त्वमसीत्यादिसामानाधिकरण्येन विशिष्टाभेदानुपपत्त्यादिरन्यो दोषो न गवेषणीय **इत्येवकाराभिप्रायः**। अथ कुतोऽयं दोषः? यथा शुक्लो ब्राह्मण-इत्यादौ देह एव पर्यवसानं, ब्राह्मणादिशब्दस्य चेतनस्य शुक्लाद्यन्वयायोग्यत्वात्। तथा ब्राह्मणो यजेतेत्यादौ जीव एव पर्यवसानं स्यात् ईश्वरस्य विध्यन्वयायोग्यत्वादित्याशङ्क्याह यदीत्यादि। ब्राह्मणादिशब्दानां तावन्न भेदप्रकारे ब्राह्मणत्वादिजातिभेद एव पर्यवसानं प्रकारिपर्यन्तत्वात्। एवं त्वयि परमप्रकारिणि **निष्ठितानां** तेषां त्वत्प्रकारे देहे ब्राह्मणत्वादिप्रकारिण्यपि तत्प्रकारिण्यपि

जीवे वा न पर्यवसानं यतोऽतीतस्स एव दोष इत्यन्वयः। अत्र महेशेति सम्बोधनं तस्य परमप्रकारित्वं दर्शयितुम्। जीवो हि देहस्येष्ट इति तत्प्रकारी। तथा स जीवस्य। यस्सर्वस्येष्टो स महेशस्सर्वप्रकारीति।

अयमत्राभिप्रायः — यथा "ब्राह्मणोऽग्नीनादधीते"त्यादौ ब्राह्मणादिशब्दस्य चेतनपर्यन्तत्वेन "जातपुत्र: कृष्णकेश"–इत्यवस्थाविशेषस्याऽपि तदन्वय इष्यते, न तु तद्वशेन। ब्राह्मणादिशब्दस्य देहे पर्यवसानम्। एवं तस्य परमात्मपर्यन्तत्वेन तदनुबद्धविधेरपि तदन्वय एव स्यात् न तु तद्वशेन जीवे पर्यवसानमिति युक्तम्। न च देहद्वारक इव चेतनस्यावस्थाविशेषान्वयः। ईश्वरस्य जीवद्वारको विध्याद्यन्वय इष्टः। "काठिन्यवान्यो बिभर्ती"त्यादौ पृथिव्यादिद्वारकइव काठिन्याद्यन्वय इति वाच्यम्। तन्निष्ठितब्राह्मणादिशब्दसामानाधिकरण्येन विधेस्साक्षादेव तत्सम्बन्ध-स्यापाद्यत्वात्। नन्वाख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणीति नीतिविदां निष्ठा। ईश्वरस्य च विधिसम्बन्धायोग्यत्वात्तद्वशेन ब्राह्मणादिशब्दानामेव जीवे पर्यवसानं युक्तमिति चेत् जीवस्यापि हि ब्राह्मणोऽहमिति तच्छरीरकत्वविज्ञानमेव विधिसम्बन्धयोग्यता। तदीश्वरस्याऽपि समानमिति कथं तदयोग्यत्वम्? तावतैव विधिसम्बन्धयोग्यत्वे कर्मवश्यत्वादिकं प्रसजदीश्वरस्य प्रागुक्तरीत्या बाधकाऽन्यथासिद्धेरनपवाद्यमिति ॥ १०५ ॥

स्यादेतत्, ब्राह्मणादिशब्दवाच्यत्वेऽपि ईश्वरस्य विधिनिषेधविधेयत्वापादनमयुक्तम्। स खलु तस्यैवाज्ञालक्षणश्चातुर्वर्ण्यचातुराश्रम्यादिवृत्तव्यवस्थाहेतुरादेशः। राज्ञ इव राष्ट्रव्यवस्थाहेतुः। न च राजा स्वयमेव स्वादेशविधेयो भवति। एवमीश्वरोपीत्याशङ्क्यं। वेदस्तावत् अपौरुषेयः "अस्य महतो भूतस्य निश्वसितमेतदृग्वेद"-इत्यादिनिश्वसितत्वश्रुतेः। "वाचा विरूपनित्यया" इत्यादि नित्यत्वश्रुतेः। "अनादिनिधना विद्या वागुत्सृष्टा स्वयम्भुवा।" "आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः"। इत्यनादिनिधनत्वस्मरणात्। "युगान्ते तर्हि तान्वेदान् सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वं अनुज्ञातास्स्वयम्भुवा"॥ इत्यनित्यत्वपरिहारेणान्तर्हितत्वस्मरणात्। "यतो देवादीनां वेदशब्दात्प्रभवः, अत एव च नित्यत्वं वेदस्ये"ति सूत्रणाच्च। सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वाच्च। न च मुक्तकश्लोकादौ व्यभिचारः। तत्प्रामाण्यानपेक्षया कर्तुरस्मर्तव्यत्वेऽपि पौरुषेयत्वे वेदस्य मानान्तराविषये प्रामाण्यमपेक्षितमाप्तप्रामाण्याधीनमिति कर्तुरवश्यस्मर्तव्यत्वेन वैशेष्यात्। स्मर्यत एव न्यायिभिरीश्वरो वेदस्य कर्तेति चेन्न, तेषां पूर्वानुभवहेतुमानान्तराभावेन तत्स्मरणानुपपत्तेः। वाक्यत्वमूलानुमानस्योदाहृतागमविरोधेन व्यामोहमात्रत्वादिति स्थितेऽपौरुषेयत्वे वेदोनेश्वरादेश इति शङ्काबीजसम्प्लोषणान्नायं तस्य तद्विधेयत्वातिक्रमोपाय इति सुपरिहाराम‍पि वेदस्येश्वरादेशत्वाभ्युपगमेनापि परिहरन्नाह —

आदेश एव भवतो यदि नाम वेद-
स्स त्वय्युदासितुमथापि महेश नालम् ।
राजन्यधर्ममनुशासदिव स्वयं तं
राजाऽतियन्स्थविरहंसवदेव निन्द्यः ॥ १०६ ॥

अत्राऽऽदेश एव भवतो इत्येवकारः काकाक्षिन्यायेनोभयत्राऽपि सम्बध्यते। ततश्च आदेश एवेति काक्वा परोदीरितशङ्कानिरासे श्रुत्युपपत्त्युपपादितस्याऽप्यपौरुषेयत्वस्यानाग्रहणीयतां सूचयति। भवत एवेति तु स्वातन्त्र्ये परादेशत्वे वा वेदस्य तद्विधेयस्येश्वरस्य शङ्क्येत, तस्यैव तु सा आदेश इति न तद्विधेयत्वमिति शङ्काबीजमुपक्षिपति यदि नामेति। काक्वा वेदः स्वेतरमानान्तरानधिगमनीयार्थवेदनपरश्शब्दराशिः। भवतईश्वरस्यैवाऽऽदेश एव यदि स्यात्, स्यान्नामेति 'तुष्यत्वि'ति न्यायेन तदभ्युपगमं सूचयति। एवं तर्हि ब्राह्मणादिशब्दवाच्यत्वेऽपीश्वरस्य स्वादेशरूपविधिविधेयत्वमनाशङ्क्यमित्यत आह — अथापीति। तदाऽऽदेशत्वेऽपि स वेदः ब्राह्मणो राजेत्येव विधिनिषेधप्रवृत्तेरविशेषात्। त्वयि ब्राह्मणादिपदवाच्यतया स्वविषये उदासितुमव्यापरितुं ब्राह्मणाद्यालम्बनविधिष्वप्रवर्तयितुं नाऽलं न समर्थ इति व्यतिरेकमुखोक्त्या ब्राह्मणादिसामान्यालंबनस्याऽपि विधेरीश्वरेऽपवादाऽभावादकुण्ठितां सूचयति। एवं विधिस्वरसतस्तद्विधेयत्वे तदविधेयत्वमैश्वर्यादेव केवलमस्याऽऽश्रयणीयम् धर्मव्यतिक्रमस्तेषां ईश्वराणांच साहसमिति हि स्मर्यत इत्यभिप्रायेणात्र महेशेति सम्बोधनम्। अस्तु तर्हि तथैव विधिनिषेधाविधेयत्वमीश्वरस्येत्यत आह राजन्येत्यादि। राजन्येत्यपत्यार्थे 'यत्' प्रत्ययोपादानं राज्ञस्तदनुशासनयोग्यताप्रदर्शनार्थम्। अवरो राजैव राज्ञा स्वधर्ममनुशासनीयो नाऽन्यो ब्राह्मणादिरिति राजन्यानां राज्ञां धर्मं "अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोती"त्यादिकमनुशासत्। "नाभ्यस्ताच्छतुरि"ति नुमभावः। आदिशन् राजेव। राजग्रहणं ऐश्वर्येण धर्मातिक्रमोपपत्तिं सूचयति। स्वयं राजा चेश्वरो वा। तं, स्वेनैवाऽऽदिष्टमपि धर्मं तद्विधिसम्बन्धसाधारण्ये सति। अतियन्, अतिक्रामन् निन्द्य एव। "ते जीयसां न दोषाय वह्नेस्सर्वभुजो यथा" इति निदर्शनादास्तामस्मदीयविस्रम्भः दृश्यत एव हि महतामप्यपवादः "तं भूतान्यभ्यक्रोशन्ब्रह्महन्नि"त्यादिश्रुतेरित्येवकाराभिप्रायः स्थविर हंसवदित्यैतिहासिको दृष्टान्त उक्तः। यथोपाख्यायते — "वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत्तदा धर्मं चरत माधर्ममिति सोप्यन्वशात्खगान्॥ ऊचुश्चाऽथ खगा हंसं परिवार्येति सर्वशः। को हि धर्मो द्विजश्रेष्ठ ब्रूहि नो धर्ममुत्तमम्॥ पूजास्वधर्मो हिंसा वै धर्मोऽहिंसेति सोऽब्रवीत्। स यत्र गच्छेद्धर्मात्मा

ब्रूहीत्यूचुस्तमण्डजाः ॥ स आह धर्मं कुरुते य एतं शुभलक्षणम् । आयुषोऽन्ते स तद्देहं त्यक्त्वा स्वर्गं तु गच्छति ॥ अथ विश्वस्य तं हंसं धर्मिष्ठोऽयमिति द्विजाः । न्यस्याण्डानि तदभ्याशे समुद्राम्भसि रेमिरे ॥ तेषामण्डानि हंसस्स भक्षयामास पापकृत् । अण्डेषु क्षीयमाणेषु ते दृष्ट्वा हंसकिल्बिषम् ॥ निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूत्तम" ॥ इति । तद्वद्धर्ममादिशंस्तदर्हं एव स्वयं तमननुतिष्ठन्नीश्वरोऽपि निन्द्य एवेति ॥ १०९ ॥

एवमियता तावदेतदवस्थितं त्वं स्त्रीत्यादिसामानाधिकरण्येन योऽयं परमात्मनो विभूत्युपदेशः न स तद्विशिष्टपरमात्मविषयः । किं तर्हि ? तत्तदवस्थपरमात्मविषय एव । तेनेयं श्रुतिः परमात्मविभूत्युपदेशमुखेन स एव जीवावस्थ इति ब्रुवाणा तत्त्वमसीत्याद्यभेदोपदेशानुग्राहिकेति । तत्र कथमनया श्रुत्या परमात्मा जीवावस्थः इत्यवगम्यते ? येनाऽभेदोपदेशानुग्राहिका स्यात् । स्त्र्यादिशब्दो हि लिङ्गविशेषविशिष्टदेहभेदवाचीति स तदवस्थ एव गम्यते इति । अन्यथासिद्धिशङ्कायां "तदनुप्रविश्य सच्च त्यच्चाऽभवत्", "यद्यच्छरीरमादत्ते तेन तेन स चोद्यते" इति श्रुतेस्तत्तन्मयो जीव एव स्त्र्यादिशब्दाभिधेयो न देहमात्रमित्यतो नान्यथासिद्धिरिति परिहाराभिप्रायेण प्रवेशश्रुतिरपि तदभेदोपदेशानुग्राहिकेति दर्शयन्नाह —

व्याकर्तुमीश्वर चरस्थिरनामरूपे
जीवात्मनाऽनुशृणुमस्तव सम्प्रवेशम् ।
कोऽयं भ्रमः कतिचिदश्रुतयो भवन्तो
जीवं स्वभावभिदुरं विदुरन्तरन्धाः ॥ १०७ ॥

**चराणां** जङ्गमानां, **स्थिराणां** स्थावराणां च **नाम** च, "सुरो नरः पशुः पक्षी वासवो वसुरग्निः (कः) । ब्राह्मणः क्षत्रियो वैश्यः, गौरजो विः शुकः पिकः । शारिका कलविङ्कः (च) वृक्षो गुल्मं लतौषधि । अश्वत्थ उदुम्बरः प्लक्षः वेत्रो वेणुः (च) कीचकः । मल्लिका मालती जातिः, शाली व्रीहिर्यव (स्तथा)" । इत्यादि । **रूपं** च सुरनरादिसंस्थानं । सामान्येनोभयत्रैकवचनम् । ते नामरूपे, **व्याकर्तुं** वासनामात्रेण स्वात्मशेषतया सती एव व्यक्तीकर्तुं, न त्वसती एवोत्पादयितुम् । "नाऽसतो विद्यते भाव" इति हि **स्मृतिः** ।

( ) चिह्नाङ्कितः भागः, "अस्य नाम" ति सम्पादकेन पूरितः ।

"यथोदपानकरणात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः" ॥ इति च वृद्धाः । तथा साङ्ख्याः — "असदकरणादुपादानग्रहणात्सर्वसम्भवाऽभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्" ॥ इति असतश्शशविषाणादेरकरणादुपादीयमानैः कारणैः कार्यस्य सम्बन्धात् । असम्बन्धकारणादसम्बन्धकार्योत्पत्तौ सर्वस्मादेव सर्वस्य सम्भवस्स्यात् । यथाहुः — असत्वान्नास्ति सम्बन्धः कारणैस्सत्वसङ्गिभिः । असम्बन्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥ इति । तदभावात्, शक्तस्याऽपिशकयकरणात् शक्तशक्यसम्बधस्यासत्वेऽनुत्पत्तेः । असम्बन्धकारणे पूर्ववदतिप्रसङ्गात् । कारणाभावाच्च, सत्कार्यं प्रागपि कारकव्यापारात् कारणमेव हि तथावस्थं कार्यमिति गीयते । **अन्यथा** गवाश्वादिवन्मृद्घट इत्यादिसामानाधिकरण्यायोगात् । "सदेव सोम्येदमग्र आसीदि" ति श्रुतिरिति । तच्च व्याकरणमिह नाम्नो रूपस्य च तुल्यमेव न तु रूपस्यनिष्पादनं नाम्नो व्युत्पादनमिति भेदः । वाचं व्याकरोतीत्यन्यत्र व्युत्पादनार्थत्वेऽपि "नामरूपे व्याकरवाणी"ति श्रुतौ सकृत्प्रयुत्कस्य व्याकरणशब्दस्यार्थभेदकल्पनाया अन्याय्यत्वात् । अपि च यदि व्युत्पादनं सङ्केतकरणं तदनुपपत्तिः शब्दार्थसम्बन्धनियत्वात् । तथा च जैमिनिः "औत्पत्तिकस्तु शब्देनार्थसम्बन्धः" इति । "औत्पत्तिक इति नित्यं ब्रूम" इति शबरस्वामी । अन्यथा वेदपौरुषेयत्वापत्तेः । नापि शक्तिज्ञापनं अन्यस्य शब्दस्य शब्दान्तरेण हि तत्कर्तव्यं, तस्यापि शब्दान्तरेणेत्येवमनवस्थानात् । न चाङ्गुल्या रूपनिर्देशेनाम्नातातादिशब्दानां व्युत्पादनं दृष्टम् तथा सर्वेषामपि स्यादिति शक्यशङ्कम् । नामरूपाणामानन्त्यात् । पृथङ्नामग्रहणं च तयोरेवान्योन्यवाच्यवाचकरूपभेदविवक्षयेत्युक्तम् । वाचकता च नाम्नामर्थज्ञापकतालक्षणार्थक्रिया सहजा, पृथिव्यादीनामिव धारणादिलक्षणार्थक्रिया कार्यवशादेव गम्यत इति । स्वरूपनिष्पादनमेवात्र नामरूपयोर्व्याकरवाणीति तत्कर्तुं । **हे ईश्वर, तव** परमात्मनो **जीवात्मना** जीवरूपेण, **अथवा** जीव इत्यात्मा जीवात्मा तेन जीवलक्षणेन स्वेनैव स्वांशेन जीवेनानुप्रवेशः । न स्वेनेति शङ्काव्यावृत्त्यर्थमात्मनेति विशेषणम् । अत एव नामरूपव्याकर्तैवानुप्रवेशकर्ता । अनुप्रविश्य व्याकरवाणीति समानकर्तृकत्वदर्शनादित्यभिप्रायेणात्र **ईश्वरेति** सम्बोधनम् । सम्प्रवेशं अहमिति तादात्म्येनाभिव्यक्तिलक्षणम् । **अनुश्टणुमः**, गुरुसम्प्रदायमनुसृत्य शृणुमः । "सेयं देवतैक्षत, हन्ताऽहमिमास्तिस्रो देवताअनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी" ति । अस्या ऐतिह्यमात्रशङ्कानिरासाय 'अनु' शब्दः । अत्र चारेण परसैन्यमनुप्रविश्य हयहस्त्यादिसङ्कलयामीत्यादिवत् । गौणत्वशङ्कानिरासायाऽऽत्मनेति सामानाधिकरण्यात् परमात्मैव जीवभूत इति **स्वरूपाभेद उक्तो भवति** । नात्र तेजोऽबन्नभूतानुप्रवेशनामरूपव्याकरणयोः पूर्वाऽपरकालत्वविवक्षया क्त्वाप्रयोगः । तादात्म्येनाभिव्यक्तिरेव ह्यात्मनोऽनुप्रवेशः । न तु सर्पादेरिव बहिस्सतो वल्मीकादौ निलयनम्, अमूर्तत्वात् । नापि गण्डशिलादौ मण्डूकादेरिव निष्पत्तिः, अपरिणामित्वात् ।

नाप्याऽऽदर्शादाविव प्रतिबिम्बनं, अव्यवधानात्। **तथा च सूत्रम्** -- "अम्बुवदग्रहणात्तु न तथात्वमि"ति। अम्बुन इव बिम्बव्यवहितस्य प्रतिबिम्बोपाधेरग्रहणात्। सर्वात्मन आत्मनो न जलसूर्यकादिवत्त्वमित्यर्थः। ततश्च नामरूपव्याकरणात्प्रागनुप्रवेशानुपपत्तिः। अत एव श्रुत्यन्तरे "तन्नामरूपाभ्यामेव व्याक्रियत स एष इह प्रविष्ट" इति। प्रवेशात्प्रागेव नामरूपव्याकरणमनुक्रम्यते। किन्तु अनुप्रविष्टस्यैवाऽऽत्मनो देवमनुष्यादिनामरूपं चेति तत्सम्बन्ध-प्रयोजकतामात्रविवक्षया। अत्र जीवेनात्मनेति न कर्तरितृतीया। **तथाहि** — किमत्र जीवः कर्ता ? तस्य चानात्मव्यावृत्त्याऽऽत्मनेति स्वरूपविशेषणम् ? उत ईश्वरः तस्य च जीवेनेति तच्छरीरकत्वं विशेषणम् ? उभयथाऽपि न व्याकरवाणीत्यसम्बन्धः। तिङभिहिते कर्तरि अनभिहिताधिकार-विहितेतृतीयाऽनुपपत्तेः। नापि अनुप्रविश्येत्यभिसम्बन्धः, कृदभिहिते कर्तरि तदनुपपत्तेः। अथ समानकर्तृकयोः पूर्वकाल इति क्त्वोऽर्थभेदानुशासनादनभिहित एव तत्र कर्तेति चेत् न "कर्तरि कृदि"ति सामान्यविधेरनपवादात्। अन्यथाऽर्थभेदानुशासनेनैवार्थान्तरबाधे "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च"ति कृत्यानामर्थभेदानुशासनात् तयोरेव कृत्यर्थखलर्था इति भाव एव कर्मार्थत्वबाधेन "स्वाध्यायोऽध्येतव्य" इत्यादौ कृदनभिहिते कर्मणि द्वितियास्यात्स्वाध्यायमिति। अथ "गन्तव्यं भवता शयितव्यमि"त्यादिषु विधौ कृत्यानुशासनस्य सावकाशत्वादिह कर्मैवाऽभिधीयेत, विधौ तर्हि यत्नः स्यात्। तत्र यदि वाचकरूपभेदाऽभावेऽपि कृत्यानामनुशासनादुभयार्थता किमङ्ग पुनः कृदिति च क्त्वेति च वाचकरूपभेदे सति तदनुशासनादिह कर्ता क्रियापूर्वकालत्वमित्युभयार्थता नेष्यते। अथविध्युपाधितया भावकर्मणोरर्थप्राप्तेः स्वाध्यायोऽध्येय इत्यत्र द्वितीयाऽभावः। तर्हि क्रियापूर्वकालत्वोपाधितयाऽत्रापि समानस्य कर्तुरर्थप्राप्तेस्तृतीया न स्यात्। यदि साक्षादनभिधानादिह कर्तरि तृतीया स्यात् तत एवाऽन्यत्रापि कर्मणि द्वितीया स्यात्। अथाऽऽसन आस्ते प्रासादे प्रसीदतीत्यादौ ल्युडाद्यभिहितेप्यधिकरणे सप्तमी दृश्यते। किमङ्ग पुनरनभिहिते कर्तरि तृतीयेति अतिप्रसङ्गे पुनरप्रयोग एव शरणमिति चेन्न, साधनादिभेदेन ल्युडादिप्रकृत्यभिधेयक्रियान्यत्वादाख्याताभिधेयक्रियायास्तदधिकरणेऽनभिहित एव तत्र सप्तमी स्यात्। अप्रयोगस्तु द्वितीयाया इव कर्मण्यर्थप्राप्ते कर्तर्यपि तृतीयाया न विशिष्यते। न खल्वहं मया भुक्त्वा व्रजामीति क्वचित्प्रयुज्यते। प्रकृतस्तु प्रयोगो नानन्यथासिद्धः। तस्मादनुप्रविश्येति यद्यभिधेयः कर्ता यदि वाप्यार्थः उभयथाऽपि तृतीयान्वयानुपपत्तिरिति। **अपि च** जीवस्य नामरूपव्याकर्तृत्वे परमात्मविषयाहंशब्दानन्वयः, संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्, नामरूपव्याक्रिया त्रिवृत् कुर्वतः परमात्मन एवोपदेशात्। "सेयं देवतैक्षत नामरूपे व्याकरवाणीति तदर्थं तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति"। तुल्यवदुत्तमपुरुषनिर्देशात् जीवस्य च त्रिवृत्करणेऽसामर्थ्यादिति न्यायविरोधश्च। **ननु** चानुप्रवेश एव जीवः कर्ता परमात्मा च नामरूपव्याकरण इति युक्तम्।

तदुभयसमानकर्तृकत्वविषयत्वाप्रत्ययविरोधात् । न चानुप्रविश्येति णिजर्थलक्षणाऽऽश्रीयते । तत्रानुप्रवेशकर्ता जीवः हेतुकर्ता परमात्मेति सर्वाविरोध इति वाच्यम् । यथाश्रुतसम्भवे लक्षणाया अन्याय्यत्वात् । "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता सणावि"ति गत्यर्थस्य विशतेरण्यन्तस्य कर्ता जीवः ण्यन्तस्य कर्म स्यादिति तृतीयाऽनुपपत्तेश्च । न च जीवशरीरकस्य परमात्मनो प्रवेष्टृत्वं, अनुप्रवेशो हि न सर्वगतस्य मूर्तस्येव युक्तः । अथ सगगनस्येव तेन तेनाऽवच्छेदः, अनुप्रविश्येति स्वातन्त्र्यव्यपदेशानुपपत्तिः । अथ तदन्तर्भावेन तन्नियन्तृत्वैवानुप्रवेश इत्युच्येत जीवेनेति विशेषणानर्थक्यम् । नापि करणे तृतीया । न खल्वीशः स्वयमेव नामरूपव्याकरणे करणं, नापि जीवः, ईश्वरस्य सङ्कल्पमात्रकारिणः करणाद्युपकरणानपेक्षत्वात् । अथहेतौ तृतीया स्यात्, कृत्स्नाप्रवेशिनो विशिष्टस्य प्रवेशेंऽशोहेतुरिति । नामरूपव्याकरणे च जीवो हेतुः, तस्य तदर्थत्वादिति चेन्न, क्षीवशरीरकेण मयेति स्वप्रधानत्वविवक्षायां समानाधिकरणविशेषणविभक्तेः साधुत्वमात्रफलतया तदंशस्य हेतुत्वाऽप्रतीतेः । जीवस्यैव प्रधानत्वविवक्षायां आत्मनेति शब्दस्य ईश्वरविषयत्वेऽनन्वयः । जीवविषयत्वे च तस्य वैयर्थ्यमेव स्यात् । अत एव सहयोगलक्षणेयं तृतीया स्यात् । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इति श्रुतिलिङ्गदर्शनेन जीवेन सह परमात्मनो नियन्तृभावेन वृत्तिरनुप्रवेशो हि युज्यत इति निरस्तम् । आत्मनेति वैयर्थ्यात् । न च देहानुप्रवेशे जीववदपहतपाप्मत्वादिस्वरूपतिरोधीराहित्यदर्शनार्थमात्मनेति न व्यर्थमिति शंक्यम् । जीवेनात्मनेति सामानाधिकरण्यस्वरसत्वहानेन जीवेनेति सहयोगे तृतीया । आत्मनेतीत्थंभूतलक्षण इति वैयधिकरण्य कल्पनायोगात् । अनुप्रविश्येति सकृत्प्रयुक्तस्य जीवविषये तादात्म्याभिमानेन वृत्तिः, परविषये तन्नियन्तृभावेन वृत्तिः अनुप्रवेशइत्यर्थकल्पनायोगाच्च । तस्मादियमनुप्रविशतइत्थंभूतस्य लक्षणे तृतीया । "छात्रेणोपाध्याय" इत्यादिवत् । ततश्च यथा छात्रसम्बन्धित्वमेवोपाध्यायत्वं तथा जीवरूपापत्तिरेवाऽनुप्रवेश इति फलति । प्रकृत्यादिभ्य उपसङ्ख्याता वा, द्विद्रोणेन धान्यं सम्पन्नमितिवत् । ततश्च यथा द्विद्रोणमेव सम्पन्नं भवति तथा जीवरूप एव प्रविष्टो भवतीति फलति । तदेतदुक्तम् – जीवात्मना तव सम्प्रवेशमिति । एवं परमात्मैव जीवभावेनानुप्रविष्ट इति वस्तुगतौ वेदशिरःप्रस्थितायां, अयं जीवेश्वरवस्तुभेद इत्येवमाग्रहमयो भ्रमः कः, जीवेश्वरभेद इत्येव भ्रमः, तत्र वस्तुत्वभ्रमोऽपरः किंमूल इति विमर्शाभिप्रायः । एवं स्वगतमेव विमृश्याऽवधारयति । नूनं कतिचिदश्रुतयः, श्रुतिसम्प्रदायविधुराः केवलमौत्प्रेक्षिकाः । अत एवान्तरन्धाः आत्मतत्त्वदर्शनसाधनहीनाः । जीवं, भवतः परमात्मनः । स्वभावेन "भिदुरं, भिदेः कुरच्" । भिन्नं, अहमभिमानकृतो भेदः सिद्धान्तेऽपीति स्वभावेनेति विशेषणम् । विदुः जानन्ति श्रुतिसम्प्रदायमधुरास्तु परमात्मानमेवाहमभिमानमयं जीवं विदुरित्यभिप्रायः ॥ १०७ ॥

एवमेकानुप्रवेशश्रुतिरर्थान्तरशङ्काकलङ्केनोपपादनीयविषया तत्त्वमसीत्यभेदोपदेशानुग्राहिकोदाहृता। अधुना परमात्मन एवानुप्रवेशं प्रविष्टस्यैव जीवभावं च ब्रुवाणामर्थान्तरशङ्कावकाशविधुरामपरां प्रवेशश्रुतिमभेदोपदेशानुग्राहिकामुदाहरन्नाह —

यो नामरूपविकृतस्स इह प्रविष्टः
प्राणन्वदन्निति स जीव उदीरितो नः।
प्राणित्यपानिति च योऽयमसौ स आत्मा
सर्वान्तरो विदित ईश कथं त्वदन्यः ॥ १०८ ॥

तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामाऽयमिदं रूपमिती"ति प्रकृत्य "स एष इह प्रविष्ट आनखाग्रेभ्य" इत्युक्त्वा, "स प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुश्शृण्वंश्श्रोत्रं मन्वानो मन" इति श्रूयते। तत्र यदात्मनेदं जगदव्याकृतमासीत् स परमात्मैव इदंशब्दसामान्याधिकरण्यापन्ननपुंसकलिङ्गेन वा "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृत" इति स्मृतिप्रतिपन्नेन वा तदित्यनेन निर्दिश्यत इत्यभिप्रेत्य, "**यो नामरूपविकृतः**" नामरूपाभ्यां **व्याकृत** इति **पुँल्लिङ्गेन** प्रसिद्धवदवमृश्यते। अत एव स एष अहमिति विश्वजनीनरूपभेदेन इह नामरूपात्मके जगति जङ्गमादिरूपे प्रविष्टो नखाग्राण्यभिविधायेति पुंलिङ्गेन प्रत्यवमृश्यत इत्यभिप्रेत्याह – **स इह प्रविष्ट इति**। सोऽयं परमात्मनः प्रवेशो न नियमनायान्तराभिव्याप्तिमात्रं किन्तु तादात्म्यापत्तिरेवेति, **प्राणन्नेव** प्राणनव्यापारं कुर्वन्प्राणिमीत्यभिमानात् प्राणो नाम भवति। तथा **वदन्वागित्यादिना** दर्शयन्ती श्रुतिः परमात्मैव तादात्म्याभिमानलक्षणेन प्रवेशेन जीवस्सम्पन्न इति विवक्षतीत्यभिप्रेत्याह **प्राणन्नित्यादि** सः प्रविष्टो जीव **उदीरितः**। तादात्म्येन निर्देशादर्थतो जीवउक्त इत्यर्थः। न इति श्रुतिसम्प्रदायवत्तया परेभ्यो व्यावृत्तिमात्मनो दर्शयति। तेन श्रुतिसम्प्रदायहीनानामयमर्थो दुर्गमइत्यभिप्रायः। ननु "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचोह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरि"त्यादौ परमात्मैव प्राणादिशब्देन व्यपदिश्यते। तत्र च निमित्तं तत्तन्नियन्तृत्वमेव। "यद्वाचा नाभ्युदितं येन वागभ्युद्यत" इत्याम्नातं। तदिहापि प्राणन्वदन्निति प्राणनादिहेतुकर्ता परमात्मैव प्राणो वागित्यादिभिर्व्यपदिश्यतामिति शङ्कानिरासाय **प्राणन् वदन्नितीति**। इतिशब्दः प्रभृत्यर्थः। पश्यन् शृण्वन्नित्यादिसंग्रहार्थः। ततश्च प्राणन्नित्यादिषु बहुषु पदेषु णिजर्थलक्षणाया अन्याय्यत्वात्। "अकृत्स्नो ह्येष" इति च। प्राणनादिव्यापारिणोऽकृत्स्नत्ववचनाच्च, न स्वात्मना परमात्मा

प्राणशब्देनात्र विवक्षितः । किं तर्हि ? प्रवेशेन तादात्म्याभिमानमयजीवरूपेणैवेत्यभिप्रायः । अथवा इति शब्दः स एव सीमानं विदार्यैतया द्वारा प्रतिपाद्यत इति श्रुत्यन्तरसङ्ग्रहार्थ इति एवमभेदोपदेशानुग्राहकतया प्रवेशश्रुत्युदाहरणेन परमात्मपर्यन्तः परमात्मविवेक उपदर्शितः । अधुना तदनुग्राहकतयैव "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो, योऽपानेनापानिति स त आत्मा सर्वान्तर" इत्यादितदुपलक्षणमुखप्रवृत्तश्रुत्यन्तरोदाहरणेन परमात्मपर्यन्तं जीवविवेकमुपदर्शयन्नाह **प्राणितीत्यादि** । श्रुतौ यच्छब्दः प्रसिद्धावमर्शीति प्राणिम्यहमित्येवं सर्वानुभवसिद्धो जीव एव तदवमृष्ट इति दर्शयितुं **योयमिति** । साक्षादपरोक्षवाचिना इदमा निर्देशः । तत्रोपपत्तिसूचनाय प्राणित्यपानिति चेति । **चकारो** व्यानित्युदानितीत्यादिसमुच्चयार्थः । तेन बहुषूपलक्षणनिर्देशेषु सर्वत्रान्याय्यणिजर्थलक्षणया अप्रसिद्धपरमात्मविषयत्वकल्पनमयुक्तमित्युपपत्तिस्सूचिता भवतीत्यभिप्रायः । अस्यैव स्वरूपभूतः परमात्मा **स त आत्मेत्यवमृश्योपदेष्टव्यः** । साक्षादपरोक्षत्वे सत्येव जीवतोत्तीर्णरूपेण व्यवहित इवेति कृत्वा असौ स आत्मेति व्यवहिताऽपरोक्षवाचिनाऽदसा निर्देशः । **सर्वान्तर इति** विधेयविशेषणम् । सर्वान्तरत्वेन विदितः स आत्मा जीवभावोत्तीर्णः **कथं त्वदन्यः ?** कथञ्चिद्भेदकोपाधेरभावादिति योजना । यदि तर्हि स्वभावभेदः तथा सति "य आत्मनि तिष्ठन्य आत्मनोऽन्तरः, य आत्मानमन्तरो यमयती"ति तस्याप्यान्तरः परमात्मेति प्राणनाद्युपलक्षितस्य सर्वान्तरत्वश्रुतिविरोध इति सूचनायात्र **हे इशेति** सम्बोधनम् । ततश्च यदि स त आत्मा सर्वान्तर इतीश्वरविषयं प्राणितीत्यादिषु णिजर्थलक्षणादोषः । अथ प्राणितीत्यादि श्रुतिवृत्तं तर्हि जीवस्य परमात्मान्यत्वे स त आत्मा सर्वान्तर इति प्रकृतावमर्शेन सर्वान्तरत्वश्रुतिपीडादोषः । तदुभयदोषपरिहाराय स्वरूपाभेद एवाऽऽश्रयितव्य **इत्यभिप्रायः** । **अथ** यः प्राणेन प्राणिति स त आत्मा सर्वान्तर" इति न प्राणनादिव्यापारेण तद्वत एव स्वरूपमुपलिलक्षयिषितम् । किं तर्हि ? प्राणादिमतैव तदन्तर्यामीश्वर इति न लक्षणादोषः न सर्वान्तरत्व श्रुतिपीडा वा । अत एव वाक्यशेषे "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेश्श्रोतारं शृणुया" इत्यादिना दृष्ट्यादिकर्तृजीवस्य द्रष्टव्यत्वादिनिषेधेन तदात्मनः परमात्मन एव द्रष्टृत्वादिकमुपक्षिप्तमिति चेन्मैवं, "यत्साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे"ति प्रश्ने "एष त आत्मा सर्वान्तर" इति प्रत्यक्षदर्शनवत्प्रतिज्ञाय, "यः प्राणेन प्रणिती"त्यादिना लक्षणेन प्रदर्शिते, यथा कश्चिद्ब्रूयादसौ गौरसावश्व इति प्रत्यक्षदर्शनं प्रतिज्ञाय या चरति धावति वा सा गौरश्वो वेति लिङ्गेन व्यपदिश्य विपरीतं ब्रूयात् एवमेतद्व्यपदिष्टं भवति अतो यथाप्रतिज्ञं गवादिवदात्माशृङ्गग्राहिकया दर्शनीय इति जिज्ञासायामिदमुच्यते न दृष्टेर्द्रष्टारं पश्येरित्यादि । न तु जीवस्य द्रष्टव्यत्वादिप्रतिषेधार्थम् । तथा सति न दृष्टेः कर्तारमित्येव ब्रूयात् । न द्रष्टारमित्येव, न तु न दृष्टेर्द्रष्टारमित्यादि । तत्र सर्वत्र प्रकृत्यर्थाविवक्षायांश्रुतहानादिदोषप्रसङ्गः ।

तदयमर्थः — चक्षुश्श्रोत्रादितादात्म्याभिमानमयस्य जीवस्य सन्ति परिणामलक्षणा दृष्टिश्रुत्यादिवृत्तयः। तस्यैव चात्मभूता दृक्शक्तिरेव दृष्ट्यादिवृत्तिच्छायतया दृष्ट्यादिव्यपदेश्या। ततश्च तत्स्वरूपोपलक्षणायैव दृष्टेर्द्रष्टारं श्रुतेश्श्रोतारं इत्यादिपृथग्व्यपदेशाः क्रियन्ते। तस्य दर्शनादिप्रतिषेधाय। तेन चाक्षुषादिवृत्तयो हि बाह्यं रूपादि विषयीकुर्वन्ति, न तु स्वसाक्षिणमात्मानं। तद्विषय एव चायमसाविति शृङ्गग्राहिकया दर्शयितुं शक्यते। आत्मा पुनरतद्विषयत्वादुपलक्षणेनैवोपदिष्टः स्वयमेवापरोक्षीकर्तव्य इति। एवमनयैव दिशा प्राणस्य प्राणमित्यादि च प्राणादितादात्म्याभिमानमयं जीवस्य स्वरूपभूतपरमात्मोपलक्षणपरमेव। न तु तदतिरिक्तेश्वरपरम्। प्राणचक्षुरादिसम्बन्धव्यपदेशात्। प्राणादिसत्ता तत्कार्यशक्तिरूपतया हि प्राणस्य प्राणमित्यादिव्यपदेश इति व्याख्येयमिति ॥ १०८ ॥

एवं तावत्परमात्मजगत्कारणवादो जीवसंसारवादो वा न जीवपराभेदोपदेशविरोधी, प्रत्युत तदनुरोध्येव। परमात्मनः स्वोपादेयकार्यानुप्रवेशेन जीवभावोपपादनात्, जीवस्य च प्राणितृत्वादिसंसारोपलक्षणीयस्वरूपेण सर्वान्तरतया परमात्मभावोपपादनाच्चेत्युपपादितम्। इदानीं तदभेदोपदेशानुग्राहकतयैवेतरेतरपर्यन्तजीवपरस्वरूपविवेकोपक्षेपममृतत्वायात्मज्ञानसाधनविधिमुखप्रवृत्तं श्रुत्यन्तरमुपदर्शयन्नाह —

प्रस्तुत्य भोग्यगणशेषिणमेव चात्मा
द्रष्टव्य इत्युपदिशन्नमृतत्त्वहेतोः।
अप्रच्युतात्ममहिमानमवस्थितं त्वां
जीवात्मना कथयतीश्वर, याज्ञवल्क्यः ॥ १०९ ॥

"याज्ञवल्क्यो मैत्रेयीति होवाच – प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि, हन्त तेऽनया कात्यायन्या सपत्न्या सहान्तं सम्पद्विभागं करवाणी"ति। स च मैत्रेय्या "यदि म इयं भगवन् पृथिवी सर्वा वित्तेन पूर्णा स्यात्किमहं तेनाऽमृता स्यामि"ति पृष्टो "यथैवोपकरणवतां जीवितं स्यात्तथा ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेने"ति प्रत्युक्तया मैत्रेय्या "येनाऽहं नाऽमृता स्यां किमहं तेन कुर्यां यदेव भगवन् वेदाऽमृतत्वसाधनं तदेव मे ब्रूही"त्यनुयुक्तो "व्याख्यास्यामित" इति प्रतिज्ञाय "न वा अरे पत्युः कामाय पतिः प्रियो भवती"ति प्रक्रम्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे

द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यो, मैत्रेय्यात्मनो वा अनेन दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमि"त्युपदिशति ।

तत्र न पत्यादिप्रयोजनाय पत्यादि प्रियं भवति जायादेः किन्त्वात्मप्रयोजनायेत्यभिधानमुखेन पतिजायापुत्रवित्तादिर्भोग्यवर्गप्रतिसम्बन्धितया तच्छेषी भोक्ता जीवोऽत्रात्मशब्देन विवक्षित इति तावदाह "प्रस्तुत्य भोग्यगणशेषिणमि" ति । अत्र न वाक्योपक्रमविषयाभिप्रायं प्रस्तुत्येति, अमृतत्वसाधनस्यैव तद्विषयत्वात् । किं तर्हि ? तदुपदेशप्रक्रम विषयाभिप्रायं, तेनोपक्रमानुरोधेन प्रकरणस्यैव जीवविषयत्वापत्तौद्रष्टव्यतोपदेशोऽपि तस्यैवेति न विवक्षितजीवब्रह्माभेदोपदेशानुग्रहसिद्धिः । उपक्रमपरामर्शोपसंहारैकरूप्येण परमात्मन्येव वाक्यान्वयात् । स एवात्र प्रतिपाद्य इति न्याय-विरोधश्चेति शङ्का न भवति । नन्वत्र न वा अरे पत्युः कामाय अहमस्याः प्रियस्स्यामिति स्वेष्टसम्पत्तये पतिर्जायायाः प्रियो भवति । किन्तु परमात्मनः कामायायमस्याः प्रियस्स्यादिति स्वाराधकप्रियप्रतिलम्भनरूपेष्टसम्पत्तये । परमात्मा हि कर्मभिराराधितस्तत्कर्मानुगुणं प्रतिनियतदेश-कालवस्तुस्वरूपमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । "एष ह्येवानन्दयति" इति श्रुतेः । न तु स्वरूपेण किञ्चित्प्रियमप्रियं वा भवति । "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय पुनः प्रसादाय च जायते । तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्" ॥ इति स्मृतेः । तत्परमात्मन-एवाऽयं प्रस्तावस्स्यादित्याशङ्क्याह "भोग्यगणशेषिणमेवे"ति । अत्र तावदात्मदर्शनादिविध्युपयोगितया बोधनीयमैत्रेयीप्रसिद्धमेव किञ्चिदुपन्यस्यत इति वै शब्दादवगम्यते । अन्यथा अप्रसिद्धविधिपरत्वकल्पने गौरवात् स्वप्रयोजनायान्यत्प्रियं भवतीति च सर्वसिद्धम् । अत एव याज्ञवल्क्यस्य सन्निहितमपि स्वप्रयोजनाय जायाप्रियत्वं बोधनीयाया मैत्रेय्याः परोक्षत्वादनाश्वसनीयं मा भूदिति स्वव्यवहितमपि स्वप्रयोजनाय पतिप्रियत्वं मैत्रेय्या अपरोक्षमिति तदेव प्रथममुपन्यस्यते न वा अरे पत्युः कामायेत्यादि । तन्निदर्शनेन परमप्याश्वासनीयं भविष्यतीति । एवं सति पतिजायादिसम्बन्धिरूपग्रहणमपि प्रतिसम्बन्धिभोक्त्राऽऽत्मप्रतिपत्त्यर्थतयाद्दृष्टार्थं भविष्यति । अन्यथा आत्मनः कामायेति परमात्मपरत्वे न वा अरे गन्धस्य कामाय न वा अरे रसस्य कामायेत्यादिग्रहणसम्भवे पत्यादिसम्बन्धिरूपग्रहणमदृष्टार्थमेव स्यात् । ततश्च श्लोके भोग्यगणेति गणग्रहणम् । पतिजायापुत्रवित्तादिप्रतिसम्बन्धिभोक्त्राऽऽत्मविषयस्वरसवहा बहवः प्रत्यया आत्मनः कामायेत्यत्र परमात्मपरत्वकल्पनया नापरोद्धव्या इति सूचयति । अन्यथा तस्य परमात्मपरत्वे परमात्मा जायादिभ्यः पत्यादिप्रियत्वमापादयतीति प्रतिसम्बन्ध्यध्याहारगौरवं च स्यात् । न च तथा क्वचित्प्रसिद्धमस्ति प्रत्युत तदेव प्रीतये भूत्वेत्युदाहृतस्मृतिवाक्यशेषे "मनसः परीणामोऽयं सुखदुःखादिलक्षण" इति वस्तुगतं प्रियत्वं मनोगुणवैषम्यनिमित्तशोभनाऽशोभनत्वसङ्कल्पहेतुकमित्यभि-धीयते । कथं च वस्तुगताप्रियत्वापादकत्वं परमात्मनो द्रष्टव्यत्वोपदेशोपयोगि योऽन्येषामपि

प्रियत्वमापादयति अधिकधनी वा धनानां धनित्वं सनिरतिशयप्रिय आत्मा द्रष्टव्य इति चेत् हन्तैवं वस्तुनस्स्वतस्सुखात्मकत्वमिव दुःखात्मकत्वमपि नास्तीति यस्तदप्रियत्वमापादयति स निरतिशयाप्रियस्सन् द्वेष्टव्यइति विपरीतशङ्काऽपि कदाचित्स्यादित्यनियमप्रसङ्गः। ननु भोक्त्राऽऽत्मपरत्वोपगमेऽपि कथं तदुपयोगः, यस्मादात्मार्थतया सर्वं प्रियं तस्माप्रियवियुक्त आत्मा द्रष्टव्य इत्यसङ्गतम्। प्रियमेव हि स्वशेषतया द्रष्टव्यमित्युच्यते। आत्मार्थतया परप्रियत्ववचनेन निरुपाधिप्रिय आत्मेत्युपदर्शितम्। सुखार्थतया चन्दनादिप्रियत्वे हि सुखं निरतिशयप्रियं दृष्टम्। ततश्च निरुपाधिप्रेम-गोचरतया परमानन्दस्वभाव आत्मा द्रष्टव्य उपदिश्यत इति सुसङ्गतम्। तस्मान्न परमात्मपरत्वमिह युक्तमित्येवकाराभिप्रायः। एवं पत्यादिभोग्यशेषिणं भोक्तात्मानमेव प्रस्तुत्याऽमृतत्वहेतोरात्माद्रष्टव्य इति चोपदिशन् याज्ञवल्क्य इत्यन्वयः। "षष्ठी हेतुप्रयोग" इत्यनुशासनात् अमृतत्वस्य चोद्देश्यतया साधनोपदेशे हेतुत्वादन्नस्य हेतोर्वसतीत्यादिवदमृतत्वहेतोरुपदि-शन्नित्युक्तं। चकार आपातप्राप्तं विरोधं सूचयति। नायं द्रष्टव्यतोपदेशो जीवात्मविषयः अमृतफलसमभिव्याहारात् परमात्मदर्शनं ह्यमृतत्वहेतुः न जीवात्मदर्शनम्। "तमेव विदित्वाऽति-मृत्युमेति नान्यः पन्थाविद्यतेऽयनाये"त्यादिशास्त्रात्। प्रस्तुतश्च जीवात्मेत्यसङ्गतमिवेति, यस्तु पञ्चाग्निविद्याविधिं भूतविविक्तशुद्धजीवोपासनापरमास्थाय "तद्य इत्थं विदुर्ये चेमेऽरण्ये शुद्धातप — इत्युपासते तेऽर्चिषमभिसम्भवन्तीत्यमृतफलश्रवणाऽविशेषात् जीवात्मानं परमात्मानं वोपासिनां न प्रतीकालम्बनान्नयतीति बादरायण इति न्यायं व्याचक्षाणो जीवात्मविद्याऽपि अमृतत्वसाधनमिति मन्यते। तस्य जीवविषयेऽपि प्रमानुरोधेन कथञ्चिद्वाक्यान्वयसम्भवादात्मा द्रष्टव्य इति। निर्दिष्टः परमात्मा वाक्यान्वयादिति न्यायविरोधः। यत्त्वात्मनः कामायेति जीवप्रस्तावेऽपि न विरोधः। न पत्यादीनामिष्टसम्पत्तये तत्परवशेन पत्यादयः प्रियत्वेनोपादीयन्त किन्तु स्वेष्टसम्पत्तये स्ववशेन अतो य एवात्मनो निर्दोषनिरवधिकप्रियः परमात्मा स द्रष्टव्यः न तु सदोषसावधिकप्रियाः पत्यादय इति सङ्गत्युपपत्तेरिति, तन्न, उभयत्राऽऽत्मशब्दस्य स्वरसत एकार्थप्रत्ययस्याबाधनीयत्वात्। अथ तर्हि तस्य जीवात्मनस्सर्वलोकसिद्धस्य द्रष्टव्यत्वोपदेशो ऽनर्थक इति चेत्, अतएवाम्नाय-हृदयङ्गममस्ति वेदनीयं किमपि रहस्यतमं तत्त्वं यद्भोक्तुरात्मैव परमात्मेतीति प्रतिपादयामः। तदेतदात्मा द्रष्टव्य इति चोपदिशन्निति काक्वोपक्षिप्तं व्यक्तीकुर्वन्नाह हे ईश्वर। त्वां परमात्मानं, जीवात्मना जीवरूपेणाऽवस्थितं कथयतीति। अत्र मृद्धेमादेरिव घटकटकादिरूपेण परमात्मनं जीवरूपेणावस्थानं केचिदिच्छन्ति। तत्रैव प्रकरणे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवाऽनुविनश्यतीति दर्शनात्। अन्यत्र च "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गा-स्सहस्रशः प्रभवन्ते सरूपाः तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्रचैवाऽपियन्ती"त्यादि-श्रवणादिति। यथासूत्रितं इदं वाक्यान्वयाधिकरणे — परमात्मपरे वाक्ये कथं भोक्तात्मनोपक्रम

इति शङ्कां समाधित्सता **भगवता बादरायणेन** "प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य" इति। आत्मनि विज्ञाते इदं सर्वं विदितमिति प्रतिज्ञा तदभेदे सजीवस्य जगतस्सिद्ध्यति, उपादानोपादेयतया च भेद इत्यस्यैतल्लिङ्गं यज्जीवशब्देन परमात्मनो भेदेन ग्रहणमित्याश्मरथ्य – आचार्य आहेत्यर्थः। "अयमनन्तरोऽबाह्यः प्रज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाये"त्यादि च न जीव एवैवमित्यभिप्रायं येनेदं प्रकरणं जीवपरमाशङ्क्येत, किन्तु परमात्मैव जीवरूपेण जायत इत्यभिप्रायं। कथमेतदवगम्यते–आत्मविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गम् इह जीवो यद्यात्मकार्यमिति नोच्येत, किन्तु जीव एवैवमित्युच्येत सा प्रतिज्ञा न सिद्ध्यति। जीवस्याऽन्यत्वादिति वाक्यार्थः।

**अपरे पुनरिच्छन्ति** "तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ती"ति, अन्यत्र चा"स्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यत" इत्यादिश्रवणात्। प्राक् स्वैरेव नामरूपोपाधिभिरङ्गारादेरिव स्फुलिङ्गादि परमात्मनोविच्छिन्नस्वभावभिन्न एव जीवः, मोक्षे "यथा नद्यस्स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"॥ सत्तामात्रात्मा सम्पद्यते **तथा च पाञ्चरात्रिकाः** – "आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः"॥ इति। **इदमपि सूत्रितम्**– "उत्क्रमिष्यत, एवं भावादित्यौडुलोमिरि"ति। नामरूपोपाधेरुत्क्रमिष्यतो, मोक्ष्यत एवं भावात्, द्रष्टव्यतयोपदेश्यपरमात्मत्वेन भावात्। तदभेदाभिप्रायेण जीवात्मनः उपक्रमइत्यर्थः। नात्र "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाये"त्यादिना जीवोत्पत्तिविनाशप्रतिपादनात्तत्परत्वमाशङ्कनीयम्। उत्क्रमिष्यत एवं भावात्, तान्येव भूतानि नामरूपात्मकानि नश्यन्त्यनुविनश्यतीति हि परमात्मभावाभिप्रायं, नोच्छेदाभिप्रायम्। "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मे"ति वाक्यशेषात्। अत एव "न प्रेत्य संज्ञाऽस्ती"ति नामरूपोपाधेरुत्क्रान्तस्य परमात्मभूतस्य विशेषविज्ञानाऽभाव एवाऽभिधीयते "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि"त्यादि वाक्यशेषादिति वार्थः। **तदेतत्पक्षद्वयं निरसितु "मप्रच्युतात्ममहिमानमि"ति** विशेषणम्। अप्रच्युतः अविगलितः अन्यथाभावापत्तावपि तदवस्थः, आत्मनः स्वस्य महिमा महत्वं अविक्रियैकरस्यादिस्वभावो यस्य तं, तथासन्तमेव जीवात्मनाऽवस्थितमित्यन्वयः। उदितपक्षद्वये जीवपराभेदोपगमेऽपि **प्रथमपक्षे** "स वा एष महानज आत्माऽजरोऽमृतोऽभयो ब्रह्म, न जायते म्रियते वा विपश्चिदि"ति श्रुतिविरोधेन परमात्मनोऽविकारित्वं, विकारस्य च जीवस्याऽनित्यत्वेकृतहानादिदोषः। कृतप्रयत्नानपेक्षया च विषमं सृजतः परमात्मनो वैषम्यं नैर्घृण्यं, तत्त्वज्ञानेन जीवस्य स्वकारणब्रह्मभावापत्तिर्हेमादिभावापत्तिरिव कटकादेः स्वरूपविलय एवेति मुक्तेरपुरुषार्थत्वापत्त्या तदुपायोपदेशानर्थक्यं च। **द्वितीयपक्षेऽपि** परमात्मन उपाधिभिस्स्वभावविच्छेदेऽङ्गाराम्भेरिव सावयवत्वादिदोषः स्वभावभिन्नस्य जीवस्य तरङ्गस्येव तरङ्गिणि परमात्मनि

स्वरूपलये पुरुषार्थत्वानुपपत्त्यपरिहार—एव । अत आरोपरूपेण नामरूपाहमभिमानेन केवलं जीवात्मनाऽवस्थितः परमात्मेत्यभिप्रायः । अत्र परमात्मा यदि जीवाभावावस्थितः नेश्वरस्स्यात् । यदि चेश्वरः न जीवभावावस्थितः स्यादिति शङ्कानिरासाय हे ईश्वरेति सम्बोधनम् । परमात्मन — एवैकस्य दृश्याहमनहन्दृशिताभेदेन जीवेशभेदोपपादनादविरोध इत्यभिप्रायः एतदपि सूत्रितं "अवस्थितेरिति काशकृत्स्नः" इति । अविकृतस्यैव परमात्मनो नामरूपाभिमानमय्याऽविद्यया केवलं जीवभावेनाऽवस्थितेर्न वा अर इत्यादिजीवात्मनोपक्रमणं परमात्मपरे वाक्ये नानुपपन्नम् । "इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय इदं सर्वं यदयमात्मा" इत्याद्यभेदाऽभिधानं चेत्यर्थः ।

अत्राऽऽह परः न विज्ञानघनशब्देन जीववाचिना परमात्माऽभिधानमभेदेन, किन्तु जीवात्मनि परमात्मनोऽवस्थितेः "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरं यमात्मानमन्तरो यमयती"त्यादि श्रुतिदर्शनात् जीवः परमात्मनश्शरीरमिति शरीरवाचिनः शरीरपर्यन्तत्वेनैवेति काशकृत्स्नमतम्। सूत्रकृदभिमतं कुत एतदवगम्यते? आकाङ्क्षा-वशादित्याह — अवस्थितशब्दस्य स्वतोऽधिकरणमाकाङ्क्षितं कुत्रेति कथमित्याकाङ्क्षातूत्थाप्या। अतस्सूत्रान्वयस्वारस्यादेवमवगम्यते अन्यथाऽनुपपत्तेश्च, अविकृतस्यैव परमात्मनो जीवभावेनाऽवस्थाने सर्वदा ब्रह्मभावाभिर्भावाभ्युपगमे तदनुपपत्तिः। तिरोधानाभ्युपगमे पुनरप्रकाशापादनं हि तिरोधानं, प्रकाशरूपश्चात्मेति स्वरूपनाशाभ्युपगम एव स्यात्। अतिरोधानेऽपि भेदभ्रमे मुक्तावपि तत्प्रसङ्ग इति। तत्र वदामः —— परमात्मनोऽवस्थितेरित्युक्ते नाधिकरणाकाङ्क्षा युक्ता। "स भगवः कस्मिन्प्रतिष्ठित इति स्वमहिम्नीत्यथवा न महिम्नी"ति निरधिकरणत्वश्रुतिविरोधात्। "य आत्मनि तिष्ठती"त्यादेरपि तादात्म्येन व्याप्तिमात्रपरत्वोपपत्तेः। "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे"ति श्रुत्यन्तरात्। अतोऽत्रावस्थितेरित्यवस्थापर्याय एवेति कथमित्याकाङ्क्षाया एव, "अनेन जीवेनात्मनाऽनुप्रविश्ये"-त्यादि श्रुत्यनुरोधेन सुलभत्वात् जीवभावेनावस्थितेरित्येवाभिप्रायो भगवद्बादरायणस्येति युक्तम्। अनुपपत्तिस्तु नास्त्येव। दृश्यदृशितासंस्कारमयानाद्यविद्यया प्रकाशमयस्यैवात्मनो दृश्याहमभिमान-मयजीवभावोपगमात् । तदेतत्सर्वं प्रागेवोपपादितमिति ।

अपर आह —— अवस्थितेस्तृणकणादावपि पूर्णत्वेन ब्रह्मणोऽवस्थानाद्येन केनचित्तृणादि-वाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वं युक्तम्। कथं पूर्णत्वेनावस्थानं ब्रह्मणः? उच्यते — अस्तित्वमानन्दं ब्रह्मणो रूपम्। सर्वविकल्पप्रत्याख्यानात्। न चाऽस्तित्वं घटे पटे च खण्डितं वर्तते। उभयत्रापि कृत्स्नास्तित्वदर्शनादिति तदयुक्तम्। यदि तावदस्तित्वान्वयमात्रेण तृणादिसाधरण्येन जीवेनोपक्रमा-विरोधपरमवस्थितेरिति प्रतिज्ञायामनेकशेषित्वोपन्यासः श्रमफल एवापादितस्स्यात्। अपि च यद्यदि

गोत्वमिव खण्डमुण्डादिषु विशेषेषु सामान्यरूपमुपगम्यते, अधिष्ठानतयाऽऽरोप्यविशेषसत्तारूपत्वानुपगमात्। तर्हि ज्ञानात्मकं न स्यात्। श्रूयते च "सत्यं ज्ञानमनन्तं ब्रह्मे" ति। विशेषाश्रयतानियतं च सामान्यं विश्वकारणं न स्यादित्याद्यत्र बहु वक्तव्यं ग्रन्थविस्तरभयात्तु विरम्यते। अत्र पूर्वार्धे न भोक्तारं प्रस्तुत्य परमात्मनो द्रष्टव्यत्वोपदेशवचनेनार्थाज्जीवस्य परमात्मपर्यन्तो विवेक उक्तः। उत्तरार्धेन परमात्मनः प्रत्यगात्मपर्यन्तो विवेक उक्त इति ॥ १०९ ॥

**स्यादेतत्**, अस्तु तर्हि भेदाभेदो जीवपरयोः। तत्र भेदांशमादाय परमात्मकारणत्वादिवादा जीवसंसारादिवादाश्च व्यवतिष्ठन्ताम्। अभेदांशमादाय च तत्त्वमस्यादिवादाः। सूत्रितश्च जीवपरभेदाभेदो भगवता बादरायणेन "उभयव्यपदेशात्त्वहिकुण्डलवत्" इति। "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः, य आत्मानमन्तरो यमयती" त्यादिना भेदस्य, "तत्त्वमसी" त्यादिनाऽभेदस्य चोभयस्य व्यपदेशात्। भेदाऽभेदो जीवपरयोः अहिकुण्डलवदिति निदर्शनम्। यथाऽहिरित्यभेदः, कुण्डलमाभोगः प्रांशुरिति भेदः तथा ब्रह्मेत्यभेदः, जीव इति भेद इति। एवं सर्वमेव शास्त्रं अन्यदपि प्रमाणमबाधेनोपपादितं भवतीत्याशङ्क्य, स्यादप्येवं पौर्वापर्ये सति बलाबलचिन्तामनपेक्ष्य यदि श्रुतिप्वाहत्य जीवपरभेदनिषेधो न स्यात्। तन्निषेधे तु सति अभेदव्यपदेशबाधनीय एव भेदव्यपदेशः तदुपाश्रयं चान्यदित्यभिप्रेत्य जीवपरभेदनिषेधमुखप्रवृत्तामभेदोपदेशानुग्राहिकां श्रुतिमुपदर्शयन्नाह —

> दृश्यानहन्त्वदृशिरीश भवानहंत्व-
>
> निर्भासतो यदसि जीवपदं प्रपन्नः।
>
> तद्द्रष्टृ न त्वदितरन्न तथाऽस्ति मन्तृ
>
> विज्ञातृ नान्यदिति नश्श्रुतिराशृणोति ॥ ११० ॥

अत्र, "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञात्रिति" प्रक्रम्य "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रि" ति श्रुतिमर्थतोऽनुक्रामत्युत्तरार्धेन। तत्रात इति प्रकृतोऽक्षरात्माऽवमृश्यत इत्यभिप्रायेण 'त्वदि' त्युक्तम्। अन्यदिति स्थाने इतरदिति पदम्। नन् "वन्यारादितरर्ते" दिक्शब्दांचूत्तर-पदादाहियुक्त इत्यत्राऽन्यशब्देनान्यार्थग्रहणे सति इतरशब्दोपादानान्नासावन्यपर्यायः। इतर इति निर्दिश्यमानप्रतियोगी पदार्थ उच्यत इति च **काशिकाकारः**। तथा समानमितरच्छ्येनेनेत्यत्र इतरशब्दस्य सदृशसन्निहितवाचित्वमुक्तं **शाबरभाष्ये** "न केवलमयं

सन्निहितवचन एव पूर्वोक्तसदृशं सन्निहितमपि ब्रूते विशिष्टमि" ति उच्यते – इतरशब्दस्तावदनेकार्थोऽनुशिष्यते "इतरस्त्वन्यनीचयोः" इति। तत्र सूत्रेऽन्येत्येवान्यार्थक 'इतर' शब्दो गृहीतः। नीचार्थस्तु इतरेत्युपात्तः। तत्राऽपि "स्वं रूपं शब्दस्याशब्दसंज्ञे" ति न स्वरूपग्रहणं, किन्तु मत्तो नीचः, त्वत्त उत्तमः, अस्मादधिकः तस्मादल्पः, ततोगुरुरतो लघुरित्यादि प्रसिद्धये। अत्राप्यर्थग्रहणं तदर्थेन च गुणयोगादन्येऽपि लक्षणाया इत्यभिप्रेत्य काशिकाकृतोक्तं निर्दिश्यमानप्रतियोगी पदार्थ इति, न त्वन्यार्थत्वं वारितम्। शाबरभाष्ये च सादृश्यस्याऽन्यत्वगर्भत्वात्तदवारितम्। ततो लोकव्यवहारादन्यदित्यर्थे इतरदित्युपात्तं। अत एव टुप्टीकायां इतरशब्दो नाधिक्ये लोके प्रसिद्ध इति। पूर्वोक्तसादृश्यमस्य न वाच्यमित्युक्त्वा, किं तर्हि ? यदुपयुक्तादन्यत् सन्निहितं तत्र प्रसिद्ध इति। अन्यत्वं सन्निहितत्वं च तत्प्रवृत्तिनिमित्तमित्युक्तम्। **तथा शब्दस्त्वदन्यन्न श्रोतृ** इत्यस्य समुच्चयार्थः। त्वदन्यदित्यनुषङ्गेण नास्तिमन्त्रित्यन्वयः। एवं **विज्ञातृ नान्यदित्यत्रापि** त्वदित्यनुषङ्गः। **इति शब्दो** यथोदीरितं द्रष्ट्रादिभेदनिषेधमर्थमवमृशति इममर्थं श्रुतिः "नान्यदतोऽस्ति द्रष्टृ" इत्याद्या। **नः**, अस्मभ्यं श्रुतिसम्प्रदायविद्भ्यः। **आश्रृणोति** आङ्पूर्वकः शृणोतिः प्रतिज्ञायां, प्रतिजानीत इत्यर्थः। अनेन द्रष्ट्रादि भेदनिषेधस्तात्पर्येणावश्यनिर्वहणीयः, यथा सत्तमस्य प्रतिज्ञातार्थः इति सूचयति। तत्रोपपत्तिमाह **पूर्वार्धेन**। परमात्मनोऽविद्यया विश्वदृश्यदृशिताद्वैधं **प्रागेव सनिदर्शनमुपपादितम्**। तत्र **हे ईश, दृश्यानहन्त्वदृशिः भवान्** ईश एव। एतदर्थमिहेशेति सम्बोधनम्। सत्वं, **अहन्त्वनि भासतः** तेष्वेव दृश्येष्वहमित्यहन्त्वेन ईशान्निष्कृष्य पृथक्कृत्य भासतः अभिमानात्। दृश्याहमभिमानी हि तदभिमानशून्यादीशान्निष्कृष्टः, पृथक्कृत इव भवतीति निर्भासत इत्युक्तम् पद्यत इति पदं, जीव इति पदं। अहमिति गम्यमान रूपम्। अथवा, **जीव इति पदं**, तद्वाचकं शब्दमित्यर्थः। **प्रपन्नोऽसि यत्** यस्मात्, **तत्** तस्मात् **त्वदन्यत् द्रष्ट्रादि नास्तीति श्रुतिराश्रृणोतीति योजना**। जीवपरभेदनिषेधानुरोधेन तद्भेदो विश्वदृशितातदहमभिमानोपाधिकोऽविद्यामयो नीयत इत्यभिप्रायः। एतेन यत्केनचिदुक्तं भेदनिषेधव"द्य आत्मनि तिष्ठन्नि"ति भेदस्याऽपि दर्शनात् भेदाऽभेदौ ग्रहीतव्याविति **तन्निरस्तम्**। भेदाऽभेदनिर्देशादेव तत्सिद्धौ भेदनिषेधस्याधिकत्वात्। तात्पर्यतो विशेषाच्च। यथा तावदुषस्तप्रश्ने "यः प्राणेन प्राणिति स त आत्मा सर्वान्तर" इत्यादिना प्राणनादिव्यापारोपलक्षित आत्मा "न दृष्टेर्द्रष्टारं पश्येरि"त्यादिना दर्शनश्रवणाद्यविषयत्वेन सह द्रष्टृश्रोत्रादिरूपोदितः। पुनरुद्दालकप्रश्ने पृथिव्यादिनियन्तृत्वेनोपलक्ष्य "अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाते"ति प्रत्यभिज्ञापितः "स त आत्मा सर्वान्तरः, एष त आत्मान्तर्याम्यमृत" इति निर्देशप्रसक्तजीवातिरेकशङ्कानिरासाय "नान्योऽतोऽस्ति द्रष्टा, नाऽन्योऽतोऽस्ति श्रोता, नाऽन्योऽतोऽस्ति मन्त नाऽन्योऽतोऽस्ति विज्ञाते"ति भेदनिषेधेनोपसंहृतः। पुनर्गार्गिप्रश्ने विश्वोपादानाव्याकृताकाशाधिष्ठानतय परमात्मानं

अक्षरं वक्तुं नियन्तृत्वोपदेशप्रसक्तसविशेषस्वभावत्वशङ्कानिरासाय "तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चने"ति सर्वविशेषनिषेधेन प्रकृत्य माभूदक्षरात्मनोऽस्यान्तर्याम्यतिरेकशङ्केति "एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिना विश्वविधारणहेतुत्वमभिधाय "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ" इत्यादिना तथारूप एवोपसंह्रियते सोऽयमभ्यासो भेदनिषेधतात्पर्ये लिङ्गम्। अतः स्वरूपाभेद एव श्रुतितात्पर्यविषयः। भेदव्यपदेशः पुनराविद्यकभेदविषय एवेति साम्प्रतम्। एतेन यदप्युक्तं न च तात्पर्यतोऽविशेषः अन्तर्यामिस्वरूपविज्ञानपरत्वात्प्रकरणस्य नियन्त्रन्तरशङ्कानिवृत्त्यर्थमपि शक्यते वर्णयितुं नाऽन्यस्सर्वस्य द्रष्टाऽस्तीति सर्वथा, "यं पृथिवी न वेदे"ति देवतादिक्षेत्रज्ञानुपन्यस्य तदपलापो न युज्यत इति तदपि निरस्तम्। ब्राह्मणत्रयस्याऽपि वाक्यैकवाक्यतया परमात्मस्वरूपप्रतिपत्तितात्पर्योपपादनात्। न च विश्वमिथ्यात्वेन "नेह नानाऽस्ति किञ्चने"त्यादि भेदनिषेधवदिह क्षेत्रज्ञापलापेन तद्भेदनिषेधः, किन्तु स्वरूपाऽभेदेन भेदस्यैव निषेधइति तदपलापायोगवचनमप्रसक्तविषयत्वादुन्मत्तप्रलापः। न च नियन्त्रन्तरशङ्कानिरासार्थं "नाऽन्योऽतोऽस्ति द्रष्टे"त्यादीति युक्तं, अयौक्तिकतया नियन्तुरेवागमिकत्वोपगमेन विनाऽऽगमं नियन्त्रन्तरशङ्काप्रसङ्गात्। अथ देहेन्द्रियादिनियन्तुर्जीवस्यान्यो नियन्ताऽधिगत इति तन्मूलानियन्त्रन्तरशङ्का स्यादिति चेत्, यदि स्यात्किं ततः स्यात्? अतो जीवान्नान्तर्यामीभिन्न इति। तत्र यदि जीवपरिशेषस्स्यात्, "यमात्मा न वेद य आत्मानमन्तरो यमयती"त्यादिशास्त्राऽसामञ्जस्यम्। अथाऽन्तर्यामिपरिशेषः जीवापलाप एव स्यात्, भेदनिषेधेन तदभेदपरिशेषे न दोषो भवति। बीजक्षयेण शङ्का च समाहिता भवति। अन्यथा शङ्काबीजे सत्येव नियन्त्रन्तरनिषेधेन तत्समाधानं हठ एव स्यात्। नाऽन्योऽतोऽस्ति द्रष्टेति सामान्यनिषेधश्च विना हेतुनियन्त्रन्तरविशेषनिषेधपरः कल्प्येत जीवोपन्याससन्निधिमात्रेण सम्भवत्सामान्यश्रुतिसङ्कोचकल्पनाचान्याय्येति। एतदभिप्रायेणैव मिश्राः यदि पुनरात्मनो नियन्तुः अन्यो नियन्ता भवेद्वेदिता वा तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थादीतीमामेवाऽनवस्थाशङ्कामुद्भाव्य समाधुः। न चाऽनवस्था न हि नियन्त्रन्तरं नियम्ते। किन्तु यो जीवो नियन्ता लोकसिद्धः स परमात्मैव। तत्कुतो नियन्त्रन्तरम्। कुतश्चानवस्था? ततश्च नान्योऽतोऽस्ति द्रष्टेत्यादि श्रुतय उपपन्नार्थाः। परमार्थतोऽन्तर्यामिणोऽन्यस्यात्मनो द्रष्टुरभावदिति। अत्र कश्चिदाह — नाऽनवस्थाप्रसङ्गः। युक्त्याकल्पनायां ह्यनवस्थानं, न श्रुत्याऽभ्युपगमे। श्रुतिर्हि "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्याद्या नियन्त्रन्तर प्रतिषेधति। न चानवस्थाया भेदप्रयुक्तत्वादभेदेन तत्परिहार इति वाच्यं, श्रुतभेदनिबन्धनचोद्यस्य श्रुतिविरुद्धाभेदकल्पनया परिहारानुपपत्तेः। पृथिव्यादिवन्नियाम्यतयाऽवगतस्य जीवस्य परमात्मनैक्या-

सम्भवाच्च । अपि च ज्ञेयस्येव ज्ञानस्याऽपि स्वव्यतिरिक्तज्ञानसापेक्षत्वेनाऽनवस्थाप्रसङ्गः । तत्परिहाराय ज्ञानज्ञेयाभेदश्च स्यात् । अथ ज्ञानस्य स्वप्रकाशत्वान्नानवस्था, जडाऽजडयोस्स्वभावविरोधाच्च नाभेद इति चेत्तर्हि तथैव न नियन्तव्यजीवस्येव तन्नियन्तुरीश्वरस्यापि नियन्त्रन्तरसापेक्षत्वेनानवस्था । "पतिं विश्वस्यात्मेश्वरं" इति श्रुतेरात्मेश्वरत्वात् । नापि तत्परिहाराय तदभेदः, हेयार्हतदनर्हयोस्स्वभावविरोधात् । किं च भेदे प्रतीयमाने कथमभेदेनाऽनवस्थापरिहारः ? प्रतीयमानभेदस्य मिथ्यात्वात् । जीवपरयोस्स्वरूपाभेदेन परिहार इति चेन्न, अपारमार्थिकभेदेनत्र पृथिव्यादिनियन्तुर्जीवस्येव तन्नियन्तुरीश्वरस्याऽपि नियन्त्रन्तरापेक्षया-अनवस्थाशङ्कायास्तथाप्यनिवार्यत्वात् । यदि च नियन्त्रन्तरनिषेधकप्रमाणबलादनवस्थापरिहारः, भेदसत्यत्वमाश्रित्यैवाऽस्तु प्रमाणान्तराबाधेन निर्वाहे सम्भवति तद्बाधाश्रयणायोगात् । अत एव नाऽन्योऽतोऽस्ति द्रष्टेत्यादि न नियन्तृनियन्तव्यपरेतर भेदनिषेधपरम् । कथं हि मानान्तराप्राप्तं नियन्तृनियन्तव्यभावादिकं विधाय तदेव शास्त्रं निषेद्धुमलम् ? किन्तु नियन्तृरूप-द्रष्ट्रन्तरनिषेधपरम् । विशिष्टे प्रकृते सतीतरनिषेधस्य तत्तुल्येतरविषयत्वदर्शनात् । यथाऽस्मिन्ग्रामे देवदत्त एव पुरुषो नाऽतोऽन्य इति तादृशबुद्धिस्वातन्त्र्यादिविशिष्टपुरुषान्तरविषयो निषेधः । तथा च पृथिव्याद्यदृष्टः तदन्तरः तन्नियन्तेव परमात्मा तेनाप्यदृष्टस्तदन्तरस्तन्नियन्ता द्रष्टानाऽन्योऽतोऽस्तीति गम्यते । तेनाऽत्र जीवपरभेदनिषेध इति । अत्राऽभिधीयते — अप्रसक्त-निषेधस्तावदाम्नायस्याप्रामाण्यनिदानम् । "अभागिप्रतिषेधादानर्थक्यमर्थवादाना"मिति हि सूत्रितं जैमिनिना । तत्रैवं सति यदि नियन्त्रन्तरनिषेधः श्रौतः तत्प्रसक्तिर्वक्तव्या । तत्र च हेतुर्लोकसिद्ध-नियन्तृजीवस्य नियन्त्रन्तरश्रवणमेव अन्यस्य तत्प्रसञ्जकस्याऽभावात् । ततश्च श्रुत्युपगमेनानवस्था-प्रसङ्ग इति रिक्तं वचः । एवं सबीजायामवस्थाशङ्कायां हठो नियन्त्रन्तरनिषेधवादइत्युदितम् । यदि नियन्तुर्जीवस्याऽन्यो नियन्ता स्यात्तस्याप्यन्यस्तस्याप्यन्यः स्यादिति प्रसङ्गस्य विपरीतप्रमाणोसत्येवाऽ-वतरतस्ते नैवाऽपरिहार्यत्वात् । यो नियन्ता स स्वेतरनियन्तृक इति प्रसङ्गहेतुव्याप्तिः पुरुषबुद्धिमूला । नियन्त्रन्तरनिषेधश्रुत्याऽऽभास्यत इति चेत् सर्वथैवाऽऽम्नायविस्रम्भभारो निवेश्यते । तन्मूलसहचार-दर्शनस्याऽनुत्खातत्वात् । उपपत्त्या चाऽऽगमार्थो व्यवस्थापनीयो न्यायनिपुणैः । अन्यथा मीमांसाऽनारम्भप्रसङ्गात् । तत्र नियन्तृभेदमूलाऽनवस्थाशङ्का तन्निषेधेनैव समाधातुं युक्ता । शङ्काबीजपरिक्षयोपपत्तेः । न च "य आत्मनि तिष्ठन्नि"त्यादि श्रुत भेदविरोधः । "नाऽन्योऽतो-ऽस्ति द्रष्टे"त्यादि तन्निषेधस्याऽपि श्रुतत्वात् । अत्र नियन्तुर्नियन्त्रन्तरसापेक्षत्वेऽनवस्थाप्रसङ्गे ज्ञेयज्ञानप्रतिषन्दिग्रहणमाभासः । ज्ञेयस्य ज्ञानसापेक्षत्वे ज्ञानस्य ज्ञयत्वाऽभावेनाऽनवस्थाप्रसङ्गाऽभावात् स्वप्रकाशत्वे न ज्ञानस्य ज्ञानान्तरानपेक्षत्ववदीश्वरस्याऽऽत्मेश्वरत्वादन्याऽनपेक्षत्वान्नानवस्थेत्येतावदेव विवक्षितमिति चेत्तथाप्यात्मेश्वरत्वमीश्वरान्तरनिषेधः श्रौत एवेति सहचारदर्शनमूलाऽनवस्थाप्रसङ्गाऽनुद्धार

एव। न च जडाऽजडयोरिव जीवपरयोरभेदासम्भवः स्वभावविरोधादिति युक्तम् । न खलु जीव इति नियन्तव्यं तत्त्वान्तरमवस्थाप्य तन्नियन्तृभेदनिषेधमाचक्ष्महे । किं तर्हि ? यस्स जीव इति द्रष्टा श्रोता नियन्ता लोकसिद्धः न स स्वयमेव किन्तु येन दृश्यनियन्तव्योपाधिना द्रष्ट्रादिभावमापद्यते परमात्मा तत्तादात्म्याभिमानावग्रहेण स एवेत्युपपाद्यते। तत्र कुतस्स्वभावविरोधः ? तादात्म्येन च दृश्यतादात्म्याभिमानमयेन जीवेनाविदितस्वभावं तस्यैव तत्तादात्म्याभिमानमूल-दर्शनश्रवणादिसकलव्यापारप्रयोजकतया नियन्तारं तदात्मानमेव परोक्षमेव निर्दिशति "य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मान वेद यस्यात्मा शरीरं यमात्मानमन्तरो यमयत्येषत आत्मान्तर्याम्यमृत" इति । भेदनिषेधतात्पर्यलिङ्गमभ्यासो हि दर्शितः । अपि च कथमयमन्तर्यामी योऽन्तरो नियमतीति प्रसिद्धवन्निर्दिश्यते ? अनोवदचेतनप्रवृत्तिस्सनियन्तृकेत्यनुमानादिति चेत् अस्त्वेवं, 'यः पृथिवीमन्तरो यमयती'त्यादिनिर्देशः "य आत्मानमन्तरो यमयती" तु कथं दासवदस्व-तन्त्रप्रवृत्ति,स्सनियन्तृकेत्यनुमानादिति चेत् कथमस्वातन्त्र्यं ? हितवदहितप्रवृत्त्यादिदर्शनादिति चेत्, तदज्ञानमिथ्याज्ञानरागद्वेषादिदोषनिबन्धनमपि स्यात् । तस्माद्योऽयमेव देहादिनियन्ता लोकसिद्धः स एष तत्तादात्म्याभिमानावग्रहान्निष्कृष्य निर्दिश्यते भेदनिषेधेन स्वरूपेणा-ऽपरोक्षोऽवस्थापनीय इतीति मन्यामहे। एवं च प्रतीयमानस्यैव नियन्तृनियन्तव्यभाव भेदस्यापवादेन तन्मूलाऽनवस्थापरिहारस्सुशक इति तत्र कथन्ता निरालम्बना। न खलु प्रतीयमानो भेदः स्वरूपतो मिथ्येति तन्मूलाऽनवस्थापरिहारं ब्रूमः। येन पृथिव्यादेर्जीवस्य च नियम्यनियन्तृभाव भेदापारमार्थ्येऽपि तन्नियन्तुर्जीवस्येश्वर इव तयोर्नियम्यनियन्तृभावापारमार्थ्येऽपि तन्मूलैवेश्वरस्याप्ययो नियन्तास्यादित्यनवस्था तदवस्था स्यात्। किन्तु तन्निषेधावगमनेन ततो बीजक्षयेण पुनरनवस्थाशङ्कानव-काशः। एवं सति यन्मानान्तरं नान्तरीयकबाधनीयताकं तद्बाध आश्रीयताम्। अवर्जनीयायतिकत्वात् न कश्चिद्दोषः। एतेन मानान्तराप्राप्तं नियन्तृनियन्तव्यभावादिकं विधाय तन्निषेधायोग इति निरस्तम्। नियन्त्वादिभेदवादस्य तन्निषेधार्थत्वोपपादनात् । यत्तु नाऽन्योऽतोऽस्ति द्रष्टेत्यादि-प्रकृतान्तर्यामितुल्येतरनिषेधपरम् । लोके तथा दर्शनादिति । तत्र ब्रूमः – लोके तावद्वक्तृविवक्षाधीनोऽर्थप्रवृत्तिः । वेदे तु शब्दशक्त्यधीना शब्दशक्तिश्च । नाऽन्योऽतोऽस्ति द्रष्टेति केवलं द्रष्ट्रन्तरनिषेधविषया लक्ष्यते । प्रसिद्धे द्रष्टर्यन्तर्यामि भेदनिषेधविषया वा। दृष्टश्चलोके यो वदान्यः क्षमापरो युधिष्ठिरः कङ्कस्यात्मभूतः, नाऽन्योऽतोऽस्त्ययं कङ्क इति सन्निहितेप्यन्यथा गृह्यमाणे तमेव परोक्षवन्निर्दिश्य तद्भेदनिषेधेन तद्व्यपदेशः। एवमेष व्यपदेशो नाऽन्योऽतोऽस्ति द्रष्टेत्यादिः। अन्यथा तदन्तर्याम्यन्तरनिषेधविवक्षाया नाऽन्योऽतोऽद्रष्टो द्रष्टेत्याद्यनु-षङ्गाध्याहारगौरवात् । अथ अत इत्यनेनाऽदृष्टो द्रष्टेत्याद्युदितरूपस्य प्रतियोगितयाऽवमर्शादर्थत एव तदद्रष्टृत्वादिविशिष्टद्रष्ट्रादिनिषेधसिद्धिरित्युच्येत, तर्हि नाऽन्योऽतोऽस्तीत्येव ब्रूयात्, न तु

नाऽन्योऽतोऽस्ति द्रष्टेत्यादि द्रष्ट्रादिरूपस्याऽपि प्रतियोग्यवमर्शसामर्थ्यलभ्यत्वोपपत्तेः। अतः प्रसिद्ध एव द्रष्ट्रादिरूपेऽन्तर्यामिभेदनिषेध एवाऽयमित्यवगम्यते अन्यथाऽन्तर्याम्यदृष्टद्रष्ट्रन्तराप्रसिद्धेरभागिप्रतिषेधापत्तेः। देहादिनियन्तुर्जीवस्येवेश्वरस्याऽपि स्वादृष्टद्रष्टृनियन्तृकत्वमनुमानात्प्रसिद्ध्यतीति चेन्न, अनवस्थातर्कहतत्वादनुमानाऽप्रवृत्तेः। अथ जीवे द्रष्ट्रादौ अन्तर्याम्यदृष्टत्वनिषेध इत्युच्येत, तन्न, अदृष्टो द्रष्टेति हि परस्य जीवादृष्टत्वविलक्षणादस्यैव द्रष्टेत्यत्र द्रष्टव्यत्वलाभेन तददृष्टत्वनिषेधस्याऽर्थसिद्धत्वात्। न चान्तर्याम्यदृष्टं किञ्चित्प्रसिद्धमिति। तत्र द्रष्टृत्वनिषेधानुपपत्तिः लब्धरूपे क्वचित्किञ्चित् तादृगेव निषिध्यत इति न्यायादित्याद्यन्यत्र प्रपञ्चितम्। तदेवं भेदनिषेधानुगृहीताभेदोपदेशबलीयस्त्वेन भेदबाध एवेति न। भेदाऽभेदौ जीवपरयोरिति युक्तम्। यत्तु भेदाभेदस्सूत्रित इति तत्र वदामः – "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च" त्यादि प्रकृत्य, "अथात आदेशो नेति नेत्यादि" र्न ब्रह्म प्रतिषेधति, किं तर्हि? मूर्ताऽमूर्तप्रतिरूपवत्त्वं प्रकृतैतावत्त्वं हि प्रतिषेधति। ततो ब्रवीति च भूयः – "अथ नामधेयं सत्यस्य सत्यमिती" ति ब्रह्मणि परिशेषिते कुतस्तर्हि तन्नोपलभ्यत इति शङ्कायां तदव्यक्तमाह हि "स एष नेति नेत्यात्मा गृह्यो न हि गृह्यत" इत्याद्या श्रुतिरिति समाधाय, नात्यन्तमेव तदव्यक्तं उपदेशवैयर्थ्यापत्तेः। योगिनः पश्यन्ति "अपि संराधने प्रत्यक्षानुमानाभ्यां" "ततस्तु तं पश्यते निष्कलं ध्यायमानः," "योगिनः तं प्रपश्यन्ति भगवन्तं सनातनम्" इत्यादिश्रुतिस्मृतिभ्यां इत्युक्ते तर्हि परेतरात्मनोरन्यत्वं संराध्य,संराधकत्वादिति प्राप्ते, "प्रकाशवच्चावैशेष्यं, प्रकाशश्च कर्मण्यभ्यासात्" यथा प्रकाशः कर्मणि प्रकाश्योपाधौ सविशेष इवावभासमानोऽपि स्वतोऽविशेषप्रकाश एव। तथा ब्रह्मणोऽपि प्रकाशादिवदेवावैशेष्यं, शास्त्रेषु जीवब्रह्माऽभेदाभ्यासादिति प्रतिपादिते "अतोऽनन्तेन तथाहि लिङ्गम्"। भेदस्याविद्यकत्वात् अनन्तेन ब्रह्मणाऽभेदो जीवस्य। तथाहि लिङ्गम् – "ब्रह्म वेद ब्रह्मैव भवती" त्युपसंहृते भेदाऽऽविद्यकत्वस्थितये पक्षान्तराण्युपन्यस्यन्ते। "उभयव्यपदेशात्त्वहिकुण्डलवदि" त्यादिना। अत्र भेदाऽभेदवादे सर्वसाङ्कर्यप्रसङ्गादपरितुस्यन् "प्रकाशाश्रयवद्वातेजस्त्वात्" प्रकाशाश्रययोरालोकलोकचान्धवयोस्सत्येव भेदे तेजस्त्वजातिवशादभेदेऽपि भेदव्यपदेशो, यथा स्वरूप भेदात्तथा जीवपरयोरिति पक्षान्तरमुक्त्वा, अत्रापि ब्रह्मभेदाज्जीवस्य, अतोऽनन्तेन, तथाहि लिङ्गं इत्युक्तविरोधादपरितुष्यन्, यदुक्तं "प्रकाशादिवच्चावैशेष्यं" इति तदेव पर्यवस्थापयति पूर्ववद्वेति। तस्मान्न भेदाऽभेदस्सूत्रकृदभिमत इति। अत्र बहुवक्तव्ये सत्यपि विस्तरभीरवो विरमामः ॥ १६० ॥

एवं यत्र जीवस्य चक्षुश्श्रोत्रमनोबुद्धिलक्षणकरणाधीना दृष्टिश्रुतिमतिविज्ञातिसक्षणवृत्तिप्रत्ययभेदा उपजायन्ते। परमात्मा च तत्तत्प्रत्ययानुपश्यन्तया तद्विषयतदुपाधिकोऽदृष्टोद्रष्टाऽश्रुतः श्रोताऽमतो

मन्ताऽविज्ञातो विज्ञाता, तेषमेव वृत्तिभेदानां तदनुषङ्गिरूपशब्दादिविषयाणां वाऽवभासकः। यत्रेदमाम्नायते – "पश्यत्यचक्षुस्स शृणोत्यकर्ण" इत्यादि तां जागराद्यवस्थामालम्ब्य प्रवृत्ता जीवपराभेदोपदेशानुग्राहिका श्रुतिरुदाहृता। अधुना तस्य यत्र वृत्तिविलयेनाप्ययः, तां सुप्तिदशामालम्ब्य प्रवृत्तां तदभेदोपदेशानुग्राहिकां श्रुतिमुदाहरन्नाह —

स्वात्माप्ययं स्वपिति नाम निरुक्तिभङ्ग्या
सम्पन्न एष भवतीश, सता तदेति।
त्वय्यप्ययं प्रतियता निगमाऽवसाने
शङ्क्येत केन भवतोऽसुमतोऽन्यभावः ॥ १११ ॥

सन्ति तावज्जीवस्य तिस्रोऽवस्थाः प्रसिद्धाः जागरः, स्वप्नः, सुषुप्तिरिति। "इन्द्रियैरर्थोपलब्धिर्जागरः"। "इन्द्रियेषूपरतेषु जागरसंस्कारजः सविषयप्रत्ययः स्वप्नः"। "सह मनसाऽशेषविशेषविज्ञानोपरमे जीवस्याप्ययस्स्वात्मसम्पत्तिस्सुषुप्तिः"। तत्र जीवाप्ययस्थानतया सदात्मानं प्रत्यगभिन्नं उपदर्शयितुं प्रवृत्ता काचिदेषा श्रुतिः – "स्वप्नान्तं मे सोम्य विजानीहि यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवती" त्याद्या। तत्र "सता सोम्य तदा सम्पन्नो भवती" त्यमुमंशं छन्दोऽनुरोधात् पदव्यत्यासेनानुक्रामति सम्पन्न इत्यादिना। एष जागरस्वप्नयोरहमित्यपरोक्षो जीवः। तदा, यत्र सर्वेन्द्रियमनोव्यापारोपरमदाशायां सुप्तौ स्वपिति नाम तदा सता, या सदाख्या परा देवता नामरूपव्याकरणाय मन आद्यहमभिमानमयेन जीवभावेनानुप्रविष्टा, तेन स्वात्मभूतेन सता, सम्पन्नो भवति। अत्र सत्सम्पन्नो भवतीति द्वितीयाऽपि शक्यं निर्देष्टुम्। "यदा न कुरुते भावं सर्व भूतेषु पापकम्। कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा"। इत्यादिदर्शनात्। तथाऽपि सम्पत्तव्यं सत् सम्पत्तुरनात्मा मा भूदिति इत्थं भूतलक्षणार्था तृतीया निर्दिष्टा सहयोगार्था वा। अभेदेन, तादात्म्येन गतो भवतीति सम्मुपसर्गविवक्षयाऽपि तदनात्मत्वव्यावृत्तिसिद्ध्युपपत्तेः। इतिं, एवमुक्तं, त्वयि, सदात्मनि, अप्ययं, प्रलयम्। अपिपूर्वएतिर्हि लयार्थो भवति। "प्रभवाप्ययौ हि भूतानां" इत्यादिनिर्देशात्। व्युत्पत्तिवशेन प्रलयवाचिनां शब्दानां स्थानाकाङ्क्षाया उत्कटत्वात् त्वय्यप्ययमिति सप्तम्या निर्दिष्टम्। "सति सम्पद्य न विदुरि" ति वाक्यार्थोपदर्शनाय तेन न सुप्तावात्यन्तिकी सत्सम्पत्तिः। यथा कैवल्ये। किन्तु अविद्याशक्तिशेषैव। तत्सूचनायैवाऽत्र-

ईशेति सम्बोधनम् । इत्यतो यथायथं त इह – व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्तीति सुप्तानां तेषां तेषामेव पुनः प्रबोधवचनं ह्यस्तनकर्मशेषसन्धानं पूर्वेद्युरनुभूतसन्धानं कालान्तरफलकर्मविधानमित्येतत् सर्वमविरुद्धम् । **तथा च सूत्रं** – "यस्सुप्तः स एव तु कर्मानुस्मृतिशब्दविधिभ्यः प्रतिबुध्यते" इति । अथ सता सम्पन्नमिति कर्तरि तृतीया कर्मणि निष्ठा च स्यात् । कारकविभक्तिबलीयस्त्वात् । **तद्यथा** – "प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवाऽयं पुरुषः प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति श्रुत्यन्तरात् । एवं सुषुप्तौ भेदेन व्यपदेशान्नसतासम्पन्नइति सदात्मनि जीवाप्ययवचनेनाऽभेदानुग्रह इत्यत आह **स्वात्मेत्यादि** । स्वपितीति नाम स्वपितिनाम तस्य निरुक्तिः। निष्कृष्यावयवार्थवचनम् । स्वमपीतो भवतीति, तस्याभङ्गिः सता सम्पन्नो भवतीत्यतो विच्छित्तिविशेषः । तथा तमेव त्वय्यप्ययं स्वात्माप्ययं प्रतियतेत्यन्वयः ।

**अयमाशयः** — सतासम्पन्नः स्वमपीतइत्यनयोरेकार्थत्वं न्याय्यम् । स्वपितिनामनिरुक्त्युपयोगितयैव तदुपादानात् । तत्र स्वमपीतो भवतीत्येतावत्युक्ते विषयविज्ञानरागद्वेषशोकमोहादिविकृतिविलयेनाऽविकृतिस्वरूपावस्थानमेव प्रतीयेत । ततश्च स्वाप्ययस्थानत्वेन परमात्मविवक्षया "स्वप्नान्तं मे विजानीही"ति प्रक्रमः श्रमफस एव स्यात् । अतस्सता सम्पन्न इत्युक्तम् । तावत्युक्ते सत्पदार्थेन समुपश्लेषमात्रमुक्तं स्यात् । स च प्रधानमपि स्यादिति न विशिष्यते । अतस्स्वमपीत इत्युक्तम् । एवं सत्यर्थभेदो न न्याय्यः । सता सम्पन्नः सति सम्पद्येत्युपक्रमोपसंहारमध्यगतस्य स्वमपीत इत्यस्य तदनपेक्षितार्थान्तरविषयत्वाऽयोगात् पुरुषः स्वपिति नाम स्वं ह्यपीतो भवतीत्युपक्रमोपसंहारमध्यगतस्य सता सम्पन्न इत्यस्य तदनपेक्षितार्थान्तरपरत्वायोगाच्च । तत्र न स्वशब्दस्य जीवान्तर्यामिपर्यन्ततया सच्छब्दैकार्थ्यं युक्तम् । यथा पुरुषः स्वपिति नाम तस्मादेनं स्वपितीत्याचक्षत इति तस्य ब्रह्मपर्यन्तत्वानभिज्ञसाधारणलौकिकप्रसिद्ध्यनुवादविरोधात् । **अपि च** ज्ञातिधनाद्यविषयस्वशब्दः समभिव्याहृतवस्तुस्वरूपवचनः सर्वत्र प्रसिद्धः । "स स्वराड् भवति" "स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः – किल तस्य कर्णमूले स्वप्रकाश" इत्यादिदर्शनात् । ततश्च पुरुषसपभि व्याहृतस्वशब्दो न ब्रह्मपर्यन्तस्स्यात् । न च पुरुषशब्दोऽपि तत्पर्यन्तः, स्वपितिनामत्वादिव्यपदेशविरोधात् । अथ बहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः पुरुषशब्दोदितः परमात्मा सुषुप्तौ ज्ञानप्रसरविरहितजीवशरीरको भवन्नात्मन्यन्तर्भूत इति स्वपिति नाम स्वमपीत इति चोच्यत इति चेत्तथापि सता सम्पन्न इत्यस्याऽसामञ्जस्यं सम्पत्तुः सम्पत्तव्यस्य वाऽर्थान्तराभावात् । ततश्च प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः इति श्रुत्यन्तरैकार्थत्वाभ्युपगमविरोधः। न च तत्राऽपि पुरुषशब्दः परमात्मपर्यन्तः अवस्था भेदेन स्वात्मन्यन्तर्भाव एव च

परिष्वक्तृपरिष्वक्तव्यभाव इति चेन्न, "सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्"। इति न्यायविरोधात्। येन परिष्वक्तो यश्च परिष्वक्ता स प्राज्ञ एवेति भेदव्यपदेशाभावात्। नापि सच्छब्दस्य जीवपरत्वेन स्वशब्दैकार्थ्यं युक्तम्। स्वमपीत इत्येव तस्य स्वाप्ययसिद्धौ सता सम्पन्नइति पुनरुक्त्यानर्थक्यात्। "सदेव सोम्य इदमग्र आसीदि"ति परमात्मविषयस्सच्छब्दः अत्र जीवविषय इत्यर्थभेदकल्पनाया अन्याय्यत्वात्।

**स्यादेतत्**। सता सम्पन्नः स्वमपीत इत्यनयोरेकार्थत्वनिबन्धो निर्हेतुकः सुषुप्तस्य विषयविज्ञानादिकालुष्यहानेन स्वरूपावस्थानलक्षणस्वाप्ययोपपादनोपयोगितया सता सम्पन्न इति प्रथा न सम्पत्तिरेवोच्यताम्। अनपेक्षितार्थान्तरव्यवायाभावेनान्वयवैघट्यप्रसङ्गादिति चेन्नैतत्स्यात्। यत्र पुरुषस्स्वपिति नाम तदा स्वमपीतो भवतीत्यादेरेवाकाङ्क्षमन्वयबोधात्, न खलु स्वरूपावस्थानं प्रधानमाकाङ्क्षति। मुक्तौ तदभावात्। नापि सुप्तौ विषयविज्ञानकालुष्याभावः। "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति," "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" "न तु तद्द्वितीयमस्ति, ततोऽन्यद्विभक्तं यत्पश्येदि"ति। तस्य विषयोपश्लेषाभावनिबन्धनत्वश्रवणात्। **तत्रैवं सति** सता सम्पन्न इत्यस्यानर्थक्या भावाय केवलमाकाङ्क्षोत्थापनीया। तथापि च स्वपिति नामनिर्वचनानन्तरमेव तस्य विनिवेशो न्याय्यः। तत्रैवाकाङ्क्षोत्थानात्। न च तदानर्थक्यमपि, स्वपदस्य यथोदितजीवरूपमात्रविषयत्वव्युदासेन तस्य वास्तवस्वरूपसदात्मविषयसमर्पणार्थत्वोपपत्तेः। **अत एव** सदेव सोम्य इदमग्र आसीदित्यादौ न सच्छब्दवाच्यं प्रधानं "स्वाप्ययादि"ति सत्सम्पत्तिमेव स्वाप्यमभिप्रेत्याचेतने चेतनाप्ययायोगं सूत्रयति स **भगवान् बादरायणः**। तदिदमैकार्थ्यं सदात्मना जीवस्सम्पन्नइत्येवोपपादनीयम्। न तु सता कर्त्रासम्पन्न इति। परस्याऽपि पुरुषशब्दस्य जाग्रज्जीवविशिष्टपरमात्मपरत्वे सुषुप्तौ तदवस्थजीवविशिष्टसदात्मना सम्पद्यत इत्येव वक्तव्यत्वाच्च। अथापि कर्तरि तृतीया स्यात्। तथापि सम्पन्नः स्वाभेदेन गत इति व्याख्येयम्। समुपसर्गार्थत्वोपपत्तेः। प्राज्ञेनात्मना सम्परिष्वक्त इति **चानयैव दिशा व्याख्येयम्**। प्रियया सम्परिष्वक्तोऽपि तन्मयतयैव भावतस्तादात्म्येन भवतीति दृष्टान्ताविरोधात्। **अन्यथा** परमात्मना सर्वदैव सम्पन्न इति तदा सम्पन्न इति विशेषणानर्थक्यात्। सति सम्पद्य न विदुरित्यौपश्लेषिकसप्तमी। उपश्लेषश्च तादात्म्येनापि भवतीत्यविरोधः। यद्यभेदापत्तिरात्मना जीवस्य सुप्तौ कथं तर्हि "प्राज्ञेनात्मना सम्परिष्वक्त" इति च "प्राज्ञेनात्मनाऽनारूढ" इति च? सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्" **इति सूत्रम्**। उच्यते – "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति **प्रकृत्य** "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी सर्वस्येशान"।

इत्यन्ते प्रकरणे न जीव एव प्रतिपाद्यः। किन्तु जीवतोत्तीर्णो जीवस्याऽऽत्मभूतः परमात्मैव। न च जीवजनिमृतिजागराद्यवस्थानुवर्णनपरे सन्दर्भे परमात्मनोऽप्रसङ्गः। सुषुप्त्युत्क्रान्त्योर्जीवभेदेन प्राज्ञस्य परमात्मनो व्यपदेशादित्युच्यते। न तु तत्र भेदेनाऽवस्थितिरेव सिसाधयिषिता न वा तत्राभेदापत्तिर्निषिषित्सिता। न च प्राज्ञत्वाऽज्ञत्वाभ्यां भेदास्थितिराचिक्षिप्सिता। विषयसंश्लेषाभावनिबन्धनत्वात् बाह्याद्यवेदनवचनस्य। **तथाहि दर्शितं** "न विज्ञातुर्विज्ञातेर्विपरिलोपो वर्तते, अविनाशित्वान्न तु तद्द्वितीयमस्ति, ततोऽन्यत्तद्विभक्तं यद्विजानीयादि" ति। अन्यत्र च "यत्रैतत्पुरुषस्सुप्तः स्वप्नन्न कंचन पश्यत्यथाऽस्मिन् प्राण एवैकधा भवती" ति परमात्माभेदापत्तिमुक्त्वा, "तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुस्सर्वैरूपैस्सहाप्येति, श्रोत्रं सर्वैश्शब्दैस्सहाप्येती" त्यादिना सुप्तौ सकरणविषयापीतिर्दर्शितेति न विरोधः। तदिदं सर्वमभिप्रेत्योक्तं सता सम्पन्नो भवतीति। **स्वप्यय्यं,** स्वपितिनामनिरुक्तिभङ्ग्या, स्वात्माप्ययं इति स्वमपीत इत्यत्र स्वशब्दस्य स्वीयपरत्वनिरासायात्मपदम्। तस्यैव जीवविशिष्टपरमात्मपर्यन्तत्वव्युदासाय स्वपदं विधेयविशेषणमेतत्। तथा **प्रतियता** सच्छब्दस्वशब्दयोरैकार्थ्यं जानता, **केन** निश्चयेन गमयन्ति श्रेयस्साधनमिति। **निगमा** वेदाः **तेषामवसाने,** समाप्तौ। वेदान्तानामात्मतत्त्वप्रतिपादनैककण्ठ्यादेकवचनम्। **भवतः** परमात्मनः। **अनुमतो** जीवस्य, अन्योभावस्सत्तास्वरूपं, अन्यभावोऽन्यत्वं भेदो वा **शङ्क्येत** प्रतियता केन शङ्क्येतेत्यनेन यश्शङ्क्येत स नूनं न श्रुत्यर्थं प्रत्येतीति सूचयति। निगमावसान इत्यनेन चैतदभिप्रैति – अनुमानादौ हि परमात्मबोधके भेदश्शङ्क्येत साधर्म्यवैधर्म्योदाहरणादिसापेक्षत्वात्। निगमेऽपि विधिविषये यष्टृयजनीयादिसापेक्षत्वात्। निगमाऽवसाने तु वस्तुतत्त्वैकान्तविषये न भेदश्शङ्क्यः। उदाहृतवाक्येषु तथातथामुखभेदेनाऽभेदस्यैव प्रत्ययादिति ॥ १११ ॥

**स्यादेतत्,** यदुक्तं जीवस्य स्वापे सत्सम्पत्तिस्वात्माप्यय उपवर्णित इति पराभेदसिद्धिरिति, तत्र स एव तावदप्ययो निरूपणीयः। यदि जीवो विवर्तः परमात्मनः रजतादिरिव शुक्त्यादेः। अधिष्ठानस्वरूपशेषता च लय इत्युच्येत, जीवस्वरूपाभावप्रसङ्गः। अथ परिणामः समुद्रादेरिव तरङ्गादिः, तद्भावहानिश्च लय इत्युच्येत तरङ्गादेरिव, तस्यानित्यत्वप्रसङ्गः। अथाऽऽकाशस्येव घटाकाशादिरौपाधिको भङ्गः पुरुषस्येवादर्शादौ बुद्ध्यादिषु प्रतिबिम्बो वा, तदुपाधिविगमे विच्छेदविगम एव लय इत्युच्येत, सुषुप्तौदेहाद्युपाधिसत्त्वात्तदनुपपत्तिः। अपि च जीवपराऽभेदवादिभिरपि जीवभावस्यानादेरामोक्षादनुवृत्तिरुपेतव्या। अन्यथा कृतहानादिप्रसङ्गात्। सुषुप्तिसुलभे च जीवभावापाये मुक्त्युपायोपदेशानर्थक्यप्रसङ्गाच्च। भगवान्सूत्रकारश्च प्राकृतप्रतिसञ्चरेऽपि जीवभवानपायमभिप्रैति। **विषमं सृजतो** जगत्संहरतश्चेश्वरस्य वैषम्यनैर्घृण्येन सापेक्षत्वात्

प्राणिकृतधर्माऽधर्मयोः । तथाहि दर्शयतिश्रुतिर्धर्माऽधर्मनिमित्ततां सर्गस्य, "साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति, पापः पापेने"त्याद्युक्ते "सदेव सोम्येदमग्र आसीदित्यवधारणादाश्रयजीवेन सह न कर्माविभागादिति चेन्नाऽनादित्वात्संसारस्ये"त्युक्त्वा तदनादित्व"मुपपद्यते चाप्युपलभ्यते च"। अनादित्वेकृतहानादिप्रसङ्गाभावात् कर्मजीवशरीरादेर्बीजाङ्कुरन्यायेन पारम्पर्यादितरेतराश्रयाभावात् । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, न रूपमस्येह तथोपलभ्यते, नान्तो नचादि र्नच सम्प्रतिष्ठे"दित्यादिश्रुतिस्मृतिदर्शनाच्चेति हि सूत्रितमितीमां प्रासङ्गिकीमाशङ्कां परिहरन्नाह —

आकाशकोटरविशङ्कटभानुभानौ
दूरोत्पतत्पतगसम्प्रथनात्मतेव ।
लीयेत तन्निलयनादिव जीवभावः
सुप्तावहंपदलयात्त्वयि चन्द्रमौले ॥ ११२ ॥

उक्तं तावत्परमात्मन एव दृश्याहमभिमानमयो जीवभाव इति । सोऽयमेव तस्याऽवच्छेदः घटादिभिरिवाऽऽकाशस्य दृश्योपाधिना तस्य पृथगिव भावात् । सैव च प्रतिबिम्बता आदर्श इव पुरुषस्य, तत्र स्फुटोपलम्भात् आत्मप्रवेशश्च प्रतिबिम्बवद्व्याकृते कार्य उपलभ्यत्वमिति च **भगवान्भाष्यकारः** । न तु स्वरूपेण परमात्मनो विवर्तः परिणामो वा जीवः, उक्तदोषप्रसङ्गादेव । तस्याऽस्य जीवस्य सुप्तौ अहमभिमानोपशमे परमात्मभावापत्तिरेव स्वाप्ययइति सुवचमित्यभिप्रायेणाह **आकाशस्य कोटरे** गर्भे **विशङ्कटे** विस्तीर्णे सर्वतः प्रसृते **भानोरादित्यस्य भानौ** अलोके । **दूरे उत्पततः पतगस्य सम्प्रथनात्मता** तदेकप्रकाशतेव, **त्वयि** परमात्मनि दृश्याहमवभासता **जीवभावः**, न तु परमात्मनो विकारः तन्त्वान्तरं वा जीवो नामेत्यभिप्रायः । तत्त प्रकाश्यसम्बन्धाभावे केवलस्वप्रकाशतैव, न तु प्रकाश्यसम्बन्ध इव स्फुटप्रकाशतेति निदर्शयितुमाकाशकोटरविशङ्कटेति विशेषणम् । चन्द्रातपे तिमिरकिर्मीरतेव परमात्मनः प्रवेशेनाविद्यावरणानुषङ्ग इति निदर्शयितुं भानुभानावित्युक्तम् । अहमिति दृश्यैकात्म्यावभासिता जीवभाव इति निदर्शयितुं भानुभानोः प्रकाश्यपतगैकात्म्यप्रकाशत्वदर्शनाय दूरोत्पतत्पतगेति । तत्प्रकाशो हि पतगसन्निवेशभेदग्रहविधुरं तदेकात्मा प्रकाशपिण्ड इव लक्ष्यते । तदिदं समुपसर्गेण दर्शितम् । सचाऽयं जीवभावः **सुप्तौ पतगसम्प्रथनात्मतेव** सौरालोके **त्वयि** सदात्मनि **तन्निलयनादिव** तस्य पतगस्य कुलायगमनादिव **अहंपदलयात्** अहमिति प्रथमानस्य दृश्यभेदस्य **लयाल्लीयेत**

औपाधिकपृथग्भावहानेन तदेकात्मा सम्पद्यत इत्यर्थः। उपाधिलयादौपाधिकरूपविलयो विधिवद-वश्यंभावीति लिङ्प्रयोगः। अत्र पतगनिलयनदर्शनेन औपाधिकं जीव भावः सुप्तौ तदुपाध्यहंपदलयाल्लीयते इत्यत्र प्रमाणमनुसार्यंतेतद्यथा शकुनिस्सूत्रेण प्रतिबद्धो दिशं दिशं पतित्वा-ऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपाश्रयते, एवमेव तन्मनो दिशंदिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपाश्रयते। "प्राणबन्धनं हि सोम्य मन" इति हि श्रुतिः। न खल्वत्र मनस एव लयः उपदिश्यते। पुरुषस्स्वपिति नामेति प्रक्रमविरोधात्। किं तर्हि यत्र मनसि सदाख्यपरदेवता तदहमभिमानमयेन जीवभावेनाऽनुप्रविष्टा तदेकात्मतया अहमित्येव स्फुटवभासा स जीवो मनआख्यः प्राणाख्यं सदात्मानं सम्पद्यत इत्युच्यते। श्रुत्यन्तरे – "सुप्तावहमभिमानपदानां वाक्चक्षुरादीनां सहविषयैरप्ययः श्राव्यते"। "यत्रैतत्पुरुषस्सुप्त स्स्वप्नन्नकंचन पश्यत्यथास्मिन्प्राणएवैकधा भवति तदैनं वाक् सर्वैर्नामभिस्सहाप्येति चक्षुस्सर्वैरूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैस्सहाप्येति मनस्सर्वैर्ध्यानै-स्सहाप्येती"ति। एवं सति सुप्तौ करणसमष्टिमयलिङ्गाहमभिमानोपरमे, तन्मूलो देहाद्यहमभिमानः प्रागेवोपरत इति। सत्यपि देहाद्युपाधौ न जीवभावलयानुपपत्तिः। एवमनया विधया जीव-विषयान्वयार्जवसम्भवे विकस्वरज्ञानजीवविशिष्टः परमात्मा सुप्तौ निकामसङ्कुचितज्ञानविशिष्टसन्नात्मन्य-न्तर्भवतीत्येवं पदार्थान्वयकौटिल्याश्रयणं कुकविकृतिष्विव सता सम्पन्नः स्वमपीतइत्यत्रायुक्तमिति हन्तैवं जीवभावलये कृतहानादयो दोषाः परिहर्तव्या इति प्राप्ते तत्परिहारसूचनाय चन्द्रमौल इति सम्बोधनम् चन्द्रो मौलौ यस्य स तथा "गड्वादिभ्यः परवचनमि"ति सप्तम्याः परनिपातः। यथा चन्द्रकलाकलितमौलिरेव शिवः तथा सुप्तादौ सदात्मा लीयमानजीवभावबीजशक्तिशेषाकलित एव भवति। शक्तिवृत्तिभ्यां सन्तायमानजीवभावानादितया नोक्तदोषप्रसङ्गगन्धोपीत्यभिप्रायः। कथं पुनरतिरिक्तजडाविद्यानुपगमपक्षे शक्तिशेषो लय इति? उच्यते — अप्राप्तबाधया दृश्यदर्शितैव दृश्यविलये वासनाशक्तिरिति च गीयते। सैव चाविद्येति व्युत्पादितम् प्रागेव। सुषुप्तौ च प्राणग्रस्तवृत्तिकतया शक्तिशेषता, मनः प्रभृतीनामपर्यनुयोज्यैव। यथा श्रूयते– "प्राणो वाव संसर्ग" इति प्रकृत्य "यदा स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मन" इति। कथं तर्हि तत्सर्वं परे देवे मनस्येकीभवति? "तेन तर्ह्येष पुरुषो न शृणोति न पश्यती"– त्यादि प्रकृत्य "स्वपितीत्याचक्षत" इति सुप्ताविन्द्रियाणां मनसि लयः प्रतिपाद्यते, प्राणे तल्लयस्य मनोद्वारत्वादिति ब्रूमः। अत एव तत्र वाक्यशेषः "प्राणाग्नय एवैतस्मिन्पुरे जाग्रती"ति तदेव जीवभावलयस्य शक्तिशेषतया जीवानादित्वे तदनादिप्रवृत्तधर्मा धर्मापेक्षयाऽविषमं सृजतस्संहरतोऽपि च परमात्मनो न वैषम्यं पक्षपातलक्षणं नैर्घृण्यं नृशंसत्वलक्षणं वा प्रसञ्जनीयमिति। ननु परमात्मनो विश्वहेतुत्वस्य भ्रममात्रत्वे कुतो वैषम्यनैर्घृण्यनृशंसत्वलक्षणं वा प्रसञ्जनीयमिति शङ्का, यतस्तत्परिहाराय

महानयं यत्नो भगवतस्सूत्रकारस्य "वैषम्यनैर्घृण्ये न सापेक्षत्वादि"त्यादिः। उक्तमेतत्पुरस्तादेव। आत्मतत्त्वोपलक्षणकारणरूपव्यपाश्रयोपासनाविधिरुपयोक्ष्यत इति कृत्वेतीति सर्वमनवद्यम् ॥ ११२ ॥

एवं तावदागमोपपत्त्या भेदव्यपदेशाऽन्यथासिद्ध्या तत्त्वमसीत्याद्यभेदोपदेशो जीवपरस्वरूपाभेदवस्तुतत्त्वविषयो व्यवस्थापितः। तत्र यद्यपि केवलोपपत्तिरात्मनि न क्रमते। "अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्। प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्"। इति हि स्मरन्ति, तथाप्यापाततः सम्भावितभेदोपदेशानुग्रहोपपत्तिविरोधशङ्काऽपि मन्दविषन्यायेन परिहर्तव्या। तत्र हेयसम्बन्धार्हत्वतदनर्हत्वादिविरुद्धधर्मकत्वान्न जीवपराऽभेदस्सम्भवति दहनतुहिनादिवत्। जीवा न परमात्मनैकेनाभिन्नाः, अनेकत्वात् सर्वत्रैकानेकभेदसम्प्रतिपत्तेः। सुखदुःखादिव्यवस्थया जीवनानात्वं च सूत्रयन्न्यायाचार्याः "नानात्मनोऽव्यवस्थात" इति साङ्ख्याश्च – "जननमरणकरणानां प्रतिनियमादयुक्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवे"ति जननादिव्यवस्थयाऽऽत्मनानात्वमाहुः। तत्र कुतो विरुद्धधर्मता जीवपरयोरधिगतेति वक्तव्यम्। न तावल्लौकिकप्रमाणात्, परमात्मनस्तदविषयत्वात्। आगमादेवेति चेत् न खल्विदं प्रमत्तगीतम्। "तत्त्वमसी"ति। तत्र विरुद्धधर्मकत्वं जीवपरयोरारोपितभेदेनोपपादनीयम्। यद्यभेदोपदेशः स्वरूपाऽभेदस्वरसोऽनुगृह्येत, अभेदोपदेशो वा विशिष्टाऽभेदेनोपपादनीयः। यदि विरुद्धधर्मकत्वं वस्तुभेदस्वरूपमनुगृह्येत, तत्र कस्याऽनुग्रहो न्याय्यः। अङ्गं हि पदार्थः, तस्य गुणो विरुद्धधर्मकत्वं, प्रधानं वाक्यार्थः अभेदः पदार्थप्रतिपादनस्य वाक्यार्थप्रतिपत्त्यर्थत्वात्। यथाऽऽहुः —, 'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। शब्दास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले। वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्"॥ इति। ततश्च "अङ्गगुणविरोधे च तादर्थ्यादि"ति न्यायात्। यथा दीक्षणीयेष्टेस्सोमयागाङ्गस्य पर्वकालत्वे सोमयागस्याऽपर्वकालता। तस्य पर्वकालत्वे इष्टेरपर्वकालतेत्यङ्गगुणविरोधे सोमयागार्थत्वादिष्टेः तस्य प्रधानस्य स्वकालत्वानुग्रहायाऽपर्वकालतैवाऽऽश्रीयते। तथा स्वरूपाभेदलक्षणवाक्यार्थस्वारस्यानुग्रहाय पदार्थगुणविरुद्धधर्मकत्वमारोपितभेदव्यपाश्रयणीयमिति वयं पश्यामः। अपि च सितासितत्वादिभिराकाशस्य, भूतभविष्यत्वादिभिः कालस्य, प्राचीत्वावाचीत्वादिभिराशायाश्च विरुद्धधर्मत्वे सति भेदाऽभावाद्व्यभिचारः। अनारोपितविरुद्धधर्मत्वं च जीवपरयोरसिद्धम्। आकाशादिष्वपि हि विरुद्धधर्मारोपिततत्त्वं अभेदप्रमाणबलादवगन्तव्यम्। तदत्राप्यविशिष्टं तारमन्द्रगम्भीरादिशब्दरूपानारोपितविरुद्धधर्मकत्वेप्याकाशे भेदाऽभावेन व्यभिचारश्च। अपि चाऽपहतपाप्मत्वोपगतस्यैव जीवस्य हेयसम्बन्धोपगमेन विरुद्धधर्मकत्वाद्भेदः प्रसज्येत। स्वाभाविकत्वनैमित्तिकत्वाभ्यां तदविरोधोपपादनं खल्वभेदप्रमाणबलादाश्रयणीयम्। तदिहाप्याविद्यकत्वादविरोधोपपादनमाश्रयणीयम्। अपि चाऽपहतपाप्मस्वभावादेव जीवस्यापि

हेयसम्बन्धार्हत्वाभावः परस्यैवाऽनुमीयत इति तदाविचकत्वमवसीयते। अपि च धर्माणां यदि परस्परानात्मकत्वं विरोधः एकस्यैव रूपं रसो गन्धस्स्पर्श इति सन्ति विरुद्धधर्मा इति व्यभिचारः। अथ भिन्नाश्रयता नियमः तत्सिद्धावाश्रयासिद्धिः। तदसिद्धावज्ञानासिद्धिः। **एवमन्येऽपि विरोधनिरुक्तिप्रकारा अन्यत्र विस्तरेण निराकृताः।** एतेन सुखदुःखादिव्यवस्थयाऽऽत्मनानात्वं प्रत्युक्तम्। पाणिपादाद्यवच्छेदेन यत्नायत्नसुखदःखादिव्यवस्थया नानात्वप्रसङ्गात् आरोपितरूप भेदालम्बनेन तद्व्यवस्थोपपत्तेश्च। तथा च सूत्रं "असन्ततेश्च व्यतिकर" इति। तत्तद्दृश्याहमभिमानमयस्य जीवस्याननुगतत्वादैकात्म्येऽपि न भोगसाङ्कर्यमित्यर्थः। भोक्तुरननुगतत्वे हेतुस्सूत्रितः — "आभास एव तु जीवो जलसूर्यकादिवत्," न परमात्मैव तत्त्वान्तरमिति। **साङ्ख्यैस्तु** जननमरणव्यवस्था, अन्धाऽनन्धत्वादिकरणव्यवस्था, प्रवृत्त्यप्रवृत्तिव्यवस्था, सुरनरतिर्यक्षु सत्वनिकायेषु सत्वरजस्तमसामन्यथात्वं चासङ्गाविक्रियात्मप्रकृत्यविवेकसंज्ञिताविद्यैकोपपाद्येति न वस्तुभेदसिद्धिहेतुरित्यमुमर्थं निदर्शनलेशदर्शनेनोपदर्शयन्नाह —

**मूलादिपक्त्रिमफलान्तमनुप्रविष्ट-**
**मम्भस्तदेव रसभेदि च पादपस्य।**
**मायादितन्ववधिमात्मतयाऽनुविष्ट-**
**स्त्वं चेश, तद्वदसि तस्य कुतो विभेदः ॥ ११३ ॥**

**पादपस्य** तिन्त्रिणीपारिभद्रादेः सम्बन्धिनं **मूलमादिर्यस्य** मूलत्वक्पत्रपुष्पादेस्त्वयवभेदस्य स तथा पाकेन निर्वृत्तं **पक्त्रिमं फलं अन्तो यस्य,** तस्यैव स तथा मूलादिश्चासौ पक्त्रिमफलान्तश्च तथा तम्। **अथवा** विशेष्याऽनुपादानात् मूलादि च तत् पक्त्रिमफलान्तं च तथेति सामान्ये नपुंसकं वा **तदनुक्रमेण प्रविष्टं, अम्भः, तदेव** यत्तत् पादपे यमेकरसस्वभाव-मधिगतं तदेव अन्यागमकल्पने मानाभावादित्येवकाराभिप्रायः। **अथ च** रसभेदोऽस्याऽस्तीति **रसभेदि।** रसैर्भिद्यत इति वा अतो विरुद्धधर्मकत्वं स्वभावभेदव्यभिचारीत्यभिप्रायः। **ननु** "आपः पीतास्त्रेधा विधीयन्ते तासां यस्स्थविष्ठोधातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं, योऽणिष्ठस्स प्राण" इति अपां परिणामभेद आम्नायते एवं पादपपीताम्भसोऽपि मूलादिषु परिणामभेदो भविष्यति। यथा परिणामभेदं च रसभेदव्यवस्थितेरव्यभिचार इति शङ्कानिरासाय रसभेदि चेति **चकारः।** दृष्टस्तावत्तस्यैव वर्षजलस्य भूविशेषसम्बन्धोपाधिना तदैव रसभेदः। देशेदेशेगुणेष्वेवं आह च **कालिदासः** "रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।

अवस्थास्त्वयिविक्रिया: ”॥ इति । एवमत्रापि मूलत्वगादिपार्थिवपरिणामाऽनुषङ्गोपाधिनैव गन्धभेदवद्रसभेदोपपत्तौ जलस्य परिणामभेदेऽपि न स्वभावभेदकल्पना युक्ता पुरुषे मूत्रादिपरिणामभेदेऽपि रूपरसादिभेदः पार्थिवपरिणामभेदोपाधिक एव पार्थिवानुषङ्गाभावेऽपां हिमकरकादिपरिणामभेदेऽपि रूपरसादिभेदाऽनुपलम्भादित्यभिप्रायः । अत्र पादपस्येत्यावृत्या संसारोऽपि विवक्ष्यते । “ऊर्ध्वमूलमवाक्च्छाखं वृक्षं यो वेद सम्प्रति”, “ऊर्ध्वमूलमवाक्च्छाख एषोऽश्वत्थस्सनातनः” इतितस्य वृक्षत्वोपचारात् । औपचारिकशब्देनाऽपि केवलेन तद्व्यपदेशो दृश्यते । यथाऽ“ग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावि”ति । “द्युलोकोऽग्निरि”ति व्यपदिश्यते । अग्निरधीतेऽनुवाकमिति माणवकः । ततश्च संसारपादपस्य सम्बन्धिनं, **माया आदिर्यस्य** भूतेन्द्रियप्राणादिमयस्य सङ्घातस्य स तथा । **तनुः** स्थूलदेहः, **अवधिरवसानं यस्य** तस्यैव । स तथा, मायादिश्चासौ तन्ववधिश्च, तं सङ्घातमनुप्रविष्टः, **अनुक्रमेण प्रविष्टः** । **त्वं च** परमात्मा, **तद्वत्** अम्भोवदेकस्वभाव एव सन् **तत्तन्मयत्वेन नानाधर्मा** । **असि**, भवसि । असीति वर्तमाननिर्देशात् उपाधितादात्म्यदशायामेव नानाधर्मताऽऽत्मनः, न तु पटे फल्गुतकाङ्कवत्, पाषाणे वा पयोमलवत् । उपाधिभिरात्मनि धर्मा इष्यन्ते, असङ्गाऽविक्रियत्वादात्मनः । तेन तत्र विरुद्धधर्मकत्वाऽऽरोप एवेति फलति । त्वं चेति **चकारो** दृष्टान्तदार्ष्टान्तयोः तत्तन्मयत्वव्यतिरेकेण रूपान्तरसमुच्चयार्थः । वृक्षे मूलत्वगादिमयस्यैव सतो जलस्य वृक्षाप्यायनवृद्ध्यादिहेतुतया पृथगात्मताऽपि भूजलादि भूतसङ्घातमय एव वृक्षो जलेनाप्यायत इति हि दृश्यते । **एवं** मायाभूतेन्द्रियादिमयस्यैव सतः परमात्मनः सङ्घातप्रवृत्यादिनियन्तृतया पृथगात्मताऽपि । **यत्रेदमाम्नायते** “यस्सर्वाणि भूतान्यन्तरो यमयती”ति । तदिदमत्र रूपान्तरं **हे ईशेति** सम्बोधनेन व्यक्तीकृतम् । एवं सति, **तस्य** ते परमात्मनः स्वाभाविकधर्मभेदविधुरस्य विशिष्टो भेदो **विभेदः**, स्वाभाविको भेदः **कुतः**, न कुतश्चित् । अरोपितधर्मभेदस्य स्वाभाविकभेदाऽहेतुत्वादित्यभिप्रायः । तदेवमुपपत्तिविरोधाभावादप्रतिशब्दात्वान्मानान्तरदौर्बल्याच्चाऽनाबाधं तत्त्वमसीत्याद्यभेदोपदेशादपास्ताशेषविशेषमैकात्म्यं प्रत्यगात्मावसायीति तदपरोक्षमागमिकमेवाऽपवर्गहेतुः । “तत्र को मोहः कश्शोक एकत्वमनुपश्यतः,” “तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं” “सूर्यश्च यो वेदाहं ब्रह्मासीति,” “स इदं सर्वं भवति,” “निचाय्य तं मृत्युमुखात्प्रमुच्यते,” “भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावरे” इति श्रुतिभ्यः, “अविद्यामात्रान्तरायत्वाच्चाऽपवर्गस्य तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः, त्वं हि नः पिता योऽस्माकं अविद्यायाः परं पारं तारयसि” इत्यादिश्रुतिभ्यः । तस्माच्छमादिसाधनसम्पन्नेन मुमुक्षुणा श्रवणमननादिभिः पदार्थविवेकेन ब्रह्मापरोक्षविज्ञानाय परमो यत्न आस्थेय इति स्थितम् ॥ ११३ ॥

इति परमरहस्यं पण्डिताखण्डलानां
विमलमतिविमृग्यं वेदतात्पर्यगत्या ।
परमशिवपदस्याऽपास्य जीवेशभेदं
प्रसव उदितमस्मिन्प्रत्यगैक्यं तुरीये ॥ ११४ ॥

इत्यादिप्रकरणावयवार्थोपसंहारपद्यावतारः **प्रथमोदित एव** । **परमशिवपदस्य** जीवाद्यात्मतया ईश्वरत्वमेव रहस्यं, न्यायियोगसमाजेऽनुपदेश्यम् । ईश्वरताटस्थ्याभिनिवेशात् तस्यैवाऽविद्यया जीवेश्वरविभाग — इति **रहस्यतरम्** । तन्त्रसमयाऽप्रसिद्धत्वात् । जीवेशभेदापवादो स्वरूपैकात्म्यं रहस्यतममिति **परमरहस्यमित्युदित्वम्** । शेषव्याख्यानं तु पूर्ववद्यथायोगं **सुगममिति** सर्वमवदातम् ॥ ११४ ॥

**इति** श्री शिवतत्त्वरत्नकलिकाव्याख्यायामामोदरञ्जनाख्यायां

**तत्त्ववासनोल्लासस्तुरीयः** ॥




|| श्रीः ||

## || अथ "पञ्चमोल्लासः" ||

|| श्री गुरुचरणारविन्दाभ्यां नमः ||

ओं

अक्षाणि प्रसरन्तु नाम विषयेष्वक्षामतामात्मनां
चेतश्चानुविधीयतामनुकलं तानेव सङ्कल्पयत् ।
मुक्तत्वार्पितधीगभेनिरपि तैर्योपकारः परं
प्रत्यक्त्वोत्यिदं तदपि यदिदं दृश्यते केनचित् ॥

एवं त्रयोविंशत्या पद्यैः स्वात्मसाक्षात्कारप्रयोजनाय तत्त्वंपदार्थविवेचनयोपपत्या परमात्मनः प्रत्यगात्मैक्यलक्षणतत्त्वमस्यादिवाक्यार्थो निरूपितः । इयतैव यस्य तत्साक्षात्कारो निसर्गनिर्मलशान्तस्वान्तदर्पणस्येव कुशलधियो वाक्यश्रवणादेव व्याधकुलपुत्रत्वेन व्यापमानितो राजपुत्रस्य राजभावसाक्षात्कारवदुपजायते, तस्य न किञ्चिदपेक्षितव्यमवशिष्यते, कृतकृत्यत्वात् । यस्तु स तादृश एव मतिमान्द्येन इन्द्रविरोचनादिवत् सकृदुक्तमात्मतत्त्वं न साक्षात्कर्तुं शक्नोति, तस्याऽऽऽ"वृत्तिरसकृदुपदेशात्" इति न्यायात् श्रवणाद्यभ्यास एवाऽपेक्षितव्यः । यदुक्तं सुरेश्वराचार्यैः—
"कृत्स्नानात्मनिवृत्तौ तु कश्चिदाप्नोति निर्वृतिम् । श्रुतवाक्यप्रबोधोऽन्यस्त्वभ्यासेन न चेदपरः ॥
वाक्यश्रवणमात्रात्त्वपिशाचवदवाप्नुयात्" ॥ इति । निर्जने वने कश्चिदाचार्योऽशक्यं तत्त्वमुपदिशति । तत्र वृक्षच्छायायां गुल्मान्तरितः पिशाचोऽपि आपाततस्तदुपदेशेन तत्त्वज्ञानमुक्तिमापन्न इति साम्प्रदाय-प्रवचनीयाऽऽख्यायिका । यः पुनरनुपशान्तस्वान्तदर्पः श्रवणाद्यभ्यासेऽपि न क्षिप्यते तस्य योगोऽप्यपेक्षितव्यः । तथा च काठके लिङ्गम् – "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति, "पराञ्चि खानि व्यतृणत्स्वयम्भूः तस्मात्पराङ् पश्यति नान्तरात्मन्," "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति च । स्मर्यते च – "स्वाध्याययोगमात्राभ्यां स दृश्यते पुरुषोत्तमः" । इति प्रकृत्य "स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत् । स्वाध्याय-योगसम्पत्त्या परमात्मा प्रकाशते ॥ तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथा परः । न मांसचक्षुषा द्रष्टुं ब्रह्मभूतस्य शक्यते" इति । एवमन्यत्रापि श्रुतिस्मृतिषु योग आद्रियते । आहुश्च भगवद्गौड-पादाचार्याः – "मनसो निग्रहायत्तमभयं सर्वयोगिनाम् । दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च" ॥

भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः"। किं पुनरयं तस्माद्भवतो विभीयादिति। "अभयं च परामृतपदमभिलषितम् आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन," "अभयं वै जनक प्राप्तोऽसी"त्यादि। विद्याफलार्थवाददर्शनात्। अन्यथा संसारादविशेषात् भयाऽपायश्चाऽनन्यत्वसाक्षात्करणादेव भवति। **तथा च लिङ्गं** — "सो बिभेत् सहायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमी"ति। "तत एवास्य भयं विधाय कस्माद्ध्यभेष्यद्द्वितीयं भवती"ति। अत एवात्र **शङ्करेति** सम्बोधनम्। आत्मभावेन साक्षात्कृतः परमात्मा निरतिशयप्रियतया परमानन्दहेतुः पुरुषाऽपरावेन तु भेददर्शनेन भयहेतुरित्यभिप्रायः। तस्मात्तदभेदसाक्षात्कारे यत्न आस्थेय इति ॥ ११५ ॥

**अथ** अहमित्येव दृश्यदृशिताजीवभावः, **यत्रेदमाहुर्योगाः** "बुद्धेः परं पुरुषमाकारशील-विद्याभिः विभक्तमपश्यन् कुर्यात्तत्रात्मबुद्धिर्मोहेनेति। तद्विवेके चाहंभूतस्वदृशिमात्रविश्रान्तः स्यात्पुरुष इत्युक्तम्। अथवा दृश्यदृशिताया अपि निरोधमभ्यसिष्यति ततः स्वदृशिमात्रविश्रान्तः पुरुषः दृश्यदृशिताया एवाभावे कुतो बिभीयात् येनाभेदज्ञानमादरणीयं स्यादितीमां शङ्कां परिहरन्नाह —

**दृश्यानुषङ्गकलुषोज्झमसौ कथञ्चि-**
**दभ्यासतः स्वदृशिविश्रममीश यातः।**
**सुप्ताविवाऽयमनपोदितजीवभाव-**
**निर्भासवासनतया पुनरेति जन्म ॥ ११६ ॥**

**असौ,** आत्मा साक्षादपरोक्षोऽपि बुद्ध्यादिदृश्याविविक्ताऽवभासितया स्वरूपेण व्यवहितो भवतीति असाविति व्यवहिताऽपरोक्षवाचिना निर्दिश्यते। **अभ्यासतः** बुद्धिसत्वस्य निवृत्तिवासना-निरोधस्थितियत्नलक्षणादभ्यासात्। तस्मिन्सति हि विवेकख्यातावुदितायां, साऽपि बुद्धिसत्वस्यैव। तच्चहेयपक्षनिक्षिप्तं। आत्मा च परिणामी, ततोऽन्य इति। प्रसङ्ख्याने विवेकख्यातेरपि वैराग्ये सह संस्कारैः बुद्धिसत्वनिवृत्तौ पुरुषः स्वरूपप्रतिष्ठः केवलो भवति। यथा सूत्रितं **योगैः** तद्वैराग्यादपि दोषबीजक्षये कैवल्यमि"ति। क्लेशबीजक्षयइत्यप्रसवसामर्थ्य इत्यर्थः। अतोऽभ्यासतो, **दृश्यानुषङ्गकलुषोज्झं,** दृश्येन बुद्ध्यादिना अनुषङ्गः अविनाभावः द्रष्टृतासम्बन्धः, तदेव कलुषम्। क्लेशादिदोषनिदानत्वात्। द्रष्टृदृश्यसम्बन्धे सति हि क्लेशकर्माशया उपचीयन्ते। सत्सु च क्लेशेषु कर्मविपाकाः जात्यायुर्भोगाः प्रवर्तन्ते। तदुज्झित्वा, उज्झते-"द्वितीयायां" चेति णमुल्प्रत्ययः। **कथञ्चित्** पुनरुद्भवबीजाविद्याशक्तिविशेषत्वात् कथञ्चिदित्युक्तम्। **स्वदृशौ,** स्वावसितकेवलदृशिस्वरूपे। **विश्रमं,** दृश्यदृशिताश्रमोपप्लवहानेन। **यातः,** यद्यपि

तथापीत्यध्याहारः। **अयं**, आत्मा **सुप्ताविव, अनपोदितः जीवभावनिर्भासः**, दृश्याहन्दृशिता **तस्य वासाना**, दृश्यविलये विलीनवृत्तिविशेषावस्थः प्राचीनः, स एव परार्चीनजीवभावनिर्भासवृत्तिबीजं **यस्य स तथा**। तस्य भावस्तत्ता, तया। **पुनः**, भूयोलिङ्गदेहादिदृश्याहन्दृशितालक्षणं **जन्म एति**। सुप्तौ खल्वस्ति दृश्याहन्दृशिताविलयः भोगार्थकर्मनिमित्तत्वात्। तस्यास्तदभावेऽभावौचित्यात्। "यत्रैतत्पुरुषस्सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति। तदैनं वाक् सर्वैर्नामभिस्सहाप्येती" त्यारभ्य, "मनस्सर्वैर्ध्यातैस्सहाप्येती" ति सर्वदृश्याप्ययश्रुतेश्च। ततश्च तल्लक्षणो जीवः सता तदा सम्पन्नो भवति। अथ च तद्वासनयैव पुनर्भवः तथाम्नायते — "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ती" ति। तथैवाऽभ्यासतः दृश्यदृशिताविलयेऽपि पुनर्भवो न वारयितुं शक्यते। तद्बीजदृश्याहन्दृशितावासनालक्षणाऽविद्याऽनपवादात्॥

**अथ साङ्ख्यैरेतदाख्यातम्** द्रष्टृदृश्ययोस्संयोगो हेयहेतुः। द्रष्टा दृशिमात्रश्शुद्धोऽपि प्रत्ययाऽनुपश्यः। बुद्धेः प्रतिसंवेदी पुरुषः प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यं द्रष्टा स्वामी दृश्यं तस्य सन्निधिमात्रोपकारितया, स्वं तयोस्स्वस्वामिनोः स्वरूपोपलब्धिहेतुः संयोगः। दृशिसंयोगे हि दृश्यमुपलभ्यते। स च पुरुषोपलब्धिं कृत्वाऽवस्यतीति स तयोस्स्वरूपोपलब्धिहेतुरुच्यते। सोऽयं संयोगः दुःखबहुलस्य संसारस्य हेयस्यहेतुः तस्य हेतुरविद्याऽदर्शनलक्षणा विपर्ययज्ञानवासनेत्यर्थः। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति च सूत्रितम् — "तदभावात्संयोगाऽभावः हानं, तद्दृशेः कैवल्यं" तस्य बन्धमूलकारणस्याऽविद्यालक्षणस्याऽदर्शनस्याऽभावात् बुद्धिपुरुषयोः स्वस्वामितालक्षणसंयोगाभावोहानं, आत्यन्तिको वन्धनोपरमः। तदेव पुरुषस्य कैवल्यमित्यर्थः। विवेकख्यातिरविप्लवाहानोपायः। या मिथ्याज्ञानेन नाभिभूयते, यया तदेव दग्धबीजभावं सम्पद्यते, साऽविप्लवा सत्त्वपुरुषान्यताख्यातिरदर्शनविरोधिनी मोक्षमार्ग इत्यर्थः। तस्य चेश्वरोपासनं साधनम्। अष्टौ खलु योगाङ्गानि। विवेकख्यातेः कारणं योगाङ्गानुष्ठानादशुद्धिक्षये "ज्ञानदीप्तिराविवेकाख्या" तैरिति हि सूत्रितम्। "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि", "अहिंसा सत्याऽस्तेयब्रह्मचर्याऽपरिग्रहा यमाः"। "शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः"। "तत्रेश्वरप्रणिधानं सर्वक्रियाणां परमगुरौ समर्पणं, यत्रेदमुक्तम् — "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमि" ति॥ स चाऽयं क्रियायोगभेदः "तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोग" इति सूत्रितम्। तत्फलं च सूत्रितं "समाधिभावनार्थः क्लेशतनूकरणार्थ" श्चेति "समाधिसिद्धिरीश्वरप्रणिधानादि" ति च। समाधिश्च "सत्वपुरुषान्यताख्यातिहेतुः"। अन्यत्र च संप्रज्ञातसमाधिं प्रकृत्य "ईश्वर-

प्रणिधानाद्वे" ति तल्लाभहेतुं सुगममुक्त्वा ईश्वरलक्षणपूर्वकं तदुपासनस्य साक्षादेव पुरुषतत्त्वख्यातिहेतुत्वं सूत्रितम्। "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः, कर्माणि शुक्लकृष्णमिश्राणि, तद्विपाको जात्यायुर्भोगाः क्लेशादिवासना आशयाः," "तैरपरामृष्टः पुरुषविशेषः मुक्तेभ्यः प्रकृतिलयेभ्यश्च विशिष्यते। मुक्तानां हि पूर्वा बन्धकोटिः उत्तराऽपि च प्रकृतिलयानाम्। ईश्वरस्तु सदैव मुक्तः। सदैव केवल इत्यर्थः। तस्य वाचकः प्रणवः। तज्जपस्तदर्थ भावनं यस्य उदितः क्रियायोगे स्वाध्याय" इति। ततः प्रत्यक्चेतनाऽधिगमोऽन्तरायऽभावश्च, व्याधिस्त्यानादयो योगान्तरायाः ईश्वरभक्तिविशेषान्न भवन्ति, पुरुषविवेकख्यातिश्च भवतीति। तदेव सुदृढमूलया विवेकख्यात्या, अविवेकलक्षणाऽविद्यानिवृत्तेः दृश्यदृशितालक्षणसंयोगाऽभावे पुरुषस्वरूपप्रतिष्ठा भवतीति कुतः पुनर्भव इति अत्रोच्यते तन्निरासायैवाऽत्र **ईशेति** सम्बोधनम्। ईशेऽसाधारणे प्रधाने च सति, नोक्तगत्या पुरुषस्य कैवल्यसम्भव इत्यभिप्रायः। **तथाहि** – न निह्नुमहे तावदीश्वरप्रणिधानं विवेकख्यातिहेतुरिति। तया पुनः कथमपुनर्भव इत्युपपादनीयम्। चित्तसत्त्वधर्मा हि विवेकख्यातिः। सा च पुरुषेणानुदृश्यत एवेति द्रष्टृदृश्यसंयोगाऽनुच्छेदे कैवल्याऽयोगात्। **ननूक्तं** प्रसंख्यानेन विवेकख्यातेरपि विरक्तचित्तं तामपि निरुणद्धि। सुयत्रेदं सूत्रितम् "वशीकारसंज्ञा वैराग्यमि" ति प्रकृत्य "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति। तथा च दृश्याऽभाव इति चेत्तथाऽपि विवेकख्यातिर्हानोपाय इत्युपगमविरोधः। **अत्र** खलु पण्डकोपाख्यायिकामाचक्षते। **कश्चित्किल** पण्डको मुग्धया भार्ययाऽभिहितः – आर्यपुत्र, मम भगिन्यपत्यवती, किमर्थं नाहमिति। स तामाह – मृतस्ते ऽपत्यमुत्पादयिष्यामीति। तथा विद्यमाना विवेकख्यातिर्न संयोगाभावं करोति, विनष्टा तु करिष्यतीति का प्रत्याशा। अथ विवेकदर्शनप्रकर्षे काष्ठाप्राप्तनिरोधसमाधिभावनाक्रमेण चित्तनिवृत्तिः पुरुषस्वरूपप्रतिष्ठोपयोगिनीत्यातिष्ठामहे। न साक्षादेव विवेकख्यातिरिति चेत्तथापि निरोधसमाधि भावनयैव चित्तसत्त्वं लब्धात्मकमिति तदनुपश्यतया पुनः पुरुषस्य कैवल्याऽनुपपत्तिः। न च निरोधभावनयैव तत्संस्कारस्याऽपि प्रक्षये चित्तस्याभावः। **यत्रेदं सूत्रितम्** "तस्याऽपि निरोधे सर्वनिरोधान्निर्बीजसमाधिरि" तीति वाच्यम्। तथाऽपि चित्तसत्त्वस्य निरन्वयनाशे सत्कार्यवादहानेः, शक्तिशेषे तस्मिन् गुणाधिकारपर्यवसानमिति तस्य पुनः प्रसवावश्यंभावात्। न च विवेकख्यात्यैव च चरितार्था गुणा न पुनः प्रसवाय प्रवर्तन्ते प्रवृत्तिस्वभावत्वात्। यथा कृतभोगा अपि पुनः पुनः प्रवर्तन्ते तथा कृतविवेकख्यातयोऽपि कुतो न प्रवर्तेरन्? न खल्वचेतनानां गुणानामियदेवास्य कार्यमस्माभिरिति विचार्य कार्यकारित्वं शक्यमाख्यातुम्। येन तावतैव तेषामवसिताधिकारता कल्प्येत। अथ विवेकख्यात्या बीजशक्तिदाहादप्रसव इति चेत् स किमदृष्टेन, तत्रालौकिक प्रमाणमन्वेषणीयम्। विधेयात्खल्वदृष्टमिष्टम्। तच्च विधेयं यत्पुरुषतन्त्रम्। तदिच्छया कर्तव्यम्।

न च तथा विवेकख्यातिः तत्त्वज्ञानस्य प्रमाणं, वस्तुपरतन्त्रत्वात्। अथ बन्धनिदानाविद्याविनाशेन गुणानां बीजशक्तिदाहइत्युच्येत, तत्र न तावदमक्षिकं वर्तत इत्यादिवत् पूर्वपदार्थप्राधान्येन विद्याऽभावो अविद्याविवक्षितः प्रसज्य प्रतिषेधस्य बन्धहेतुत्वानुपपत्तेः। अर्थाभावेऽव्ययसमासस्या-ऽव्ययत्वादविद्येति स्त्रीलिङ्गत्वानुपपत्तेश्च। नापि राजपुरुषादिवदुत्तरपदार्थप्राधान्येन किञ्चिदभाव-सम्बन्धिनी विद्यैवाऽविद्या विवक्षिता। तस्याविरोधित्वेन बन्धहेतुत्वानुपपत्तेरेव। अथ "नञोऽस्त्यर्थानां बहुव्रीहिर्वाच्यो वोत्तरपदलोपश्चे"ति वृत्तिकारवचनात् अमक्षिको देश इत्यादि-वदन्यपदार्थप्राधान्येनाविद्यमाना विद्या यस्या बुद्धेस्साऽविद्या विवक्ष्येत, निरोधसमाधिभाविताऽपि बुद्धिस्तथेति साऽपि बन्धहेतुस्स्यात्। अतो "नामधात्वर्थ योगी हि नैव नञ् प्रतिषेधकः। वदत्यब्राह्मणा धर्मावन्यमात्रविरोधिनौ" ॥ इति वृद्धदर्शनात्। "वृद्धप्रयोगगम्यो हि शब्दार्थस्सर्व एव नः। तेन यत्रप्रयुक्तो यस्स तस्मादवसीयते"॥ इतिन्यायात्। पर्युदासवृत्त्या विद्याविरुद्धं विपर्ययज्ञानमविद्येत्युपगम्यते। तथा च सूत्रितम् – "अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये"ति। सा च चित्तधर्मएवेति तद्विनाशस्यापि शक्तिशेषत्वे तस्य पुनस्साधिकारत्वाऽनिस्तारादकैवल्यं पुरुषस्य। अपि च कस्यचिदेव विवेकख्यात्या क्लेशकर्माशय-बीजशक्तिदाहादप्रसवधर्मित्वे गुणानां सम्प्रति संसारानुपलम्भप्रसङ्गः। अथाऽऽत्मनानात्वे तस्य तस्यविवेकख्यात्या तं तं प्रत्येव बीजशक्तिदाहेन गुणाधिकारपर्यवसानं नान्यं प्रतीत्यदोषः। यत्रेदं सूत्रितम् – "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिती"ति चेदत एव ब्रूमः। प्रकृतेरीशस्य च साधारण्ये हेयबीजशक्तिव्यवस्थानुपपत्तिरिति। तस्मादात्माऽविद्ययैव दृश्यदर्शितावसना-लक्षणया जगदीशजीवभेदभ्रमलक्षणोऽनर्थरूपस्संसारइति, तत्स्वरूपाऽभेदविद्ययैव तदपवादादपवर्ग इति साम्प्रतम्। तदनपवादे पुनरविद्यावासनया पुनरेति जन्मेति सूक्तम्। तदिदं सर्वमभिसन्धायाभिहितम् **चित्रदीपे विद्यारण्यगुरुभिः** – "जीवोऽसङ्गत्वमात्रेण कृतार्थ इति चेत्तदा। स्रक्चन्दनादिनित्यत्व मात्रेणाऽपि कृतार्थता॥ यथा स्रगादिनित्यत्वं दुस्संपादं तथाऽऽत्मनः। असङ्गत्वं न सम्भाव्यं जीवतो जगदीशयोः॥ अवश्यं प्रकृतिस्सङ्गं पुरे वाऽऽपादयेत्तथा। नियच्छत्येवमीशोऽपि कोऽस्य मोक्षस्तथा सति॥ अविवेककृतस्सङ्गो नियमश्चेति चेत्तदा। बलादापातितो मायावादस्साङ्ख्यस्य दुर्मतेः" ॥ इति ॥ ११६ ॥

**स्यादेतत्** माभूत्केवलात्मविवेकख्यातिरेव साङ्ख्याख्यापिताऽमृतत्वहेतुः। तस्य स्वात्मतया परमात्माऽपरोक्षज्ञानमागमचोदितं भवतु तद्धेतुः। तद्धि न प्रमाणवस्तुतन्त्रम्। परमात्मनः प्रत्यगात्मनो भेदात्। प्रत्यगात्मग्राहिणो मनसश्शरीरग्राहिणोऽक्षस्येव शरीरिणि परमात्मन्य-सामर्थ्यात्। किं तर्हि प्राग्देहमोक्षादुपासनाविषयत्वं न तु साधनं, परतस्तु देहाद्यावरणापगमे

निरतिशयविकासिनित्यविज्ञानमेव। तत्तु फलं, यत्राऽऽविर्भूताऽपहतपाप्मत्वादिगुणाष्टकं स्वस्वरूपं परमात्मरूपगुणविभवांश्चानन्दरूपाननुभवति। ततश्च, "सर्वांश्च लोकानाप्नोति सर्वांश्च कामानि"ति। अतः किं जीवपराभेदक्लेशेनेतीमां अशङ्कामात्मकैवल्यलक्षणपरामृतत्त्वफलविसंवादेन परिहरन्नाह —

जीवस्सुखादिकमिवाऽऽत्मनि दृश्यभेदं
पश्यन्विविक्तपदचेतनया परस्मिन्।
ईशान विश्वदृशमात्मतया भवन्तं
निध्याय यद्यदभिकामयते तदेति ॥ ११७ ॥

उपासनायामात्मा दृश्याहन्दृशिभादविविक्तोऽपि तदविधानपवादेन परमात्मभेदाबाधात् जीव इति व्यपदिश्यते। न तु तत्त्वान्तरमेवेति। आत्मनि, स्वस्मिन् दृश्याहन्दृशितया सुखदुःखरागद्वेषादिकमिवेति निदर्शनोपादानोपपत्तये च तथा व्यपदिश्यते। जीवः खलु सुखाद्युपादानबुद्धिसत्वतादात्म्येन **सुखादिकमात्मनि**। **विविक्तपदचेतनया**, दृश्याहंभावात् विविक्तस्य पदं स्थानं यस्यास्सा तथा। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि"त्यमरः। तया चेतनया **पश्यति**, तदत्यन्ताऽविविक्तत्वे सुखादिविकारावस्थया तया तद्दर्शनानुपपत्तिः। अत्यन्तविविक्तत्वे च स्वरूपावसितया तया दृश्यदर्शनानुपपत्तिरित्यतो राजस्थानोऽमात्य – इति राजवत्त्वमिव विविक्तस्थानेति विविक्तवत्वमुच्यते, ततश्च यथा आत्मा तदेकवद्भावात्तदात्मगतं सुखादिकं तद्विविक्तवद्भावाच्च ताटस्थ्येनात्मचैतन्येन पश्यति। तथा **परस्मिन्नात्मनि** परमात्मभाविते स्वात्मनि दृश्यभेदं द्यावापृथिव्यादिकं, विविक्तपदचेतनया परमात्मनो विविक्तवद्भूतया चेतनया स्वात्मचैतन्येन। **पश्यन्**, अत्रापि परमात्मनोऽत्यन्ताविविक्तत्वे तदुपासनानुपपत्तिः। अत्यन्तविविक्तत्वे च तद्गत-दृश्यभेददर्शनानुपपत्तिः इत्यतो विविक्तवत्वमुक्तम्। दृश्याहंभावविगमादात्मनस्तदविधानपवादाच्च विविक्तवद्भावः। अनेन परमात्मनस्तत्वान्तरं प्रत्यगात्मेति परपक्षो व्यावर्त्यते। पश्यन्निति शतृप्रत्ययेन तत्र समाहितानां द्यावापृथिव्यादीनामपि परमात्मना तुल्यवद्दर्शनतापत्तिपर्यन्तमनुमन्धेयतामभिसन्धत्ते – ईश्वरत्वानपवादादस्यां दशायां **ईशानेति** प्रकृतार्थमेव सम्बोधनम्। **विश्वदृशं**, सर्वज्ञं, सत्यकामत्वादिगुनामुपलक्षणम्। **भवन्तं, आत्मतया** स्वाऽभेदेन **निध्याय** अहं ब्रह्माऽस्मीत्यहंग्रहो-पासनया कृत्रिमदर्शनरूपापत्तिपर्यन्तया साक्षात्कृत्य। अनेनोपासनामयं परमात्मज्ञानं न प्रमाणवस्तु-तन्त्रमिति यदुक्तं तत्तथैवेत्युपगतं भवति। ततो ब्रह्मलोके गुरुतमोपासानाऽदृष्टवशादेव। सत्यसङ्कल्पत्वाद्याविर्भावे **यद्यत्**, पितृलोकमातृलोकादिकम् **अभिकामयते**। **तत्** वीप्सितावमर्शित्वात्त-त्पदेन वीप्सा। **वेति**, प्राप्नोति, न त्वात्मकैवल्यलक्षणं परामृतमित्यभिप्रायः। यः पुनर्ब्रह्मलोके-

ऽकृत्रिमदर्शनेन साक्षात्कारः "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति श्रुत्यन्तरात् । स तदुपासनावासनासनाथेन पूर्वश्रुताऽनुसन्धानेन तत्रैवाऽपूर्वश्रवणेन वा सम्पद्यमानः प्रमाणवस्तुतन्त्र एव । जीवपरतादात्म्यस्य वस्तुत्वात् तस्य फलं परतः कैवल्यम् । "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" । "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते । कृतात्मानः प्रविशन्ति परं पदम्" ॥ इत्यादिश्रुतिस्मृतिदर्शनात् । न तु स निश्शरीरावरणनित्यविज्ञानात्मा परमानन्दानुभवरूपं फलमेव । ब्रह्मलोकात्परतो मोक्षापवर्णकश्रुतिस्मृतिविरोधात् । तस्मा"द्ब्रह्म वेद ब्रह्मैव भवति, कैवल्यं पदमश्नुते" इत्यादिश्रुतकैवल्यफलाय जीवपरस्वरूपाभेदसाक्षात्कारे यत्न आदरणीय – इति तात्पर्यार्थः । अत्र दहरविद्योपक्षिप्ता । सा च, "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यमि"त्यादिनाऽऽम्नाता । तत्र दहराकाशः परमात्मेति "दहर उत्तरेभ्य" इत्यधिकरणे स्थितम् ।

तत्र केचित् तस्मिन्यदन्तरिति स एव दहराकाशः प्रत्यवमृश्यते, यो दहरोऽस्मिन्नन्तराकाश इत्युक्त इति वदन्ति । तदन्ये न मृष्यन्ति, पुनरुक्तिवैफल्यात् । अस्मिन्नन्तराकाशस्तस्मिन् यदन्तरिति लिङ्गभेदात्तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते ? यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमित्यनुयोगप्रवृत्तिविरोधाच्चेति, तदयुक्तमिव । पुनरवमर्शो विद्याविध्यर्थस्स्यात् । यदित्यव्यये च न लिङ्गविरोधः । यद्वा "एतत्सत्यं ब्रह्मपुरमि"ति वक्ष्यति तदनागतावेक्षया लिङ्गभेदस्स्यात् । दहरोऽस्मिन्नन्तराकाशइत्युच्यते । किं तदत्र दहरपुण्डरीके विद्यत इति दहराकाशानुयोग एव च स्यादिति, किन्तु नास्त्यनेन क्लेशेन फलमिति । भगवता पदभाष्यकृता – तस्मिन्दहराकाशाख्ये यदन्तरित्येव व्याख्यातम् । तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यमित्येष–एवात्र विद्याविधिरिति केचित् । तत्र यो दहराकाशाख्यः परमात्मा तस्मिंश्च यदन्तस्तदुभयं कृतैकदेशनपुंसकेन तदा परामृश्यते । तन्त्ररत्ने हि "दधिमधुघृतमापोधानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमि"त्यत्र चित्रेष्टिविधौ दध्यादिप्रत्येकद्रव्यको यागगणः न तु संसृष्टद्रव्यक एको याग इति विवक्षया, तत्पदं दध्याद्यनेकद्रव्यपरं न तु संसृष्टपरमिति उक्त्वा, तन्निर्वाह उक्तः "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामि"ति स्मरणान्नपुंसकानपुंसकानेकद्रव्याभिप्रायमपि युक्तमेव तदिति नपुंसकैकवचनम् । एवं प्राजापत्यमित्यपि द्रष्टव्यमिति ।

अत्राऽपरे पर्यनुयुज्य समादधते — आस्येति नपुंसकसूत्रविहितैकशेषस्यैकवद्भाव उच्यते । तच्छब्दस्य तु "त्यदादीनि सर्वैर्नित्यमि"त्येकशेषो विहितः । ततश्च "त्यदादि तश्शेषे पुंनपुंसकतो लिङ्गवचनानी"तिवार्तिकदर्शनात् । "सूर्याचन्द्रमसावुभावि"ति पुंल्लिङ्गत्वे,

"नक्षत्राणी"ति नपुंसकबहुत्वे च यदिति तदिति च नपुंसकैकवचनानुपपत्तिरिति चेदुच्यते – नपुंसकसूत्रभाष्ये, "शुक्लः कम्बलः शुक्ला बृहतिका शुक्लं अवस्त्रं तदिदं शुक्लं तानीमानि शुक्लानी"त्युदाहृतम्। तत्र या गतिस्साऽत्र सञ्चारणीया। तत्र शुक्लशब्दैकशेषे तद्विशेषणं तत्पदमपि तदनुगुणवचनलिङ्गमिष्टम्। एवमिहान्वेष्टव्यादिशब्दैकशेषे यदिति तदिति च तदनुगुणलिङ्गवचनं स्यादिति न विरोधः। अथवा, "त्यादादीनां सामान्यं वस्तुमात्रमर्थ" इति द्विगुरेकवचनं सनपुंसकम्। "शक्यमञ्जलिभिः पातुं वाताः केतकगन्धयः" "शक्यं हि यत्किञ्चिदशनता क्षुदुपहन्तुमि"त्यादिवत् सामान्ये नपुंसकं स्यात्। यत्तदिति लिङ्गवचनत्रयसाधारणमव्ययं वा। "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्नव्येति तदव्ययमि"ति हि लक्षयन्ति। व्यत्ययबाहुल्याद्वेति। **अत्र पक्षे** किं तदत्र दहराकाशे विद्यते, यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्। इति प्रश्नानाञ्जस्यमित्यतो दहराकाशे यदन्तस्तदेव तदन्वेष्टव्यमित्यवमृश्यत इति दहराकाशोपासनाविधिरार्थाक्षिप्तः। "विश्वजित्सर्वपृष्ठोऽतिरात्रो भवती"त्यत्र सर्वताविध्याक्षिप्त इव पृष्ठविधिः। नहि दहराकाशमनुपासीनस्तदन्तर्वृत्तितयाऽन्यदुपासितुं शक्नोतीति। **अत्र पक्षे** तदन्तर्वर्तिन एव केवलमुपासनविध्युपलम्भात्तत्त्वेनोपासनविध्यभावेन तदाधारदहराकाशोपासना विध्याक्षेपानुपपत्तिरित्यतो विधेयैकदेशालम्बनोऽयं "विष्णुरूपांशु यष्टव्य" इत्यादिवत् विधिसरूपोऽर्थवादः। अथ इहात्मानमनुविद्य "व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"ति फलविशेषविशिष्टोपासनाविधिः। तत्र चात्मानमिति दहराकाशः, सत्यान् कामानिति चोपास्यं निर्दिष्टमिति नन्यूनतेति। **केचित्** तं च दहराकाशं दहरपुण्डरीकान्तर्वृत्त्या दहरत्वनिर्देशेन च प्राप्तात्पत्वनिवृत्तये। "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्युपमाय "उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते" इति भोगस्थानं, "उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणी"ति भोगोपकरणं, यच्चेहास्ति भोग्यजातं यच्च नास्ति भूतं भविष्यद्वा मनोरथमात्रगतं भोग्यजातं सर्वं तदस्मिन् समाहितमिति। यत्तत्स्मिन्यदन्तरित्युक्तं तद्व्याख्याय तमेव दहराकाशं नाऽस्य जरयैतज्जीर्यति न वधेनास्यहन्यते एतत्सत्यं ब्रह्मपुरमित्थमत्रभङ्ग इव दध्यादिदेहजराध्वंसयोरपि न विक्रियत इति निर्विकारमुक्त्वा, "अस्मिन्कामास्समाहिता" इति प्रत्यवमृश्य, "एष आमात्माऽपहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प" इति तमेव दहराकाशाख्यं परमात्मानं प्रत्यगात्मभूतं सहेतुषडूर्मि विक्रियाऽतीतमुपदिश्य तदवेदिनो "यथाह्येवैक प्रजा अन्वाविशन्ति यथाऽनुशासनमि"त्यादिना, "तद्य इहात्मानमननुविद्यव्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवती"त्यन्तेन पारतन्त्र्यं कर्मफलान्तत्वमसत्यसङ्कल्पत्वं चाभिधाय, तद्विदामथ "य इहात्मानमनुविद्यव्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"ति सत्यसङ्कल्पतां

सर्वकामावाप्तिं च प्रतिज्ञाय "स यदि पितृलोककामो भवति सङ्कल्पादेवाऽस्य पितरस्समुत्तिष्ठन्ति, तेन पितृलोकेन सम्पन्नो महीयत" इत्यादिना "यं यमन्तेऽभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठन्ती"त्यन्तेन प्रपञ्च्य स्वात्मस्थानामेव सत्यानां पितृमातृभ्रातृस्वसृसखिगन्ध-माल्यान्नपानगीतवादित्रस्त्र्यादिकामानामात्मभूतस्य दहराकाशाख्यब्रह्मलोकस्य चाऽविद्ययैवाऽनवाप्तिं, "त इमे सत्याः कामाः अनृताऽभिधानास्तेषां सत्यानां सतामनृतमपि पिधानमि"ति। तद्यथा "हिरण्यं निधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा" इत्युपपाद्य, अथ "विद्वान् य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"ति। तदेव दहराकाशमात्मत्वामृतत्वादिगुणकमभिधाय "तस्य ब्रह्मणो नाम सत्यमि"ति। अथ "य आत्मा स सेतुर्विधृतिरेष लोकानामसम्भेदाये"त्यादिना नामादिगुणान्तरं चाभिधाय, "अपहतपाप्माह्येष ब्रह्मलोक" इत्युपसंहृत्य "तस्माद्वा एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति विद्धस्सन्नविद्धो भवती"त्यादिना दहराकाशाख्यं ब्रह्मलोकं प्राप्तानामाध्यात्मिकादिदुःखाभावमभिधाय "तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवती"ति तत्प्राप्तिसाधनं ब्रह्मचर्यमभिधाय, अथ "यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तदि"त्यादिना अथ "यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तदि"त्यन्तेन तदेव प्रशस्य तदेवारण्यगतित्वं तस्य ब्रह्मचर्यस्य, "तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थः सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयं तद्य एतावरश्चण्यंचार्णवौ ब्रह्मलोके ब्रह्मचर्येणानु-विन्दन्तीत्युपपाद्य ब्रह्मलोक एव दहराकाशाख्यब्रह्मलोकाप्त्या सत्यसङ्कल्पत्वं सर्वकामावाप्तिश्चेत्यभि-प्रायेण "तेषामेवैषब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवती"त्युपसंहृत्य यथोक्तं दहराकाशं, तत्र समाहितान्सत्यान्कामांश्च ब्रह्मचर्यादिसाधनोपासीनस्य ब्रह्मलोकप्राप्तौ मूर्धन्यया नाड्यो-त्क्रान्तिरर्चिरादिका गतिश्चोक्ता। "ओमिति वाहो द्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधो विदुषां तदेष श्लोकः"। "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति॥ अत्र "स वा एष आत्मा हृदि, तस्यैतदेव निरुक्तं हृद्ययमिति। तस्माद्धृदय-महरहर्वा एवंवित् स्वर्गं लोकमेती"ति प्रकृत्य "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यत एष आत्मेति होवाचे"ति परमात्मनो विद्यया दृश्याहम्भा-वादिकालुष्यहानेन सम्प्रसन्नोपसत्तव्यत्वावगमात् दहरविद्यायामात्मा विवेक्तव्य इत्यभिप्रायेण श्लोके विविक्त पदचेतनयेत्युक्तम्। उपसंपत्तव्यस्य परस्य ज्योतिषः स्वेन रूपेणेत्येष आत्मेति चोपसम्पत्तुरात्मत्वश्रवणात् आत्मनीत्युक्तम्। "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानि"ति परमात्मनस्तत्रसमाहितानां

भोगस्थानोपकरणभोग्यानां च विज्ञेयत्वश्रवणादा''त्मनि दृश्यभेदं पश्यन् भवन्तं निध्याये''त्युक्तम्। "आत्मेति तूपगच्छन्ति ग्राहयन्तिचे''ति सूत्रितम्। "अहं वै त्वमसि भगवो देवते त्वं वा अहमसि भगवो देवते" इति व्यतिहारेणाभेदमुपगच्छन्त्युपासितारः। "योऽन्यां देवतामुपास्तेन्योसावन्योहमस्मीति न स वेद यथा पशुरेवं स देवानामि''त्यादिनिन्दादर्शनात्। ग्राहयन्ति च "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा, तत्त्वमसी''त्यादिवाक्यानीति सूत्रार्थः। स्मृतिश्च – "मत्तस्सर्वमहं सर्वं मयि सर्वं सनातनो सर्वगत्वादनन्तस्य स एवाऽहमवस्थितः" ॥ इति। तथैव परमात्मोपासनमनुदर्शयति – अतोऽहं ग्रहेणाभेदेनैव परमात्मोपासनं ब्रह्मलोकगत्या सर्वकामाप्तिसाधनमित्यात्मतयेत्युक्तम्। तथा च सूत्रं – "अप्रतीकालम्बनं नयतीति बादरायणः" इति। अहं ब्रह्मेत्युपासीनानामेवामानवः पुरुषः ब्रह्मलोकान्नयति न तु नामब्रह्मेत्येवमादिप्रतीकालम्बनानीति बादरायण आचार्यो मन्यत इत्यर्थः। दृश्याहंभावविविक्तस्यापि प्रत्यगात्मनः परमात्मोपासने मन आद्युपकरणोपग्रहादीश भेदानपवादेन विश्वदृशमित्युक्तम्। एवं प्रत्यगात्मानं प्रकृतितो निष्कृष्य परमात्मानमहं ब्रह्मास्मीति बहिरन्तराकाशयोरिव तयोः स्वरूपाभेदालम्बनेन, तत्र समाहितांश्च कामानात्मसमाहितानेव कृत्वोपासीनोमूर्धन्यया नाड्या देहादुत्क्रम्य ब्रह्मलोके सत्यसङ्कल्पतया स्वात्मस्थानेव पितृलोकादिकामानश्नुत इति तात्पर्यार्थः।

परस्तु प्रकृतिविविक्तोऽपि प्रत्यगात्मा परमात्मनस्तत्वान्तरमेव, तस्य च मनुष्योऽहमित्यादिवत् देहदेहिभावालम्बनः एव। अहं ब्रह्मास्मीत्यहंग्रहः, न तु स्वरूपाऽभेदालम्बन इति वक्ति। स वक्तव्यः "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमि''ति। स्वकीयकामानां परमात्मनि समाधानवचनं पीड्येतेति। मनसा एव खल्वस्य पितृलोकादिकामा गम्यन्ते। "मनसैतान्कामान् पश्यन् रमत" इति श्रवणात्। अन्यथा "ये चास्येह प्रेता ये च जीवा यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दत" इति विरोधात्। न खल्विह प्रेतास्तत्सम्बन्धिनो ब्रह्मलोके भवन्ति "न तत्र दक्षिणायन्ति नाविद्वांसस्तपस्विनः" इति निषेधात्। न तरां जीवाः। एवं कामानां मानसत्वाऽविशेषेपि "तत्वभावे सन्ध्यवदुपपत्तेः", "भावे जाग्रद्वत्" इति सूत्रम्। साङ्कल्पिकस्थूलदेहाभावे तद्भावे च स्वप्नवन्मनोरथवच्च भोगविशेष इत्यभिप्रायः। ततश्च स्वसम्बन्धिनामेव पित्रादिकामानां मनोरथोपनीतानामिव ब्रह्मलोके स्वसङ्कल्पैकहेतुकानां परमात्मनि समाधानवचनात्। "स वा एष आत्मा हृदि"त्यात्मत्ववचनाच्च। तत्स्वरूपालम्बन एवात्राहंग्रहोऽभिप्रेयत इति गम्यते। अन्यथा तद्योऽहं सोऽसौ, योऽसौ सोऽहमित्यादिव्यतिहारवचनमुपासनासु पीड्येत। विशिष्टग्रहणे व्यतिहारार्थविशेषाभावात्। न खलु योऽहं मनुष्यशरीरः समनुष्यः, यो मनुष्यः सोऽहं मनुष्यशरीर इति कश्चिद्विशेषो लभ्यते। तस्मादात्मपरमात्मतादात्म्यालम्बनमेवाऽहंग्रहोपासनमिति साम्प्रतम्। एतेन यदुत्तानदृशा पशुना केनचिदुक्तं नभइवोपाधिपरिच्छेद्यस्य नभसो जीवस्य परमात्मा तत्परिकरस्य चोपादानमिति,

सपरिकरस्यैव जीवस्य परमात्मतादात्म्यज्ञानमकृत्रिमं, कृत्रिमन्तु परस्य जीवतादात्म्यज्ञानं, उपध्युपरागेण भेदादिति तन्निरस्तम् । व्यतिहारोपदेशवैरूप्यायोगात् । सर्वत्र नीलोत्पलादौ घटाकाशमहाकाशादौ च उपाध्युपग्रहभेदे सत्येव तदनपेक्षया समानाधिकरणव्यवहारेषु परस्परस्वरूपाभेदग्रहस्याकृत्रिमस्यैव सार्वजनीनस्यानपह्नवनीयत्वाच्च सर्वथाऽपि दहराद्युपासनया यथोक्तफललाभ एव न कैवल्यमिति सिद्धम् ॥ ११७ ॥

स्यादेतत्, "स एतेन प्राज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्याऽमुष्मिन्स्वर्गेलोके सर्वान्कामानाप्त्वाऽमृतस्समभवदि"ति भवदभिमतपराऽमृतत्वे सर्वकामाप्तिरनुश्रुता । तथा "ब्रह्मविदाप्नोति परमि"त्यत्र ब्रह्मविद्यया पराऽमृतत्वं विवक्षितमिति तत्रापि सम्प्रतिपन्नम् । "यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवती"त्यन्तरभिधाय, "आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चने"त्यभयपदेनोपसंहारात् । तत्र च "यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चिते"ति सर्वकामाप्तिरनुश्रूयते । तथा "स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः, स य एवंवित्, अस्माल्लोकात्प्रेत्य, एतमानन्दमयमात्मानमुपसंक्रम्य, इमांल्लोकान्कामान्नीकामरूप्यनुसञ्चरन्नि"ति कामान्नित्यादिना सर्वलोककामचारोऽनुश्रूयते । तत्र च तव पराऽमृतत्वमिष्टम् । अतो दहरविद्यादिष्वपि तथारूपफलवादात् तदेव सर्वत्र परामृतत्वमेषितव्यम् । यद्ब्रह्मलोके ब्रह्मप्राप्तौ जगद्व्यापारवर्जमाविर्भूतापहतपाप्मत्वादिगुणाष्टकस्सर्वलोककामैश्वर्यमनुभवतीति । अन्यथा विद्योदयमात्रेणात्रैव ब्रह्मप्राप्तौ कैवल्ये परामृतत्वे देहादुत्क्रम्य सर्वकामाप्तिवचनं सर्वत्र कदर्थितं स्यात् । अतो बहनुग्रहाय "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथमर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इत्येकं, कामविमोकेनाऽमृतत्वसाधनविद्यारम्भादथ मर्त्योऽमृतो भवतीत्यचिरविलम्बादुच्यते । अत्र ब्रह्म समश्नुते उपासनामयसाक्षात्कारेणानुभवतीति व्याख्येयमितीमां शङ्कां परिहरन्नाह —

सङ्कल्पतस्सकलकामितसर्गशक्तिः
स्वच्छन्दतो निखिललोकविहारयोगः ।
एतद्द्वयान्तरमपीश विमुक्तिरिष्टा
शूलाञ्चलस्य हि हडिस्त्रिदशेन्द्रलोकः ॥ ११८ ॥

सङ्कल्पत इति सावधारणम् । "यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठती"ति श्रुतिः । इदमेवं स्यादिति सङ्कल्पमात्रादित्यर्थः । अनेन सङ्कल्पस्य मोघत्वं कार्यविलम्बः बाह्य-

साधनसम्पत्तियत्नापेक्षा व्यवच्छिद्यते। तेन संराडादिसङ्कल्पतुल्यत्वव्यावृत्तिः। **सकलानां** समग्राणां **कामितानां**, इदं मे भूयादितीच्छाविषयीकृतानां पित्रादिकामानां। **सर्गं शक्तिस्सामर्थ्यं**। अत्र कामितानां साकल्यमातृप्तेर्भोगपर्याप्तत्वं, तेन मनोराज्यादाविव केवलभावनामयपित्रादिसर्गव्यावृत्तिः। **स्वच्छन्दतः**, स्वाभिप्रायानुरोधेन निरुपरोधं। **निखिलेषु लोकेषु**, प्राजापत्यहैरण्यगर्भादिषु। **विहारयोगः**, तद्गतैरेवोपकरणैर्लीलारसानुभवः। योगबलेन निखिललोकचारो नैवमिति तद्व्यावृत्तिः। इत्येतत् **भवान्तरमपि** सत्। भवान्तरशब्दापेक्षया एतदिति निर्देशः। ब्रह्मविद्यातः प्राचीनादयमन्यो भवस्संसारः भवान्तरम्। **अपिरेवार्थो** गर्हार्थो वा। **विशिष्टा मुक्तिर्विमुक्तिरिष्टा**, कष्टमहो विषयभोगाशापारवश्यमित्यभिप्रायः। अथ कथं भवान्तरमेव विमुक्तिरिष्यते? "तयोर्ध्वमायन्नमृतत्वमेती"त्यादौ प्राचीनभवप्रापणीयदुःखभूमातिवृत्ते रित्यर्थान्तरन्यासेनाह—**शूलस्याञ्चलमग्रं** शूलाञ्चलम्। यदारोपणेन वध्या हन्यन्ते। प्रतियोगितयाऽपेक्षणीयतासम्बन्धे षष्ठी। शूलाञ्चलमपेक्ष्येत्यर्थः। **हडिः** यत्र सच्छिद्रे दारुणि पादप्रायं दण्ड्यते। स **त्रिदशेन्द्रलोकः। हिरत्र** लोकप्रसिद्धिं दर्शयति। यथा गुदान्त्रमर्मच्छेदादिनिमित्तमरणदुःखशून्यतया हडिनिगलादिनिग्रहोऽपि शूलारोपणापेक्षया स्वर्ग इव भवति। तथा निरयप्रायषडूर्मिपरिवर्ततत्कालप्रशमनश्रमैकान्तिकमनुष्यादिभवापेक्षया सङ्कल्पमात्रोपनमदखिलकामोपभोगा भूतसंप्लवा परावर्तिभवान्तरं सुखप्रायतया तादृशदुःखशून्यत्वादमृतमित्युपचर्यत इत्यभिप्रायः। अत्र हे ईशेति सम्बोधनेन पारतन्त्र्यदुःखं ब्राह्मलौकिकस्यावर्जनीयमिति सूचयति। तच्च दुःखमेवेत्यनन्तरमुपपादयिष्यते।

**अथ कथमिदं** भवान्तरमभिधीयते, विमुक्तिरेवेयमीदृशी कस्मान्नभवति? **उच्यते** — अस्ति तावद्ब्राह्मलौकिकस्य मनः। "मनोऽस्य दिव्यं चक्षुः, स वा एष एतेन दिव्येन चक्षुषा, मनसैतान्कामान् पश्यन् रमते, य एते ब्रह्मलोक" इति श्रूयते। अमनस्कस्य कामसङ्कल्पायोगाच्च। "कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे" ति हि श्रुतिः। अक्षाणि चान्यानि सन्ति, "दर्शनाय चक्षुर्गन्धायघ्राणमि" ति हि श्रूयते। अस्ति च शरीरं, अन्यथा सर्वलोककामचारानुपपत्तेः। आह च सूत्रकारः ब्रह्मलोके महीयमानस्यदेहेन्द्रियादेरभावं "बादरिराहह्येवं" मनसैतान् कामानिति। विशेषावधारणेन भावं जैमिनिर्विकल्पामननात्, "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधेत्यादिभिः। द्वादशाहवदुभयविधं बादरायणोऽतः उभयलिङ्गश्रुतेरुभयविधं सङ्कल्पानुरोधेन देहेन्द्रियादिभावं, तदभावं च बादरायणो मन्यत इति। सशरीरत्वं च दुःखाविनाभावि; "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यन्वयव्यतिरेकश्रुतेः। यत्त्वत्र कश्चिदुत्तानदर्शी पशुरुद्दुशति "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युने"ति प्रक्रमादिदंशब्दात्प्रथमप्राकृतकर्मनिर्मितशरीरवत एव

प्रिया ऽप्रियादिसंस्पर्शश्रुतिः । न त्वप्राकृताकर्मजशरीरवत् इति । तदयुक्तम् । अप्राकृतमकर्मजं वा शरीरमित्येवाऽसम्भवात् । न हि प्रकृतिमनुपादाय निरुपादानमुपासनादृष्टं च कर्मानपेक्ष्य निर्निमित्तं वा शरीरं जायत इति युक्तिमत् । ननु "यं यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठतीति" श्रूयते । सत्यं श्रूयते । साधनसम्पत्त्यनायासमविलम्बं चापेक्ष्य, तथापि निरुपादाननिर्निमित्तकार्यानुपपत्तिः । न चेश्वरवदसावात्मानमेव शरीरादिभावेन परिणमयतीति युक्तम् । दृष्टान्तासिद्धेः । ईश्वरोऽपि हि यादृशतादृशप्रकृतिविशिष्टमेवात्मानं प्राणिकर्मनिमित्ताऽपेक्षः परिणमयति "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्," "मायी सृजते विश्वमेतत्," "मायाध्यक्षेण प्रकृतिस्सूयते सचराचरम्" इत्यादिश्रुतिस्मृतिभ्यः । अन्यथाऽऽत्मनः "कृत्स्न-प्रसक्तिर्निरवयवत्वशब्दकोपो वे" त्येतदुपपादितम् । स्वप्नवदान्तरं शरीरमन्यादृशमेव साङ्कल्पिकमिति चेत्तदपि हि वासनामयत्वात्प्राकृतमेव भोगनिमित्तकर्मजं च स्यात् । परपदीयं विशुद्धविद्यामयमान्तर-शरीरमित्यत्र प्रमाणमन्विच्छन्तोऽपि न प्रतीमः । तस्मात्सर्वत्रैव सशरीरस्य नाप्रियसंस्पर्शातिवृत्तिः । अथ "सोऽभयं गतो भवति, आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन, तरति शोकमात्मवित्, न पश्यो मृत्युं पश्यति, न रोगं नोतदुःखमि" त्यादौ मुक्तस्याप्रियसंस्पर्शाभावः श्रूयत इति चेत् तत्र किमुपरिप्लवदृशः पशुपाशस्यास्ति ? "सशरीर एवाऽभयं गतो भवति, शोकं वा तरति, मृत्य्व्यादिकं वा न पश्यती" ति श्रुतिः । सशरीरत्वे, मुक्तस्य प्रामाणिके तस्याभयादिवचनम् । सशरीरस्यैवेति स्यादिति चेत्तदेव प्रमाणं स जल्पाकपशुर्जल्पतु । "सयश्चायं पुरुषे, यश्चासावादित्ये, स एकः, स य एवंवित्, अस्माल्लोकात्प्रेत्य, एतमानन्दमयमात्मानमुपसंक्रम्य, इमाल्लोकान्कामान्नीकाम-रूप्यनुसञ्चरन्", "स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः," "स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा वयस्यैर्वा नोपजनंस्मरन्निदं शरीरं स एकधा भवति त्रिधा भवति", "इहचेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ततः सर्गेषु लोकेषु शरीरत्वाय कल्पत "इत्यादिश्रुतिरिति चेत् स किं मुक्तो भेदेन भवति परमात्मनः ? उताऽभेदेन ? यदि भेदेन ततो मुक्तः परमात्मना भवत्यविभागेन दृष्टत्वात् । "तत्त्वमसी"त्यादिशास्त्राऽनुरोधे-ना"ऽहं ब्रह्मास्मी"ति, **सूत्रविरोधः** । "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति सूत्रितम् । यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति च श्रुतिः । "ब्रह्मवेद ब्रह्मैव भवती"ति च । **अथाऽभेदेन** ततो जगद्व्यापारवर्जं प्रकरणादि"सन्निहितत्वाच्चे"ति सूत्रविरोधः । यत्प्रकरणं ब्राह्मण"स्तदैक्षत, बहुस्यां प्रजायेये"त्यादौ, यश्च सन्निधिः तदभेदात्तदुभयं मुक्तस्येति । अपीच मुक्तावपि देहेन्द्रियाद्युपाधिकृतभेदानपवादादमुक्ताविव तदभेदापत्त्यनुपपत्तिः । यत्तु भोगाशा-परवशपशुना मुक्तौ ब्रह्मभावापत्तिमनुकूलयतेव किंचिज्जल्पितं परिकरैकराशीभावान्मुक्तपरिकरस्य तद्भावापत्तिर्मुक्तस्य कामभोगश्चोपपद्यत इति तन्न, कथमप्यमलीने परिकरभेदे पूर्ववत्तदुपाधिकभेदस्य

दुष्परिहरत्वात्। न चाऽस्ति परस्यात्मनो देहादिपरिकरसम्बन्धः। "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" । "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ॥ "तद्वा तदक्षरं गार्ग्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते, यस्तु सोम्य सर्वज्ञस्सर्वोभवति, सर्वं भूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः। अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महांश्च शुचिरि"त्यादिश्रुतिस्मृतिभ्यः । तद्भावश्च मोक्ष इति कथं ब्रह्म देहादिपरिकरे देहादिपरिकरैकीभावजल्प इति न विज्ञः। यद्येवं का तर्हि सर्वत्र मुक्तसशरीरत्ववादस्य गतिः? सर्वलोककामावाप्तिवादस्य च या काचित्सा खलु परस्योत्तानदृशः पशोरगम्या। मैत्र्यां तु ब्रूमहे – सगुणविद्यापरिपाके नैकशततम्या नाड्यास्माच्छरीरादुत्क्रम्यार्चिरादिना ब्रह्मपथेन ब्राह्मलौकिकस्य मुक्तदेशीयस्य सशरीरत्वादिवादो यथाश्रुत एवोपगम्यते। तत्र च प्रागिवाविद्यानपवादात् ज्ञानमय एव ब्रह्मभावः भोगसाम्येन जगद्व्यापारवर्जमैश्वर्यं च, निर्गुणविद्यया पुनर्ब्रह्मात्मभावप्रत्यूहभूताविद्यापवादेन वास्तव एव ब्रह्मभावः। तस्य चाविद्यामात्रान्तरायता श्रूयते। "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः, त्वं हि नः पिता योऽस्माकं अविद्यायाः परं पारं तारयसि पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतं एतद्योवेद निहितं गुहायां सोऽविद्याग्रन्थि विकिरति सोम्ये"त्यादिषु। अत एव विद्ययाऽविद्यानिवृत्तौ क्षेपकारणाऽभावात् ब्रह्मविद्यासमकाल एव तद्भावलक्षणमोक्ष आम्नायते। "विद्वान्न बिभेति कुतश्चन, अपसर्पन् सर्पान्न बिभेतीति। यथा तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे"त्यादियथाप्रियं पश्यन्मोदत इति। "यो वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवतीति भुञ्जानस्तृप्यती"ति, यथा "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"ति व्यक्तमेव। यदा तदेति विद्यासमकालत्वं मोक्षस्य। तथा "ब्रह्मवेद ब्रह्मैव भवती"त्युदाहार्यम्। अत एव चनास्मिन्परामृतत्वे शरीरादुत्क्रान्तिरर्चिरादिका धृतिब्रह्मलोकगतिर्वाऽपेक्ष्यते युज्यते वा। "अथाकामयमानो योऽकामोनिष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माऽप्येति", "अत्र ब्रह्म समश्नुते "इत्यादिश्रुतेः। यथाचाऽयं ब्रह्मविदश्शरीरादुत्क्रान्तिप्रतिषेधः **तथा प्रपञ्चितमन्यत्र**। तत्रैवं सति निर्गुणविद्यात्वाऽभिमतेषु "अस्माल्लोकात्प्रेत्य, अस्माल्लोकादुत्क्रम्य, स वा एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मक्रीड आत्मरतिरात्ममिथुन आत्मानन्दः स स्वराड् भवति, तस्य सर्वेषु लोकेषु कामचारो भवति, स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये"त्यादि, "जक्षत्क्रीडन्नि"त्यादि "स एकधा भवती"त्यादयः वादाः जीवन्मुक्तिविषया व्याख्येयाः। जक्षणादिव्यवहारे नोपजनं स्मन्निदं शरीरमिति विद्यापरिकर-

शरीरस्य इदंशब्दावमर्शलिङ्गात् अस्माच्छरीरात्समुत्थायेति तस्यैव प्रकृतत्वात् ततश्चास्माल्लोकात्प्रायणं समुत्थानं वाऽस्मिन् शरीरेऽहमभिमानत्यागः एवं सर्वात्मतया च सर्वेषु लोकेषु कामान्नित्यादिरुपचर्यते। "तस्य ह न देवाश्च नाभूत्याईशत, आत्माह्येषां स भवती"ति श्रुतेः। तथा ब्रह्मणो यः प्राक् सृष्टेः कारणात्मना एकधाभावः। यश्च विभक्तसत्वादिगुणमयतया त्रिधाभावः, यश्च वियदादिमयतया पञ्चधाभावः, यश्च महदहङ्कारपञ्चतन्मात्रमयतया सप्तधाभावः, यद्वा एकधाभावः, प्राणात्मना त्रिधाभावः, अग्निवाय्वादित्यात्मना पञ्चधाभावो भूतमयतयैव सप्तधाभावो भूरादिलोकात्मना यश्च नवधाभावः "मरीचिरत्र्यंगिरसावित्यादिनव ब्रह्माण इत्येते पुराणे निश्चयं गताः" इत्युक्तरूपेणेत्येवं बहुधाभावस्सर्वोऽपि ब्रह्मभूतस्य ब्रह्मविद एवेति प्रशंसार्थं "स एकधा भवती"त्यादिरुपचर्यते। अनयैव दिशा "ततस्सर्वेषु लोकेषु शरीरत्वाय कल्पत" इति व्याख्येयम्। भाष्यकृता तु शरीरविस्रंसनात्प्राक् आत्मानं बोद्धुमशकच्चेदशकत्, अन्यथा "ततस्सर्गेषु लोकेषु शरीरत्वाय कल्पते न मुच्यते" इत्यशकच्चेदिति काकुमाश्रित्य "इह चेदवेदीदथसत्यमस्ति, न चेदिहावेदीन्महती-विनष्टिरि"ति श्रुत्यन्तरदर्शनेन व्याख्यातम्। सर्वकामावाप्तिवादाश्च सर्ववैषयिककामानामात्मान्त-र्भावाभिप्रायाः। "एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ती"ति हि श्रूयते। यथाचैतत्तथा व्याख्यातमधस्तात्। ब्रह्मभावेन स्वरूपप्रतिष्ठालक्षणमोक्षस्याविद्यामात्रान्तरायत्व-विद्यासमसमयत्वोत्क्रान्तिनिषेधादिवादानामतिबहुलतया बहुनुग्रहन्यायश्च विपरीतः। यत्तु कठवल्यां निर्गुणविद्याप्रकरणे "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति, विष्वङ्ङन्या उत्क्रमणे भवन्तीति शरीरादुत्क्रान्तिवचनं तत्सगुण-विद्यासूपसंहर्तव्यम्। उपसंहृतं च दहरविद्यायां, "ओं इति वाहो द्वामीयते ते स यावत्क्षिप्ये-न्मनस्तावदादित्यं गच्छती"त्यादि प्रकृत्य, "तदेषश्लोकः शतं चैकाचे"त्यादि। अन्यथा तस्य प्रकृतविद्यान्वयित्वे वक्तव्यशेषे सति, "यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनमि"त्युपसंहारविरोधात्। भाष्यकृतस्तुतत्रैव "सत्वमग्निं-स्वर्ग्यमध्येपि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त" इत्यग्निविद्या प्रस्तुता। तस्याशेषोऽयं सामर्थ्यादिति प्रकरणादनुत्कर्षमुपयन्ति। तत्राऽमृतत्वमेतीत्याभूत-सम्प्लवस्थानाभिप्रायम्। अभूतसम्प्लवंस्थानममृतत्वं हि भाष्यत इति हि स्मरन्ति। अत एवार्चिरादिमार्गं प्रक्रम्य "स एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवं आवर्तन्नावर्तन्ते वैद्युतान्पुरुषो मानव एत्य ब्रह्मलोकान्गमयति, तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरि"ति ब्राह्मलौकिकानां संख्या, तत्कालस्थितिं सोपसर्गां च पुनरावृत्तिं दर्शयति। इममिहेति विशेषणादावर्तान्तरे पुनरावृत्त्युपगमावगमात्। एवं च आब्रह्म भवनाल्लोकाः पुनरावर्तिनोऽर्जुने"ति स्मृतावभिविधावाङ् व्याख्येयः। "मामुपेत्य तु को कौन्तेय पुनर्जन्म

न विद्यत" इति व्यवच्छिद्य वचनात्। **यत्त्वत्राह** – तद्यौ ह वै तदिष्टापूर्ते कृतमित्युपासते, ते चान्द्रमसमेव लोकमभिजायन्ते त एव पुनरावर्तन्ते, अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजायन्ते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" इत्यावृत्त्यनावृत्तिविभागवचनात्। "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमपि धूमराज्यादि पितृयाणेन चन्द्रलोकप्राप्तानामिवाऽर्चिरहरादिदेवयानेन ब्रह्मलोकप्राप्तानामावृत्तिपथानभिधानाच्चा-पुनरावृत्तिरेव युक्ता। न चेममिहेति विशेषणात् कल्पान्तरावृत्तिर्गमनीया, श्वोभूतवदनुवादात्। **यथा** राजसूये "बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे ऐन्द्रमेकादशकपालं राजन्यस्य गृहे आदित्यञ्चरुम्महिष्यै गृहे" इत्यादिना विहितानि द्वादशहवींषि प्रत्येकं कर्तव्यानीति प्रतिस्वं श्वोभूत-इत्युपतिष्ठते तद्विदि"मं मानवमिमं मानवमिह कल्प इह कल्प" इति सर्वकल्पव्याप्तिस्स्यात्। आकृतिनिर्देशात्। **अन्यथा** "व्यक्तिनिर्देशे इह युगेऽवान्तरकल्पेऽन्यस्मिन्वे"त्यनध्यवसानादाकृति-वचनोऽयमनुवादः। **अन्यथा** यदाऽनावृत्तिर्निधीयते युगपत्सर्वकल्पानावृत्तिरेवावतिष्ठते। तत्रास्मिन्नेव कल्पे न कल्पान्तर इत्यपरस्मिन्नर्थे विधीयमाने वाक्यभेदो दुर्निवारस्स्यात्। अत एवाऽनुवादो-ऽनर्थक इति कृत्वा काण्वानामिहपदं न पठ्यत इति।

**अत्राऽभिधीयते** – सत्यमिममिहेत्याकृतिवचनश्शब्दः। वैदिकशब्दस्याऽनित्यव्यक्तिवचनत्वे पौरुषेयत्वप्रसङ्गात्। किन्त्वेतेन प्रतिपद्यमाना इति प्रतिपद्यमानसन्नियोगेन इममावर्तं नावर्तन्त इति विशेषणात्। ते ते तं तं आवर्तं नावर्तन्त इति पर्यवसानेऽर्थलभ्यकल्पान्तरावृत्तिप्रत्ययानपवादान्न सर्वकल्पानावृत्तिप्रत्ययः स्यात्। यथामृष्टाशनेन तृप्तन्तइदमहर्नबुभुक्षन्त इत्यहरन्तरे बुभुक्षाभावो न प्रीयते तद्वत्। यथा च बार्हस्पत्यादितत्तद्धविस्संनियोगेन श्वभूत इति विशेषणान्न ह्यस्तनहविषो भूयः श्वस्तनत्वप्रत्ययः। एवमिहापि स्यात् एवं सतीमं मानवमिति निश्चितार्थे नाऽनिश्चितार्थमिहेत्ये-तदेतन्मानवावर्तविषयमेव नीयत इति नोक्तानध्यवसायः। यत्पुनर्वाक्यभेदः स्यादिति स्यान्नाम। यदि श्रुतमनर्थकं कर्तुं शक्यं स नाम वाक्यभेदः परिहर्तव्यः। यत्र श्रुतपदानामेकान्वयेनार्थ-वत्त्योपक्षये सत्यन्वयान्तरविवक्षायां भवति – यथा गृहं संमार्ष्टीति गृहसंमार्गान्वये सति तमेकं संमार्ष्टीत्यन्वयान्तरविवक्षायां। इह पुनश्श्रुतार्थवत्वायैव वाक्यभेदो मर्षणीयः। एतदेवाऽभिसन्धाय **भट्टपादैः उक्तम्** — गौण्या लक्षणयावापि वाक्यभेदेन वा स्वयम्। वेदोऽयमादिशेदर्थं को नु तं प्रतिकूलयेदि"ति। **वस्तुतस्तु** नात्राऽनावृत्तिर्विधित्सिता। येन तस्यां सामान्येन विहितायां पुनरिहेति विशेषविधाने वाक्यभेद आशङ्क्येत। किं तर्हि? क्रियाधीना लोकान्तरगतिश्चन्द्र-लोकगतिवत्पुनरावृत्त्यवसाना प्राप्ता प्रतिषिध्यते। न चन्द्रलोकगता इव इह पुनरावर्तन्त इति। तत्राऽर्थतः कल्पान्तरे न्यायप्राप्ताऽऽवृत्त्यनपवाद इति कुतो वाक्यभेदशङ्काशूकस्याप्यवकाशः। अत

एवैवमिममिहेति विशेषणार्थवत्वाविरोधेन तदावृत्त्यनावृत्तिवादव्यवस्था च। लोकान्तरगतिसमानकल्पविषया समर्थिता भवती। "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमितिवदि" इ पुनरावृत्तिमार्ग श्रुतिश्च कल्पान्तरव्यवधानादेव नानुपपन्ना। तस्मात्त "योर्ध्वमायन्नमृतत्वमेती" ति अभूतसंप्लवाभिप्रायमिति स्थितम्। यद्वा क्रममुक्त्यभिप्रायं स्यात्। ब्रह्मलोके खलु परमात्मा कृत्रिमतादात्म्यसाक्षात्कार उपपद्यते (१)जायापत्योरिव, ब्रह्मलोक इति लिङ्गात् "यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति श्रुतेश्च। एतदभिप्रायेण च स एनान् ब्रह्म गमयतीत्यत्र, "कार्यं बादरिरस्य गत्युपपत्तेः"। अरण्यार्णवैरस्मदीयसरस्सोमसवनाश्वत्थप्रभुविमितहिरण्मयवेश्मादिविचित्रसंस्थानकार्यब्रह्मलोकाध्यक्षं कार्यं ब्रह्म गमयति। अस्य कार्यब्रह्मण इति कर्मणि षष्ठी। तद्विषयगत्युपपत्तेः, सर्वात्मकस्यापि तस्य सावयवतया प्रदेशविशेषाश्रयता गन्तुर्गतिरुपपद्यते। "तान्वैद्युतान् पुरुषो मानव एत्य ब्रह्मलोकान्गमयती" ति लोकशब्देन बहुवचनेन च विशेषितत्वाच्च। तद्धि भोग्ये सावयवे चोपपद्यते, न तु निर्विशेषस्वात्मभूतपरब्रह्मविषया गतिः, उदितविशेषणं वोपपद्यत इति **बादरिराचार्यो** मन्यत इति एकं पक्षमभिधाय, "परं जैमिनिर्मुख्यत्वात्," गौणमुख्यग्रहणविशये मुख्ये सम्प्रत्ययो भवति। अतो मुख्यत्वात्परमेव ब्रह्म गमयतीति गम्यते। "दर्शनाच्च" "तयोर्ध्वमायन्नमृतत्वमेतीति। न हि परब्रह्माप्तेरन्यत्रामृतत्वदर्शनमुपपद्यते। न च कार्ये प्रतिपत्त्यभिसन्धिः। प्रजापतेस्सभां वेश्म प्रपद्य इति। "आकाशो ह वै नाम नामरूपयोः निर्वहिता ते यदन्तरा तद्ब्रह्म यशोऽहं भवामि ब्राह्मणानां यशो विशामीत्येवमुभयतो। ब्रह्माभिसन्धिसंदंशात्। यश इति ब्रह्म, न तस्य प्रतिमाऽस्ति। यस्य नाम महद्यश इतिश्रुत्यन्तरात्। तत्प्रजापतेस्सभां वेश्मेति तदाधारतया **गुणवृत्त्या व्याख्येयम्**। न च परब्रह्माभिसन्धीन् कार्यं ममयतीति युक्तम्। "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती" ति तत्क्रतुन्यायविरोधात्। इति **जैमिनिराचार्यो** मन्यत इति पक्षान्तरमभिहितम्। भगवता, सूत्रकृता तत्र कार्यं गमयतीति यदि पूर्वपक्षोऽभिप्रेयेत सूत्रितं गत्युपपत्त्यादि सूत्रत एव परस्यापि गत्युपपत्तिरित्येवं समाधीयेत। तत्र तदसमाधानादिदमवगम्यते स्वयं कार्यं ब्रह्म गमयतीति, तद्गमिताऽस्तु ते तन्मात्र एव न परिनिष्ठन्ति। किं तर्हि? तद्गतेरकृत्रिमब्रह्मात्मसाक्षात्कारान्ततया परं ब्रह्मैव गमिता भवन्तीति। भाष्यकृतस्तु, सा कार्यविषयैव गतिरुपपद्यते न परविषयेति कार्यमेव गमयतीति सिद्धान्तं मन्यन्ते। न तु ब्रह्माप्त्यवसायितामपि गतेर्निषिषित्संति। कथं गम्यते? कार्यप्रतिपत्त्यभिसन्ध्यभावादेः परब्रह्मगमकोपपत्तेरपरिहारात्। अत्र ब्रह्वपि वक्तव्यं विस्तरभयात्तूपरम्यते।

---

(१) च्छायातपयोरिव इति स्यात्।

तदेवं सति ब्रह्मलोके ब्रह्मात्मसाक्षात्कारेण संसारानर्थबीजाऽविद्याविदाहे पुनर्भवाऽसम्भवा "तयोर्ध्वमायन्नमृतत्वमेति, तेषां न पुनरावृत्तिः, ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इत्यादयो वादा इति श्लिष्टम्। तथा च श्रुतिरुदाहृता – "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति। परामृतं परमात्मतत्त्वं साक्षात्कृत्येति ल्यब्लोपे पञ्चमी। स्मृतिश्च – "ब्रह्मणा सह ते सर्वे" इत्याद्या। **तथा च सूत्रकारः** – "कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात्" इति। परान्तकाले भूतसम्प्लवे कार्यस्य ब्रह्मलोकस्यात्यये तत्रोत्पन्नसम्यग्दर्शनं तदध्यक्षेण कार्यब्रह्मणा हिरण्यगर्भेण सह। अतोऽस्मात्परं शुद्धं ब्रह्मपदं प्रतिपद्यन्ते। "तयोर्ध्वमायन्नमृतत्वमेती"त्याद्यभिधानादित्यर्थः। न चेदमस्वपदव्याख्यानं, अधिकारिवाचकाध्यक्षशब्दसमभिव्याहारेण कार्यशब्दस्य तदधिकर्तव्यलोकविषयत्वोपपत्तेः। एवं "सत्यकृतं कृतात्मा ब्रह्मलोकमभिसम्भवाभिरक्षये शाश्वते ब्रह्मलोके महीयते" इत्यादौ यदि लोकविशेषविषया एवाकृतकाक्षयादिशब्दाः ते आभूतसम्प्लवस्थितिविषया एव **व्याख्येयाः**। एतदभिप्रायमेव "जनस्तपस्तथा सत्यं" इति "चाकृतकं त्रयम्" इति स्मरणम्। "अपुनर्मारका यत्र ब्रह्मलोको हि संस्मृतः" इति च। एवमिममिहेति विशेषणसामर्थ्यलभ्या वृत्तिस्तु कार्यब्रह्मविद्यादिसाध्यब्रह्मलोकगतिविषया व्याख्येया। प्राकृतत्कामस्य तत्र भोगप्रसक्तस्य ब्रह्मात्मसाक्षात्काराभावेन पुनरावृत्त्युपपत्तेरिति सर्वथैव सशरीरस्य ब्राह्मलौकिकस्य सर्वलोककामचारो भवान्तरमेवेत्युत्पश्यामः। यद्येवं कथं तर्हि "ब्राह्मेण जैमिनिरूपन्यासादिभ्यः," "परं ज्योतिपरुसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुष" इत्यत्रापहतपाप्मत्वादिसत्यसङ्कल्पादिलक्षणेन ब्राह्मेण रूपेणाभिनिष्पद्यत **इत्युच्यते**? तद्धि स्वरूपं य आत्माऽपहतपाप्मेत्याद्युपन्यासात्। "स तत्र पर्येति जक्षत्क्रीडन् रममाणस्त्रीभिर्वा स सर्वज्ञस्सर्वेश्वर" इत्यादिव्यपदेशाच्चेति। **जैमिनिराचार्यो मन्यते**। "चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः"। चितिमात्रेणेत्युक्ते आन्तर्गणिका चितिव्यावृत्तिस्स्यात्। बाह्यधर्मं व्यावर्तयितुं तन्मात्रेणेति। **एवं सति** यथा स्थूलदृशा पशुना कलिता तत्पदानर्थक्यशङ्का न भवति। कुत एवं चितितन्मात्रेणाभिनिष्पद्यत इत्युच्पते? तदात्मकत्वात्, अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव विज्ञानघन एवेत्यादिश्रुतेः। अत्र तदात्मकत्वादिति वस्तुहेतूपन्यासाद्यत्तद्रूपमुपन्यासादिभ्यः इति शब्दद्वारोपात्तं तद्रूपमिति दर्शितं भवति। स्वेन रूपेणाऽभिनिष्पद्यत इति च श्रुतिः। औडुलोमिराचार्यो मन्यते। "एवमप्युपन्यासादविरोधं बादरायणः"। सत्यं, चितितन्मात्रेणैव स्वेन रूपेणाभिनिष्पद्यतइत्युच्यते। तदात्मकत्वात्। एवमप्युपन्यासात् अपहतपाप्मेत्यादेः। पूर्वस्य ब्राह्मरूपस्य भावादविरोधमुभयरूपेणाभिनिष्पत्तेर्बादरायण आचार्यो मन्यत इति मुक्तस्य ब्राह्मरूपाभिनिष्पत्तिरुपगम्यते। **उच्यते**। एवमपीतिहि, यावदुक्तमौडुलोमिमतमनुज्ञायते। तत्र तदात्मकत्वादित्यनेन रूपान्तराभिनिष्पत्तिव्यावृत्तिरतदात्मकत्वादित्यर्थोऽनुज्ञातेति कथमविरोध उपपद्यते?

तत्रोपन्यासादिति हेतूयता भगवता सूत्रकृतेदमभिप्रेयते – चितितन्मात्रेणाभिनिष्पत्तिरित्येव वस्तुगतिः। तथाप्यपहतपाप्मत्वाद्युपन्यासः कथमपि व्यवहारापेक्षयाप्युपपदनीयः। मा भूद्वस्तुगतिरित्यविरोध इति। एवं सति यद्दहराधिकरणे, "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति। एष आत्मा ऽपहतपाप्मेत्यादिलक्षणः दहराकाशो जीवएव स्यात्। "य आत्मा ऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो ऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सो ऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्चकामान् यस्तमात्मानमनुविद्य विजानातीति प्रकृत्य "य एषो ऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, एतं त्वेव ते भूयोभूयो ऽनुव्याख्यास्यामि, य एष स्वप्ने महीयमानश्चरत्येष आत्मेतिहोवाचेत्यादे" रुत्तरात्प्रजापतिवाक्यादिति चेत् "एष सम्प्रसादो ऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इत्याविर्भूतस्वरूपोपगत्या जीवो ऽपहतपाप्मादिलक्षणो ऽभिधीयते। स च परमात्मैवेति न दहराकाशो जीव इति व्यवस्थापितम्। **यच्च तत्राह भगवान्भाष्यकारः** "यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेका ऽनर्थकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यत" इति तदपि व्यवहारापेक्षयेत्येवगमयितव्यम्। **ननु** मुक्तस्यैव व्यवहारापेक्षया ऽयं ब्रह्मरूपाभिनिष्पत्त्युपगम इत्युपपद्यते। तस्य पुनरविद्यामूलव्यवहारायोगात्। नाप्यमुक्तस्य, "ब्रह्मैवा ऽविद्यया संसरति विद्यया मुच्यत" इति सिद्धान्ते। तस्मिन्मुक्ते परस्या ऽमुक्तस्याभावादिति।

**अत्र केचिदाहुः** सन्त्यनन्ता ऽविद्याप्रतिबिम्बात्मात्मानो जीवा अनन्ताः, तत्रैकस्य विद्यया स्वयं चिति तन्मात्रस्वरूपाभिनिष्पत्तौ प्रतिबिम्बभूतजीवान्तरापेक्षया सबिम्बब्रह्मभूत इति तद्व्यवहारापेक्षया ब्रह्मरूपाभिनिष्पत्त्यविरोधवाद इति। वस्तुतस्तु अमुक्तस्यैवोपदेश्यस्योपदेशदशाव्यवहारापेक्षया ब्राह्मरूपाभिनिष्पत्तिवादः। तथाहिदहरविद्यायां "य एष आत्मा ऽपहतपाप्मे" त्यादिगुणस्सपरिकारसर्वलोककामावाप्तिफलायोपास्त उपन्यस्तः। तमेव य आत्मा ऽपहतपाप्मेत्यादिना यथावर्णितरूपमनूद्य जागराद्यवस्थातो व्युत्थापनेन प्रत्यगेकरसमुपक्षिप्य "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना आर्तो वै सशरीरः प्रिया ऽप्रियाभ्यां न ह वै सशरीरस्य सतः प्रिया ऽप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रिया ऽप्रिये स्पृशत" इत्यन्वयव्यतिरेकाभ्यां प्रागुक्तसर्वपरिकरसर्वलोककामाप्तिः संसारान्नातिरिच्यत इत्यभिप्रेत्य "एष सम्प्रसादो ऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणा ऽभिनिष्पद्यत" इति चिति तन्मात्रस्वरूपाभिनिष्पत्त्यवसायिन्युपदेशे तदुपदेश्यस्य चिति तन्मात्रेणाभिनिष्पिपादयिषितस्य प्रागधिगन्तव्यतया ऽनुसंहितं ब्राह्मरूपमिति तात्कालिकतद्व्यवहारापेक्षयैव तद्रूपाभिनिष्पत्त्यविरोधवादः। एतदेवा ऽभिप्रेत्य **संक्षेपशारीरके सर्वज्ञात्ममुनिभिरभिहितम्** – ऐश्वर्यमज्ञानतिरोहितं

सद्ध्यानादभिव्यज्यत इत्यवोचत्। शरीरिणस्सूत्रकृदस्य यत्तु तदभ्युपेत्योदितमुक्तहेतोः" ॥ इति ॥ "पराभिध्यानात्तु तिरोहितं, ततोह्यस्य बन्धविपर्ययौ," जीवस्येश्वरांशतया सदपि विज्ञानैश्वर्यादिकमविद्यया तिरोहितं सत् पराभिध्यानादञ्जनादिव दृक्शक्तिराविर्भवति। ततो हीश्वरादपरिज्ञातात् परिज्ञाताच्चाऽस्य बन्धमोक्षौ भवतः। तथा च श्रुतिः – "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयदेहभेदे विश्वैश्वर्यं केवल आप्तकामः" ॥ इति। यत्सूत्रकृदवोचत् सोऽयमभ्युपेत्यवादः। "नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाऽप्रज्ञं अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्त स आत्मा स विज्ञेयः स एष नेति नेत्यात्मा गृह्यो न हि गृह्यत" इत्याद्यशेषविशेषनिषेधवस्तुपरश्रुतिविरोधे विश्वैश्वर्यफलार्थवादस्यातत्परतया पारतन्त्र्यलक्षणानैश्वर्य-व्यावृत्तिमात्रविषयत्वस्यावश्यवाच्यत्वात्। अन्यथा कामान्नित्वकामरूपित्वसामगानजक्षणादिफल-वादतात्पर्ये सति मुक्तस्य सशरीरत्वावश्यंभावेन प्रियाप्रियसंस्पर्शानतिवृत्तेः संसारभेद एव मुक्तिस्स्यादिति सर्वमवदातम् ॥ ११८ ॥

स्यादेतत्, न सशरीरत्वप्रयुक्त एवाप्रियसंस्पर्शः, येन सशरीरस्यैव ब्राह्मलौकिकस्य सत्यकाम-सत्यसङ्कल्पस्य सर्वलोककामाप्तिलक्षणो मोक्षो भवान्तरमेव स्यात्। किं तर्हि? सैनस्त्वप्रसिद्धः युक्तः धर्मात्सुखमधर्माद्दुःखमिति हि शास्त्रव्यवस्था, पाप्मा च प्रत्यपोढो विद्यासामर्थ्यात्। तथा च सूत्रितं भगवता बादरायणेन "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति। अस्ति च तद्व्यपदेशः। उपकोसलविद्यायां तावत् "यथा पुष्करपलाश आपो न श्लिष्यन्त एवं हैवंविदि पापं कर्म न श्लिष्यत" इति। वैश्वानरविद्यायां तथेषीकातूलमग्नौ प्रोतमग्नौ प्रदूयेतैवं हाऽस्य सर्वेपाप्मानः प्रदूयन्त" इति। प्रश्ने च "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाऽक्षरेण परं पुरुषमभिध्यायीते"ति प्रकृत्य, यथा "पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मनाविनिर्मुक्त" इति। अन्यत्र च "एष नित्यो महिमा ब्राह्मणस्य, न कर्मणा वर्धते नो कनीयान्, तस्यैवाऽऽत्मा पदवित्तं विदित्वा, न कर्मणा लिप्यते पापकेने"ति। "क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावर" इत्यादिः। स्मृतिव्यपदेशश्च – "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमात्मता। सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इत्यादिः। "य आत्माऽपहतपाप्मे"ति च विद्ययाऽऽविर्भूतस्वरूप उच्यते" इति सूत्रितम्। "प्राप्यश्च ब्रह्मलोकः, सर्वे पाप्मानोऽतो निवर्तन्ते, अपहतपाप्मा ह्येष ब्रह्मलोक" इति श्रुतः। ब्रह्मलोके चाप्रियासंस्पर्शः कण्ठोक्तः। "स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेतीत्यादिः। न तत्र त्वमिति मृत्युं प्रति नचिकेतसो वचनम्। एवं सति परविद्यालक्षणपरमधर्मार्जितनिरतिशयविद्यैश्वर्यपरिकरवत एव

नचिकेतसो वचनम्। एवं सति परविद्यालक्षणपरमधर्मार्जितनिरतिशयविद्यैश्वर्यपरिकरत्वत एव हेत्वभावादनागन्धिताशिवगन्धस्सङ्कल्पमात्रोपनमदखिलकामोपभोगलक्षणो मोक्षो न भवान्तरमिति युक्तम्। प्रत्युत सुप्तिमूर्च्छावन्निस्सम्बोधात्मा चिति तन्मात्राऽवस्थितिरेव मुक्तिरित्यश्रद्धेयमित्यतः स्वात्मात्मतया परमात्मोपासनमेवादर्तव्यम्। मुधा जीवस्वरूपाऽभेदव्यपस्थापनक्लेश इतीमामाशङ्कामवर्जनीयाप्रियसंस्पर्शोपदर्शनेन परिहरन्नाह —-

यत्पारतन्त्र्यमणुमात्रमपीश दुःखं
स्वातन्त्र्यमेव परमं सुखमित्यवैमि।
सर्वेश्वरत्वमिह दुश्शकसाधनं तत्
त्वादात्म्यकेवलतया भवितुं समीहे ॥ ११९ ॥

राजराजेश्वरस्यापि हृच्चमात्योपनेयभोगक्षणप्रतीक्षायामणुमात्रमपि, अत्यल्पमपि यत्पारतन्त्र्यं पाराधीन्यं, किमुत चिन्तितनिमिषितनिश्वसितादि सकलव्यापारेषु पारतन्त्र्यमिति कैमुतिकन्यायसमुच्चयार्थोऽपिशब्दः। तद्दुःखमवैमीत्यनुषज्यते। पारतन्त्र्यतारतम्ये दुःखतारतम्यदर्शनात्, स्वातन्त्र्यमेव व्यवहारेषु स्वाच्छन्द्यमेव पारतन्त्र्यगन्धेनाप्यनागन्धितमित्येवकारार्थः। परमं निरतिशयं, काष्ठाप्राप्तम्। सुखमित्यवैमि, स्वातन्त्र्योत्कर्षे सुखोत्कर्षदर्शनात्। स्मरन्ति च "सर्वं पारवशं दुःखं सर्वमात्मवशं सुखमि"ति। तथा च शिवसूत्रं — "पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्षः" इति। अत्र ईशेति सम्बोधनं ईशपारतन्त्र्यमनीशस्य ध्रुवमिति दर्शयितुम्। ततश्च ब्राह्मलौकिकस्य मुक्तस्य सशरीरस्याऽशरीरस्य वा परमेश्वरेण परतन्त्रस्य "स स्वराड् भवती"ति श्रुतसाम्राज्यहानिः। तस्य च तेन नियन्तव्यतया, "महद्भयं वज्रमुद्यतं, भयादस्याग्निस्तपति, भयात्तपति सूर्यः, भीषास्माद्वातः पवते, भीषोदेति सूर्यः" इत्यादिश्रुतेरग्निवारवादि महादेवभीषणादीश्वरादवश्यं भेतव्यमिति। "विद्वान् न बिभेति कुतश्चन, अभयं हि वै ब्रह्म भवति, य एवं वेदे"त्यादि श्रुतिविरोधः न च विष्टेरिव दासदासपरम्परापारतन्त्र्येण विषीदतो राजराजेश्वरानुचरत्वं जीवानां मुक्तावीश्वरपारतन्त्र्यमपि भोगविशेष एवेति वाच्यं। यतो युक्तं विष्टेरन्यादृशभोगावसायितया राजराजेश्वरानुचरत्वमलब्धमेव लिप्सितमिति तल्लाभोभोगभेद एव स्यादिति। ईश्वरपारतन्त्र्यं तु "नन्तव्यः परमश्शेषी शेषानन्तार ईरिताः। नन्तृनन्तव्यभावोऽयं स्वभावादेव नान्यतः"॥ इति दर्शयतो मुक्तानामन्येषां च स्वभाव इति। अलिप्सितत्वान्नभोगान्तर्गण इत्यतो दुःखमेवेति जिहास्येत। अत एव तस्यैव विशिष्टराजराजेश्वरानुचरत्वचिरपरिचयजडस्य तदनुचरत्वहानेन तद्भावाभिलाषो दृश्यते। न च

राजराजेश्वरेण तत्प्रियकुमारइव मुक्तः परमेश्वरेणानुगृहीतः स्वराडेव भवति। तथैव स्वाच्छन्द्येऽनुज्ञानाद- नियन्तव्यतया ततो न बिभीयादपीति वाच्यम्। तथा सति मुक्ताः स्वातन्त्र्यादन्योन्यविरुद्धं सङ्कल्पयेयुः। ततश्च तत्सिद्धौ तदसिद्धौ च सत्यसङ्कल्पत्वहानिः। तथा हैरण्यगर्भाद्याधिकारिक- मण्डलेषु तत्रत्यैरेवोपकरणैरात्मेच्छया विहरतो मुक्तानजानन्तः तदधिकृता निरुन्ध्युः। मुक्ताश्च कामप्रतिघाते सति सप्रतिघास्तैस्सह विरुन्ध्युरिति लोकसम्भेदः प्रामुयात्। "परमेश्वरश्चैष सेतु र्विधरण एषां लोकानामसम्भेदाय", तत्र परेषामेव नियमने पक्षपातस्स्यादित्यतो अवश्यं तेन मुक्ता अपि मुक्तसंशयं नियन्तव्या इति पारतन्त्र्यात्तद्भयादिदुःखमवर्जनीयम्। ततश्च यदि किञ्चिदपि दुःखं पापैकफलं तर्हि पारतन्त्र्यदुःखानुरोधेनैव ससम्बन्धमुक्तौ कथं च न पापगन्धानुवृत्तिरुन्नीयताम्। विद्यया पापाश्लेषविनाशवादाश्च सगुणविद्याविषये भूयोऽभिप्राया विनीयन्तामित्यभिप्रायः। अथ मुक्ता अपि ईश्वरा एव स्युः। "स स्वराड् भवति, आप्नोति स्वाराज्यमि"तिश्रुतेरेवेत्यत आह **सर्वेश्वरत्वमिहेति**। न खलु ते परमेश्वरवदेवाऽन- न्यतन्त्राः, पृथक्पृथगीश्वराः, अनादिसिद्धेश्वरस्य सर्वेश्वरस्य श्रुतिसङ्कोचापातात्। पृथगीश्वराणां च तेषामन्योऽन्यानधीनसङ्कल्पविरोधे जगद्व्याकुलि स्यात्। न च स एव सर्वेश्वरस्ते सम्पद्यन्ते। अन्यस्य सतोऽसतो वाऽन्यभावानुपपत्तेः। घटादेर्मृद्भाव इव नभसो वा तदवच्छिन्नस्य परमनभोभाव- इव परमेश्वरभावोमुक्तानामविरुद्ध इति चेद्युक्तं, तत्र तथाकार्यावस्था विलयादुपाधिविलयाद्वा, जीवश्च नेश्वरकार्यावस्था, अनाद्यनन्तत्वात्। अन्यथा कृतहानादिप्रसङ्गात्। जीवविलये मुक्त्यपुमर्थता- प्रसङ्गाच्च। मुक्तिभागिनोऽभावादौपाधिकेश्वरविभागत्वे पुनर्जीवस्य मुक्तौ कामोपभोगाय देहेन्द्रियाद्यु- पाधिसम्बन्धकृतभेदावश्यम्भावेन सर्वेश्वरभावस्य दुस्साधत्वात्तदिदमुक्तं 'इह' कामसम्बोधात्मके मोक्षे **सर्वेश्वरत्वं दुश्शकमशक्यं, साधनं** सम्पादनं **यस्य तत्तथेति**। यस्मादेवं तस्मात् सगुणोपासनया ब्राह्मलौकिकस्य सर्वलोककामावाप्तिर्मुक्तिनुल्या, न तु मुक्तिरेव। अकृतकजीवपरस्वरूपाऽभेदसाक्षा- त्कारेण तु प्रमाणमयेन सविलासाऽविद्यापवादे चिति तन्मात्रस्वरूपाभिनिष्पत्तिरेव निरवशेषशमिताशिवं निश्श्रेयसमित्यास्थेयमित्यभिप्रायेणोपसंहरति **तत्**, तस्मात् **त्वं** प्रकाशानन्दसत्तामात्रस्वभाव आत्मा स्वरूपं यस्य स तथा, तस्य **भावस्त्वादात्म्यं**। **केवलः**, भोगैश्वर्यादिसर्वधर्मशून्यः तस्य भावः **केवलता** कैवल्यम्। त्वादात्म्येन कैवल्यतया चिति तन्मात्रस्वरूपाभिव्यक्तिलक्षणया **भवितुं समीहे** समभिलषा- मीत्यनेन निस्सम्बोधस्थितिरेषा, न पुरुषार्थ इति शङ्कां **निवारयति** — "यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदि"त्यादिश्रुतेः निर्विषयभोगसम्बोधाऽपि परमानन्दापरोक्षप्रकाशस्वभावा चिति तन्मात्रस्वरूपाभिनिष्पत्तिर्नाऽपुरुषार्थं शङ्कामर्हति। न च स्ववृत्तिसुखदुःखापरोक्षं पुरुषस्यार्थानर्थौ लोकसिद्धौ। **अन्यथा** जैवदुःखापरोक्षमर्थानर्थावीश्वरस्य भवेतामिति वाच्यम्। लाघवेन सामान्यतः सुखाऽपरोक्षत्वस्यैव पुरुषार्थत्वप्रयोजकत्वात्। विशिष्य तु जीवेशाद्विभेददशापुरुषार्थत्वप्रयोजकं

स्ववृत्तिमुखाऽपरोक्षत्वमिष्यत इत्यनतिप्रसङ्गात्। तस्मात्तादृशकैवल्यसिद्धये जीवपरस्वरूपाभेदाकृत्रिमसाक्षात्कारे महान्यत्न आस्थेय इत्यभिप्रायः ॥ ११९ ॥

**स्यादेतत्** कथमपि भावनाभेदोपायेनेश्वरभाव एव साधनीयः। यच्चित्तस्तन्मयो भवति। "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती" ति हि श्रुतिः। स्मृतिश्च – "यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः" ॥ इति। भ्रमरकीटन्यायश्च लोकसिद्धः। उपपद्यते च सर्वे हि भावविशेषास्सामान्यात्मपरिनिष्ठिताः। यथा गिरितरुपुरादिभेदाः पृथिव्येव, यथा वा सरित्समुद्रादिभेदा आपः, एवं चरस्थिरभूतभेदाः पञ्च महाभूतान्येव। तानि च तन्मात्रपरिनिष्ठितानि। तथेन्द्रियाणि बुद्धिर्मनश्च यथायथं सामान्यात्मपरिनिष्ठितान्येव। एवं जीवा अपि तदधिष्ठातारः। तत्र जीवसामान्यं हिरण्यगर्भाधिष्ठातृसामान्यमीश्वर इति। तदेवं प्रत्यगात्मनः स्वस्वपरिकरयोरकृत्रिमे परतत्परिकरतादात्म्ये भावनया साक्षात्कृते सत्यारब्धभोगावसानेऽस्मान्निरयकायात्समुत्थाय उत्क्रम्य ब्रह्मलोके परं ज्योतिरुपसम्पद्य महानिदौ निध्वंशवत् परपरिकरे स्वपरिकरैकीभावं परमव्योमनि विगतोपाधिविच्छन्ननभोवत् परमेश्वरे स्वैकीभावं चापद्य स्वेन रूपेण स्वकीयविद्यैश्वर्यपरिकरेणाभिनिष्पत्तौ आविर्भूतनिरतिशयविद्यैश्वर्यभूमानन्दानुभवे उपसम्पन्नपरञ्ज्योतिरात्मनैवाभिनिष्पत्तौ परमेश्वर एवाऽयं सम्पद्यते। तथा च श्रुतिः – "ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे, "गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु कर्माणि विज्ञानमयश्च आत्मा, परेऽव्यये सर्व एकीभवन्ती"त्याद्या। अत्र कलाः ज्ञानकर्मेन्द्रियाणि दश, पञ्च तन्मात्राश्च पञ्चदश कलाः। अथवा, इन्द्रियाणि, अन्तः करणचतुष्टयं, प्राणश्चेति पञ्चदश कलाः। प्रति प्रत्यक्प्रतिष्ठाः, गताः भगवदीयासु कलास्वैक्यं गताः देवाश्च स्वपरिकराधिष्ठातृनुग्राहकाः। "दिग्वातार्कप्रचेताऽश्विवह्नीन्द्रोपेन्द्रमृत्युका" इत्याद्युक्ताः। प्रतिदेवतासु भगवत्परिकरीयासु, कर्माणि दिव्ययोगलक्षणानि, भगवदीयेषु प्रतिकर्मस्वेकीभवंति। विज्ञानमयश्चात्मा परेऽव्यये सदाशिव एकीभवतीति। एवं सति कुतो मुक्तस्य पारतन्त्र्यगन्धोऽपि येनेदृशमुक्तेर्भवान्तरत्वशङ्कातङ्कशूकोऽपि स्यादितीमामाशङ्कां परिहरन्नाह —

यद्भौतिकं पृथगिवाऽन्यदहंग्रहात्तं
तत्सर्वमेकमिव भूतदृशाऽऽकलय्य।
सर्वेशतामिव गतस्तदहन्त्वहायं
ध्यानेन मान्त्रिक इवेश्वर तार्क्ष्यभावम् ॥ १२० ॥

**यद्भौतिकं** पञ्चभूतमयं शरीरं, **अन्यदिन्द्रियादिकम्**। "प्रजापतिर्वा इदमग्र आसीत्, स आत्मानमैक्षत, स मनोऽसृजत, तन्मन आसीत्, तदात्मानमैक्षत, तद्वाचमसृजते" त्यादिश्रुतेरिन्द्रियाणां भौतिकत्वावगमात् पृथगुपादानम्। अथवा, "अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागि" ति श्रुतेः शब्दादिग्राहकस्य श्रोत्रादेश्शब्दादिगुणकत्वेन वियदादिप्रकृतिकत्वानुमानाच्च भौतिकमित्येवेन्द्रियादि गृह्यते। तद्देहेन्द्रियादिभूतेभ्योऽन्यदिव। कार्यं हि कारणादनन्यदिति वस्तुगतिः "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति न्यायात्। अन्यत्वं तु विपर्यय इत्यभिप्रायेणेवशब्दः। ततश्च पराऽभेदयोगेनाकृत्रिमैव तद्भावाभिव्यक्तिः स्यादित्यभिप्रायः। एवं भूतमात्रतया अपृथक्स्वभावमप्यन्योन्यतः पृथगिव विच्छिद्याऽहंग्रहात्तं अहमभिमानगृहीतं, "अयमहमस्मि, एष त्वमन्य" इति पृथग्दर्शनं हि संसारहेतुः। इति **पृथगिवेत्युक्तम्**। न तथा पराहंभावः। "अहमेवेदं सर्वोऽस्मी"ति मन्यते। "सोऽस्य परमो लोकः" इति हि श्रूयते। अत्राऽन्यत्वभ्रमः पृथक्त्वभ्रमहेतुरित्युभयोपादानम्। **अहंग्रहात्तमिति**। तदुपाधिकाऽऽत्मभेदभ्रम उक्तो भवति। **तत्सर्वं** देहेन्द्रियादिकम्। **भूतदृशा,** तत्तत्सामान्यरूपदर्शनेन। **एकमिव,** अनन्यदिव, पृथगिव चाऽऽकलय्य, साक्षात्काराविधिपरिभाव्य। **तदहन्त्वहायं,** पृथग्देहेन्द्रियाद्यहमभिमानं हित्वा। पराहम्भावेन, **सर्वेशतामिव गतो** भवति। चिदात्मा खल्वस्पृष्टाहन्ताऽधिष्ठानशक्तिः केवलस्वभावोऽपि देहेन्द्रियादिसमष्टिपराहंभावेन विराट्स्वराट् सम्राट् सर्वाधिष्ठाता सर्वेश्वरो भवति। तेनोच्यते तदहन्त्वहायं, भावनामयेन पराहम्भावेन **सर्वेशतामिव गत इति**। न तु सर्वेशतामेव गतः। यतोऽधुनाप्यौपधभेदानपवादेन वस्तु सतोऽपि तादात्म्यस्य भावनामयी कृत्रिमैव खल्वभिव्यक्तिरित्यभिप्रायेण **इवशब्दः**। सत्येवौपधभेदे भावनया तदात्मभावे दृष्टान्तः गरुडादिना मन्त्रेण दीव्यति व्यवहरतीति **मान्त्रिकः**। "तेन दीव्यती" ति ठक्। **ध्यानेन,** गरुडभावनया, तार्क्ष्यभावमिव। तृक्षशब्दो गर्गादिषु पठ्यते, तस्याऽपत्यं तार्क्ष्यः **गरुडः तद्भावमिवेति**। न खलु मन्त्री गरुड एव वस्तुगत्या भवति। भावनयैव तु कृत्रिमं तादात्म्यमापद्यते, पृथगुपाध्यहंभावानपवादात्। एवमीश्वरतादात्म्यपरिभावनयापीत्येतदभिप्रायेणैवात्र **हे ईश्वरेति** सम्बोधनम्।

**अयं भावः** – "यच्चित्तस्तन्मयो भवती" त्यादि शास्त्रं तावन्न भावनयैवाकृत्रिमतादात्म्यापत्तिपरम्। सत्त्वेऽसत्त्वे वाऽन्यस्याऽन्यतादात्म्यानुपपत्तेः। किं तर्हि? कृत्रिमतादात्म्याभिमानपरिपाकादनन्यप्रत्ययवशेनाऽन्यत्वदिदेवताभावे स्वयमेव तथा परिणामादीश्वरभावे चाविर्भूताऽपहतपाप्मादिगुणैरेव तद्वद्भावादुपपादनीयम्। भ्रमरकीटन्यायश्च तथाविषय एव। कीटः खलु दृढतरभ्रमरभावनया पूर्वतनात्स्वहन्तृभ्रमरादन्यभ्रमरभावेनैव स्वयं परिणमते। न तु स एव भ्रमरः सम्पद्यत इति हि विश्वजनीनमिति यत् पुनरुपपद्यते नेत्यादि, **तत्र वदामः** – सत्यं,

सामान्यात्मपरिनिष्ठिता विशेषाः। किन्तु विशेषाऽवस्थाहानेन वा तदहानेऽपि तदेकराशितया वा तत्र न खलु मुक्तपरिकरस्य ध्वंसेन घटस्य मृदैक्यमिव परपरिकरैक्यमुपगम्यते। परमेश्वरेण सह "यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवं विदं सर्वाणि भूतान्यवन्ती" त्यादिभोगमात्रसाम्यलिङ्गात्, जगद्व्यापारवर्जमैश्वर्यं मुक्तानामणिमादिसर्वलोककामावाप्तिलक्षणं, न निरङ्कुशमैश्वर्यम्। परस्यैव "तदैक्षते" ति प्रकरणात्। मुक्तानां तत्रासन्निहितत्वाच्चेति न्यायविरोधात्। यद्धि प्रकरणं ब्राह्मणश्च यश्च सन्निधिः तदेव मुक्तस्येति घटध्वंसे नभस इव तस्यौपधभेदविगमेन तदैश्वर्यं, स एव भोग इति भोगमात्रसाम्यवादहानिरित्यतो मुक्तपरिकरस्य परपरिकरराश्येकत्वेऽभ्युपेतेऽपि स तेन चेदहमिति नोपधीयेत ससंबोधमुक्तिहानिः सुप्तिवदहमभिमानाभावे सम्बोधनानुपपत्तेः। उपधीयते चेत्स एवायमौपधभेदस्स्थित इति, इह विदुष इव मुक्तस्याऽपि भावनामयी कृत्रिमैव परतादात्म्यापत्तिरित्यतः परमेश्वरेण परवत्ता दुर्निवारैव। तत्र च प्रागुक्तो दोषः। अत एव "गताः कला" इत्यादि न मुक्तपरिकरस्य परपरिकरैकीभावे मानं। शाब्दो ह्यर्थो यथाशब्दमवगन्तव्यः। सति सम्भवे शब्दश्च "इह वा ब्रह्मलोके वाऽविद्याविनियुक्तदेहेन्द्रियादीनां कलाः प्रतिष्ठाः स्वस्वकारणानि गता इति व्यवहारदशा कारणशेषतया विलयं, इन्द्रियाधिष्ठातृत्वोपाधिना पृथगिव सतां दिग्वातादीनां देवाश्च सर्वे देवतासु प्रतिगता इति तदधिष्ठानहानेन स्वस्वरूपापत्तिं वस्तुगत्या च कर्माणि धर्मादीनि देहेन्द्रियादियोमनिमित्तानि, विज्ञानमयश्चात्मा बुद्धिमयो जीवात्मा देहादयश्च सर्वे परेऽव्यये एकीभवन्ती" ति परमात्ममात्रशेषतां च प्रतिपत्तिमात्रं बोधयतीत्युपरिप्लवदर्शिपशुव्यतिरिक्तस्य सुबोधमिति नाध्याहारेणार्थान्तराश्रयणं युक्तम्। अथ एव यथा "नद्यस्स्यन्दमानास्समुद्रायणास्समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते, एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष" इत्येवं प्रोच्यत इति। श्रुत्यन्तरं प्राणादिनामान्तकलानां परमात्मपरिशेषतामेव स्पष्टमाचष्टे। अस्तं गच्छन्ति, अदर्शनमापद्यन्त इत्यत्र नामरूपविलये हेतुरुपन्यस्यते, भिद्येते चासां नामरूपे इति। न चाऽत्र समुपसर्गोपक्षेपेण संभिद्यते एकीभवतीत्यर्थवर्णनं युक्तम्। श्रुतहानाश्रुतकल्पनायोगात्। दृष्टान्तेऽपि समुद्रोपदाना नद्यः नामरूपभेदनेन समुद्रं प्राप्यास्तं गच्छन्त्यः समुद्रापरिशेषा एव भवन्तीत्युच्यते, न तु तन्नामरूपयोः समुद्रनामरूपैकीभावः। अत एव "परेऽव्यये सर्व एकीभन्ती"- त्यनन्तरं, यथा "नद्यस्स्यन्दमाना स्समुद्रेऽस्तं गच्छन्ति नामरूपे विहायतथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि" ति नामरूपहानेनैव भेदकोपाधिविगमान्नदीनां समुद्रकेवलतेव, विदुषः परमात्मकेवलताऽभिधीयते। तस्मान्न ब्राह्मलौकिकस्य सपरिकरस्य वस्तुगत्या परमेश्वरभाव इति परमात्मकेवलताऽभिधीयते। तस्मान्न ब्राह्मलौकिकस्य सपरिकरस्य वस्तुगत्या परमेश्वरभाव इति तत्पारतन्त्र्यदुःखं दुरपह्नवमिति सत्यकामसत्यसङ्कल्पतया सर्वलोककामाप्तिलक्षणा गौणी मुक्तिरिति सिद्धम् ॥ १२० ॥

**यद्भौतिकं** पञ्चभूतमयं शरीरं, **अन्यदिन्द्रियादिकम्** । "प्रजापतिर्वा इदमग्र आसीत्, स आत्मानमैक्षत, स मनोऽसृजत, तन्मन आसीत्, तदात्मानमैक्षत, तद्वाचमसृजते" त्यादि-श्रुतेरिन्द्रियाणां भौतिकत्वावगमात् पृथगुपादानम् । **अथवा**, "अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागि" ति श्रुतेः शब्दादिग्राहकस्य श्रोत्रादेश्शब्दादिगुणकत्वेन वियदादिप्रकृति-कत्वानुमानाच्च भौतिकमित्येवेन्द्रियादि गृह्यते । तद्देहेन्द्रियादिभूतेभ्योऽन्यदिव । कार्यं हि कारणादनन्यदिति वस्तुगतिः "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति न्यायात् । अन्यत्वं तु विपर्यय इत्यभिप्रायेणेवशब्दः । ततश्च पराऽभेदयोगेनाकृत्रिमैव तद्भावाभिव्यक्तिः स्यादित्यभिप्रायः । एवं भूतमात्रतया अपृथग्भावमप्यन्योन्यतः पृथगिव विच्छिद्याऽहंग्रहात्तं अहमभिमानगृहीतं, "अयमहमस्मि, एष त्वमन्य" इति पृथग्दर्शनं हि संसारहेतुः । इति **पृथगिवेत्युक्तम्** । न तथा पराहंभावः । "अहमेवेदं सर्वोऽस्मी"ति मन्यते । "सोऽस्य परमो लोकः" इति हि श्रूयते । अत्राऽन्यत्वभ्रमः पृथक्त्वभ्रमहेतुरित्युभयोपादानम् । **अहंग्रहात्तमिति** । तदुपाधिकाऽऽत्मभेदभ्रम उक्तो भवति । **तत्सर्वं** देहेन्द्रियादिकम् । **भूतदशा**, तत्तत्सामान्यरूपदर्शनेन । **एकमिव**, अनन्यदिव, पृथगिव चाऽऽकलय्य, साक्षात्कारावधिपरिभाव्य । **तदहन्त्वहायं**, पृथग्देहेन्द्रियाद्यह-मभिमानं हित्वा । पराहम्भावेन, **सर्वेशतामिव गतो** भवति । चिदात्मा खल्वस्पृष्टाहन्ताऽधिष्ठान-शक्तिः केवलस्वभावोऽपि देहेन्द्रियादिसमष्टिपराहंभावेन विराट्स्वराट् सम्राट् सर्वाधिष्ठाता सर्वेश्वरो भवति । तेनोच्यते तदहन्त्वहायं, भावनामयेन पराहम्भावेन **सर्वेशतामिव गत इति** । न तु सर्वेशता-मेव गतः । यतोऽधुनाप्यौपधभेदानपवादेन वस्तु सतोऽपि तादात्म्यस्य भावनामयी कृत्रिमैव खल्वभि-व्यक्तिरित्यभिप्रायेण **इवशब्दः** । सत्येवौपधभेदे भावनया तदात्मभावे दृष्टान्तः गरुडादिना मन्त्रेण दीव्यति व्यवहरतीति **मान्त्रिकः** । "तेन दीव्यती" ति ठक् । **ध्यानेन**, गरुडभावनया, तार्क्ष्य-भावमिव । तृक्षशब्दो गर्गादिषु पठ्यते, तस्याऽपत्यं तार्क्ष्यः **गरुडः तद्भावमिवेति** । न खलु मन्त्री गरुड एव वस्तुगत्या भवति । भावनयैव तु कृत्रिमं तादात्म्यमापद्यते, पृथगुपाध्यहंभावानपवादात् । एवमीश्वरतादात्म्यपरिभावनयापीत्येतदभिप्रायेणैवात्र **हे ईश्वरेति** सम्बोधनम् ।

**अयं भावः** – "यच्चित्तस्तन्मयो भवती" त्यादि शास्त्रं तावन्न भावनयैवाकृत्रिमतादात्म्या-पत्तिपरम् । सत्त्वेऽसत्त्वे वाऽन्यस्याऽन्यतादात्म्यानुपपत्तेः । किं तर्हीह कृत्रिमतादात्म्याभिमान-परिपाकादनन्यप्रत्ययवशेनाऽन्यतदिदेवताभावे स्वयमेव तथा परिणामादीश्वरभावे चाविर्भूता-ऽपहतपाप्मादिगुणैरेव तद्भावादुपपादनीयम् । भ्रमरकीटन्यायश्च तथाविषय एव । कीटः खलु दृढतरभ्रमरभावनया पूर्वतनात्स्वहन्तृभ्रमरादन्यभ्रमरभावेनैव स्वयं परिणमते । न तु स एव भ्रमरः सम्पद्यत इति हि विश्वजनीनमिति यत् पुनरुपपद्यते नेत्यादि, **तत्र वदामः** – सत्यं,

सामान्यात्मपरिनिष्ठिता विशेषाः। किन्तु विशेषाऽवस्थाहानेन वा तदहानेऽपि तदेकराशितया वा तत्र न खलु मुक्तपरिकरस्य ध्वंसेन घटस्य मृदैक्यमिव परपरिकरैक्यमुपगम्यते। परमेश्वरेण सह "यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवं विदं सर्वाणि भूतान्यवन्ती" त्यादिभोगमात्रसाम्यलिङ्गात्, जगद्व्यापारवर्जमैश्वर्यं मुक्तानामणिमादिसर्वलोककामावाप्तिलक्षणं, न निरङ्कुशमैश्वर्यम्। परस्यैव "तदैक्षते" ति प्रकरणात्। मुक्तानां तत्रासन्निहितत्वाच्चेति न्यायविरोधात्। यद्धि प्रकरणं ब्राह्मणश्च यश्च सन्निधिः तदेव मुक्तस्येति घटध्वंसे नभस इव तस्योपधभेदविगमेन तदैश्वर्यं, स एव भोग इति भोगमात्रसाम्यवादहानिरित्यतो मुक्तपरिकरस्य परपरिकरराश्येकत्वेऽभ्युपतेऽपि स तेन चेदहमिति नोपधार्येत ससंबोधमुक्तिहानिः सुप्तिवदहमभिमानाभावे सम्बोधनानुपपत्तेः। उपधीयते चेत्स एवायमौपधभेदस्स्थित इति, इह विदुष इव मुक्तस्याऽपि भावनामयी कृत्रिमैव परतादात्म्यापत्तिरित्यतः परमेश्वरेण परवत्ता दुर्निवारैव। तत्र च प्रागुक्तो दोषः। अत एव "गताः कला" इत्यादि न मुक्तपरिकरस्य परपरिकरैकीभावे मानं। शाब्दो ह्यर्थो यथाशब्दमवगन्तव्यः। सति सम्भवे शब्दश्च "इह वा ब्रह्मलोके वाऽविद्याविनियुक्तदेहेन्द्रियादीनां कलाः प्रतिष्ठाः स्वस्वकारणानि गता इति व्यवहारदशा कारणशेषतया विलयं, इन्द्रियाधिष्ठातृत्वोपाधिना पृथगिव सतां दिग्वातादीनां देवाश्च सर्वे देवतासु प्रतिगता इति तदधिष्ठानहानेन स्वस्वरूपापत्तिं वस्तुगत्या च कर्माणि धर्मादीनि देहेन्द्रियादियोमनिमित्तानि, विज्ञानमयश्चात्मा बुद्धिमयो जीवात्मा देहादयश्च सर्वे परेऽव्यये एकीभवन्ती" ति परमात्ममात्रशेषतां च प्रतिपत्तिमात्रं बोधयतीत्युपरिप्लवदर्शिपशुव्यतिरिक्तस्य सुबोधमिति नाध्याहारेणार्थान्तराश्रयणं युक्तम्। अथ एव यथा "नद्यस्स्यन्दमानास्समुद्रायणास्समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते, एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष" इत्येवं प्रोच्यत इति। श्रुत्यन्तरं प्राणादिनामान्तकलानां परमात्मपरिशेषतामेव स्पष्टमाचष्टे। अस्तं गच्छन्ति, अदर्शनमापद्यन्त इत्यत्र नामरूपविलये हेतुरुपन्यस्यते, भिद्येते चासां नामरूपे इति। न चाऽत्र समुपसर्गोपक्षेपेण संभिद्यते एकीभवतीत्यर्थवर्णनं युक्तम्। श्रुतहानाश्रुतकल्पनायोगात्। दृष्टान्तेऽपि समुद्रोपदाना नद्यः नामरूपभेदनेन समुद्रं प्राप्यास्तं गच्छन्त्यः समुद्रापरिशेषा एव भवन्तीत्युच्यते, न तु तन्नामरूपयोः समुद्रनामरूपैकीभावः। अत एव "परेऽव्यये सर्व एकीभन्ती"त्यनन्तरं, यथा "नद्यस्स्यन्दमाना स्समुद्रेऽस्तं गच्छन्ति नामरूपे विहायतथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि" ति नामरूपहानेनैव भेदकोपाधिविगमान्नदीनां समुद्रकेवलतेव, विदुषः परमात्मकेवलताऽभिधीयते। तस्मान्न ब्राह्मलौकिकस्य सपरिकरस्य वस्तुगत्या परमेश्वरभाव इति तत्पारतन्त्र्यदुःखं दुरपह्नवमिति सत्यकामसत्यसङ्कल्पतया सर्वलोककामाप्तिलक्षणा गौणी मुक्तिरिति सिद्धम् ॥ १२० ॥

एवमुपासनया ब्रह्मलोके सत्यकामसत्यसङ्कल्पादिस्वरूपाभिनिष्पत्तौ सर्वलोककामभोगलक्षण-सम्बोधे देहेन्द्रियादिपरिकरपरिग्रहावश्यंभावेन यथापुरमौपधभेदस्थितौ परमेश्वरभावो दुस्साध इति तत्पारतन्त्र्यदुःखशबला विषयसम्बोधलक्षणा मुक्तिर्गौणी, न परममुक्तिरिति स्थितम्। इदानीमस्तु वा सुसाधः प्रयत्नविशेषेण, सर्वेश्वरभाव इति प्रौढवादेनाऽभ्युपेत्य स एवत्वायासबहुलतया अनीश्वर-भावइव मुमुक्षोरनपेक्षणीय इत्यतः कैवल्याय निर्विशात्मतादात्म्यज्ञाने महान्यत्न आस्थेय इत्यभिप्रायेणाह —

ईशापि च श्रमफला परमीशितव्य-
भेदव्यवस्थितिविशेषविमर्शरूपा ।
एतां विहाय सहसोऽहमनीशयेश,
त्वादात्म्यमेव दृशिमात्रतयाऽवलम्बे ॥ १२१ ॥

"स्त्रियां भावे गुरोश्च हलः" इति ईष्टेरप्रत्यये टापि रूपं **ईशेति**। **अपिचेति** निपातसमुदायः। दृष्टान्ततया प्रागुक्तपारतन्त्र्यलक्षणाऽनीशासमुच्चयार्थः। तथाचानीशेनेशापि च। **श्रमफला, परं,** आयासफलैव केवलम्। कुतः? लोके यावद्यावदीश्वरतोत्कर्षः, यथा ग्रामेश्वरान्नगरेश्वरस्य, ततोऽपि मण्डलेश्वरस्य तावत्तावदायासोत्कर्षदर्शनात्। तत्र सम्भवतोऽपि सुखस्येहबिन्दोर्दुःखानलोद्दीपकतया तद्भूयिष्ठत्वावगमात्। दृश्यते हि राजराजेश्वता प्रकृतिरञ्जन-दण्ड्यदण्डनकण्डकोद्धरणादिबहुव्यापाररूपा श्रमफलेति। **तथा च लिङ्गम्** — "राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः। परिश्रान्तोऽसिलोकस्य गुर्वीं धर्मधुरां वहन्" ॥ इति। इत्यभिप्रेत्यहेतुगर्भं विशेषणमाह — **ईशितव्यभेदानां**, लोकलोकिनां, **व्यवस्थितिविशेषस्य**, स्वर्गस्सुखप्रायः, निरयो दुःखमयः, सुकृतस्स्वर्गिणः, दुष्कृतो नारकिणः, सत्याहिंसादि सर्वेषां सुकृतं, अनृतहिंसादि दुष्कृतं सोमपानं ब्राह्मणानां सुकृतं, सुरापानं दुष्कृतम्। एवमन्येषामन्यत्सुकृतं अन्यद्दुष्कृतमित्येवमादिमर्यादा-भेदस्य **विमर्शो**ऽन्ववेक्षा **तद्रूपे सति**। यत **एवंरूपा ईशा,** अतः **श्रमफलेति योजना**। ईश्वरस्य ईक्षातिरिक्तयत्नाभावाद्विमर्शरूपा ईशेत्युक्तम्। अथापि यदि नातोऽतिरिक्तानिर्गलितविश्व-सर्गाद्या या सा गतिः स्यात्, **उपवासाद्वरं भिक्षेति** न्यायादियमेव गतिरालम्ब्येत। अस्ति तु सा चिति तन्मात्रस्वरूपाभिनिष्पत्तिलक्षणेत्यभिप्रेत्याह **एतां**, उपपादितदोषां। **अनीशया,** सर्वलोक-कामावाप्तावपि अनुगतया, सह आयासबहुलतया हातव्यतायां सहभाव उक्तः। **विहाय,** विशेषेण हित्वा, अप्राप्तस्य स्वरूपतो हान्ऽयोगादनपेक्ष्येत्यर्थः। अविदितगृहकृत्यायासस्य मातुः

प्रियस्येवाऽनीशाया अपि कामोपभोगबहुला या ईशैव विशिष्य ह्यातव्येति **विशब्दोपादानम्।** **सोऽहं ईशादिदोषदर्शी मुमुक्षुः, दृशिमात्रतया। त्वादात्म्यमेवावलम्बे।** अत्र जीवेश्वरतादात्म्यानुपपत्तिशङ्कानिरासाय दृशिमात्रतयेति विशेषणम्। मात्रशब्देनाऽहम्भावादेर्नियन्तृभावादेश्च व्यावृत्तिः। तद्भावेहि तयोरन्तर्बहिराकाशयोरिव तादात्म्यानुपपत्तिः। विगलितोपाधेस्तु तादात्म्यमेवेत्यभिप्रायः। मुक्तौ ब्रह्मरूपाभिविष्पत्तिरपि वास्तवीति पक्षव्यावृत्त्यर्थः त्वादात्म्यमेवेत्येवकारः। **यथा चैतत्तथा पुरस्तादेव व्याख्यातम्।** निश्रेयसीतः स्खलनप्रसङ्गेन ब्रह्मलोकाप्त्यादिपतयालुप्रत्नभित्तिहस्तन्यासो न युक्त इत्यभिप्रेत्य त्वादात्म्यमेवावलम्ब इत्युक्तम्। तत्र "को मोहः कश्शोक एकत्वमनुपश्यतः। आत्मानं चेद्विजानीयात्, अयमस्मीति पूरुषः, किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेत्, अशरीरं शरीरेष्वनवस्थेष्ववस्थितं, महान्तं विभुमात्मानं मत्वा धीरो न शोचति," इत्यादिश्रुतिषु तादात्म्यज्ञानस्यैव कैवल्यहेतुत्वावगमादित्यभिप्रायः। अयं चैकात्म्ययोगः परमेश्वरानुग्रहेणैव लभ्य इति ईशेति सम्बोधनेन दर्शयति।

**अथ** कथमौपधभेदेऽपरोक्षे जीवपरयोरकृत्रिमस्तादात्म्यानुभवः? यः परामृतत्वहेतुरुपगम्यते। औपधभेदस्य मिथ्यात्वेन बाधात्तदनुभवस्यादिति चेत् बाधो हि मिथ्यात्वनिश्चयो वास्यात्तद्विरोधिविषयानुभवो वा? तत्र यौक्तिकौपदेशिकमिथ्यात्वनिश्चयेऽपि दिङ्मोहे दिक्तत्वानुभववदौपधभेदापरोक्षभ्रमे जीवपरतादात्म्यानुभवस्यायोगात्। अत एव तद्भेदमिथ्यात्वापरोक्षासम्भवः। विषयतत्त्वाभेदापरोक्षानतिरेकात्। भेदापरोक्षे च तदपरोक्षासम्भव उक्तः। **नन्वारोहपरिणाहवद्वस्तुतत्वापरोक्षमनपेक्ष्यैव नायं स्थाणुरिति तन्मिथ्यात्वापरोक्षं सार्वजनीनं।** किन्तु तत्र शिलावल्मीकादिप्रकारान्तरसम्भवात्, प्रमाणवैकल्यात्, पुरुषतत्वापरोक्षं नोपजायते। प्रकृते पुनस्तथैव तादात्म्यापरोक्षमनपेक्ष्यैव तदौपधभेदमिथ्यात्वापरोक्षे तत्प्रमाणपौष्कल्यात् तदपरोक्षानुभवउपपद्यत **इति चेन्न,** सत्युपाधौ प्रतिबिम्बद्विचन्द्रादिवदौपधभेदस्यापवादापरोक्षायोगात्, उपाधेरपि मिथ्यात्वे तदपवादापरोक्षं युज्यत इति चेद्धन्त, कथमपरिकरस्य तादात्म्यापरोक्षानुभवउपजायताम्। तस्मात्सपरिकरस्यौपधभेदापरोक्षे सति कृत्रिम एव जीवपरतादात्म्यानुभव इति वाच्यम्। ततश्चतेन स्वरूपकैवल्यानुपपत्तिरिति चेत् तत्किं तत्त्वमसीत्यादितादात्म्यज्ञानफलोपदेशं "को मोहः कश्शोक एकत्वमनुपश्यत" इत्यादिकं तत्फलार्थवादं चानर्थयितुमध्याहारादिभिरन्यार्थयितुं वाऽध्यवसितोऽसि। नैवमध्यवसितोऽस्मि, उपपत्तिं च पृच्छामीति चेदुच्यते – अस्ति तावद्भिक्षुकस्य तदभिमानहानेन स्वप्ने महाराजमानिनस्तदुचितान्तरपरिकरौपाधिकभिक्षुकभेदापरोक्षे सति तद्बाधेनैव भिक्षुतादात्म्यानुभवात्मा जागरः सार्वजनीनः। एवं जीवाभिमानोचितपरिकरौपधभेदबाधेनैवागमादात्मतादात्म्यानुभव उपपद्यताम्। तत्र निद्रया भिक्षुतादात्म्यानवबोधस्वाप्नपरिकरतदुपधिकभेदापरोक्षभ्रमहेतुर्जागरेणापोद्यत

इति चेत् अत्राप्यनाद्यविद्यया ऽऽत्मतादात्म्यानवबोधो जाग्रदादिपरिकरतदुपधिकभेदापरोक्षभ्रममूल-हेतुरागमिकात्मतादात्म्यानुभवेनापोद्यतामिति तुल्यम् । **नन्वितः** प्रागात्मतादात्म्यानुभवो यदि कस्या ऽपि नासीत्कथमस्माकं भूयादिति शास्त्रानाश्वासः ? अथ कस्यचिदासीत्तेनैवात्माविद्या ऽपोदितेति नेदानीं संसारउपलभ्येत । अविद्यानानात्वेन कस्यचिद्विद्यया, कस्याश्चिदविद्यायामपोदितायां अप्य-विद्यान्तरेणा ऽधुना संसारोपलब्धिस्स्यादितिचेन्न, अविद्यानानात्वमपि हि आत्माविद्यामूलमिति, तद्विद्यया तदपवादे सर्वापवादापातात् । अन्यथा अविद्यानानात्ववास्तवत्वे तद्धर्मिण्या ऽविद्याया विद्यापवाद्यत्वायोगात् । **अथ** तत्तदविद्यैवात्माविद्या तन्नानात्वमपि तत्स्वरूपान्नातिरिच्यते, **हन्त तर्हि** विद्यावन्तो ऽन्ये ऽन्ये तद्विषयश्चात्मा ऽन्यः पर इति कुतस्तादात्म्यानुभवो ऽविद्यापवादात्मा सम्पद्यताम् । अथ स एवात्मा तया तया ऽविद्यया ऽन्या ऽन्यइत्यवगम्यत इति चेद्यस्य तद्दर्च विद्या तस्यैव विद्या, यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति स इति न्यायादित्यतः सर्वाविद्याबाधे सैवेदानीं संसारो-पलब्ध्यनुपपत्तिरिति चेत् **उच्यते** – सर्वं हि वृत्तिमद्वस्तु स्ववृत्त्यवच्छिन्नभिन्नाश्रयमिति स्थितमन्यत्र । तथा चाविद्या तमेवात्मानं स्ववृत्त्यवच्छिन्नजीवरूपमाश्रित्य विषयीकरोति नभइव तमः इत्यतो यस्तदविद्याश्रयः तस्यैव तदविद्यापवादेन तादात्म्यानुभवस्य पराविद्यया संसारोपलब्धेश्च नानुपपत्तिः । वस्तुतस्तु "अविद्यया बन्धः विद्ययामोक्ष" इत्येतावानेव **शास्त्रार्थः** । "अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः ॥ अविद्यायां बहुधा वर्तमानाः वयं कृतार्था इत्यभिमन्यन्ति बालाः । कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य : निचाय्य तं मृत्युमुखात्प्रमुच्यत" **इत्यादिलिङ्गात्** । तत्रैवं सति प्रागिता ऽविद्या विद्ययाऽपोदिताऽऽसीन्न-वेति वितर्को मनश्श्रमोदर्क एव । "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां तथा मनुष्याणां" इत्यादिवादाश्च बोध्यबुध्यनुरोधेन प्ररोचनया विद्यासाधनप्रवर्तनफला एव केवलं, न यथार्थबोधनपरा एव, फलाभावात् । **इत्यन्यत्र विस्तर** इति सर्वमवदातम् ॥ १२१ ॥

एवं जीवपरतादात्म्यनिरूपणानर्थक्यसमाधानमिषेण तावदिदमवस्थितम् – परामृतहेतोरात्म-तादात्म्यानुभव एव परमात्मनः परमं संश्रयणमिति । तत्रा ऽशान्तदर्पस्यान्तस्यापेक्षणीयो योग इत्युक्तम् । अध्यात्मयोगेनेत्यादिश्रुतिस्मृत्युदाहरणदर्शनेन । स च योगो लक्षितः श्रुतौ । "यदा पञ्चाऽवतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्" तत्साधनमित्यर्थः । "निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि । यदा यात्यात्मनो भावं तदा तत्परमं पदमि" ति श्रुत्यन्तरात् । "तां योगमिति मन्यन्ते स्थिरां इन्द्रियधारणाम् ।

अप्रमत्तस्तदा भवती" ति योगेऽप्रमादो विधीयते। तत्र हेतुः – "योगो हि प्रभवाऽप्ययौ," यतोऽप्रमादे प्रभवति, प्रमादे चाप्येति। अतोऽध्यात्मयोगेऽप्रमत्तो भवेदित्यर्थः। अयमसौ सूत्रितश्च भगवता पतञ्जलिना "योगश्चित्तवृत्तिनिरोध" इति। तस्य च यमनियमासनप्राणायाम-प्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि। तत्र त्रयमन्तरङ्गं पूर्वेभ्यः। पुराणेष्वप्ययमर्थ उक्तः। "आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः। तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते"॥ इति। आत्मप्रयत्नः प्रत्याहारान्तः, विशिष्टा मनोगतिः धरणादिः। अन्तरङ्गबहिरङ्गभेदेन, विभज्यवादः। तत्र धारणादिकं त्रयमेकत्र संयम इति सविषयत्वाद्विशिष्टविषयसमर्पणं ब्रह्मणीति। अहिंसासत्या-ऽस्तेयब्रह्मचर्याऽपरिग्रहा यमाः। शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः। फलसन्यासेन सर्वक्रियाणामीश्वरे समर्पणमीश्वरप्रणिधानम्। स्थिरसुखमासनम्। "गुल्फौ च वृषणस्याधः सीविन्याः पार्श्वयोः क्षिपेत्। पार्श्वपादौ च बाहुभ्यां दृढं बद्ध्वा सुनिश्चलम्॥ भद्रासनं भवेदेतत्सर्वव्याधिविषापहम्। जानूर्वोरन्तरे कृत्वा सम्यक् पादतले उभे ऋजुकायस्सुखासीनः स्वस्तिकं तत्प्रचक्षते"॥ इत्यादिलक्षितं भद्रस्वस्तिकादि। **तथा च श्रुतिः** – "विविक्तदेशे च सुखासनस्थः शुचिस्समग्रीवशिरश्शरीर" इति। तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः। श्रुतिश्च "प्राणान् प्रपीड्येह सुयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसितः। दुष्टाश्वयुक्तमिव वाहमेनं विद्वन्मनो धारयेताऽप्रमत्तः"॥ इत्यादिः। ततः क्षीयते प्रकाशावरणं दुश्चरितरतिहेतुः कर्मज्ञानावरणम्। **तथाहि श्रूयते** – "यथा पर्वतधातूनां दह्यन्ते धमतां मलाः। तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात्"॥ इति। "न तपः परं प्राणायामात्" इति हि स्मरन्ति। अपि च धारणासुयोग्यता मनसः स्वस्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः चित्तानुरोध एव। न त्विन्द्रियानुरोधः चित्तस्येत्यर्थः। **यथोक्तमीश्वरेण** – इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥ इति। ततः परमा वश्यतेन्द्रियाणाम्। शब्दादिविषयेष्वव्यसनं वश्यतेत्येके। स्वेच्छया शब्दादिसम्प्रयोग इत्यन्ये। रागद्वेषाभावे सुखदुःखशून्यं माध्यस्थ्येन शब्दादिज्ञानमित्यपरे। **यथैतदुक्तमीश्वरेण** – "इन्द्रि-यस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ। तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ"॥ इति। "रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति"॥ इति च। "चित्तैकाग्र्यादप्रतिपत्तिरेव शब्दादेरि"ति जैगीषव्यः। "देशबन्धश्चित्तस्य धारणा"। अभिमतविषये चित्तबन्धनमित्यर्थः। तत्र "प्रत्ययैकतानता ध्यानं," धारणालम्बने प्रत्ययस्यैक-तानताऽनन्यवृत्तिता प्रत्ययान्तरानन्तरितसदृशप्रत्ययप्रवाह इत्यर्थः। तदिदमेव "शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणाम" इति सूत्रितम्। पूर्वोत्तरप्रत्ययौ तुल्यविषयावित्यर्थः। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। **अयमेव** सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य

समाधिपरिणाम इति सूत्रितः। सर्वार्थतायाः नानाविषयताया इत्यर्थः। यदिदमन्तरङ्गमुक्तं धारणादि तदपि बहिरङ्गं निर्बीजस्य। इत्येवमष्टाङ्गयोगः। यमादयश्च पुराणेऽनुक्रान्ताः – "ब्रह्मचर्यमहिंसा च सत्याऽस्तेयाऽपरिग्रहान्। सेवेत योगी निष्कामः योग्यतां स्वमनो नयन्॥ स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः॥ एते यमाः सनियमाः पञ्च पञ्च च कीर्तिताः। विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः"॥ अत्र निष्काम इति नियतात्मवानिति च विशेषणं, अहिंसादिनिबन्धनसिद्धिषु सङ्कसंयापादिकासु कामो न कर्तव्यो मुमुक्षुणेत्युपदेशार्थम्। अहिंसादिसिद्धयश्च सूत्रिताः। तत्सन्निधौ वैरत्यागः अहिनकुलादीनां अविक्रिया फलाशावित्वं, धार्मिको भूयाः स्वर्गमाप्नुहीत्येवममोघवाक्यत्वमित्यर्थः। सर्वरत्नोपस्थानं, सर्वदिक्कान्यस्योपतिष्ठन्ते रत्नानि. वीर्यलाभः वीर्यमुत्साहः, जन्मकथन्तासम्बोधः कोऽहमासं, कथमासमित्येवं जातिस्मरत्वमित्यर्थः। एता यमस्थैर्यसिद्धयः। शौचात्स्वाङ्गजुगुप्सापरैरसंसर्गश्च, सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च। सन्तोषादनुत्तमः सुखलाभः अलम्बुद्धिरतृष्णासन्तोषः यत्रेदमुक्तम् – "यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्"॥ इति। कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः कायसिद्धिः अणिमाद्या, इन्द्रियसिद्धिः दूरश्रवणाद्या। स्वाध्यायादिष्टदेवतासम्प्रयोगः, देवा ऋषयो वाऽस्य दर्शनं गच्छन्ति। कार्ये च वर्तन्तइत्यर्थः। समाधिसिद्धिरीश्वरप्रणिधानात् सिद्धसमाधेश्च स्वार्थपरार्थसंयमात् पुरुषज्ञानं। बुद्धिसत्वपरिणामभेदोभोगः परार्थः दृश्यत्वात्, पुरुषस्य भोक्तृशेषः, तस्मात्परार्थात् जडसुखादिप्रत्ययरूपादन्यः। तत्र चित्प्रतिबिम्बस्स्वार्थः अनन्यशेषः। तत्र संयमात् पुरुषसाक्षात्कारो भवतीत्यर्थः। परार्थादिति पञ्चमीपाठे तस्मादिति नाध्याहारक्लेशः। ततः "प्रातिभश्रावणवेदनादर्शनास्वादवार्ता जायन्ते," प्रातिभं विवेकज्ञानात्पूर्वरूपम्। यथा भास्करस्योदयात्प्राक् प्रभा। यत्तारकमाचक्षते योगिनः, तेन सूक्ष्मं व्यवहितं विप्रकृष्टमतीतमनागतमित्येवंजातीयकं सर्वं जानाति। यत्सूत्रितं "तारकं सर्वविषयं सर्वथाऽविषयमक्रमं च विवेकजं ज्ञानमि"ति। श्रावणाद्दिव्यशब्दश्रवणं, वेदनाद्दिव्यस्पर्शाधिगमः, आदर्शनाद्दिव्यरूपदर्शनं, आस्वादाद्दिव्यरससंवित्, वार्तातो दिव्यगन्धज्ञानमिति। "ते समाधावुपसर्गा व्युत्थाने सिद्धयः" व्युत्थितचित्तस्य सिद्धय एताः। तत्त्वज्ञाने यतमानस्य समाधावन्तरायाः युञ्जानस्य हि योगारम्भे प्राग्धारणातः, "व्याधिसस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपा योगान्तरायाः"। धारणातः प्रातिभाद्या उपसर्गाः, यथा वायुसंहितायां – "आलस्यं व्याधयस्तीव्राः प्रमादोऽस्थानसंशयाः। अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम्। दुःखानि दौर्मनस्यं च विषयेषु च लोलता॥ दशैते युञ्जतां पुंसामन्तरायाः प्रकीर्तिताः। शान्तेष्वेतेषु विघ्नेषु योगासक्तस्य योगिनः॥ उपसर्गाः प्रवर्तन्ते दिव्या षट्

सिद्धिसूचकाः। प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः ॥ सूक्ष्मे चान्तर्हितेऽतीते विप्रकृष्टेऽप्यनागते। प्रतिभा कथ्यते योऽर्थे प्रतिभासो यथातथम् ॥ श्रवणं सर्वशब्दानां श्रवणं चाप्रयत्नतः। वार्ता वार्तासु विज्ञानं सर्वेषामेव देहिनाम् ॥ दर्शनं नाम दिव्यानां दर्शनं चाऽप्रयत्नतः। तथा स्वादश्च दिव्येषु रसेष्वास्वाद उच्यते ॥ स्पर्शनाधिगमस्तद्वद्वेदना नाम विश्रुता। गन्धादीनां च दिव्यानां आब्रह्मभवनावधि" ॥ इति। तदा सङ्गो योगिनः मोक्षविरोधीति च वायूक्तौ दर्शितम्। "प्रतिभादिष्वशुद्धेषु गुणेष्वासक्तचेतसाम्। न सिद्ध्येत्परमैश्वर्यं अक्षयं सर्वकामिकम्" ॥ इति। तस्माद्युक्तं विशेषणम् — यमान्सेवेत निष्कामो नियमान्नियतात्मवान्"। इति। "एकं भद्रासनादीनां समास्थाय गुणैर्युतः। यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥ प्राणाख्यमनिलं वश्यमभ्यासात्कुरुते तु यत्। प्राणायामस्स विज्ञेयस्सबीजोऽबीज एव च" ॥ स चायमभ्यासस्सूत्रितः **पतञ्जलिना** — "बाह्याऽभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घस्सूक्ष्मः"। इति। बाह्यवृत्तिः रेचकः, आभ्यन्तरवृत्तिः पूरकः, स्तम्भवृत्तिः। कुम्भकः। **यथोक्तम्** — "प्राणस्स्वदेहजो वायुरायामस्तन्निरोधनम्। तद्रेचकं पूरकं च कुम्भकं च त्रिधोच्यते" ॥ इति। **प्रपञ्चसारे च** — "रेचकपूरककुम्भकभेदात्त्रिविधः प्रभञ्जनायामः"। इति। तत्र नासाग्रादुद्बहिर्द्वादशाङ्गुलपर्यन्ते श्वासस्समाप्यत इति स्वभावगतिः। रेचकाऽभ्यासेन तु चतुर्विंशतिषट्त्रिंशदङ्गुलिपर्यन्ते समाप्यते। तथा नासाग्रादन्तर्हृदयोदरपर्यन्ते प्रश्वासस्समाप्यत इति स्वभावः। पूरकाभ्यासेन तु नाभिमूलाधारपर्यन्ते समाप्यत इति। देशातः परिदृष्टिः एषा देशव्याप्तिपरीक्षा, न कुम्भकस्य समस्ति अनुस्यूतता। त्रिष्वपि रेचकपूरककुम्भकेषु प्रणवस्यवाऽन्यस्य वा मन्त्रस्य दशविंशतिस्त्रिंशदित्यादिभिरावृत्तिभिः कालतः परिदृष्टिः। यत्तेदमुक्तम् — "मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः। मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्र उत्तमः ॥ प्रस्वेदकम्पनोत्थानजनकास्ते यथाक्रमम्"। इति। एकस्मिन्दिने विंशतिस्त्रिंशदित्यादिकया संख्यया परिदृष्टिः। अयं चाऽभ्यासो **हठप्रदीपिकायामुक्तः**। "प्रातर्मध्यन्दिने सायमर्धरात्रे च कुम्भकान्। शनैरशीतीपर्यन्तं चतुर्वारं समभ्यसेत्" इति। एवं परिदृष्टो दीर्घस्सूक्ष्मश्च भवति। अधिकदेशकालव्याप्तिर्दैर्घ्यम्। दुर्लक्षता सौक्ष्म्यमिति। सबीजस्सगर्भः सालम्बनो मन्त्रजपः भगवन्मूर्तिध्यानादियुक्तः। विपरीतोऽबीजः। "अगर्भश्च सगर्भश्च प्राणायामो द्विधा मतः। जपध्यानं विनाऽगर्भस्सगर्भस्तत्समन्वयात् ॥ अगर्भाद्गर्भसंयुक्तः प्राणायामश्शताधिकः"। इति हि उक्तम्। **यथा दक्षः** "आधानं रोधमुत्सर्गं वायोस्त्रिस्त्रिस्समभ्यसेत्। ब्रह्माणं केशवं रुद्रं ध्यायन्मुच्येत बन्धनात्" ॥ इति। **काश्यपः** — "ब्रह्मा तु पूरको ज्ञेयः कुम्भको विष्णुरुच्यते। रेचकस्तु तथाज्ञेयः क्षराक्षरपरश्शिवः" ॥ इति। अत्र **वसिष्ठः** — "नासाग्रे शशभृद्बिम्बं ज्योत्स्नाजालवितानितम्। सप्तमस्य च वर्गस्य चतुर्थं बिन्दुसंयुतम् ॥ विश्वमध्यस्थमालोक्य नेत्राभ्यां मनसा सह ॥ इडया पूरयेद्वायुं बाह्या-

दृद्वादशमात्रकम् ॥ ततोऽग्निं पूरयन्ध्यायेत् स्फुरज्ज्वालावलीयुतम् । रेफं च बिन्दुसंयुक्तमग्निमण्डल-संयुतम् ॥ ध्यायन्विरेचयेत्पश्चान्मन्दं पिङ्गलया पुनः । पुनः पिङ्गलया पूर्यप्राणं दक्षिणतस्सुधीः ॥ वामे विरेचयेद्धीमानिडया च शनैः शनैः" । इत्यादि । एतदेवाह पुराणम् — "परस्परेणाभिभवं प्राणापानौ यदानिलौ । कुरुतस्स द्विधा तेन तृतीयस्संयमात्तयोः" ॥ प्राणापानयोरुच्छ्वासनिश्वास-रूपयोर्निरोधात् कुम्भकस्तृतीय इत्यर्थः । तस्य चालम्बनवतः सबीजस्य प्राणायामस्येत्यर्थः "स्थूलरूपं द्विजोत्तमः । आलम्बनमनन्तस्य योगिनोऽभ्यासतः स्मृतम् ॥ शब्दादिष्वनुरक्तानि निगृह्याऽक्षाणि योगवित् । कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ स च प्रत्याहारः श्रुतौ दर्शितः — "शब्दादिविषयाः पञ्च मनश्चैवाऽतिचञ्चलम् । चिन्तयेदात्मनो रश्मीन् प्रत्याहारस्स उच्यते" ॥ इति । शब्दादिविषयकाणां श्रोत्रादीनां स्वस्वविषयेभ्यो निवर्तनमेवाऽऽत्ममनसो रश्मित्वेन चिन्तनमिह विवक्षितम् । "वश्यता परमा तेन जायतेति चलात्मनाम् । इन्द्रियाणामवश्यैस्तैर्नयोगी योगसाधकः ॥ प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये । वशीकृते ततः कुर्यात्स्थितं चेतश्शुभाश्रये" ॥ प्राणायामादिफलमुक्तं भागवते "प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान् । प्रत्याहारेण संसर्गान् ध्यानेनानैश्वरान् गुणान्" ॥ इति । तत्र धारणादित्रयात्मकस्य संयमस्य नानाविधा विषयाः पृथक्सिद्धिफला उपक्षिप्ता **योगानुशासने** । "परिणामत्रयसंयमादतीतानागतज्ञानमि" त्यादिना परिणामत्रयं धर्मलक्षणावस्थाख्यं, तत्र मृदादेर्घटादिभावो धर्मपरिणामः, तस्यानागतत्वं वर्त-मानत्वमतीतत्वमिति लक्षणपरिणामः, तत्राप्यनागततरतमत्वादयश्चावस्थापरिणामाः । तस्मिन्परिणामत्रये संयमात् अस्मिन्धर्मिण्येते धर्माः, तेष्वेतानि लक्षणानि, तेष्वेता अवस्था इति संयमादित्यर्थः । श्रुतौ च पृथिव्यादिविषयसंयमात्तज्जय उपक्षिप्तः — "पृथ्व्याप्यतेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते, न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरमि"ति । **प्रपञ्चसारे** च "अवनिजलानलमारुतविहायसां शक्तिभिश्च तद्बिम्बैः । सारूप्यमात्मनश्च प्रति नीत्वा तं तदाशु जयति सुधीः" ॥ इति । एवं नानासिद्धिफलतत्तद्विषयसंयमस्य मुक्तौ अनपेक्ष्यत्वात्, विरोधित्वाद्वा परमात्मविषय एव संयम आदरणीयइत्यभिप्रायेण "शुभाश्रये चेतस्स्थितं कुर्यादि"त्युक्तम् । **तथा च श्रुतिः** — "मनस्सङ्कल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान् । धारयित्वा तदाऽऽत्मानं धारणापरिकीर्तिता" ॥ इति बाह्यविषयसङ्कल्पादपच्छिद्याऽऽत्मनिवेशप्रयत्नः सङ्कल्पकस्य मनस आत्मनि संक्षेपः । स चाऽयं शुभाश्रयस्समुद्दिष्टो विवृतश्च **पुराणे** — "आश्रयश्चेतसो ब्रह्म द्विधावच्च स्वरूपतः । भूप मूर्तममूर्तं च परं चाऽपरमेव च" ॥ तत्र परतत्त्वलक्षणं परामूर्त-मुदाहृतम् । "प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ तच्च विष्णोः परं रूपमरूपस्याजमक्षयम् । विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः" ॥ इति । एतद्विषय-समाधिनिष्पत्तिनान्तरीयको मोक्षः । **यथोक्तम्** "योगयुक्प्रथमं योगी युञ्जमानोऽभिधीयते ।

विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् ॥ विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि । प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्" । इति । यदेतत्परामूर्तरूपं परमात्मनः । "न तद्योगयुजा शक्यं नृपचिन्तयितुं यतः । ततस्स्थूलं हरे रूपं चिन्त्यं यद्विश्वगोचरम्" ॥ तदिदं परमूर्तरूपं परमात्मनः, यथेदमनुवर्ण्यते — "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः, वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथ्वि ह्येष सर्वभूतान्तरात्मा", "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेवधिः पृथिव्येव पादावास्यमाहवनीयः," "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशः श्रोत्रे विद्धि पादौ च क्षितिं च सोऽचिन्त्यात्मा सर्वभूतस्य एकः ॥" "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुः दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥" "द्यौर्मूर्धानं भवेत्तस्य खं नाभिः परमेष्ठिनः । सोमसूर्याग्नयो नेत्रं दिशः श्रोत्रं महात्मनः ॥ इत्यादिश्रुतिस्मृतिषु परमूर्तरूपं च यथा वर्ण्यते — "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" ॥ "य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्राणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी" । "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः" ॥ "तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथासकृद्विद्युत्तम्" ॥ "अमूर्तं यत्परं ब्रह्म सादरं श्रुतिचोदितम् । सर्वव्यापि सदा नित्यं सत्यं द्वैतविवर्जितम् ॥ तस्येदमैश्वरं रूपं चन्द्रखण्डावतंसकम् । तमालश्यामलगलं लसत्फालविलोचनम् । प्रसन्नवदनं चारु हारकेयूरभूषितम् ॥ सर्वलक्षणसम्पन्नं गाढयौवनशोभनम्" । इत्यादि । "निवेश्य चेतः प्रत्यङ्गमापादाग्रमनुक्रमात् । धारयेद्वदनाम्भोजे प्रसन्नमतिकोमलम्" ॥ इत्यन्तम् । तथा "आरुरुक्षुस्तु सगुणं पूजयेत्परमेश्वरम् । पिनाकिनं त्रिणयनं जटिलं कृत्तिवाससम् ॥ पद्मासनस्थं रुक्माभं चिन्तयेद्वैदिकी श्रुतिः । प्रसन्नवदनं चारु पद्मपत्रायतेक्षणम् ॥ सुकपोलं सुविस्तीर्णं ललाटफलकोज्ज्वलम् । समकर्णान्तविन्यस्तचारुकर्णविभूषणम् ॥ कम्बुग्रीवं सुविस्तीर्णं श्रीवत्साङ्कितवक्षसम् । वलित्रिभङ्गिना मग्नं नाभिना चोदरेण च ॥ प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् । चिन्तयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥ किरीटहारकेयूरकटकादिविभूषितम् । शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम् । चिन्तयेत्तन्मना योगी समाधायाऽऽत्ममानसम्" । इत्यादि । एवमुक्तलक्षणे "मूर्ते भगवतो रूपे सर्वापाश्रयनिस्पृहा । एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते" ॥ तत्र धारणासिद्धिश्च लक्षिता — "तिष्ठतो व्रजतो वाऽन्यत्स्वेच्छया कर्म कुर्वतः । नापयाति यदा चित्तात्सिद्धां मन्येत तां तदा" ॥ यत्रेदमुक्तम् — "धारणा द्वादशायामा ध्यानं द्वादशधारणाः । ध्यानं द्वादशकं यावत्समाधिरभिधीयते" ॥ इति । अपरामूर्तरूपमुक्तम् "द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामुने ।

अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ॥ समस्ताश्शक्तयश्चैता नृपा यत्र प्रतिष्ठिताः । तद्विश्वरूपं वैरूप्यरूपमन्यद्धरेर्महत् " ॥ इति । मूर्तरूपधारणावशीकृतचित्तस्य क्रमेण तद्रूपधारणोच्यते — "यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां चित्तकिल्बिषम् ॥ तस्मात्समस्तशक्तीनामाधारे तत्र चेतसः । कुर्वीत संस्थितं साथ विज्ञेयाशुद्धधारणा" ॥ इति । तत्र धारणासिद्धौ प्रत्यस्तमित भेदादिलक्षणे परमात्मनि धारणा कार्या । अत एव 'तिष्ठतो व्रजतो वान्यदि"-त्यादिना मूर्तेर्धारणासिद्धिं लक्षयित्वोक्तम् — ततश्शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः । चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥ सा यदा धारणा तद्वदवस्थानवती ततः । किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥ ततः — "तदेकावयवं देवं चेतसा हि पुनः पुनः । कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत् "॥ तेन सदात्मना एकीभूतावयवमव्यञ्जितस्थूलसूक्ष्मजगन्मयावयवविन्यासभेदं समूढतेजः पुञ्जमिव समस्तशक्तिमयं सदात्मकं चेतसा कुर्यात् चेतसि धारयेत् । ततोऽवयविनि समस्तशक्तिसंमिश्रणात् सम्पिण्डकारणमयस्स एव सदात्मा अवयवी यस्य सम्बन्धी, तस्मिन्नवयविनि प्रत्यस्तमितभेदादिलक्षणे परतत्वे प्रणिधानपरो भवेदिति । "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा । ध्यानमप्रथमै-रङ्गैष्षड्भिर्निष्पाद्यते नृप ॥ तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यः समाधिस्सोऽभिधीयते " ॥ इति । ध्यातृध्यानादिभेदभानहीनमित्यर्थः । तत्रैवं सति प्रतिपादितपरशिवतत्त्वज्ञानाय योगयुजे योगारम्भे परमात्मनः प्रथमं परापरमूर्तरूपोपासनमादरणीय-मित्यभिप्रेत्याह —

मूर्धादिभावपरिकल्पनया जगत्या
त्वामङ्गवन्तमिव भावयतो जनस्य ।
चिन्तामयेन विहताऽऽनमदामयेन
स्वानन्दसान्द्रवपुषाऽऽविरसीन्दुमौले ! ॥ १२२ ॥

'मूर्धादिभावपरिकल्पनया जगत्ये'ति व्यधिकरणे तृतीया । अथवा समानाधिकरणे । मूर्धादिभावेन परिकल्पना यस्या इति व्यधिकरणबहुव्रीह्यनुपपत्तेः । अत्र कल्पनायां जगद्रूपपृथगभावदर्शनावर्जनार्थः परिशब्दः । अथवा, परितः कल्पना परिकल्पनेति व्याप्त्यर्थः परिशब्दः । तेन पिण्डाण्डैकीकारेणाहंग्रहावसायिनी कल्पना विवक्षिता । जगत्या, दिवादिलोकेन तदन्तर्गतादित्यादेरप्युपलक्षणम् । अङ्गवन्तमिव सावयवं मूर्तिमन्तमिव, परमात्मनोऽङ्गवत्तावस्तुत्व-व्यावृत्यर्थ इवकारः । त्वां परमात्मानं, भावयतः यथोपदेशं 'विश्वमूर्तिः परमात्माऽहमि'ति

"यावच्चिन्त्यस्वरूपत्वाभिमानः स्वस्य जायते। तावद्विचिन्त्य पश्चाच्च तथैवाऽऽमृति धारयेत्" ॥ इत्यभियुक्तोक्तरीत्याऽकृतकसाक्षात्कारपर्यन्तप्रकर्षध्यानमभ्यस्यतः। **अतएव सूत्रम्** — विकल्पोऽविशिष्टफलत्वात्" इति। दहरशाण्डिल्योपकोसलादिविद्यानां पुरुषभेदेन व्यवस्थितविकल्पः 'एकामेवैकोऽनुतिष्ठेत्'। कुतः? ध्येयरूपसाक्षात्कारद्वारफलस्याविशिष्टत्वात्। **अन्यथा**, नानाविद्याव्यासङ्गे ध्येयसाक्षात्कारपर्यन्तत्वविरोधादित्यर्थः। **जनस्येति**। जनग्रहणं प्राप्तवैराजपदस्य शास्त्रापर्युदासे सर्वस्यैव देवमनुष्यादेरत्राऽधिकार इति सूचयति। **तथा च सूत्रं** — "तदुपर्यपि बादरायणस्सम्भवात्" इति। मनुष्याधिकारत्वाच्छास्त्रस्येति प्रागुक्तमनुष्येभ्य उपरि देवेष्वपि ब्रह्मविद्यायामधिकारः। अर्थित्वसामर्थ्यादित्यर्थः। एवं विकल्पितविश्वावयवापरमूर्तरूपधारणादिसिद्धौ मुमुक्षतः परमूर्तरूपे धारणादिकार्यमित्यभिप्रेत्याह **चिन्तामयेनेत्यादि**। न खलु परमात्मनो वस्तुसदस्ति मूर्तरूपम्। यथादेवमनुष्यादेः। अविद्यामयकर्मनिबन्धनत्वान्मूर्तिसम्बन्धस्य। अपहतपाप्मनः तदनुपपत्तेः। यथा बोध्याभिमतध्येयरूपपरिकल्पनेन व्यभिचाराच्च। न चो"मासहायं परमेश्वरं प्रभुं" इत्यादिवस्तुरूपानुवादि, "ध्यात्वा मुनिर्गच्छति भूतयोनिं" इति ध्यानविधौ विधेयरूपस्यैव ध्यातृबुद्धिसिद्धिमाश्रित्य सिद्धवद्वादमात्रत्वात् "द्यौर्मूर्धे"त्यादिवत् जुगुप्सित एव स्त्रीकुणपलालादौ रागिबुद्धिसिद्धिमाश्रित्य अधरमध्वित्यादिसिद्धवद्वादवच्च। **अन्यथा** सोऽपि निर्देशसाम्येन वस्तुस्वरूपानुवाद एव स्यात्। **अत एव** "य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्युच्यते। ध्यायिभिर्ध्यानेन दृश्यमानत्वात्। न च दृश्यत इति वस्तुरूपसत्वत्वाभिप्रायम्। "न सन्दृशे तिष्ठति रूपमस्ये"ति निषेधात्। **ननु** कारणरूपोत्तीर्णस्यैवायं प्रतिषेधः कारणात्मनस्तु स्यादङ्गित्वं स्वभावः सर्ववशित्वसत्यकामत्वादिगुणवदिति चेद्युक्तं, कारणरूपान्तर्गुणतया सत्यकामत्वादिस्वभाव इति। न तु तथा विग्रहः, तदभावेऽपि कारणत्वोपपत्तेः। ननु कामसङ्कल्पादिरेव विग्रहापेक्ष इति चेन्न, कामादेरीश्वरे चिच्छक्तिविकल्पमात्रत्वोपपत्तेः। अन्यथा तस्यापि दृष्टानुरोधेन विग्रहवत्वकल्पने प्रियाऽप्रियसंस्पर्शोऽपि **कल्प्येत**। "आर्तो वै सशरीरः प्रियाऽप्रियाभ्यां, न ह वै सशरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ती"ति श्रवणात्। तथा स्वेनैव तेन शरीरेण राजादिरिव राष्ट्रादि जगन्नियंस्यतीति, नियाम्यातिरिक्तशरीराभावपरं "यस्य पृथिवी शरीरं, यस्यापः शरीर"मित्यादि विरुध्येत। एतेन 'भोगमात्रसाम्यलिङ्गादि'ति मुक्तस्येश्वरेण भोगसाम्यमिच्छता **भगवता सूत्रकृता** तस्य भोगायतनं शरीरमभ्युपगतमिति निरस्तम्। हैरण्यगर्भदेहाभिव्यक्तभोगैस्सत्यसङ्कल्पत्वादिभिरेव वा भोगसाम्योपगमोपपत्तेश्च। "एष आत्माऽपहतपाप्मा विजरो विमृत्यु"रित्यादिनिषेधोऽपि न परमात्मनः शरीरमाक्षिपति, ना"स्य जरयैतज्जीर्यति न वधेनास्य हन्यत" इति शरीरोपाधिकजरादिप्रतिषेधे तर्हि तरुशरीरादेरिव स्वत एव जरादि स्यादिति प्रसङ्गे तन्निषेधोपपत्तेः। **अथ स्थूलसूक्ष्मदेहसमष्टि**[illegible]नन्तरं स्वप्नज इव मूर्तरूपं परमात्मनः स्यादिति

चेत् **नन्वतएव ब्रूमः** – परमात्मनो न नियतसन्निवेशं स्वाभाविकमस्ति रूपं, तत्खल्वपेतावयवक्षय-कल्पनाभेदमायामालशेषमान्तरं रूपं ध्यानमय्या योगनिद्रया यथाध्यानमभिव्यज्यत इति तं यथा यथोपासते तदेव भवतीति हि श्रुतिः । **अत एवोक्तं भागवते** "ईक्षेत चिन्तामयमेनमीश्वरं" इति । अथ एव चावयवसंस्थानकल्पनयैव योगयुङ्ध्येयं परमात्मनः परमूर्तरूपमनुवर्णितं **पुराणे** – "सर्वशक्तिमयो विष्णुः स्वरूपं ब्रह्मणोऽपरम् । मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यते" ॥ इति । प्रकृत्य, "आत्मानमस्य जगतो निर्लेपमगुणामलम् । बिभर्ति कौस्तुभमणिस्वरूपं भगवान्हरिः ॥ श्रीवत्ससंस्थानधरं अनन्तं च समाश्रितम् । प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥ भूतादि-मिन्द्रियादिं च द्विधाऽहङ्कारमीश्वरः । बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥ चलस्वरूपमत्यन्त जवेनान्तरितानिलम् । चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम् ॥ पञ्चरूपा तु या माला वैजयन्ती गदाभृतः । सा भूतहेतुसङ्घातो भूतमाला च वै द्विज ॥ यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै । शररूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥ बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम् । विद्यामयं तु तज्ज्ञानं अविद्याचर्मसंस्थितम् ॥ इत्थं पुमान् प्रधानं च बुध्यहङ्कारमेव च । भूतानि च हृषीकेशे मनस्सर्वेन्द्रियाणि च ॥ विद्याऽविद्ये च मैत्रेय सर्वमेतत्समाश्रितम्" । इति । अत्र किं विग्रहवतः सत एव परस्य सत्स्वेव कौस्तुभादिषु पुमादिरूपत्वकल्पना अथवा पुमादेरेव कौस्तुभादित्वविकल्पनया तत्सम्बन्धोपाधिकैव तदुचितावयवभेदकल्पना, यथा सन्ध्यानासामणिस्तारेति । तस्मात्तदुचितमुखावयवकल्पनेति विचिकित्सायामुत्तरकल्प एव **सिद्धान्तीक्रियते** — "अस्त्रभूषण-संस्थानस्वरूपं रूपवर्जितः । बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः" ॥ इति । अत्र मायारूप इति कारणात्मोक्तिः । मायैव रूपमस्य नत्ववयवसन्निवेशभेद इति तद्व्यावर्त्योक्ती रूपवर्जित इति । एवं सति अस्त्रभूषणसंस्थानं स्वरूपं मूर्तं बिभर्तीति ध्यायिनो यथाध्यानाहितरूप आविर्भवतीत्यर्थः । **तदिदमेवोदितं पराशरोपपुराणे** — "साक्षात्परतरस्यैव वस्तुनस्सर्वसाक्षिणः । अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी ॥ तस्याः साधारणा मूर्तिस्साम्बा चन्द्रार्धशेखरा" । इति । **अत एव भगवता भाष्यकृता** "स्यात्परमेश्वरस्यापीच्छावशात् साधकानुग्रहार्थं मायामयं" दर्शितम् । साधकानुग्रहार्थमिति विशेषणाद्यथाध्यातरूपाविर्भाव एव विवक्षित इति हि गम्यते । **तथा च कूर्मपुराणम्** — "राजा वसुमना नाम रविमण्डलमध्यगम् । समुपासिष्ट गायत्र्या पुरुषं रुक्मविग्रहम् ॥ अनुग्रहार्थमस्याथ भगवान्परमशिवः । आविर्भूय रवेर्बिम्बात् अस्मै रूपमदर्शयत् ॥ शिवशक्तिमयं दिव्यं चन्द्रार्धकृतशेखरम् । त्रिलोचनं नीलकण्ठं ब्रह्मेन्द्रोपेन्द्र-वन्दितम्" ॥ इति । **अत एव** नारदानुग्रहार्थमाविर्भूतविग्रहस्य भगवतो वस्तुविग्रहनिषेधपरमिदं वचनमनुक्रम्यते — "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि" ॥ इति । तदेतत्सर्वमभिप्रेत्याभिहितं [illegible] परमप्रकर्षपर्यन्ततया **चिन्तया**

धारणादिलक्षणया भावनया भावितं हि तथारूपमिव सम्पद्यते। भीरुकस्य यथा भावनाभावितं तिमिरमिव यक्षरूपमित्यतश्चिन्तामयेनेति **मयट्प्रयोगः। विशेषेणाऽऽत्यन्तिकतया, हृतो** नाशितः। **आनमतां**, स्वस्मिन्नेवाऽऽहृत्य प्रवणमनसां **ध्यायिनामामयो** भवमयो रोगो **येन** तेन। "आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने। विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा"॥ इति हि स्मर्यते। ध्येयं ब्रह्म ध्यायिनमात्मभावं केवलस्वभावं संसारसङ्कटान्निष्कृष्य नयति आकर्षकोऽयस्कान्तो दारूमग्नं लोहमिव। दारुणो निष्कृष्येति स्मृतेरर्थः। **स्वभावभूतेनाऽऽनन्देन, सान्द्रं** निबिडं तेन स्वानन्दघनेन। **वपुषा**, परमानन्दस्वरूपस्यैव चिच्छक्त्याद्यालम्बनेन उमासहायत्वादिकल्पनया रूपान्तराननुप्रवेशाद्वपुषः स्वानन्दसान्द्रत्वमुपपन्नम्। तेन वपुषा अङ्गवन्तमिव त्वं भावयतः जनस्येत्यावृत्त्याऽन्वयः। **आविरस्यस्य**, तेनैवाऽनुध्यातरूपेण साक्षादपरोक्षो भवसि। अत्र द्यौर्मूर्धाऽनुध्यातः, दिविचेन्दुरिति भावनानुगुण एवाविर्भाव इति सूचयितुं **'इन्दुमौले'** इति सम्बोधनम्। ईश्वरोपासनस्य तत्साक्षात्कार एव परं फलमिति भावयतो जनस्याऽऽविरसीत्युक्तम्। **तथा च पुराणं** – "तपश्च तप्तं सफलं यद्दृष्टोऽसि जगत्पते"। इति। "त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्यं गुरु योगिनामपि" इति च कवयः। अथवा, "वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाऽऽविर्भवेत्साक्षादभेदोपाधिकल्पनम्"॥ इत्यभियुक्तोक्तरीत्या स्वरूपेणैवाऽऽविरसीत्यर्थः। स एव परमपुरुषार्थ इति ॥ १२२ ॥

**एवं** परापरमूर्तरूपे योगः प्रतिपादितः। तत्सिद्धौ च यत्तदपरामूर्तरूपमुक्तं समस्तशक्तिमयं सदाख्यं कारणरूपं, यद्विषये दहरशौण्डिल्यादिविद्या विधीयन्ते। यच्च तत्परामूर्तरूपमुक्तं, प्रत्यस्तमितभेदादिलक्षणं प्रकाशानन्दसत्तामात्रं, यत्र निष्पन्नसमाधिरिहैव मुच्यते। तद्विषयो योगः प्रतिपत्तव्यः। यथा लोके धानुष्कः प्रथमतः स्थूलतरमेव लक्ष्यं वेद्धव्यं प्रतिपद्यते, ततस्स्थूलमात्रं शिक्षितः च तदभ्यासेन सूक्ष्मं, सूक्ष्मतरमिति प्रतिपद्यते तद्वदभिप्रेत्याह **ओमित्यादि**।

**स खल्वयं योगः** समाधिः सम्प्रज्ञातोऽसंप्रज्ञात इति द्विविधः समाख्यायते। यथा सूत्रितं भगवता पतञ्जलिना — "वितर्कविचारानन्दास्मितानुगमात् संप्रज्ञातः, विरामप्रत्ययाभ्यासपूर्वकः संस्कारशेषोऽन्यतः" इति। वृत्तिविरामकारणस्य यत्नविशेषस्याभ्यासः पौनःपुन्यं तत्पूर्वको वृत्तिशून्यसंस्कारशेषः चित्तस्य सम्प्रज्ञातादन्योऽसम्प्रज्ञातः निरोधसमाधिरित्यर्थः। अयमेव 'व्युत्थान निरोधसंस्कारयोरभिभवप्रादुर्भावौ, निरोधक्षणचित्तान्वयो निरोधे परिणाम इति सूत्रितः। विषयवृत्तिसंस्काराभिभवतः तन्निरोधसंस्कारोद्भवश्च। सोऽयं निरोधक्षणेन चित्तस्यान्वयो निरोधमरिणाम इत्यर्थः। तत्र सम्प्रज्ञातो वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगतश्चेति चतुर्विधः।

वितर्कः स्थूलचित्तस्याऽऽभोगः, सूक्ष्मस्तु विचारः। न्यग्भूतरजस्तमोमलं सत्वमानन्दः। अहन्तामयः आत्मैवाऽस्मिता। तत्तदनुगतस्सम्प्रज्ञातः चतुर्विधः। स एवाऽयं विषयविशेषमुपक्षिप्य प्रकारान्तरेण सूत्रितः। "क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः" इति। यथा स्वच्छस्य स्फटिकस्य जपादिनिष्ठस्य तदाकारता तथा क्षीणेतरवृत्तेश्चित्तस्य ग्राह्यादिषु तत्स्थता तदालम्बनता तदञ्जनतान्यग्भूतस्वरूपतया तदेकाकारता समापत्तिः परिणामो भवतीत्यर्थः। तत्र ग्राह्यविषया समापत्तिश्चतुर्धा **सूत्रिता** – "शब्दार्थज्ञानविकल्पैस्सङ्कीर्णस्सवितर्का गौरित्येवैकाकारतया शब्दार्थज्ञानानामभेदभ्रमो लोकसिद्धः। तत्सङ्कीर्णा यथाव्यवहारसिद्धभूतभौतिकविषयेत्यर्थः। सोऽयं सवितर्कस्सम्प्रज्ञातः स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का, शब्दार्थज्ञानविकल्पविधुरा वस्तुमात्रावभासेत्यर्थः। एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता। देशकालधर्माद्यवच्छेदेन तन्मात्राऽहङ्कारादिविषया :सविचारा, सोऽयं सविचारस्सम्प्रज्ञातः देशाद्यवच्छिन्नवस्तुमात्रावभासा निर्विचारेत्यर्थः। यस्तु स सानन्दः सम्प्रज्ञातः समुद्रिक्तसत्वविषयः सा ग्रहणसमापत्तिः। यश्च स साऽस्मितस्सम्प्रज्ञातः सत्वन्यग्भावेन समुद्भूतात्मविषयः सा ग्रहीतृसमापत्तिः। स एष सम्प्रज्ञातसमाधिरन्तर्धानादिसिद्धिव्यपेक्षतया भूतेन्द्रियादिविषयो **योगैर्व्याख्यातः। अस्माभिः पुनः** अपवर्गव्यपेक्षयाऽहंग्रहेणस्थूलसूक्ष्मशरीरकमूर्तरूपपरमात्मविषयो व्याख्यातः। अतः सर्वोऽयं ग्रहीतृसमापत्तिरेव सन् उपाधिप्राधान्यविवक्षया ग्राह्यादिभेदेन शक्यव्यपदेशः। तत्र सविचारनिर्विचारयोस्सूक्ष्मविषयत्वं चालिङ्गपर्यवसानमित्युक्तम्। विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि विशेषा महाभूतेन्द्रियाणि तन्मात्राऽहङ्काराऽविशेषाः, लिङ्गमात्रं बुद्धिसत्त्वं यन्महत्तत्त्वमाचक्षते। अलिङ्गं प्रधानमिति गुणपर्वाणि तदवस्थाविशेषा इत्यर्थः। एवमलिङ्गात्परं न सूक्ष्ममिति तत्रैव तौष्टिकतुष्टये सूक्ष्मपर्यवसानमाहुर्योगाः। **वयं तु** यत्तदिदमव्यक्तप्रकृतिमायादिशब्दितं प्रशान्तजगद्वृत्ति वासनामात्रं दीपज्वालान्तरालीननीलिमेव यस्मिन्सदात्मनि लीनावस्थं भवति, "प्रकृतिर्या मायाऽऽख्याता व्यक्ताऽव्यक्तस्वरूपिणी पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि" इत्यादिदर्शनात् न स्वतन्त्रम्। यथा वैयासिकदर्शनं "तदधीनत्वादर्थ वदि"ति हि सूत्रमधस्ताद्विवृतम्। तत्रापरामूर्तरूपे जगद्बीजशक्तिमये परमात्मनि तत्पर्यवसनमाचक्ष्महे। **यथाह सर्वानुभावयोगी** – "विलाप्य विकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात्। परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत्"॥ इति। अयं सविचारः। "ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना। ससम्प्रज्ञातसमाधिः ध्यानाभ्यासप्रकर्षतः"॥ इति। अयं निर्विचारः, असंप्रज्ञातं **स एवाह** – "प्रशान्तवृत्तिकंचित्तं परमानन्ददीपकम्। असम्प्रज्ञातनामायं समाधिर्योगिनां प्रियः"॥ इति। यद्यपि चित्तमसम्प्रज्ञाते निर्वस्तुकविरामप्रत्ययाभ्यासवशेन प्रशान्तवाहि बहुलपक्षक्षयपक्षतिक्षपेशकलेव दुर्लक्षमभावप्राप्तमिव भवति, तथापि तस्मिन्प्रशान्ते सदात्मैवाऽहंग्रहाभ्यासप्रकर्षात् प्रत्यगभेदेनाऽऽविर्भवतीति परमानन्ददीपकमित्युक्तम्। अत

**एवाहुरमलानन्दपादा वेदान्तकल्पतरौ** – "निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाऽऽविर्भवेत्साक्षादपेतोपाधिकल्पनम्"॥ इति। तानेतानपरामूर्तविषयान् योगभेदान् दर्शयन्नाह —

ओमित्युमेश सकलं त्वयि सङ्कलय्य
त्वद्भावकेवलतया विनिविष्टभावः।
संशान्तजीवपरमेश्वरभेदमोहः
सोऽहं विहायसमभूतमयं श्रयामि ॥ १२३ ॥

**ओङ्कारस्तावत्सर्वसार** आम्नायते। "प्रजापतिर्लोकानभ्यतपत्तेभ्यो हि तप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि प्रास्रवन् भूर्भुवस्सुवरिति, तानि ह्यतपत्तेभ्योऽभितप्तेभ्यः ओंकारः प्रास्रवदि"त्यादौ परमात्मनश्च परस्यापरस्य वा सद्ब्रह्मात्मशिवविष्ण्वादिशब्दापेक्षया येदिष्ठः प्रणवः, "ओं खं ब्रह्म खं पुराणं," "ब्रह्मा शिवो मेऽस्तु सदाशिवोमि"-त्यादिप्रसिद्धेः। "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्"॥ "एतद्ध्येवाक्षरं ब्रह्मैतद्ध्येवाऽक्षरं परम्। एतद्ध्येवाऽक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्"॥ "एतद्वै सत्यकाम परं चाऽपरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती"त्यादिनिर्वचनात्। "प्रणवो ह्यपरं ब्रह्म प्रणवश्च परस्स्मृतः" इति **चाचार्याः। अर्थानुगमाच्च**–'अवतेष्टिलोपश्चेति मन्प्रत्यये तिलोपे, ऊठिचार्धधातुकेगुणे च कृते रूपमोमि'ति। अकुतोभयाय निरङ्कुशमवनं च परमात्मप्रकाशनेनैव स्यात्। **गुणयोगाच्च**। कथं? "सर्वं खल्विदं ब्रह्म, ओमित्येतदक्षरं इदं सर्वं अकारउकारमकार इति, त्र्यवयवः प्रणवोऽवशिष्यते। अकारो वै सर्वा वाक् वाचीमा विश्वा भुवनान्यर्पिता वाक्तन्तिर्नामानि दामानि वाचातन्त्यानाभिर्दामभिस्सर्वं सितं सर्वं हीदं नाम्नि। तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णोंकार एवेदं सर्वमि"त्यादि श्रुतेः। तुल्यगुणयोश्चाऽभिसम्बन्धो युक्तः। तथा च **वायुसंहिता** – "प्रणवो वाचकस्तस्य शिवस्य परमात्मनः। शिवरुद्रादिशब्दानां प्रणवोऽत्र परस्स्मृतः"॥ इति। "अदृष्टविग्रहोदेवो भावग्राह्यो मनोमयः। प्रणवो वाचकस्तस्य तेनाभूतः प्रसीदति"॥ इति च। ततस्तदनुवेधेन सदात्मनि सविचारसमापत्तिरभिधीयते ओमित्याद्यपादेन। **तथा चाम्नायः** – "ओमित्यात्मानं युञ्जीत, ओमित्येव ध्यायथ आत्मानं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषं ध्यायीत, नमोंकारेणैवायतनेनैवाऽन्वेति विद्वान्यत्त-

च्छान्तमजरममृतमभयं परं च तदेतदात्मानं ओमिति पश्यते" त्यादिः। द्वेधा चोङ्कारस्य सदात्म-योगानुप्रवेशः। "एतदालम्बनं श्रेष्ठं एतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते"॥ इति प्रतीकतया "एतेनैवायतनेनैकतरमन्वेती" ति च "प्रायणान्तमोंकारमभि-ध्यायीते" ति प्रक्रमात्, "एतद्ध्येवाक्षरं ब्रह्मे" ति वाचकतया प्रतीकभावस्य "तदालम्बनं श्रेष्ठमि" त्युत्तरत्राऽभिधानात् वाच्यवाचकाभेदोपचारश्च प्रसिद्धतरः यथा गौरयमिति। **तथा च वायुसंहितायां** – "शिवो वा प्रणवो ह्येष प्रणवो वा शिवस्स्मृतः। वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित्॥ तस्मादेकाक्षरं देवमाहुरागमपारगाः। वाच्यवाचकयो रैक्यं मन्यमाना मनस्विनः"॥ इति। तत्राऽविवक्षितावयवव्यूह ओङ्कारः प्रशान्तविश्ववृत्तरूपस्य परस्य विश्ववृत्तरूपस्यापरस्य च वाचकः। "तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्" "परं चाऽपरं च ब्रह्म यदोङ्कारः" इत्यविशेषेण तदुभयशक्त्यवगमात्। विवक्षितावयवव्यूहस्तु सोऽकारादिभिः क्रमेण, अध्यात्मं विश्वतैजसप्राज्ञान्, आधिदैवं विराड्ढिरण्यगर्भेश्वरांश्चाऽभेदेनाभिधाय तदनुगतरूपार्धमात्रात्मनैव प्रशान्तविश्ववृत्तिसमुद्भूत-चिच्छक्तिकसन्मात्रवाचकः। **तथा च वायुसंहितायां** – "एवं तिसृभिरेवैतन्मात्राभिरखिलं त्रिधा। अभिधाय शिवात्मानं बोधयत्यर्धमात्रया"॥ इति। **शिवधर्मोत्तरे च** — "अथवाऽन्यप्रकारेण ब्रह्मविष्णुमहेश्वराः। क्रमान्मात्रस्समुद्दिष्टाः तत्परश्चार्धमात्रया॥ भावनामात्रगम्यत्वादचिन्त्यः परमश्शिवः॥" इति। "अकारादग्निगर्भात्मा कुमारः परिगृह्यते-उकारादप्युमादेवी मकाराच्च महेश्वरः "इत्यतः प्रकारादन्यप्रकारेणेत्यर्थः। **योगयाज्ञवल्क्ये च** "अक्षरत्रयमेतत्तु कारणत्रयमिष्यते। त्रयाणां कारणं ब्रह्म भारूपं सर्वकारणम्॥ एकाक्षरं परञ्ज्योतिः तदाहुः प्रणवं बुधाः"। इति। तत्र जागरस्थूलशरीराभिमानी राजसो ब्रह्मा विराट् सोऽकारः। स्वप्नसूक्ष्मशरीराभिमानी सात्विको विष्णु र्हिरण्यगर्भः। स उकारः। सुषुप्ताज्ञानाभिमानी प्राज्ञः तत्समष्ट्यभिमानी तामसो महेश्वरः। स मकारः। **यथा मैत्र्येयोपनिषत्** — "तमो वा इदमेकमास, तत्परेणेरितं विषमत्वं प्रयाती"ति प्रक्रम्य, "अथ यो ह खलु वा वास्य राजसोंशोसौ स योऽयं ब्रह्मा, अथ योह खलु वा वास्य तामसोंशोसौ स योऽयं रुद्रः, अथ योह खलु वावास्य सात्विकोंशोऽसौ स योऽयं विष्णुरि"ति। **यथा च तापनीयोपनिषत्** "अकारं ब्रह्माणं ना भा,वुकारं विष्णुं हृदये, मकारं रुद्रं भ्रूमध्ये ओङ्कारं सर्वेश्वरं द्वादशान्त" इति समष्टिव्यष्टिभावाच्च वनवृक्षन्यायेन विश्वविराडाद्यभेद उपपादितोऽध-स्तात्। प्रलीनजागरस्वप्नसुषुप्तस्थूलसूक्ष्माज्ञानतमोऽभिमानवृत्तिकन्यग्भूततद्भासनोद्रिक्तचिच्छक्तिकः साक्षी अध्यात्मं तुरीयः, अधिदैवतं तु प्रलीनस्थूलसूक्ष्मविश्वमायातमोऽभिमानवृत्तिकन्यग्भूतजगद्बीजशक्तिको-द्रिक्तचिच्छक्तिकः साक्षी तदभेदश्च व्यष्टिसमष्टिभावादेव तत्र वैराजादिमूर्तरूपालम्बनस्सवितर्कादिलक्षण-स्सम्प्रज्ञातसमाधिभूमिभेदो मन्दमध्यमाधिकारिणां प्रायुक्तः। अथ जितनद्भूमिकस्य परिमितफले

तत्रातुष्टस्य मुमुक्षोर्मात्रामात्राः प्रतिमात्राः कुर्यात्। "पूर्वपूर्वा अकारादिमात्राः स्वस्वार्थेन सह लयस्थानतया प्रतिकूलासु उत्तरोत्तरासु उकारादिमात्रासूपसंहरेत्" इत्यादिश्रुतिः। "त्रिविधा भावना ब्रह्मन् प्रोच्यमाना निबोध मे। एका मद्विषया तत्र द्वितीया व्यक्तसंश्रया॥ अन्या तु सगुणा ब्राह्मी विज्ञेया त्रिगुणातिगा"॥ इति प्रकृत्य, "योगी च त्रिविधो ज्ञेयः भौतिकस्सांख्य एव च। तृतीयोऽन्याश्रमी पोक्तो योगमुत्तममाश्रितः॥ प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना। तृतीये चान्तिमापोक्ता भावना पारमेश्वरी"॥ इत्यादिकूर्मवचनानि। "ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे। युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरम्"॥ इत्यादि – याज्ञवल्क्यस्मृतिं चानुसृत्य अकार उकारः, उकारे मकारः, मकार ओङ्कारः, ओङ्कारोऽहमेव अहमात्मा साक्षी केवलकूटस्थचिन्मात्रस्वरूपो, नाऽज्ञानं तत्कार्यं च, किन्तु नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाऽद्वयब्रह्मैवाऽहं, अहं ब्रह्मास्मीत्यभेदेनावस्थानं समाधिः। "अकारं पुरुषं विश्वं उकारे प्रविलापयेत्। उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्॥ मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्। चिदात्माऽहं नित्यशुद्धबुद्धमुक्तस्सदद्वयः। परमानन्दसन्दोहवासुदेवोऽहमोमिति॥ ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलाययेत्"। इत्यादिपञ्चीकरणतद्वार्तिकोक्तरीत्या वैराजादिरूपोपसंहरणेन निरतिशयसूक्ष्मनिरुक्तलक्षणतुर्यसदात्मालम्बनां समापत्तिं विवक्षन्नाह 'ओमित्युमेश सकलं त्वयि संकलय्ये'ति। उमेति शक्तिप्रणवः उच्यते — यथा लिङ्गपुराणे देवीं प्रति शिवः ... "त्वदीयः प्रणवः कश्चिन्मदीयः प्रणवस्तथा। त्वदीयो देवि मन्त्राणां शक्तिभूतो न संशयः। अकारोकारमकारा मदीये प्रणवे स्थिताः। उकारं च मकारं च अकारं च क्रमेण तु॥ त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम्"॥ इति। तद्वाच्या च परमशिवस्य चैतन्यलक्षणा मायादिसंज्ञिता ज्ञानादिमयी शक्तिः। यथा संक्षेपशारीरके — "चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते सत्येवाऽथ जडाऽपराभगवतः शक्तिस्त्वविद्योच्यते"। इति यथा श्रुतिः — "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्। परास्य शक्तिः विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"॥ "मायां तु प्रकृतिं विद्यादि"त्याद्या तत्र समुद्भूतविश्ववासनामयी शक्तिः जगद्बीजभावापन्ना सैव मायादिसंज्ञिता भवति। यद्विषये — "मायाऽस्य परमादेवी शक्तिराकाशसंज्ञिता। मम सा परमा माया प्रकृतिस्त्रिगुणात्मिकाप्रोच्यते मुनिभिच्शक्तिः जगद्योनिस्सनातनी"॥ इत्यादिपुराणम्। "न्यग्भूतविश्ववासनामयी निलीनजगद्बीजशक्तिभावा चिच्छक्तिरभिधीयते"। "या सा माहेश्वरी शक्तिः ज्ञानरूपाऽतिनिर्मला"॥ इति। "ममैव सा परा शक्तिः देवि विद्येति संज्ञिता"॥ इति। यया परमशिवस्सर्वज्ञो भवति। यथा कौर्मे — "तथाऽहं सङ्गतो देव्या केवलो निष्कलः परः। पश्याम्यशेषमेवेदं यस्तद्वेद स मुच्यते"॥ इति। सैव चेच्छाशक्तिरभिधीयते। यथा शिवपुराणे — "सदाशिवाङ्कमारूढाशक्तिरिच्छाह्वया शिवा" इति। सैव च शिवस्य परम आनन्दः। यथा ब्रह्माण्डे — "अयं स

भगवानीशः स्वयं ज्योतिस्सनातनः । स्वानन्दभूता कथिता देवी नागन्तुकी शिवा" ॥ इति । तदेतदभियुक्तैरुक्तम् "विद्यां परां कतिचिदम्बरमम्ब केचिदानन्दमेव कतिचित् कतिचिच्च मायाम्" इत्यादि । तथैव च महानन्दभोगो शिवो भवति । **यथा सनत्कुमारसंहितायां** — "भिक्षमाणं महादेवं ज्ञात्वा यत्र स्वयं शिवम् । शिवाऽऽनन्दमनाद्यन्तं स्वात्मानं प्रददौ शिवा" ॥ इति । अथवा, किं विशेषेण, येयमनुवर्ण्यते **तदभियुक्तैः** — "शक्तिश्शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमानसजालमिच्छा । ऐश्वर्यमायतनमावरणानि च त्वं किं तन्नयद्भवसि देवि शशाङ्कमौलेः" ॥ इत्यादिना । तस्या—उमाया धर्मभूताया धर्मिभावेन व्यवस्थितिहेतुत्वादीष्ट इति **उमेशेति** सम्बोधनम् । तच्चात्र तुर्यस्साक्षी सदात्मा समापत्तिविषय इति सूचयितुं । **अथवा,** परमशिवतत्वविद्या उमानुग्रहाधीनेति तदनुध्यानविवक्षयोमेशेति सम्बोधनम् । **यथा शिवपुराणे** — "ते ध्यानयोगानुगताः प्रापश्यंच्छक्तिमैश्वरीम् । पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ॥ तया विच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमन्तं महादेवं अपश्यन्दिव्यचक्षुषा" ॥ इति । **तथा कौर्मे** — "इत्येवं मन्यमानानां ध्यानकर्मावलम्बिनाम् । आविरासीन्महादेवी गौरी गिरिवरात्मजा । निरीक्षितायाः परमेशपत्न्यास्तदन्तरे देवमशेषहेतुम् । पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम्" इत्यादि । **तलवकारोपनिषदि च** — "ब्रह्म ह देवेभ्यो विजिग्ये, तस्य ब्रह्मणो विजये देवा अमहीयन्त, एवमजानन्तस्त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवाऽयं महिमेति । तद्धैषां विजज्ञावहङ्कारं तं विनीयानुग्रहीतुं तेभ्यो ह प्रादुर्बभूव यक्षरूपेण, तन्न जानत देवाः किमेतद्यक्षमिति । ततो देवनियोगादग्निर्वायुश्च ज्ञातुं तदभिद्रुत्य सर्वदाहादानसमर्थावपि तन्निहिततृणमात्रदाहादानाऽशक्तौ तदविज्ञायैव निवृत्तौ, अथेन्द्रस्तदभ्यद्रवत्तस्मात्तत्तिरोदधे, तस्मिन्नेवाऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति, सा चोमा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदांचकार ब्रह्मेति इन्द्र इतीत्युमाऽनुजग्राहाधीना ब्रह्मविद्याम्नातेति" । **त्वयि,** न्यग्भूतजगद्बीजशक्तिभावे समुद्भूतचिच्छक्तिके तुर्ये साक्षिणि सदात्मनि । **सकलं,** स्थूलसूक्ष्मादिभेदभिन्नं कार्यकारणभूतं वैराजादिरूपमकारादिमात्रात्रयात्मकं । **शङ्कलय्य,** पूर्वपूर्वं कार्यं उत्तरोत्तरस्मिन्कारणे उपसंहृत्य । ओमित्यर्धमात्राऽभिधेयत्वानुसन्धानेन **विनिविष्टभावइत्यत्राप्यनुकृष्यते** । विशेषेण स्वरूपशून्यवद्भावेन निविष्टो विषयलीनो भावो भावना यस्य स तथा । अनेन ओंशब्दवैराजादिविलया विच्छिन्नसदात्मविषया सविचारसमापत्तिरुपक्षिप्ता । अत्रैव निर्विचारसमापत्तिं विवक्षन्नाह **त्वद्भावेत्यादि । तव,** सदात्मनो भावस्तत्वं, स एव **केवलः** शब्दाद्यनवच्छिन्नः **तत्तया** । सविचारालम्बनीकृतशब्दाद्यवच्छेदविधुरः सदात्मैव यथा निर्भातो भवति तथेत्यर्थः । **विनिविष्टो भावो** भावना **यस्य** स तथा । अत्राप्युक्त एव विशब्दार्थः । एषैव चिच्छक्त्यालम्बनतया ग्रहणसमापत्तिः स्वमात्मालम्बनतया ग्रहीतृसमापत्तिश्चोच्यते ।

एष एव सदात्मनिसम्प्रज्ञातः, चिच्छक्तेरानन्दतया सानन्दः अहंग्रहेण सा ऽस्मितश्चोपचर्यते। एवं सदात्मनि सम्प्रज्ञातसमाधिमुक्त्वा, तत्रैवा ऽसम्प्रज्ञातसमाधिं विवक्षन्नाह **संशान्तेत्यादि**। जीवो ध्याता, **परमेश्वरो** ध्येयः। सौषुप्तोपीश्वर इति सदात्मा परमेश्वर इति विशेष्यते। **तयोर्भेदमोहः**, अहं ध्याता अयं ध्येय इत्येवंलक्षणः स सम्यक् **शान्तो** यस्य स तथा। सम्प्रज्ञातेप्यर्थमात्रनिर्भासे स शान्त एव। किन्तु न सम्यक् सवृत्तिकचित्तसत्वोपाधेरवस्थितत्वात् तद्वृत्तिविरामाभ्यासेन संस्कारशेषे तु तस्मिंस्तदपेक्षया सम्यक् शान्त इव भवतीति **सम्**इति विशेषणम्। सोऽहं भेदकोपाधिसत्त्ववृत्त्युपशमात् सदात्मभूतोऽहम्। **अभूतमयं विहायसं** विहायसशब्दाभिधेयम्। भूताकाशं तावत्प्रसिद्धम्। अव्याकृताऽऽकाशं च यदिदमुच्यते "एतन्नु खल्वक्षरे तस्मिन् गार्ग्याऽऽकाश ओतश्च प्रोतश्चेति", तच्च भूतमयमभूतोपादानत्वात्। तदुभयव्यावृत्तये विशेष्यतेऽभूतमयमिति। सदात्मा च विहायस उच्यते। "ओं खं ब्रह्म, आकाशो ह वै नामरूपयोर्निर्वहिता, ते यदन्तरा तद्ब्रह्म"त्यादिदर्शनात्। विश्वमूर्त्यभावलक्षणत्वाच्च। **तं श्रयामि**, तादात्म्यभावेनाऽवतिष्ठ इत्यर्थः। आनिरोधसमाधिपरिपाकात् असंप्रज्ञातेऽपि संस्कारशेषचित्तसत्वभावे तदुपाधिकभेदगन्धानुवृत्तेः श्रयामीति व्यपदेशः। **अथवा**, यत्तदुक्तं सदात्माऽहंग्रहसमाधिना वशीकृते मनसि "तदेवाऽऽविर्भवेत्साक्षादपेतोपाधिकल्पनम्" इति तदिदमुच्यते संशान्तइत्यादि। श्रुतब्रह्मात्मैकात्म्यस्य सदर्थविषयभावनापरिपाके साक्षात्काररूपापत्तौ श्रवणसंस्कारदार्ढ्येन स एव प्रमाणसाक्षात्कारस्सम्पद्यत इति भेदभ्रमकारणाविद्यानिवृत्त्या संशान्तजीवादिभेदमोहस्सदात्मभावेनाऽवतिष्ठ इत्यर्थः। आप्रारब्धक्षयादविद्यावासनाऽभावेभेदभ्रमगन्धानुवृत्तेः श्रयामीति व्यपदेश इति। **अत्र पक्षे** त्वद्भावकेवलतया विनिविष्टभाव इत्यत्रैवावृत्त्याऽसंप्रज्ञातसमाधिरप्युपक्षेपयितव्यः। त्वद्भावकेवलयेति भावना विषयत्वव्यावृत्तिः विनिविष्टभाव इति। विपरीततयाऽविषयोन्मुखतया विनिविष्टश्चित्तसत्व एव संशान्तो भावो यस्य स तथेति व्याख्येयम्। **अथवा** तृतीयपादेनाऽसंप्रज्ञातः तुरीयपादेन यथोक्तसमाधिफलमिति व्याख्येयमिति **सर्वं समञ्जसम्** ॥ १२३ ॥

**एवं** तावद्विराजादितुर्यान्तेषु स्थूलसूक्ष्मसूक्ष्मतमेषु ग्राह्यग्रहणग्रहीतृभावविशिष्टेषु परमात्मरूपभेदेषु सवितर्कोनिर्वितर्कस्सविचारो निर्विचार इदि चतुरवस्थस्संप्रज्ञातसमाधिरुक्तः। तत्र तत्र समाधिपदे समाधिवृत्तेरपि विरामप्रत्ययाभ्यासवशेन चित्तस्य संस्कारमात्रशेषतालक्षणोऽसंप्रज्ञातसमाधिरप्युक्तप्राय एव। न चैतावता कैवल्यलक्षणपुरुषार्थकाष्ठाप्राप्तिः, शक्तिविशिष्टसदात्मभावनासंस्कारविशेषतया चित्तस्य व्युत्थाने भेदमोहमूलाऽविद्यानपवादात्। ननु तस्याऽपि निरोधे "सर्वनिरोधान्निर्बीजस्समाधिः" **इति सूत्रितम्**। ततश्च निरोधसंस्कारस्यापि निरोधे दग्धेन्धनानल इवाऽवसिताधिकारे चित्तसत्वे शान्ते नपुनर्भेदमोह इति चेन्न, आत्मतत्त्वसाक्षात्कारादबाधितयोर-

विद्याकर्मणोरनुवृत्तौ चित्तसत्वस्य पुनः प्रसवावश्यम्भावात्। शक्तिविशिष्टसदात्मसमाधिपरिपाके चाऽकृतकवस्तुतत्त्वसाक्षात्कारायोगाच्च। "तदेवाविर्भवेत्साक्षादि" त्यादि च दूष्यमेव। ध्येयभूत-परमात्माऽनुग्रहविषयं व्याख्येयम्। "यमेवैष वृणुते तेन सभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां, आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनां मुने" इत्यादिदर्शनात्। **अतोऽधुना** कैवल्यनपरनाम्ने निष्केवलप्रकाशाऽऽनन्दसत्तामात्रात्मपरिशेषाय ग्राह्याद्युपहितमर्यादतुर्यस्वरूपभेदेष्वेव संप्रज्ञाता-ऽसंप्रज्ञातसमाधी विवक्षन्नाह **निश्रेणिकेत्यादि**। तत्र यद्येवमात्मकैवल्यावसानो योगो विवक्षितस्तर्हि तुरीयात्मालम्बनो विकल्पयोग एवोच्यताम्। किं योगान्तरेणाऽभिहितेनेत्याशंक्याऽवनिगतस्य हर्म्याधिरोहणे अधिरोहिणीपर्वसङ्क्रमणन्यायेनानत्यन्तविशुद्धबुद्धिसत्वस्य पूर्वपूर्वयोगभूमिजयक्रमेणैव चरमयोगभूमिलाभः। अन्यथाऽलब्धभूमितया चित्तस्याऽनवस्थिततत्वप्रसङ्गादित्यभिप्रेत्यात्र पुराकल्पमिवाऽऽह —

**निश्रेणिकापदसमाक्रमणक्रमेण**
**निष्केवलात्मचिति विश्रमशर्मकामाः।**
**ओतादिभिश्शिव भवन्तमुदारयोगै-**
**रोंकारसङ्कलितयोगविदश्श्रयन्ते ॥ १२४ ॥**

लोके खलु **हर्म्यतलविश्रमकामाः निश्रेणिकायाः पदानां**, पर्वणां **समाक्रमणेन** हर्म्यतलं **श्रयन्ते**। समाङ्भ्यामशैथिल्येनाभिव्याप्त्याऽनन्तरपदानुल्लङ्घनेन चक्रमणं पदविक्षेपो विशेष्यते। दार्ष्टान्तिकयोगाभ्यासेऽपि तथात्वप्रतिपादनाय, **तत्क्रमेण** तद्रीत्या **निष्क्रष्टायां** स्थूलसूक्ष्मबीज-शक्तिभ्यो विविक्तायां, अत एव **केवलायामात्मस्वलक्षणायां चितौ विश्रमेण** सकलसंसारा-यासविनयनेन **शर्म** निरतिशयाऽऽत्मसुखं **कामयन्त** इति तथा। नन्वागमाचार्योपदेशग्रहणकौशलेन ब्रह्मात्मैकात्म्यसाक्षात्कारो हि तादृशशर्माऽधिगमोपायः। तत्राकुशलशेमुषिकाणां तत्कामना दुर्गतस्य स्वर्गराज्यकामनेव विफलेत्याशङ्क्य तेषामपि श्रुतमात्रब्रह्मात्मभावनायां योग एव तत्साक्षात्कारोपायो-ऽस्ति। श्रुत्वाऽन्येभ्य उपासते तेऽपि चापि तरन्त्येव मृत्युम्" इत्यादिस्मरणात् इत्यभिप्रेत्याऽऽह। **ओंकारेण** समवाचकतयाऽभेदेन **कलितः** संगृहीतः। ओतादिसंज्ञश्चतुरात्मकस्तुरीय आत्मा तस्मिन्। **योगाः**, समाधिभेदास्तद्विदः तज्ज्ञा इति। अत्र योगेऽपि तत्त्वसाक्षात्कारः प्रमाणाधीन इति। तत्प्रमाणविवक्षया **ओङ्कारसङ्कलितेत्युक्तम्**। ब्रह्मात्माभेदबोधकत्वं च ओङ्कारस्य तत्त्वमस्यादितुल्ययोगितया शास्त्रसिद्धम्। **यथाहुः**। "अकारोकारवर्णाभ्यां

सातत्योत्कर्षधर्मिणम् । प्रत्यच्चं संस्मरेन्मार्थं ब्रह्म चैक्यं तथोमिति" ॥ सोऽहमिति परमात्ममन्त्रविकारतां चाहुराचार्याः। सकारं च हकारं च लोपयित्वा प्रयोजयेत्। सन्धिं च पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत्" ॥ इति। स चाऽयं योगो न वेदनमात्रेणोपायः। "फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्। न नामग्रहणादेव तस्य वारि प्रसीदति" ॥ इति ह्याभाणकः। किन्त्वनुष्ठित इत्यभिप्रेत्याह — **ओत आदिर्येषां** ओतानुज्ञात्रनुज्ञाविकल्पानां ओताद्यात्मविषयतया योगा अप्योतादय उक्ताः **तैः**। "अकारं ब्रह्माणं नाभावुकारं विष्णुं हृदये मकारं रुद्रं भ्रूमध्ये ओंङ्कारं तुरीयमानन्दामृतरूपं षोडशान्ते तथा तेष्वेव स्थानेषु ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तांस्त्रीनेवाऽविभक्तांस्त्रीनेव लिङ्गरूपानेव च सम्पूज्ये"ति चतुर्मूर्त्यादियोगा उक्ताः। वैराजाद्यहंग्रहयोगाश्च, तद्द्वेयक्वैवल्यलक्षणविशिष्टफलं दत्वा वैराजादिपदत्यागहेतुत्वाद्वा, **उदारैर्योगैस्समाधिभेदैः**। **हे शिवेति** सम्बोधनमविकल्पयोगगम्यमङ्गलस्वरूपसूचनाय। **भवन्तं**, तत्तद्योगानुरूपं। **श्रयन्ते**, अहमस्मीति त्वदात्मभावेनोपासते। **अत्राऽयं पुराकल्पवद्व्यपदेशः**। ओमित्येव सर्वत्राऽऽत्मयोगः श्रुतिसम्प्रदायानुगत इति दर्शयितुं। तत्र च यथायोगं श्रुत्यादिप्रमाणानि प्रागेवोपन्यस्तानि। तथा च ये केचिद्योगैश्वर्यप्रसक्तहृदयतया पाण्डित्यमात्रख्यापनपरा निश्रेयसपथात्प्रमाद्यन्ते, **माण्डूक्यादिश्रुत्यनुसारिणि** समाधिविवरणे पञ्चीकरणे ओंङ्कारोऽहमेवेति समाधिभवपदपर्यवसानमनवेक्ष्य मकारोऽहमेवेत्येव समाधिपदविश्रान्तिमास्थिषत तन्मोहमूलम्। तमोमयोऽह्यात्मा मकारार्थ इति तदनुसारिणो मन्दा मा तत्रैव तमसि माङ्क्षुरित्यसदाद्यनुग्रहायाऽसदाचार्यचरणा ओंकारोऽहमेवेत्योंकारालम्बनांतमेव समाधिपदपर्यवसानमिति सप्रमाणं प्रणवनिर्णयाख्ये समाधिसारसंग्रहेऽन्वग्रहीषुः। **यथा माण्डूक्ये** — "ओमित्येतदक्षरमिदं सर्वमि"त्युपक्रम्य, "तस्योपव्याख्यानमि"त्यादिनोपव्याख्याय, "सोऽयमात्माध्यक्षरमोंकारोध्यमात्रं पादमात्रामात्राश्च पाद इति तुरीयेणोंकारेण तुरीयस्याऽऽत्मनः ईश्वरहिरण्यगर्भविराजांश्च मकारादिभिरैवयं चिन्तनीयमि"त्यभिप्रेत्या"मात्रचतुर्थोऽव्यवहार्यः प्रपञ्चोपशमश्शिवोऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेदे"त्युपसंहारादोङ्कार एव पर्यवसानमुक्तम्। **उत्तरतापनीये च** — "अजयैनं चतुष्पादमात्राभिरोंकारेण चैकीकुर्यात्" इति चाऽध्यारोपाऽपवादाभ्यां ओंकारे पर्यवसानमुक्तम्। किञ्च "मात्रामात्राः प्रतिमात्राः कृत्वा ओताऽनुज्ञात्रनुज्ञाविकल्परूपं चिन्तयन् ग्रसेत्", "महास्थूलं महासूक्ष्मे, महासूक्ष्मं महाकारणे च संहृत्य मात्राभिः ओतादिरूपं चिन्तयन् ग्रसेदि"ति च। तुरीयखण्डे चोतादिप्रणवानामात्माविभक्तत्वमुक्त्वा, अनुज्ञाविकल्पाऽन्यतरप्रणवेनाऽऽत्मनिष्ठत्वमुपपादितम् "ओमित्यनुजानीध्वं ओतमोतेन जानीयादि"त्यादिना। **शौनकीये च** — "अकारः पीड्यमानस्सन्नुकारं प्रतिपद्यते। उकारः पीड्यमानस्सन्मकारं प्रतिपद्यते॥ अर्धमात्रां मकारोऽपि पीड्यमानः प्रपद्यते। अर्धमात्राऽपि विलयं यात्यमात्रे निराश्रये॥ यश्शब्दमय ओंकारः उच्चार्यस्स्थूल एव सः॥ अमात्रो यो न

तूच्चार्यः स ओंकारः परो मतः। निर्गुणायोगगम्या सा याऽर्धमात्राऽऽत्मसंस्थिता ॥ यदा प्रयुक्त ओंकारः परिनिर्वाति मूर्धनि । तदोंकारमयो योगीहृ्यक्षरे हृ्यन्तरीभवेत्" ॥ इत्यादिना तथैव प्रतिपादितमित्यादि । तथा मकारपर्यवसानशङ्काबीजं च स्वयमेवोद्भाव्य पर्यहार्षुः । यथा – ननु मकारस्य जगत्कारणवाचकत्वेन **सारसङ्ग्रहे** "क्षराऽक्षरपरोदेवो मकारः परमेश्वरः। मकारो हि महाचितिः", "पञ्चविंशात्मको भोक्ता षड्विंशो भाजको मतः। उभयात्मा मकारोऽयं प्रणवस्स उदाहृतः ॥ अपरः प्रकृतेर्यद्वा वाचकोऽकार इष्यते सन्मात्रबीजरूपेण सर्वत्राऽनुगता हि सा ॥ अकारस्सर्ववर्णेषु तथैवेहान्वितस्सदा । तस्मात्तद्वाचकोऽकारस्तद-भिन्नः सदा भवेत्। उन्मेषस्स्यादुकारोऽयं तस्या उद्गतसाक्षिणः ॥ व्याप्तेर्बलस्य वाऽऽधिक्याद-कारादुद्गतोहृ्यसौ । तद्वत्साक्ष्यात्मिका शक्तिः स्वाभासबलसंयुता ॥ उकारोऽतस्तदात्मा स्यात्तदाभासाऽमृताप्लुतः। मकारो महतो बोधः केवलस्य महात्मनः॥ निराभासमहासंविदानन्दैक-स्वरूपिणम्" । इति। तथा प्रतिपादनेन, "अस्वरेण मकारेण पदं सूक्ष्मं निगच्छति। इति श्रुतिस्मृतिभ्यां, "अकारोकारवर्णाभ्यां सातत्योत्कर्षधर्मिणम्। प्रत्यञ्चं संस्मरेन्मार्थं ब्रह्म चैक्यं तथोमि" ति ॥ **तापनीयषष्ठखण्डे** प्रतिपादनेन च मकारार्थः प्रधानमिति चेद्धन्त तर्ह्यकारो-कारयोरपि तुल्यमेतत्। **व्यतिहारखण्डे** हि एकेन प्रणवेन व्यतिहारे उकारेण दीर्घेण द्विर्ब्रह्मणः प्रतिपादनात्, "अजाद्यात्मकमात्मानमकारार्थं परेश्वरम्। उवर्णपूर्वभागार्थमुत्कृष्टाद्यात्मकं विदुः ॥ उवर्णोत्तरभागार्थं तं विदुर्व्यतिहारतः । मार्थमुक्तमहानन्दाद्यात्मप्रत्यक्तयोमिति । इत्यजोत्कृष्टमुक्तादिशब्दैकांशाऽक्षरात्मना ॥ एकेन प्रणवेनैक्यं जानीयाद्व्यतिहारतः। अथवा-ऽकारमात्मानं मकारं च जगद्गुरुम्। अवधारणसंयुक्तमेकीकुर्यात्तथोमिति ॥ अहं शब्दैकदेशत्वात् ब्रह्मशब्दैकदेशतः। अतात्यारेकदेशत्वाद्ब्रह्माकारेण च स्मरेत् ॥ साक्षित्वान्मन आदीनां मकारेण तु साक्षिणम् । सावधारणमैक्यार्थमेवमोमिति पश्यति" ॥ इति वार्तिककारादिभिः प्रतिपादनात्। **वस्तुतस्तु पञ्चीकरणमूले,** माण्डूक्यतापनीयादौ प्रणवपर्यवसानमुक्तम्। सोऽयमात्मा चतुष्पादित्यत्र विश्वादिषु प्राज्ञान्तेषु पादशब्दः साधनवचनः, तुरीये तु पद्यत – इति पादः इति भाष्यकारवचना-दप्येवमेव। ओङ्कारस्याऽपि तुरीयपादाभिन्नस्य ज्ञेयत्वमिति न मकारे पर्यवसानमित्यादि। तस्मादा-त्मयोगस्सर्वत्रोंकारालम्बन इति सिद्धम्।

अत्राऽयं विषयविवेकः। जागराभिमानी विश्वो वैश्वानरः, स्वप्नाभिमानी तैजसस्सूत्रात्मा, सुषुप्ताभिमानी प्राज्ञस्तुरीयः ईश्वरः, समुद्भूतचिच्छक्तिस्साक्षी च अकारादिमात्रातदतीतोंकारवाच्या उक्ताः। ते पृथक् चतुरात्मानः तापनीय उद्दिष्टाः। स्थूलभुक्चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः। सूक्ष्मभुक्चतुरात्मा तैजसो हिरण्यगर्भो द्वितीयः पादः। अथानन्दभुक्चेतोमुखश्चतुरात्मा प्राज्ञ

ईश्वरः तृतीयः पाद इति, पुनश्च अजयैनं चतुष्पादं मात्राभिरोंकारेण चैकीकुर्यात् इत्युक्त्वा कथमित्युपेक्षिते "जागरितस्थानः चतुरात्मा विश्वो वैश्वानरश्चतुरूपोकार एव, चतुरूपोह्ययमकारः, स्थूलसूक्ष्मबीजसाक्षिभिरकाररूपैः स्वप्नस्थानश्चतुरात्मा तैजसो हिरण्यगर्भश्चतुरूप उकार एव, चतुरूपोह्ययमुकारः, स्थूलसूक्ष्मबीजसाक्षिभिरुकाररूपैः सुषुप्तस्थानश्चतुरात्मा प्राज्ञ ईश्वरश्चतुरूपो मकार एव, चतुरूपोह्ययं मकारः, स्थूलसूक्ष्मबीजसाक्षिभिर्मकाररूपैरि" ति वाच्यवाचकैकीकरण-हेतुसामान्यविवक्षया स्थूलादिसंज्ञया तानेव चतुरात्मनो निरूप्याध्यारोपितविशिष्टरूपात्मयोगमुक्त्वा "मात्रामात्राः प्रतिमात्राः कुर्यादि" ति तदपवादमभिधाय, अथ "तुरीय ईश्वरग्रासः स्वराट् स्वयमीश्वरश्च स्वप्रकाशश्चतुरात्मोतानुज्ञात्रनुज्ञाऽविकल्पैरोतोह्ययमात्मा यथेदमन्तकाले कालाग्निसूर्यो-स्रैरनुज्ञाताह्ययमात्माऽस्य सर्वस्याऽऽत्मानं ददातीदं सर्वं स्वात्मानमेव करोति यथा तमस्सविताऽनुज्ञैकर-सोह्ययमात्मा यथा दाह्यं दग्ध्वाऽग्निरविकल्पो ह्ययमात्माऽवाङ्मनोगोचरत्वाच्चिद्रूपश्चतुरूप ओंकार एव चतुरूपो ह्ययमोंकार ओतानुज्ञात्रनुज्ञाविकल्पैरोंकाररूपैरि" ति तुरीयोऽपि चतुरूपो निर्दिष्टः । **तत्र जागरादीनां** प्रत्येकं चतुरवस्थत्वोपपादनेन तदभिमानिनां तदेव चतुरात्मत्वं तापनीयदीपिकादावुपपादितम् । यथा जागरणे चक्षुरादिद्वारा विषयान्गृह्णाति तदा जागरणजागरणम् । तत्स्थूलं, विशदार्थज्ञानप्रकाशत्वात् । यदा मनसैव विषयान्गृह्णाति तदा जागरणस्वप्नः । स सूक्ष्मः, अन्तरिन्द्रियेणान्तरविशदार्थज्ञानप्रकाशत्वात् । यदाऽनिद्राण एव बहिरन्तरिन्द्रियैरुभय-विषयानप्रतिपद्याऽचेतन इव भवति तदा जागरसुषुप्तम् । तद्बीजं बाह्यान्तरविषयज्ञानवासनार्थ-प्रकाशत्वात् । यदा समाध्यारूढ इव स्वयंप्रकाशमानमात्मानमज्ञानेनासंस्पृष्टमहमस्मीति केवलमनुभवति तदा जागरणतुरीयः । साक्षी ज्ञानमात्रप्रकाशत्वात् । **तथा सङ्ग्रहे**—"स्थूलमिन्द्रियगम्यं यत् तद्भुङ्क्तेऽसौ चतुर्विधः । जागरे जागरस्वप्नसुप्तितुर्याख्यभेदतः ॥ जागरो व्यवहारोक्षैः स्वप्नो मानमचिन्तनम् । तूष्णीं स्थितिस्सुषुप्तिस्स्यात् तृप्तत्वं तुर्यमुच्यते" ॥ इत्यादि । एवं तदभिमानी विश्वस्थूलादिभिश्चतुरात्मा तदा तद्वाचकोकारोऽपि प्लुतदीर्घह्रस्वज्ञानशब्दितैरुदात्तस्वरितानुदात्तज्ञानरूपैः स्थूलादिभिश्चतुरूप इति सङ्ग्रहे। अन्यथा **चतुरूपत्वमुक्तम्** । "वैखर्याद्याः परान्तास्तु शब्दभेदक्रमादमी । स्थूलसूक्ष्मौ बीजसाक्षिणावित्येवं श्रुतीरिताः" ॥ इति । स्वप्नेऽपि स्वप्नचक्षुरादिना विषयग्रहणं स्वप्नजागरणम् । तत्स्थूलं । स्वाप्नमनसैव विषयग्रहणं स्वप्नस्वप्नः । स सूक्ष्मः । अनुपरत एव स्वप्नशरीरे तदुभयविषयाग्रहणं स्वप्नसुषुप्तम् । तद्बीजम् । अत्राऽपि साक्षीमात्रानुभवः स्वप्नतुरीयम् स साक्षी, **सङ्ग्रहे पुनरुक्तम्** – स्पष्टस्मृतिरथाऽस्पष्टस्मृतिरस्मृतिरित्यपि । स्वप्नभेदास्स्वप्नमध्ये जाग्रत्स्वप्न-सुषुप्तयः ॥ स्वप्ने तुरीयं तृप्तत्वं जाग्रतीवाऽनुभूयते" । इत्यादि । एवं तदभिमानी तैजसश्च स्थूलादिभिश्चतुरात्मा, तद्वाचकोकारवदुकारोऽपि चतुरूपः । सुषुप्ते च यदा सुषुप्तोन्मुखो जागरीय-रूपाद्यज्ञानमनुभवति तदा सुषुप्तजागरणम् । तत्स्थूलम् । यदा विरतग्राह्यस्थितिरिन्द्रियवृत्तिः स्वाप्न-

रूपाद्यज्ञानमनुभवति तदा सुषुप्तस्वप्नः। स सूक्ष्मः। यदा सुषुप्त एव न्यग्भूतसाक्षिकमज्ञानमनुभवन्नपि रूपादिविषयविशेषापरिचयेन स्तब्धवन्नानुभवतीव तत्सुषुप्तम्। तद्बीजम्। यदा स जागरोन्मुखः प्रादुर्भवदहंभावोऽस्पष्टज्ञानं साक्षिगमेवानुभवति तदा सुषुप्ततुरीयं स साक्षी, "सङ्ग्रहे" तूक्तम् — तं, "दृष्ट्या मिथ्यालपद्वाचा तदा स्यात्सुप्तिजागरः। ध्यानाभासस्तु यत्तन्द्यां सुप्तिस्वप्नस्स उच्यते॥ गाढनिद्रा सुप्तिसुप्तिः सुप्तितुर्यं सुखोद्भवः"। इत्यादि। एवं तदभिमानी प्राज्ञः स्थूलादिभिश्चतुरात्मा तद्वाचके मकारे यद्यपि नोदात्तादिभेदोऽस्ति तथापि ध्वनियोगादकारयोगाद्वा, बिन्दुयोगाद्वा उदात्तादिचतुरूपत्वमुन्नेयम्। वैखर्यादिभेदैश्चतुरूपत्वं तु सुवचमिति। अत्र च "मात्रामात्राः प्रतिमात्राः कुर्यादि"ति स्थूलं सूक्ष्मे, सूक्ष्मं बीजे, बीजं साक्षिणीति सर्वावस्थासु साक्षिशेषमुपसंहरेत्। तथा जागरसाक्षिणं स्वप्नसाक्षिणि, तं सुप्तसाक्षिणि, तं च तुर्ये उपसंहरेदित्यर्थः। तुर्यावस्थायामपि यथा विश्वंवैश्वानरदर्शी, इदं सर्वं यदयमात्मेति श्रुतवान्, कालाग्निसूर्यकिरणव्याप्तमिवान्तर्बहिरात्माभिव्याप्तं विश्वभेदमात्मभावेनावलोकयति तदा तुर्यजागरणं तत्स्थूलम्। विश्वभेदस्य सत्वात्। स ओतः, विश्वभेदानुस्यूतेः। स च मकारार्थमीश्वरं ग्रसतीति ईश्वरग्रास इत्युच्यते। यदा पुनरस्थूलमनण्वित्यादिश्रुतवान् उपसंहृतबाह्येन्द्रियविषयवृत्तिः तैजसहिरण्यगर्भाभेददर्शी मानसवासनामयविश्वभेदमात्माभेदेनाकलयति। यत्रेदमाम्नायते — "अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक" इति तदा तुरीयस्वप्नः। स सूक्ष्मः। वासनामात्रसाक्षित्वात्। सोनुज्ञाता तमसइव सविता विश्वभेदस्य स्वात्मानमनुजानाति, तद्रूपविलयेन स्वात्मानमेव करोतीति, ततस्स्वयमेव राजतीति स्वराडित्युच्यते। यदा पुनश्शास्त्रविज्ञानेनाऽज्ञानादिविश्वनिषेधे ज्ञात्रादिभेदशून्यतया स्वयंप्रकाशमात्मानं दग्धदाह्यमपगतधूमजालमङ्गारावस्थमिवानलमनुभवन् स्तब्ध इव भवति तदा तुर्यसुप्तम्। तद्बीजं, व्युत्थानबीजसंस्कारशेषत्वात्। साऽनुज्ञा विश्वभेदविलयमनुसाक्षी ज्ञानमात्रैकरसत्वात्। स चाऽयं भेदशून्यत्वात् स्वयमीश्वर इत्युच्यते। यदा पुनर्निरिन्धनानल इव संस्कारशेषाऽविद्यालेशस्याऽपि विलये संशान्तसाक्षिभावो वाङ्मनसागोचरश्चिद्रूप एव केवलो भवति तदा तुरीयतुरीयम्। स साक्षी अविक्रियज्ञानमात्रत्वात् उपचर्यते साक्षीति। सोऽविकल्पः, सर्वभेदविकल्पशून्यत्वात्। अत एव स स्वप्रकाश इत्युच्यते। सङ्ग्रहे चैवमभिहितम् — "ओताऽनुज्ञात्रनुज्ञाऽविकल्पशब्दैरुदीरिताः। चतुर्थपादगाभेदाः तत्स्वरूपं विविच्यते॥ ब्रह्मणो गुरुशास्त्राभ्यां बुद्ध्वा सर्वात्मतां ततः। सर्ववस्तुष्वनुस्यूतं पश्यन्नोतो भवेदयम्। इन्द्रियाणि निरुध्याऽहं ब्रह्मेति ब्रह्मताऽऽत्मनि॥ येनाऽनुभूयते सोऽयमनुज्ञातेति कथ्यते। ज्ञातृत्वं च तिरस्कृत्य चिदेकरसशेषता। अनुज्ञेत्युच्यते मुक्तिरविकल्प इतीर्यते॥ विद्वज्जागरणस्वप्नसुप्तितुर्याभिधा इमाः। अवस्थास्तिस्र एतासु मायालेशेन संयुतः। निश्शेषमायाहीनोऽयं अविकल्पो भवत्यथ"। इति। तथा — "तत्र तुर्यं चतुर्भेदं ईशग्रासादिनामकम्" इति। तत्राकारमोंकारश्चोतः, अकारेण सर्ववागनुस्यूतेः

अनुज्ञाता च, उकारेणाऽकारमनुज्ञायमानत्वात् पूर्वमात्राविलयानुज्ञातृत्वाद्वा अनुज्ञा च, मकाररूपेण अकारोकारयोरात्मभावानुज्ञानात्। अविकल्पश्चोंकारः। मात्राविकल्पशून्यत्वेन चितिमात्रत्वात्। **तथा च श्रुतिः** – "या चतुर्थोतानुज्ञात्रनुज्ञाविकल्पारूपतया तुरीयं चतुरात्मानमन्विष्ये"-त्यादिः। अकारोकारमकारार्धमात्राविन्दुनादशक्तिशान्तरूपे प्रणवे विन्द्वन्तः ओतात्मनो वाचकः नादान्तोऽनुज्ञातुः, शक्त्यन्तोऽनुज्ञायाः, शान्तान्तोऽविकल्पस्येति विभागः। तस्य चायमविकल्पस्यादेश उक्तः। "न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते, स आत्मा स विज्ञेयः, ईश्वरग्रासस्तुरीयतुरीय इति क्रमेण विश्वादिवैलक्षण्याय विशेषणानि। बाह्यस्थूलार्थविषया प्रज्ञा यस्य स जागराभिमानी विश्वः, न तुरीयतुरीयोऽविकल्पात्मा। अन्तर्वासनामयसूक्ष्मार्थविषया प्रज्ञा यस्य स स्वप्नाभिमानी तैजसः, न जागरस्वप्नसंस्कारद्वयात्मकतमोविषयप्रज्ञा यस्य स उभयतः प्रज्ञः, सुषुप्ताभिमानी प्राज्ञः न प्रकर्षेण, इदं सर्वंनात्माहमस्मि स्वात्मभावेन जानातीति प्राज्ञः, ओतात्माभिमानी न, "नञिव युक्तमन्यसदृशे तथाह्यर्थगतिः" इति न्यायेन, ओतात्माभिमानी प्रज्ञसदृशोऽप्रज्ञो वासनामयं सर्वमहमस्मीति अनुज्ञात्रात्माभिमानिनः व्युत्थानसंस्कारगर्भस्य **प्रज्ञानस्य** ग्राह्यादिभेदानवगाहितया घनोऽनुज्ञात्रात्माभिमानिन उदिते विश्वादिवैलक्षण्ये हेतुपराणि विशेषणानि। स्थूलप्रज्ञो हि दृष्टवद्भवति अहमस्मि कर्ता भोक्तेति। तुरीयतुरीयस्त्वदृष्टः सूक्ष्मप्रज्ञोऽनवस्थितस्वभावत्वाददृष्टवद्भावेऽपि व्यवहार्य–एव। सविषयप्रज्ञत्वात्। अयं त्वव्यवहार्यः। उभयतः प्रज्ञोऽपि न किञ्चिदवेदिषमिति प्रत्यवमर्शग्राह्यः, अयं त्वग्राह्यः। तुर्यजागर ओतात्मा सर्वानुस्यूतसत्तारूपत्वादसद्व्यावृत्तिप्रयोजकं लक्षणमेव, अयं त्वलक्षणम्। तुर्यस्वप्नोऽनुज्ञात्रात्मा वासनामयार्थानुस्यूततया ध्यानयोग्यश्चिन्त्यः, अयं त्वचिन्त्यः। तुरीयसुषुप्तोऽनुज्ञात्माध्यात्रादिभेदशून्योऽपि इषुकारनिदर्शनव्यपदेश्यः, तुरीयतुरीयस्त्वव्यपदेश्यः। एवं सर्वथा निषेधे शून्यतानिवृत्तये विशेषणमेकात्मप्रत्ययसारमिति केवलस्वप्रकाशज्ञानस्वभावमित्यर्थः। **प्रपञ्चेनोक्त एवार्थः संक्षेपेण पुनरुच्यते** – विश्वादिषु चतुश्चतुरात्मसु स्थूलसूक्ष्मतत्संस्कारमयकारणप्रपञ्चस्य नास्त्युपशमः, अविद्याभूमित्वात्। शास्त्रीयविज्ञानभूमावपि तुरीयजागरेऽस्ति स्थूलप्रपञ्चानुगतिरिति तद्व्यावृत्तिः प्रपञ्चोपशममिति। तुर्यस्वप्नेध्यात्रादिभेदाऽशिवानुवृत्तिरस्तीति तद्व्यावृत्तिः शिवमिति। तुरीयसुप्ते व्युत्थानसंस्कारो न शान्त इति तद्व्यावृत्तिः शान्तमिति। एवमद्वैतंसर्वविधद्वैतशून्यमविकल्पैकस्वभावमिति। **एवं** परत्रऽपि अविकल्परूपं हीदं सर्वं, नैव तत्र काचन भिदाऽस्तीत्युक्त्वाऽथ तस्यायमादेशो मात्रचतुर्थोऽव्यवहार्यः प्रपञ्चोपशमशिवोऽद्वैत एवमोंकार आत्मैवेति वाचकशब्दद्वारकमविकल्पत्वमुक्तमिति। **अत्रैते श्लोकाः** — "बाह्याच्छब्दादिविषयान्भुङ्क्ते श्रोत्रादिभिर्यदा। स जागरस्तदार्या शरीरेन्द्रियमानिनः॥ शब्दादि-

विषयानन्तर्भुङ्क्ते ऽक्षत्र्याप्तिं विना। यदा सकार्यकरणो जागरस्वप्न ईरितः॥ अक्षेष्वविरतेष्वेव यदा नान्तर्न वा बहिः। भुङ्क्ते शब्दादिकांस्तब्धो जागरे सुप्तमुच्यते॥ यदा त्वविद्यासंस्पृष्ट बुध्यते ज्ञानसाक्षिणम्। समाहित इव स्तब्धस्तुर्यं जज्जागरे विदुः॥ जागर्यायामिव स्वप्नेप्यक्षार्थान् वासनामयान्। आलम्ब्योहच्यस्तथाऽवस्थाः स्वप्नजागरणादिकाः॥ विविक्षज्ञागरात्सुप्तं तस्मिन्विरमणोन्मुखे। रूपादिरूप्यमज्ञानं वेत्ति तत्सुप्तजागरः॥ विविक्षन्स्वप्नतः सुप्तमव्यक्तार्थावलम्बनम्। अज्ञानं वेत्ति यत्सुप्ते स सुप्तस्वप्न उच्यते॥ यदा रूपाद्यनामर्शात्तमोन्यग्भूतसाक्षिकम्। अजानन्निव जानाति सुप्तसुप्तं तदुच्यते॥ सुप्तादीषदपावृत्तो न शब्दाद्यवबुद्धवान्। सन्धौ यत्सक्षिणं वेत्ति सुप्ततुर्यं तदीर्यते॥ अन्तर्बहिरभिव्याप्तिजगद्भावमवेत्ययत्। वेत्ति साक्षिणमात्मानं तं विद्यात्तुर्यजागरम्॥ यदृष्टमृष्टचित्तान्तमैङ्कमिव पश्यति। साक्षिणं वासनाव्याप्तं सतुर्यस्वप्न उच्यते॥ ज्ञातादि भेदानामर्शं साक्षिमात्रात्म भासने। स्तब्धीभवति यन्नाम तुर्यसुप्तं तदुच्यते॥ सर्वसंस्कारविलयादनिन्धन इवानलः। यच्छाम्यति स्वयंज्योतिस्तुर्यतुर्यं तदीर्यते तत्राद्याश्चतुरात्मनस्तिस्रोप्यज्ञानभूमयः। तुरीया चतुरात्मा तु ज्ञनभूमिरुदहृता॥ तिस्रो भूमीः क्रमेणाद्यामात्राभिरुपसंहरन्। तुरीयां भूमिमारोहेदमात्रेण शनैश्शनैः॥ इति। तथा च श्रुतिः "मात्रामात्राः कृत्वोताज्ञात्रनुज्ञाविकल्परूपं चिन्तयन् ग्रसेदि" ति। "महास्थूलं महासूक्ष्मे, महासूक्ष्मं महाकारणे च संहृत्य मात्राभिरोतानुज्ञात्रनुज्ञाविकल्परूपं चिन्तयन् ग्रसेदि" ति च। महास्थूलं चतुर्भेदं विश्ववैश्वानरात्मकम्। महासूक्ष्मे चतुर्भेदे तैजसं हिरण्यगर्भात्मके, तं च महाकारणे चतुर्भेदे प्राज्ञेश्वरात्मके, तच्च महातुरीये साक्षिणि मात्राभिस्सह संहृत्य तद्वृत्त्या विलाप्य तमोतानुज्ञात्रनुज्ञाविकल्परूपं तुरीयममात्रतुरीयोंकारेण चिन्तयन् ग्रसेत्। अविकल्पपर्यवसानं ध्यायन्निरवशेषमन्यद्बाधेतेत्यर्थः॥ १२४॥

तत्रैवं विजितोपसंहृताऽविद्याभूमिभेदस्य विद्याभूमौ तुर्ये प्रथमं तावदोतात्मविषयं योगमुपपादयन्नाह —

अव्यक्तपूर्वमखिलं जगदाविशेष-
मेकात्मना शिव विदन्भवतामयोतम्।
विश्वानुषञ्जनविशेषितमात्मयोग-
मास्थाय सुस्थितिरसानि परश्शिवोऽहम्॥ १२५॥

अत्र विश्वद्दशिवासनामय्यविद्यैव प्रच्युतात्मद्दशिशेषतालक्षणसाम्यावस्थासमुद्भूतविश्वबीज भावावस्थां 'अव्यक्त'मुच्यते। तत्पूर्वं प्रथमं आदिर्यस्य तस्या। अन्तर्बहिर्वा लेशस्याप्यपरिशेषाय

**'अखिल'**मिति विशेषणम् । **आविशेषं,** विशेषाः पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च इन्द्रियाणि च । ते हि तन्मात्राणामविशेषाणां विशेषा एव । तन्मात्राणीव कस्यचिदविशेषाः, तानभिविधाय । अत्र **हे शिवेति** सम्बोधनं अधुनाऽऽत्मनो विश्वतादात्म्याभिमानमयामङ्गल-मात्रक्षयाभिप्रायम् । **भवतामयेति** सामानाधिकरण्यम् । अध्यात्माधिदैवततुरीयसाक्षितादात्म्या-ग्रहाभिप्रायम् । **ओतं,** अन्तर्बहिरभिव्याप्त्या सन्ततमिति विश्वेयविशेषणम् । तथा **विदन्निति** सम्बन्धः । किमत्र आत्मनोतं जगदेव प्राधान्येन वेदनीयम्? नेत्युच्यते । **एकात्मनेति,** 'इत्थंभूतलक्षणे' तृतीया । विश्वजगद्भेदन्यभावेन "इदं सर्वं यदयमात्मे" त्यादि श्रुतेः । आत्मप्राधान्येन विदन् विजानन्निति । एवं विजानत एव ओतात्मयोग इत्यभिप्रायेण विदन्निति प्रयोगः । न चाऽत्र जगद्भेदबाध एव, साक्ष्यात्मालम्बनत्वादोतयोगस्येत्यभिप्रेत्याह — **विश्वस्याऽनुषञ्जनेन** । साक्षित्वनिरूपकतया तदविनाभावेन **विशेषितमात्मयोगं,** अहमस्मि विश्वसाक्ष्यात्मेति समाधिं । **आस्थाय,** अवश्याऽनुष्ठेयमापाद्य । **सुष्ठु** प्रत्ययान्तरानन्तरायं ओतयोगे **स्थितिर्यस्य । सोऽहं** ओतयोगी । **परः शिवः,** तुर्यतुर्यः ओतात्माऽपि शिव एव । विश्वाहमभिमानाऽमङ्गलक्षयात् इत्यतो विशेष्यते पर इति । तत्र हि वासनामात्रशेषामङ्गलस्याऽपि विलय इति । असानि, भवानि । विध्यर्थे लोट् । ओतयोगमारूढस्य नियतः परशिवभावलाभ इत्यभिप्राय इति ॥ १२५ ॥

अथैवं विजितोतयोगभूमेरनुज्ञात्मयोगमुपक्षिपन्नाह —

**मानप्रवृत्त्युपरमादुपरुद्धमेय-**
**भेदानुषञ्जनविशेषतया भवन्तम् ।**
**तद्वासनाञ्जितसतत्वमुमेश जानन्**
**निध्याय साक्षिणमसानि परश्शिवोऽहम् ॥ १२६ ॥**

पूर्वत्र यथायथमक्षादिमानव्यापारोपस्थितविश्वसाक्ष्यात्मविषय ओतयोग उक्तः । इत्यत्र **मानप्रवृत्त्युपरमादित्यनेन गम्यते** — समस्तमानव्यापारोपरमात् मेयस्वरूपानुपस्थितेः, अस्थूल-मनण्वित्यादिनिषेधाम्नानात् । **उपरुद्धः,** वारितः **मेयभेदानुषञ्जनविशेषः यस्य** साक्षिणः स तथा, **तत्तया । भवन्तं,** तथा सम्पद्यमानम् । तर्हि साक्षिभावानुपपत्तिरित्याशङ्क्य पूर्वपादोपात्तविशेषपदा-भिप्रायमाह **तद्वासनेति ।** साक्ष्यविश्वानुषञ्जनाभ्यासेन हि वासित इव साक्षी भवतीति । **तद्वासनया,** साक्ष्यविश्ववासनया **अञ्जित** म्लक्षित एकीकृत, **सतत्वं** स्वभावो यस्य तं तथाभूतं । व्यक्तं

विषयानुषञ्जनमेव वार्यते । नाऽव्यक्तमित्यभिप्रायः । साक्षिणं, जानन्नित्यात्मप्राधान्यवेदनमुक्तम् । शता च पूर्ववद्व्याख्येयः । अत्र उमेशेति सम्बोधनं निर्विषयाञ्जना सूक्ष्मतमा चिच्छक्तिः उमायाः परमं पदमिति दर्शयितुम् । यथा कौर्मे — "या सा माहेश्वरी शक्तिः ज्ञानरूपातिलालसा" । इत्यादिदेविवर्णनपरसन्दर्भे – "एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् । योगिनस्तत्तु पश्यन्ति महादेव्याः परं पदम्" ॥ इति । तथा मङ्कणकं प्रति शिवः – 'मम सा परमा माये" त्यादि प्रकृत्य, "जगदेतदनाद्यन्तं ब्रह्मण्येन व्यवस्थितम् । तदात्मकं तदव्यक्तं तदक्षरमिति श्रुतिः" ॥ इत्युक्त्वा "आनन्दं परमं तत्त्वं चिन्मात्रं परमं पदम् । आकाशं निष्कलं ब्रह्म तस्मादन्यन्न विद्यते" ॥ इति । अथवा, उमासहायत्वादविशेषितपरमूर्तरूपोपासनानुग्रहादेव उदीरितपरयोगलाभ इति कृतज्ञतां दर्शयितुं । उक्तं हि – "यावदायुस्त्वया वन्द्यावेदान्तो गुरुरीश्वरः । आदौ विद्याप्रसिद्ध्यर्थं कृतघ्नत्वापनुत्तये" ॥ इति । निध्याय, तमेव साक्षिणम् । अहमस्मि परसाक्ष्यात्मेति दर्शनरूपापत्तिपर्यन्तं योगमभ्यस्य, अहमनुज्ञात्रात्मयोगी अत्रापि वासना-विषयानुषज्जनमस्तीत्यतः, परशिशवोऽस्मि इति पूर्ववद्व्याख्येयम् इति ॥ १२५ ॥

अथैवं वशीकृतानुज्ञातृयोगभूमेः अनुज्ञात्मयोगं विवक्षन्नाह —

ज्ञात्रादिभेदविधिबाधविमर्शहायं
त्वामात्मकेवलतयैव शिवानुजानन् ।
विश्रान्तधीर्विधिनिषेधपदातिलङ्घ-
जङ्घाल एष परमस्मि परशिशवोऽहम् ॥ १२७ ॥

अस्त्यनुज्ञातृयोगे ज्ञात्रादिभेदविमर्शः । स्वरूपेणाऽहमेव केवलस्साक्षीति ज्ञातृत्वादिबाध-विमर्शश्च । अत्र पुन"र्नेतिनेत्यात्मा", "अन्यदेव तद्विदितादथो आविदितादधी"त्यादिशास्त्रादशेषबाधे वासनालेशमात्रशेषायामविद्यायां, ज्ञात्रादीनां ज्ञातृज्ञेयज्ञानानां भेदाः स्वरूपविशेषाः । तेषां विधिर्भावः, बाधो निषेधः । तद्विमर्शमहमस्मि केवलस्साक्षीत्येवंलक्षणं । हित्वा । अत्र हे शिवेति सम्बोधनं ज्ञात्रादिभेदविमर्शाऽमङ्गलाभावाभिप्रायम् । त्वां, साक्षिणमात्मानं आत्मैव केवलः । दाह्याभावादुपशान्तधूमज्वाल इवाङ्गारानलः । साक्ष्यनिषेधादुपशान्तचिच्छक्तिविलासः, तन्मात्रतया । यथाऽऽत्ममात्रो भवति तथा अनुजानन् । दहन इव दाह्याय आत्मानं जगतेऽतिसृजन् दहन इव दाह्यं जगदात्ममात्रं कुर्वन्नित्यर्थः । अत्रापि 'शता' पूर्ववत् ।

ओतादिभूमेरत्ताऽनुज्ञाभूमौ विशेषं दर्शयन्नाह – **विश्रान्ता,** कर्तव्याकर्तव्यविमर्शायाः शून्यतया संस्कारशेषत्वस्याप्यभावाय प्रशान्तवाहिनी **धीर्यस्य** स तथा। अथ कथं कर्तव्यविमर्शाभावः "ज्ञानिनोऽज्ञानिनो वापि यावद्देहस्य धारणा। तावद्वर्णाश्रमप्रोक्तं कर्तव्यं कर्म मुक्तये"॥ **इति हि स्मरन्ति इति।** तत्राह – **विधीत्यादि।** **विधिः** प्रवर्तकचोदना। **निषेधो** निवर्तकचोदना। तयोः **पदं,** कर्तव्याऽकर्तव्ये विषयः। **तस्यातिलङ्घे**ऽतिक्रमणे। जङ्घा अस्याऽस्तीति **जङ्घालः**। "प्राणिस्थादातो लजन्यतरस्यामि"ति मत्वर्थीयो 'लच्' प्रत्ययः। वेगवानित्यर्थः। "जङ्घालोऽतिजवः" इति हि **नामानुशासनम्**। अथ यदि कर्तव्यं न करोमि अकर्तव्यं च करोमि इति साभिमानस्य ध्रुवा प्रत्यवायापत्तिः। "कुर्वन्नविहितं कर्म निन्दितं च समाचरन्। प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते द्विजः"॥ **इति स्मरन्ति।** अत एव न विद्याभिमानेन तत्र स्वाच्छन्द्यं तदतिक्रमः। विद्याभिमानस्याप्यासुरत्वेन विदुषस्तदयोगात्। **यथाहुः** – "न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः। विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम्"॥ इति। **अथ** विधिनिषेधाविधेयत्वेन तदतिक्रमः। कुत एवं वर्णाश्रमाद्यभिमानशून्यत्वादिति चेन्न, सुषुप्तेरिव समाधेरुपरमे तत्प्रत्ययापत्त्युपपत्तेः। अन्यथा तदनुगतारब्धभोगानिर्वाहात्। **अत एव हि** "पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम्। आचारमाचरन्त्येव सुप्तबुद्धवदक्षताः" इति वासिष्ठदर्शनमुपपन्नमिति चेदत्र **केचित्** – विधिषु श्राद्धोऽधिकारी नाश्राद्धः। "श्रद्धयाग्निस्समिध्यते, श्रद्धया विन्दते हविः। अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्॥ असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह"। **इति श्रुतिस्मृतिदर्शनात्।** वासनामात्रेण चारब्धभोगतावन्मात्रोपयोगिमनुष्यत्वाद्यभिमानानुवृत्तावपि सर्वनिषेधावगतिपुरस्सरब्रह्मात्मभावनाप्रकर्षपर्यन्ताहिततद्वासनादार्ढ्येन "विपर्ययं न कालोऽस्ति झटिति स्मरतः क्वचित्" इति न्यायेन अरोचकीव सितातिक्ततां मनुष्यत्वाभिमानमश्रद्दधानो विधिषु नाधिक्रियते, निषेधेषु निषेध्यक्रियोन्मुख इत्येवाऽधिक्रियते, श्रद्धाद्यनपेक्षणादित्याहुः।

**अन्ये त्वाहुः** – "दग्धाऽखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः। वर्तमानश्श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः"॥ इत्यभियुक्तोक्तेः, विधितन्त्रो न कर्तव्ये प्रवर्तते नापि निषेधतन्त्रोऽकर्तव्यान्निवर्तते। किन्तु स्वभावादेव। **यथोक्तं भागवते** – दोषबुद्ध्युभयातीतो निषेधान्न निवर्तते। गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः"॥ इति। यथाऽर्भकः पर्यङ्कतूलिकारोहणादौ प्रवर्तते, गर्तकण्टकपातान्निवर्तते, स्वभावादेव। न तु तत्र विधिनिषेधाहितगुणदोषबुद्धी तन्त्रम्। तथा विद्वानपि विहितनिषिद्धाभ्यां। एतदभिप्रायमेवाऽऽचारमाचरन्तीत्यादीति। एवं सति विधिनिषेधाविधेयतया विहितमकुर्वन् निन्दितं चाचरन् प्रत्यवेयान्न वा?

तत्र यदि पूर्वः पक्षः प्रत्यवेयादेव। सत्येवाधिकारे तदतिक्रमात्। एवं सति "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवं हैवंविदि पापं कर्म न श्लिष्यते नैवंविदि किञ्चन रज आध्वं, स तेनाऽस्य पापं च न चक्षुषो मुखान्निलं वेति। स यो मां विजानीया न्नास्य केनचन कर्मणा, लोको न मीयते न मातृवधेन, न पितृवधेन, न स्तेयेन, न भ्रूणहत्यया, तं विदित्वा न कर्मणा लिप्यते पापकेन"। "सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्वथा वर्तमानोऽपि स योगी मयि वर्तते। यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वाऽपि स इमांल्लोकान् न हन्ति न निबध्यते"॥ "तदधिगम उत्तरपूर्वार्धयोरश्लेषविनाशौ तद्व्यपदेशादि"तीत्यादिश्रुतिस्मृतिन्यायविरोध। अथ तत एवाऽप्रत्यवायः तर्हि स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव, नैव तस्य कृतो नार्थो नाकृतेनेह कश्चने"त्यादिशास्त्रविरुद्धम्, निषेधाधिकाराश्रयणं अनर्थकम्। अनाघ्रातब्राह्मणमनुष्यत्वाद्यभिमान एवाऽपरिपक्वयोगो वा निषेध्यक्रियोन्मुखो निषेधेऽधिक्रियत इति युक्तम्। तस्मात् "जक्षत्क्रीडन् रममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरं", "नैव किञ्चित्करोमीति युक्तो मन्येत तत्ववित्। पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन्॥ प्रलपन् विसृजन् गृह्णन् उन्मिषन्निमिषन्नपि"। "इन्द्रियाणीन्द्रियार्थेषु वर्तन्त-इति धारयन्। रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्"॥ इत्यादिदर्शनात्। विहितमविहितं वा यथाऽऽरब्धबलोपनतं विषय-जातमनभिमान एव भुङ्क्ते। न विधिं निषेधं वानुरुन्धे, सर्वाऽधिकारबाधात्। तदिदमुच्यते विधिनिषेधपदातिलङ्घजङ्घाल इति। एष परं, एष एवाऽहं अनुज्ञायोगनिष्ठ इत्येवकारेण ओतादियोगभूमावपि विधिनिषेधाधिकारसम्भावनामनुजानाति। परशिवभावान्यवधिं वा दर्शयति। अत एवाऽत्र परः शिवोऽस्मीति वर्तमानसामीप्ये वर्तमानवद्व्यपदेश इति॥ १२७॥

एवमनुज्ञायोगसिद्धस्य "ओतमोतेन जानीयात् अनुज्ञातारमान्तरं अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेदि"ति श्रुत्यनुसारेण परामूर्तविषयं फलभूतमकर्तव्यपदान्तरमन्त्यमविकल्पयोगं लक्षयन्नाह —

निर्लेशनिर्लुलितविश्वविलासमाया-
निश्शेषवासनमभाविपुनर्विमर्शम्।
ज्योतिर्निरिन्धनमिवाऽनलमीश शान्तं
साक्षादवेक्ष्य परमं परमशिवोऽहम् ॥ १२८॥

अस्त्यनुज्ञायोगे व्युत्थानहेतुवासनाऽविद्यालेशाऽनुवृत्तिरित्यतो विशेष्यते **निर्लेशेत्यादिना**। **निर्लेशं**, निस्संस्कारं यथा भवति तथा। **निर्लुलितः** ब्रह्मतत्त्वान्निष्कृष्य "नेति नेत्यात्मा, नेह नानाऽस्ति किंचन" इत्यादिना बाधितः। ज्ञात्रादिभेदभिन्नविश्वलक्षणः **विलासः यस्यास्तस्या मायायाः**। **निश्शेषागन्धशून्या वासना** पुनरुत्थानबीजसंस्कारः **यस्मिन्तत्तथा**। अत एव अनुज्ञायोग इव व्युत्थानबीजसंस्काराभावादभावी अभविष्यन् **पुनर्विमर्शः** योगात्प्रागिव योगविरामेऽयमहमस्मीत्याद्यभिमानलक्षणं विशेषविज्ञानं **यस्मिन्तत्तथा**। अनेन निर्बीजो निरोधस्समाधिरुपक्षिप्तो भवति। किमेवमविकल्पयोगिनः पुनरिदमहमिति भेददर्शनाऽऽत्यन्तकाभावे निवृत्तिरेवाऽऽरब्धविपाकशेषस्य **आभिमित्येकः पक्षः**। **यथाऽभिहितमाचार्यभगवत्पादैः**। "श्रुत्याऽऽचार्यप्रसादेन दृढो बोधो यदा भवेत्। निरस्ताऽशेषसंसारनिदानः पुरुषस्तदा॥ विशीर्यकार्यकरणो भूतसूक्ष्मैरनावृतः। विमुक्तकर्मनिगलः सद्य एव विमुच्यते"॥ इति। यथाकर्मविपाकाद्यनुष्ठानेनाऽऽरब्धकर्मविपाकक्षयकुष्ठादिनिवृत्तिः शास्त्रदृष्टा तथा ज्ञानयोगेनाऽपि कृत्स्नाऽऽरब्धविशेषनिवृत्तिरित्यभिप्रायः। **तथा च श्रुतिः** – "तद्यथाऽहिनिर्लयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथाऽयमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एवेति।

**अथाऽपरः पक्षः** — "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं विलम्बः यावन्न विमोक्ष्ये" आरब्धविपाकेन न विमोक्ष्यते। अथ सम्पत्स्ये तद्विमोक्षसमनन्तरमेव न तु लोकान्तरगमनापेक्षया। "अत्र ब्रह्म समश्नुत" इति श्रुत्यन्तरगतसदात्मकैवल्यं सम्पत्स्यत इति श्रुतिरारब्धशेषस्य भोगेनैव क्षपणं सूचयति। "भोगेन त्वितरे क्षपयित्वा सम्पद्यत" इति च सूत्रितम्। आरब्धविपाके पुण्यपापे इत्यर्थः। **यथाचाभिहितं भगवत्पादैरेव**–"प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत्। कञ्चित्कालमथाऽऽरब्धकर्मबन्धस्य संक्षये॥ निरस्ताऽतिशयानन्दं वैष्णवं परमं पदम्। पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते"॥ इति। "तिष्ठति संस्कारवशाच्चक्रभ्रमणवत् धृतशरीर" इति च साङ्ख्याः। **अत्र पक्षे** कथमविकल्पयोगिनोऽभेददर्शनभावे भोग इति? **उच्यते** – यथा दुर्गतो निरूढसाम्राज्यादिमनोराज्योऽहमिदमिति तादात्विकदेहेन्द्रियादिविमर्शशून्योऽपि वासनयैवाऽस्खलितमेव भिक्षाटनादि करोति, **यथा वा** निद्रालुरेवोपाध्यायोऽस्खलितमेवाधीते वासनयैव, निद्रालुरर्भको वा मात्रादिभिरास्याहितमशनादि केवलं गिलति, तथाऽयमपि योगी विनैव भेददर्शनं भुङ्क्तामारब्धशेषमित्युपपन्नम्। **तथा च** जक्षत्क्रीडन्नित्यादि नोपजनं स्मरन्निदं शरीरमिति श्रुतिरुदाहृता। कथं जनसमीप इदं शरीरमस्मरतो भोगइत्यपेक्षायां यथा सुशिक्षितो रथ्याश्वो रथादौ युक्त एव यन्तृचोदनामनपेक्ष्यैवाऽस्खलितं रथादि वहति, एवमस्मिन् शरीरे प्राणो युक्तो विदुषोऽहमभिमानलक्षणं तत्स्मरणमनपेक्ष्यैव लोकयात्रां निर्वक्ष्यतीत्यभिप्रायेणेदमुच्यते।

"तद्यथा प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्त" इति । एवंकारमपरे पुनः पक्षभेदं न क्षमन्ते । सत्येव देहादिसम्बन्धे तदभिमानाभाव एव **सनिदर्शनमाम्नायते** — तद्यथाऽहिनिर्लयनीत्यादि । वल्मीक इति त्यक्तस्यैव निर्मोकस्याऽहिसम्बन्धार्थमुक्तं, फलाग्रहनियत-व्यापारशून्यतया शरीरं शेत इत्युक्तिः । सशरीरत्वस्याभिमानमात्रतया, अथाऽयमशरीर इत्यादि । **तथा च भागवते** — "देहं विनश्वरमवस्थितमुत्थितं वा, सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिहितं मदिरामदान्धः ॥ इति । **तदभिप्रायैव भगवत्पादीयसूक्तिरपि** — "विशीर्णकार्यकरणा" इत्याद्या व्याख्येया । किं पुनरिदमीरितं "प्रारब्धकर्मवेगेने"त्यादि ? उच्यते — आरब्धं तावद्द्विविधं, अर्पितकतिपयभोगमन्यानुषङ्गिकं वाऽक्षीणवेगमेकं नवदिनादिकालातीतः प्रतिहार्यानुषङ्गिकइव वा ज्वरः । अर्पणीयकृत्स्नभोगं स्वप्रधानं वा अक्षीणवेगमपरं प्राप्तारम्भ इवाऽऽमज्वरः । एतदेवाऽनवश्यंभावि अवश्यंभावि चेति विभज्यते प्राचीनैः, "अवश्यंभाविभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः" ॥ इत्युदाहरद्भिः । तत्राऽऽधिमात्रतीव्रसंवेगस्याऽविकल्पक-योगिनोऽन्यस्य वा विदुषः प्रक्षीणवेगेनाऽऽरब्धेनार्पणीयो भोगोऽतीतनिष्ठो रसास्वादशून्य इति तदभिप्रायं "विशीर्णकार्यकरण" इत्यादि । निद्रालुरिव प्रशिथिलदेहेन्द्रियादिव्यापार इत्यर्थः । "सद्यएव विमुच्यते" इत्यभिमानलेशमात्रस्याप्यनागन्धनादित्यभिप्रायः । अथ मृदुसंवेगस्य, मध्यसंवेगस्य, तीव्रसंवेगमात्रस्य वाऽक्षीणवेगमारब्धं भवति । तदर्पणीयो भोगश्च गरीयान् । साऽऽस्वाद इति । तदभिप्रायं "प्रारब्धकर्मवेगेने"त्यादि । बलवन्नु त्वप्रत्यासन्ने, इषुवेगवद्दुरवरोधेनेत्यर्थः । जीवन्मुक्त इति वासनामात्रानुवृत्तप्राणाद्यभिमानवानेव मुक्त इत्यर्थः । न हि तावता पुनर्भव आशङ्कनीयः । अविकल्पयोगपर्यन्तया विद्ययैव पुनर्देहान्तरारम्भबीजाविद्याशक्तिविदाहादित्यभिप्रेत्योक्तं "अथारब्धकर्मबन्धस्य संक्षय" इत्यादीत्यलं प्रपञ्चेन । अथवा, पुनर्देहारम्भबीजसंस्काराभावादारब्धविपाकक्षये पुनर्देहग्रहणाभाव एव "अभाविपुनर्विमर्शमि"त्युच्यते । अविकल्पयोगभूमिमनारूढस्य ह्यनुज्ञादियोगभूमिष्वेव गलितस्याऽऽत्मतत्त्वसाक्षात्काराभावादविद्याशेषानुवृत्तौ पुनर्विमर्शस्सम्भावित इत्यभिप्रायः । **ज्योतिः**, सर्वविकल्पबाधादपेतसाक्षिभावं प्रकाशतावन्मात्रमात्मतत्त्वम् । एतदेवाऽनुरूपदृष्टान्तेनोप-लक्षयति — **निरिन्धनं** निरवशेषदग्धेन्धनं **अनलमिव शान्तं** इति । अथ निरिन्धनोऽनलो निरालम्बस्वरूपेणैव शान्त इति निस्स्वरूपतदृष्टान्तानुपपत्तिरिति चेन्न, न हि दग्धेन्धनाऽनलो निस्स्वरूप एव शाम्यति । अन्यत्राऽग्न्यभावप्रसङ्गात् । न खल्वग्निरन्योऽन्यः उपाधिपरामर्शं विना भेदाविभावनात् । "अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव", "नानेव दारुषु विभावसुवद्विभासी"त्यादिश्रुतिस्मृतिदर्शनाच्च । मोक्षधर्मे च दग्धसमिधोऽग्नेरविनाशो दर्शितः ।

**यथा** – "न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति। यथा समित्सु दग्धासु न प्रणश्यति पावकः॥ समिधासुपयोगान्ते सन्नेवाऽग्निर्नदृश्यते॥ आकाशानुगतत्वाद्धिदुर्ग्रहस्स निराश्रयः" ॥ इति। तस्मादनिन्धनोप्यग्निरुपशान्तज्वालादिधर्मको यथा सत्तामात्रेणाऽस्ति तथा सर्वविकल्पशून्यं शान्तज्योतिस्तत्त्वमस्तीत्युपपन्नः दृष्टान्तइति। यथा प्रपञ्चोपशमात्मकं ज्योतिः न तथा ज्योतिरूपशमात्मकं किञ्चिदन्यदस्ति। सच्चेत्तदुपशाम्यज्ज्योतिः प्रपञ्चकोटिरेव, शिष्यमाणं तदेव परं ज्योतिः। असच्चेत् तर्हि ज्योतिश्चोपशान्तमिति तदसिद्धिरेव स्यादित्यतः तदेव परमं, काष्ठान ततः परमस्तीति विशेष्यते। अत्र योगसिद्धेरीश्वरानुग्रहाधीनतया तदनुस्मरणार्थं **ईशेति** सम्बोधनम्। तदिदं यथाविशेषितं ज्योतिः **साक्षात्**, अव्यवधानेनाऽऽत्ममात्रतया। **अवेक्ष्य**, अपरोक्षावभासमापद्य। **अथ** निरोधसमाधावविकल्पयोगे निर्वासनं बुद्धिसत्त्वोपशमे किमिदं साक्षादवेक्ष्येति, उच्यते, "अमात्रश्चतुर्थोऽव्यवहार्योऽविकल्पोंकारश्चिन्मयोऽह्व्ययमोंकार" इति श्रुतेः। मनोवृत्तिमयोंकारसाक्षी ज्ञानमात्रात्मा तद्वृत्तिप्रशमे तदर्थब्रह्मात्मापरोक्षावभासशेषः सम्पद्यत इत्येतदुच्यते साक्षादवेक्ष्येति। अनेनाविकल्पयोगोऽप्योंकारालम्बन एवेति दर्शितं भवति। **परमशिशत्रोऽहमिति फलोपसंहारः।** निश्शेषनिर्गलिताऽमङ्गलपरमानन्दप्रकाशसत्तामात्रात्माऽहमस्मीति। **तथा च श्रुतिः** – "ओतमोतेन जानीयादनुज्ञातारमान्तरम्। अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेत्" ॥ इति। यथाव्याख्यातं ओतमात्मानं ओतेनोंकारेण जानीयात्। अनुज्ञात्रोंकारादेः प्रदर्शनार्थमेतत् विजितोतयोगभूमिरूपशान्तस्थूलप्रपञ्चतयोतादान्तरमनुज्ञातारं, अनुज्ञात्रोंकारेण जानीयादित्यनुषज्यते। विजितायां च तद्योगभूमौ वासनामयप्रपञ्चस्याऽप्युपशमादद्वयं अविभाव्यज्ञात्रादिभेदं अनुज्ञामात्मानं अनुज्ञोंकारेण लब्ध्वा। **अत्र क्त्वाप्रयोगेणेदं सूचयति** — ओतादिभूमावेव न मुमुक्षुणा विरन्तव्यं, पुनरुद्भवबीजाऽविद्यानुगमात्। किन्तु पूर्वपूर्वभूमिजयः उत्तरोत्तरभूमिप्राप्तिहेतुः अविकल्पयोगभूमिजय एव निर्वाणपदमित्युच्यते। उपद्रष्टारं भूतगत्यायं व्यपदेशः। सर्वसाक्ष्यत्राद्येऽविकल्पानन्दप्रकाशसत्तात्मनस्साक्षित्वलक्षणोपद्रष्टृत्वस्यानुपपत्तेः। सर्वविकल्पातीतमविक्रियप्रकाशानन्दैकरसं तुरीयतुरीयमात्मानं तुरीयतुरीयेणाविकल्पोंकारेण चिन्मयेनाव्रजेत्। अहमस्मीत्यभेदेनावगच्छेदिति श्रुत्यर्थः। ओतादितुरीययोगरूपभेदास्तद्वाचकप्रणवभेदाश्चाऽस्मदाचार्यचरणैः प्रणवनिर्णयाख्ये समाधिसारसङ्ग्रहे निरूपिताः। यथाशास्त्राचार्याधिगततुरीयप्रतिपत्त्या प्रलयकालीनकालाग्निसूर्यतेजः परिप्लुष्टमिव तदन्तरितस्सर्वात्मतामापन्नो दग्धपटायमानं पश्यन्नोत इत्युच्यते। अकारोकारमकारार्धमात्राबिन्दुनादशक्तिशान्तरूपेप्रणवे, तत्र बिन्द्वादिमात्राचतुष्टयात्मके तुर्यप्रणवे सति ओतानुज्ञात्रनुज्ञाऽविकल्पाख्यरूपचतुष्टयविशिष्टं तुरीयमात्मानं वदतस्तुरीयप्रणवस्यापि चतुष्टयं तत्तन्नाम्ना व्यवह्रियते। **तथा च श्रुतिः** "या चतुर्थ्योतानुज्ञात्रनुज्ञाऽविकल्पपरूपा तया तुरीयं चतुरात्मानमन्विष्येत्यादिः, तुरीयाप्रविद्योवमि॰॰ज न। **तस्यार्थः** – ओतादिरूपस्य तुर्योंकारस्य बिन्दुनादशक्ति-

शान्तरूपस्येति भाष्यम् । तत्र "ओतमोतेन जानीयादि"ति मन्त्रानुसारेण तुरीयाविभक्तमध्यमाबिन्द्वन्तपञ्चमात्रप्रणवमुच्चार्य ओतमात्मानं परिपूर्णमनुसन्दधानः कारणमुपसंहरेदित्योतयोगइत्यादिना प्रबन्धेन प्रपञ्चिता एते पुनस्संगृहीताः । यथा सच्चिदानन्दस्वरूपस्य कारणसाक्षिणः सदादिरूपैः कारणव्याप्तिचिन्तनमोतयोगो नाम, तेन व्याप्तस्य कारणस्य स्वतस्सत्ताद्यभावात्तदधीनसत्ताप्रकाशत्वेन तस्मिन्नध्यस्तं तदिति चिन्तनमनुज्ञातृयोगः नाम । स तस्मिन्नध्यस्तत्वात्तावन्मात्रमेव तदिति चिन्तनमनुज्ञायोगो नाम । एतच्च योगत्रयमोताऽनुज्ञात्रनुज्ञारूपेणाऽविभक्तप्रणवेन कार्यम् । अविकल्पयोगस्तु भावाभावोभयविकल्पशून्यश्चिदेकरस आत्मैव । एवंभूतेनाविकल्पप्रणवेनानुसन्धेय इति । तथाचोक्तं तुरीयखण्डे तृतीयपर्याये "अनुज्ञायां वाग्वा ओंकार" — इत्यस्य **व्याख्यानसमये** वाग्वा इति परा वागुच्यते । अन्यथा अनुज्ञाया अनुज्ञातुः सकाशादान्तरत्वानुपपत्तेः । वक्ष्यति चान्तरत्वं श्लोकेन । "ओतमोतेन जानीयादनुज्ञातारमान्तरं" इति । यद्यप्यनुज्ञातुरान्तरत्वमेवात्रोक्तं तथाप्यनुज्ञातुरनुज्ञायाः, अनुज्ञाया अविकल्पस्य चान्तरत्वमवगन्तव्यम् । सम्भवात् । यद्यपि तुरीयावसितत्त्वे समाना ओतादयः तथाप्युपक्रमे बाह्यान्तरत्वं विद्यते, तेषामित्यस्ति सम्भवोऽनुज्ञातुरनुज्ञाया आन्तरत्वे, अनुज्ञायाश्चाऽविकल्पस्यात्मनइति अविकल्पस्य सूक्ष्म प्रणवेनानुसन्धानम् । प्रणवपटले सूक्ष्माख्यायां पश्यन्त्यां मध्यमाख्यवैखर्योरित्यत्र सूक्ष्मावस्थापराया अपि पूर्वतनी स्वमहिमप्रतिष्ठितचिन्मयी शान्तप्रणवात्मिकेति **व्याख्यातम् सनन्दनाचार्यैः** । अत एव च श्रुतावपि ओतादिष्विव अविकल्पोंकारे वाग्वा ओंकार इत्युक्त्वा चिन्मयो ह्ययमोंकार इत्येवोक्तमितीति सर्वं शिवम् ॥ १२८ ॥

"एवं विवेचितं तत्वं शिवस्य परमात्मनः । तत्साक्षात्कृत्युपायाश्च केचिद्योगास्समीरिताः ॥ अनया **तत्त्वसंस्तुत्या** संस्तुतः परमेश्वरः । तत्त्वविद्यां ध्रुवं दद्यात् निर्वाणपरमामिति ॥ दर्शयन्नात्मनो विद्यामीशाधीनामनुस्मरन् । **कृतघ्नतामपाकर्तुं** विनिवेदयतीश्वरे" ॥ —

वेद्यं परं विदितमीश्वर, वेदतत्त्वं
कर्तव्यमद्य फलतस्सकलं कृतं मे ।
आप्तव्यमप्यखिलमाप्तमपेतमोहे
स्वानन्दकेवलचिदात्मनि निर्वृणोमि ॥ १२९ ॥

**वेद्यं**, अवश्यवेदनीयं पुरुषस्य, "इह चेदवेदीदथ सत्यमस्ति, न चेदिहावेदीन्महती विनष्टिः" इत्यादिश्रुतेः । **तद्वेदप्रतिपाद्यं तत्त्वं वेदतत्त्वम्** । सदृशो धर्मोऽपि तदवेदनमपि

महाननर्थः पुरुषस्येत्यतः परमिति विशेषणम्। यदन्यशेषं प्रतिपाद्यं ब्रह्मैकात्म्यं तत्परं वेदतत्त्वं, धर्मश्च शिवतत्त्वविद्याशेष इति निरूपितम्। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इति श्रुत्यर्थनिरूपणावसरे यस्मिंश्च विदिते सर्वमेव विदितं भवति। न वेदनीयमन्यदतिशिष्यते। यथा श्रुतिः – "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति, स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह, येनाऽश्रतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातं भवति, आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमि"त्याद्या। तत्परं वेद्यं, धर्मश्च न तथा। तदभिप्रायेण च "नारायणं महाज्ञेयमि"त्यादिश्रुतिरिति। तदिदं विदितम्। अत्र स्वविद्यादिफलैस्तदनुग्रहसाफल्यनिवेदनेन भूयः प्रसादयितुमीश्वरेति सम्बोधनम्। लोकेह्युपक्रियमाणेन तदुपकारफलनिवेदनादुपकर्तुर्भूयान्प्रसादो दृश्यते। अथ विदितेऽपि परतत्त्वे किमपि कर्तव्यं स्यात्। यथा विदितेऽपि धर्मादावित्यत आह तथा कर्तव्यं, यदवश्यकरणीयं पुरा पुरुषस्याऽऽसीत्। यत्रेदं स्मर्यते – "तद्यथाऽऽम्रे फलार्थे निमित्ते छायागन्धादय इत्यनूत्पद्यन्ते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते, नोचेदनूत्पद्यन्ते न धर्महानिर्भवति"। "धर्मोऽपि हि स्वत एव पुरुषार्थ" इत्यर्थः। यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणास्स ब्रह्मणस्सायुज्यं गच्छतीत्यादि तन्नित्यनैमित्तिकादि सकलम्। यावद्यथा वेदचोदितं तावत्तथा। अद्य, यदा शिवतत्त्वं विदितं तदा कृतं, मे इति "सम्बन्धमात्रे षष्ठी"। अथवा, मे कर्तव्यमिति सम्बन्धः। "कृत्यानां कर्तरि चे"ति षष्ठी। अत्र मृषावादो मा शङ्कीत्याह फलत इति। कर्मणो हि सर्वस्य सत्वशुद्धिद्वारा ब्रह्मविद्याफलं, "तमेतं वेदानुवचनेने"त्यादि श्रुतेः। "सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते"। इत्यादिस्मृतेश्च। तच्च ईश्वरानुग्रहादद्यात्मसाक्षिकमित्यतो यद्यपि कर्तव्यं सकलं न स्वरूपेण कृतं तथापि फलतस्तु कृतमिति मन्महे। न खलु कारणाऽभावे कार्यसम्भव इत्यभिप्रायः। "कुमारं जन्मनोऽग्रे धी भावयती"ति प्रकृत्य "सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रति धीयतेऽथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रै"ति कृतकृत्यः पित्रात्मना यत्कर्तुं शक्यं तत्कृतं, येनेत्यर्थ इत्यादिदर्शनात्। अविदुष इव सम्प्रत्यपुत्रात्मना कर्तव्यशेषस्यापरिशेषाय सकलमिति विशेषणम्। अस्तु विदिते परमतत्त्वे कृतकर्तव्यत्वं विद्याफलं, कर्मफलमिव देशकालान्तरापेक्षमिति तदप्रतिबन्धाय यत्नान्तरमास्थेयं नेत्याह। तथाऽऽप्तव्यमन्यमप्याप्तम्। अपिश्शङ्कानिवृत्तिसमुच्चयार्थः। सुखमेव खलु पुरुषस्याप्तव्यम्। दुःखाभावस्य तच्छेषत्वव्युत्पादनात् यत्रेदमभिधीयते "आत्मा सुखेन योक्तव्यस्सुखभाज इमे प्रजाः" इति। तन्मात्राप्तिस्सर्वेषामविशिष्टेत्यखिलमिति विशेषणम्। मानुषानन्दादि हिरन्यगर्भानन्दान्तं गुणविभूतिपौष्कल्याविर्भाव्यं सर्वमपि सुखजातमाप्तमेव। "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"ति श्रुतेः। सर्वाऽपि सुखभेदा वेदनैकांपेयपरशिवतत्त्वपरमानन्द एवान्तर्भवति। "एषोऽस्य परम आनन्द, एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुप-

जीवन्ती" ति श्रुतेः इत्यभिप्रायः। एवं सति यावदारब्धं कस्ते विहार इत्यत आह – **अपेतमोह इत्यादि**। "स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं जरया बिभेति। उभेतीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोक" इत्यादि श्रुतेस्तत्र सतः कर्तव्याभावेन निर्दुःख-सुखाप्तिस्सत्यसङ्कल्पाद्याविर्भावेनाप्ति सकलकामाप्तिश्चेति। तद्व्यावृत्त्यर्थमपेतमोह इति ब्राह्म-लौकिकानां पुनरस्त्ययमहमिदमेतन्मयेति भेदमोहइति तद्व्यावृत्तिः। अत एव प्रकृतिलयानामप्यस्ति पुनर्भवबीजमोहसंस्कार इति तद्व्यावृत्तिः। अथ स्ववृत्तिसुखं तदपरोक्षानुभवो वा पुरुषार्थः **अपरथा** परसुखं परस्य तदपरोक्षानुभवो वा परेशस्य पुरुषार्थः स्यात्, न चाहमिदमिति भेदमोहातीतपदे स्ववृत्तिसुखानुभवो नाम सम्भवति। अतो न विदुषः पुरुषार्थ इत्यत आह **स्वानन्देत्यादि**। स्वः आत्मा चासावानन्दश्च स्वानन्दः, स एव **केवलः** कस्यचि**दः** सम्बन्धी, स चासौ चिदात्मा च तथा **तस्मिन्** स्वानन्देत्यागन्तुकत्वव्यावृत्तिः। स च प्रकाशमान एव पुरुषार्थ इत्यतश्चिदात्मेति। **एतदुक्तं भवति** – लाघवेन सुखापरोक्षत्वमेम पुरुषार्थत्वप्रयोजकम्। भेददर्शनसुखागन्तुकत्वाभिमानदशावच्छिन्नपुरुषार्थतायां तु स्ववृतिसुखापरोक्षत्वमिति विशेषोपपत्तेः अनतिप्रसङ्ग इति। **निर्वृणोमि**, सांसारिकाध्वत्रयगतागतश्रमहानेन विश्रान्तो निर्वृतो भवामि। वर्तमाननिर्देशेन निर्वाणपदस्य विद्यासमकालतां दर्शयन्, "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। **अथ** मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इत्यादिश्रुतिमात्रानुग्राहिकामुपक्षिपति। आरब्धवेगेन देहेन्द्रियादिषु वासनावशेन व्याप्रियमाणेष्वपि तत्त्वविदो न स्वानन्दानुभव-प्रच्युतिरित्यभिप्राय इति **सर्वं शिवम्** ॥ १२९ ॥

एवमियता प्रपञ्चेन प्रतिपादितं प्रकरणावयप्रमेयं पण्डितपुण्डरीकपरिशीलनीयतया तस्य दुरूहतां दर्शयन्निदं तदित्युपसंहरति —

इति परमरहस्यं पण्डिताखण्डलानां
विमलमतिविमृग्यं वेदतात्पर्यगत्या।
परमशिवपदस्य प्रेप्सितस्संश्रयो यः
प्रसव उदितमस्मिन्पञ्चमे तन्मयत्वम् ॥ १३० ॥

मूर्तरूपालम्बनाहंग्रहयोगलक्षणमेव परमात्मनस्संश्रयणं **रहस्यम्**। केवलार्चाविग्रहार्चक-समाजेष्वनुपदेश्यम्। अमूर्तरूपालम्बनतादृशयोगलक्षणं तु तत्ततोऽपि **रहस्यतरम्**। ततोऽपि स्वरूपसाक्षात्कारलक्षणं तन्मयत्वरूपं संश्रयणं रहस्यतममिति। परमरहस्यमित्युक्तम्। ओतादिलक्षणमपि

संश्रयणमीप्सितमेव । स्वरूपसाक्षात्काररलक्षणतन्मयत्वसाधनत्वात् । तन्मयत्वलक्षणं तु संश्रयणं फलमेवेति तदीप्सा अनन्यनिबन्धनत्वेन प्रकृष्टेति प्रेप्सितस्संश्रय इत्युक्तम् । य इति आद्यपद्ये सूत्रितत्वमत्रमृशति । तच्छब्दोऽध्याहार्यः । तत् तन्मयत्वं, 'ताद्रूप्ये मयट्' । स्वानन्दापरोक्षचितिलक्षणं **परमशिवपदात्मत्वमेवाऽस्मिन्प्रसवे उदितमिति शिवम्** ॥ १३० ॥

प्रस्तुतायाः **परमेश्वरसंस्तुतेरनुरूपामाख्यां** रूपकेण निगमयन् **प्रचयगमनाय** निगमपथप्रवर्तक-विबुधजनेषु तां **समर्पयन्नाह** —

वेदान्तामरवल्लिकुञ्जविहृतिव्यासङ्गभाजा मया
निर्व्याजोद्यदनुग्रहग्रहिलया लब्ध्वा गुरोराज्ञया
स्वालोकोत्कलिकादशावितुलितामङ्गल्यजालामिमा-
माकल्पं शिवतत्त्वरत्नकलिकामाकल्पयध्वं सुराः ॥ १३१ ॥

**वेदानामन्ताः**, उपनिषद **एवामरवल्लयः** सुरवीरुधः । अत्र वेदान्तानाममरवल्लित्वरूपणं तन्मूलायाः प्रकृतस्तुतेः शिवतत्त्वरत्नकलिकासमाख्यानिगमनौचित्यायाऽऽदृतम् । सुरवीरुधो हि सुरकुलमण्डनाय रत्नकलिकां प्रसुवत इति प्रसिद्धमिति । तासां सम्बन्धिनः **कुञ्जाः** लतापिहितो-दराणि गह्वराणि । "निकुञ्जकुञ्जौ वा क्लीबे लतापिहितोदर" इत्यमरः । गुहाकाराणि लतागृहाण्येव । अत्र वेदरहस्यभागस्य कुञ्जत्वरूपणेन वेदानां "तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकारे" ति श्रुतिसिद्धगिरित्वमर्थाद्गम्यते इति एकदेशविवर्तिरूपकमेतत् । तेषु **विहृतिर्विहरणं,** वेदान्तपरिशीलनमेव चित्तविनोदहेतुतया विहृतिरिति रूप्यते । तत्र **व्यासङ्ग,** व्यापारान्तरप्रसारिकां विशिष्टामासक्तिं । **भजत इति व्यासङ्गभाक्** । "भजोण्विः" । तादृशेन मया लब्धामित्यन्वयः । अन्यत्र व्यासक्तस्य तल्लाभे हेतुमाह — **गुरोः** लोकानुग्रहैकप्रयोजन-लीलापरिगृहीतविग्रह**भगवद्रामभद्राह्वयसंयमीन्द्रार्यपादपरमशिवस्यैव** । स खलु, "विश्वाधिको रुद्रो महर्षिः, ईशानस्सर्वविद्यानां, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, स पूर्वेषामपि गुरुः कालेनानवच्छेदात् आचार्यं शिवरूपिणम्" इत्यादिदर्शनात् । अशिवस्य तत्त्वविद्यादेशिकत्वानुपपत्तेः । "न नरेणाऽवरेण प्रोक्त एषः, सुविज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्ति" इत्यादिश्रुतेः । ब्रह्मभूतेनाचार्येण प्रोक्ते ब्रह्मज्ञानं नास्तीत्यर्थः इति ।

**आज्ञया**, मदात्मतत्त्वविषयामयं स्तुतिं निबध्नीयादिति प्रेरणया । **तस्याऽशक्यातिक्रमणतां दर्शयितुं** आज्ञयेत्युक्तम् । परशिवतत्त्वविषयस्तुतिनिबन्धनेपरमपुरुषार्थसाधने तव कुतो गुरोराज्ञेत्यतो हेतुगर्भं विशेषणं **निर्व्याजेत्यादि** । निर्व्याजं निरुपधं हेतुनिरपेक्षमेव अद्यन्नुद्भवन्ननुग्रहः पराशीरनुमोदनं, अन्येषां खलु सतां प्रणिपातसेवाद्युपधिना प्रसादानुग्रहो भवति । गुरोस्तु मातापितृभ्यामपि परमकारुणिकस्य निरुपाधिरेवानुग्रह इति **निर्व्याजेति** विशेषणम् । तस्य ग्रहोग्रहणं **परिग्रहः** । सोऽस्यामस्तीति तथा । "पिच्छादित्वामन्त्वर्थीयः इलच्" । तादृश्या गुरोराज्ञया लब्धामिति सम्बन्धः । यद्यपि परत्र व्यासङ्गिनो मम न स्तुतिग्रथनाशीरस्ति तथापि येषामहं ममतापदं तेषां मत्कर्तृकपरशिवतत्त्वस्तुतिग्रथनाशीरस्तीति तदनुग्रह एव । गृहार्थारोपितदीपाभ्यागतार्थतान्यायेन मदनुग्रहस्संपद्यत इत्यतो **मम स्तुतिग्रथनाज्ञा गुरोरनुग्रहग्रहिलेत्युपपन्नम्** । अनेन मम शिवतत्त्वविषयस्तुतिनिबन्धने श्रीगुरोरनुग्रहपूर्विकाज्ञैव हेतुः । **न तु ख्यातिलाभपूजाभिलाप**-इत्यप्रामाण्यकारणशङ्कानवकाशइत्युपक्षिप्तं भवति । प्रस्तुतस्तुतिपरिशीलने प्रयोजनमुपक्षिपन्नाह — **स्वालोकेत्यादि** । स्वस्य **शिवतत्त्वरत्नकलिकायाः** स्तुतेरेव **आलोक** आलोचनमेवालोकः प्रकाशः । तस्य **उत्कलिका** उद्गतिरुन्मेषः, न तु परिनिष्ठा । यद्यपि "उत्कण्ठोत्कलिके समे" इत्यमरः, तथाप्युत्कण्ठाचित्तस्योन्मेषभेद एवेति स एवात्रोत्कलिकेत्युपचर्यते । **तद्दशायां** तदवस्थायामेव **विशेषेण** निरवशेषं **लुलितानि** उपमर्दितानि विनाशितानि **अमङ्गल्यानां** अमङ्गलेष्वशिवेषु साधूनां सांसारिकदुःखबीजदुरितादीनां **जालानि** समूहा **यया सा तथा,** तां रत्नस्तबकादिमङ्गल्यवस्तुदर्शनदशायां मनःप्रसादादमङ्गल्यानि नष्टानि भवन्तीति लोकसिद्धमित्यभिप्रायः । अत्राऽमङ्गल्यविलोलनस्यतत्कालत्वेऽपिप्राशूभावान्निष्ठया भूतवद्व्यपदेशः । **इमामिति** यथाग्रथितां प्रत्यवमृशति । शिवतत्त्वरत्नकलिकामिति । समाख्यया स्तुतिंनिर्दिशति — **शिवस्य** परमात्मनः, **तत्त्वान्येव रत्नानि** सर्ववस्तुभ्योऽभ्यर्हिततमत्वात् । यद्यपि प्रकाशानन्दकेवलसत्तात्मकं शिवतत्त्वमेकमेव तथापि तत्प्रतिपादकोपनिषद्बाहुल्येन तदुपाधिको बहुत्वव्यपदेशः । दृश्यते हि परोपाधिक एव बहुषु वृक्षेष्वेकत्वव्यपदेशः वनमिति । दिशः कालाइत्येकस्मिन्नपि बहुत्वव्यपदेशः । तेषां **कलिकेव कलिका** "कलिका स्तबकेऽपि चे"ति हीष्यते । **प्रयुज्यते च** — "फुल्लमल्लिकुसुमकलिकादामसौभाग्यचोरमि" ति । विकस्वरनानावाक्यदलशालिप्रकरणपञ्चकबहुप्रसवसमुदायरूपत्वादियं स्तुतिः कलिकेत्युपचर्यते । **तामेतां, आकल्पं** भूषणमिति विधेयविशेषणम् । **आकल्पयध्वं,** आसमन्ततः **शिरसि चूडामणितया, कर्णयोरवतंसतया, ग्रीवायां ग्रैवेयकतया, हृदये दामतया च कल्पयध्वम्**, घटयध्वम् । **अथवा,** आकल्पं महाप्रलयपर्यन्तं आकल्पं भूषणं कुरुध्वम् । तत्करोतीति णिच आत्मनेपदप्रयोगेण च न परार्थं तदाकल्पकल्पनं

किन्त्वात्मार्थमेव । अन्योह्यचाकल्पो बाह्यजनप्रीतिजननेनाऽऽत्मनोऽल्पप्रीतये भवति । अयं पुनराकल्पः परानपेक्षमात्मनः एव परमां प्रीतिं उपकुरुत इति सूचयति । अत्र सूरयोऽपि सुरा मता इति दर्शनाद्विदुषां सुरा इति सम्बोधनम् । विदन्तोऽपि ये असुष्विन्द्रियेष्वेव रमणादसुराः, तेषामवधीरणाय । सुरा हि कल्पलताप्रसूतरत्नकलिताकल्पमर्हन्ति तद्गुणज्ञाः न तथा असुराः । एवं वेदान्तकल्पवल्लीप्रसूतशिवतत्त्वरत्नकलिकाख्यां स्तुतिमपि दैवसम्पदुपसम्पन्नास्सूरय एव **कर्णाभ्यामाकर्णयितुं शिरसा श्लाघितुं, कण्टतः पठितुं, हृदयेन विचारयितुं चार्हन्ति ।** न पुनरसुरसम्पदुपहता इति । **देवकल्पा हि विबुधाः ।** परपरिकल्पितमपि धर्मपथमनुपहतं प्रवर्तयन्तीति श्लाघया वा सुरा-इति तेषां सम्बोधनमिति सर्वमनवद्यमिति **शिवम्** ॥ १३१ ॥

**एवमियता** ग्रन्थसन्दर्भेण मुमुक्षुभ्यः प्रतिपादनीयं अखिलमागमार्थतत्त्वं संक्षेपतः प्रतिपादितम् । अधुना श्रीभद्राचार्य श्रीनामधेयनिर्देशेन विशुद्धविद्यासम्प्रदायतामात्मनो दर्शयन् विनेयविस्रम्भणाय निबन्धृस्वनाम निर्दिशन्नुपसंहरति —

**श्रीरामभद्रयोगीन्द्रचरणाम्बुजरेणुना ।**
**शिवतत्त्वरत्नकलिका कृष्णानन्देन निर्मिता ॥ १३२ ॥**

अत्र **श्रीशब्देन** वेदा विवक्ष्यन्ते । "ऋचस्सामानि यजूंषि, सा हि श्रीरमृता सताम्" इति हि श्रूयते । **रामभद्र इति योगीन्द्रः** रामभद्रयोगीन्द्र इति मयूरव्यंसकादिवत्समासः । ततः श्रीगतः रामभद्रयोगीन्द्रः श्रीरामभद्रयोगीन्द्र इति शाकपार्थिवादिवन्मध्यमपदलोपी समानाधिकरणसमासः । तत्र श्रीगत इति श्रोत्रियत्वमुच्यते । रामभद्रेत्यभिधया कौण्डपायिनामयने कर्मविशेषेऽग्निहोत्रनाम्नेव नैयमिकाग्निहोत्रगुणानामिह **श्रीभद्राचार्ये** तन्नामकभगवदवतारविशेषनियतनियतात्मत्वादिमहागुणानामतिदेशो विवक्ष्यते । **योगिनां,** ज्ञानयोगनिष्ठानां **इन्द्र इति** ब्रह्मिष्ठतमत्वमुच्यते । प्रायेण हि समानजातीया एवातिशयितास्समानजातीयानामीश्वरा भवन्ति । यथादेवेन्द्रः नरेन्द्र इति । क्वचित्पुनरेतया निषादस्थपतिं याजयेत् इत्यादौ विद्याप्रयुक्तिकल्पनागौरवभिया निषादानां स्थपतिः द्विजातिरपि सम्भाव्यत इति पूर्वपक्षाभास एवेति न व्यभिचारः । "तेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्, तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्" । इत्यादिशास्त्रसमधिगतसमाश्रयणीयताहेतुगुणगणवैशिष्ट्यं

स्याचार्यस्यावगमयति । **तस्य चरणेऽम्बुजे इवेत्युपमितसमासः** कोमलत्वदर्शनीयत्वपरहंसोपाश्रयणीयत्वादिगुणस्तदम्बुजसामान्यं, **तयोरेणुरिव रेणुः** अम्बुजे पराग इव तच्चरणयोर्नित्यसक्त इत्यर्थः । तेन **कृष्णानन्देन तन्नामकेन यमिनेति** सम्बन्धः । अनेनाऽऽत्मनः श्रीमदाचार्यचरणसेवापरतया विद्यायां भ्रमादिकलङ्कराहित्येन स्वकृतपरमेश्वरसंस्तुतेरादरणीयताहेतुः । प्रामाण्यमुपक्षिप्तम् । शिवतत्त्वरत्नकलिकेति **भूरिगनुष्टुप्** । यथा **छन्दोविचितिः** "ऊनाऽधिकेनैकेन निवृद्भूरिजावि"ति । "एकाक्षराधिकत्वन्यूनत्वाभ्यां भूरिज् निवृतावि"ति । "सर्वच्छन्दो विषयमि"ति च **भरताचार्यैः निर्मिता** उपनिषद्भ्यस्सारं निष्कृष्य कृता इति । अनेन परविद्यासाधनेषु उपनिषत्स्वेव सतीषु किमर्थेयं स्तुतिरित्यनादरानवकाशः प्रकाश्यते । उपनिषत्सु हि मुमुक्षु—अनपेक्षणीयनानाफलोपासनप्रतिपादनबहुलासु मन्दयोगिनश्चित्तविभ्रमोऽपि सम्भाव्येत । अत्र निःश्रेयसैकफलवेदनीयोपनिषत्सारभूतपरमात्मतत्त्वमात्रप्रतिपादनादात्मतत्त्वविद्यैव सुप्रतिष्ठिता भवतीति **शिवतत्त्वरत्नकलिकास्तुतिरेव** मोक्षमाणानां **परमादरणीयेति सर्वं शिवम्** ॥ १३२ ॥

इत्थं श्रीशिवतत्त्वरत्नकलिकामामोदसंरञ्जन-
प्राप्तस्वादिमसौरभामुपहरन्पञ्चप्रसूनाञ्चिताम् ।
श्रीशम्भोरधिवासयामि परमं यत्तत्पदं शाश्वतं
शश्वत्तेन सहोमया स भगवानाद्यः प्रसद्यान्मम ॥

क्व गाम्भीर्यं त्रय्याः क्व मम मतिरुत्तानविषया
क्व तत्त्वं श्रीशम्भोः क्व च मम गिरो बालसुलभाः ।
विमृश्यैवं व्रीडाभरजडमपि श्री शिवगुरो-
रुदारा कारुण्याज्ञा मुखरयतु मामचकलत् ॥

विगुणमविगुणं वा यन्मया व्याहृतं ते
परशिवपरतत्त्वालम्बमाम्नायगत्या ।
तदिदमनुविमृश्य त्वत्कृपापत्रभूताः
प्रकृतिमुषितदोषा वीक्ष्य सन्तः क्षमन्ताम् ॥

आचार्यैरुपदिष्ठमागमगिरा युक्त्या च सम्भावितं
तत्त्वं ते परिशीलितं शिव, मया योगेन साक्षात्कृतम् ।
निर्वाणे परिनिर्वृतं च तदपि स्मेराननाम्भोरुहं
चेतश्चुम्बति चन्द्रबिम्बसुभगं त्वमम्बिकार्धासनम् ॥

दृष्टप्लुष्टमनङ्गमङ्कुरयता येनापुनर्भङ्गुरं
तार्तीयीकविलोचनं दृढयतिव्रीडाजडं मीलनम् ।
तन्निस्सीमदयातरङ्गशिशिरापाङ्गश्रि तुङ्गस्तनं
पश्यत्फालभुवस्तुरीयनयनं पायादपायाच्चिरम् ॥

इति श्रीशिवतत्त्वरत्नकलिकाव्याख्यायामामोदरञ्जनाख्यायां कैवल्य-
वासनोल्लासः पञ्चमः ॥

॥ श्री शिवतत्त्वरत्नकलिकामोदरञ्जनं समाप्तम् ॥

॥ श्री साम्बशिवार्पणमस्तु ॥

॥ श्री गुरुचरणारविन्दाभ्यां नमः ॥

बिन्दुदुर्लिपिविसर्गवीथिका-

श्रृङ्गपङ्क्तिपदभेददूषणम् ।

हस्तवेगजमबुद्धिपूर्वकं

क्षन्तुमर्हथ समीक्ष्य सज्जनाः ॥

श्री बालकृष्णानन्दसरस्वतीचरणयोः कुर्वे प्रणामान्बहून् ॥

॥ श्री विघ्नेश्वराय नमः ॥

॥ सूर्यनारायणभट्टर् पुत्रन् रामकृष्णन् स्वहस्तलिखितम् ॥

॥ श्रीः ॥



## ॥ शिवतत्त्वरत्नकलिकास्थश्लोकानामकाराद्यनुक्रमणिका ॥

